# SĀHITYA-DARPAṆA

BY

## VIS'VANĀTHA KAVIRĀJA

**With the commentary of**

RĀMACHARAṆA-TARKAVĀGĪS'A BHATTĀCHĀRYA

**ANNOTATED**

**ith Introduction and Explanatory Commentaries**

**BY**


**MAHĀMAHOPĀDHYĀYA**

**PANDIT DURGĀPRASĀDA DVIVEDA**

PRINCIPAL, MAHARAJA'S SANSKRIT COLLEGE, JAIPUR;
MEMBER OF THE COURT AND FACULTY OF ORIENTAL
LEARNING OF THE BENARES HINDU UNIVERSITY,
AND A MEMBER OF THE BOARD OF SANSKRIT
STUDIES UNITED PROVINCES, &C.


---

**Sixth Edition.**

---


**PUBLISHED**

**BY**

PĀNDURANG JĀWAJĪ,

PROPRIETOR OF THE 'NIRṆAYA-SĀGAR' PRESS,

**BOMBAY.**

1936.

*Price 4 Rupees.*

# साहित्यदर्पणः ।



श्रीविश्वनाथ-कविराज-प्रणीतः ।

श्रीरामचरण-तर्कवागीश-भट्टाचार्य-कृतया
विवृत्या समेतः ।

जयपुरराजकीयसंस्कृतकॉलेजाध्यक्ष-काशीहिन्दुयूनिवर्सिटी-
सभास्तार-सत्संप्रदायाचार्य-महामहो-
पाध्यायपदभाजा
श्रीदुर्गाप्रसादद्विवेदेन
संकलितया छायाख्यविवृतिपूर्त्या परिष्कृतः ।

---

(षष्ठं संस्करणम्)

---

स च

मुम्बय्यां

पाण्डुरङ्ग जावजी,

इत्येतैः स्वीये निर्णयसागराख्यमुद्रणालयेऽङ्कयित्वा
प्राकाश्यं नीतः ।

---

शकाब्दाः १८५८, सन् १९३६

---

मूल्यं ४ रूप्यकाः ।



ॐ नमः शिवाय ।

( शु. य. सं. १६।४१ )

# भूमिका ।

( १ ) अथ किं तावत्साहित्यम् ( २ ) एतच्च कदा प्रादुर्भूतम् ( ३ ) साहित्यस्य किमुद्देश्यम् ( ४ ) अस्य प्रधानतः प्रबन्धाः बन्धकाश्च के ( ५ ) साहित्यदर्पणस्य च किमितिवृत्तम्; इति पञ्च प्रश्ना यथोद्देशं समासतोऽत्र मीमांस्यन्ते—

१. किं तावत् **साहित्यम्**, सहितस्य भाव इति । 'गुणवचनब्राह्मणादिभ्यः—' ( पा. सू. ५।१।१२४ ) इति ष्यञ् । सहभावश्चाष्टादशप्रस्थानभिन्नानां विद्यानाम् । अथवा सहितस्य कर्म साहित्यम्, यस्मादत्र परीक्ष्यमाणे कविकर्मणि काव्ये सर्वा विद्याः परिसमाप्यन्ते । उक्तं च **भामहालंकारे**—

'न स शब्दो न तद्वाच्यं न स न्यायो न सा कला ।
जायते यन्न काव्याङ्गमहो भारो महान् कवेः ॥'

एतदुपजीव्य मयाप्युपाश्लोकि—

'स्वस्वाभिलाषादिव यत्र सर्वे
विद्याविलासा मिलिता लुल(ठ)न्ति ।
तल्लोकवैदग्ध्यविधानयन्त्रं
साहित्यतन्त्रं कलयन्ति कल्याः ॥'

तदेतत्साहित्यं=साहिती, कविकर्मणः शासकत्वात्साहित्यशास्त्रमिति व्यपदिश्यते । अत एतस्य शब्दानुशासनमिव काव्यानुशासनमित्यपि नाम व्यवहार्यम् । आर्षसूत्रादर्शनेऽप्यत्र दर्शनेऽङ्गिन्यङ्गानां यावदुपलब्धविषयरूपत्वाद् विषयाणां चानेकशाखत्वाद् वस्तुतो निरवधि गाम्भीर्यम् । अत्र **विल्हणोक्तिरेषा**—

'साहित्य-पाथोनिधिमन्थनोत्थं
कर्णामृतं रक्षत हे कवीन्द्राः ।

---

१. ऋगादिचत्वारो वेदाः, शिक्षादिषडङ्गानि, मीमांसा, न्यायः, धर्मशास्त्रम्, पुराणम्, आयुर्वेदः, धनुर्वेदः, गन्धर्ववेदः, अर्थवेद इत्यष्टादश विद्याः । इहैव चतसृणां चतुर्दशानामपि रूढानां विद्यानामन्तर्भावो भवति । 'इतिहासवेदधनुर्वेदौ गान्धर्वायुर्वेदावपि चोपवेदाः' इति कश्चित् । 'वेदोपवेदात्मा सार्ववर्णिकः पञ्चमो गेयवेदः' इति द्रौहिणिः । ''उपकारकत्वादलंकारः सप्तममङ्गम् । सकलविद्यास्थानैकायतनं पञ्चदशं काव्यं विद्यास्थानम् । पञ्चमी साहित्यविद्या, सा हि चतसृणामपि विद्यानां निष्यन्दः'' इति यायावरीयः ॥ २. 'निर्वेदग्लानिशङ्काख्याः—' इत्यादि (प्रकाशोक्तं) भरतमुनिप्रणीतं साहित्यसूत्रमिति लेखस्तु भ्रममूलकः ॥

यदस्य दैत्या इव लुण्ठनाय
काव्यार्थचौराः प्रगुणीभवन्ति ॥' ( विक्रमाङ्कः १।११ )

एतत्साहित्यशास्त्रमलंकारशास्त्रत्वेनापि व्यवह्रियते । तत्र 'अलंकरणमलंकारः' इति 'भावे' ( पा. सू. ३।३।१८ ) इति भावघञ्-साधनोऽलंकारशब्दः । 'अलंक्रियतेऽनेन' इति 'अकर्तरि च—' ( पा. सू. ३।३।१९ ) इति करणघञ्-साधनस्तूपमादिषु प्रयुज्यते । अथवा 'प्रधानेन व्यपदेशा भवन्ति' इति करणव्युत्पन्नोऽपि शास्त्रवाची । 'अलंकारान् सर्वानपि गलितगर्वान् रचयतु' इति रसगङ्गाधरकारोक्तौ तु लक्षणापि संभवति ।

इयता व्याकरणादिपरिशीलनमन्तरा शक्तिसत्त्वेऽप्यायुष्मतां काव्यकरणव्यसनम्—

'स्वाधीनो रसनाञ्चलः, परिचिताः शब्दाः कियन्तः, क्वचि-
त्क्षोणीन्द्रो न नियामकः, परिषदः शान्ताः, स्वतन्त्रं जगत् ।
तद्यूयं कवयो वयं वयमिति प्रस्तावनाहुंकृति-
स्वच्छन्दं प्रतिसद्म गर्जत, वयं मौनव्रतालम्बिनः ॥'

इत्येवमाकाराणामाक्षेपाणां लक्ष्यीभवति । शिक्षयतागादि कविमाणवकागदंकारेण वाग्भटेन स्वालंकारे—

'अधीत्य शास्त्राण्यभियोगयोगा-
दभ्यासवश्यार्थपदप्रपञ्चः ।
तं तं विदित्वा समयं कवीनां
मनःप्रसत्तौ कवितां विदध्यात् ॥' इति ।

'कविर्मनीषी परिभूः स्वयंभूः—' ( शुक्लय. सं. ४ व. ८ ) इत्येवमादिसह्याभिः "जन्माद्यस्य यतः, शास्त्रयोनित्वात्" ( वे. सू. १।१।२-३ ) इत्यादिस्मृतिभिः पारमार्थिकस्य कवेः ( परमेश्वरस्य ) कर्म शब्दार्थरूपं जगदिव, जगति व्यावहारिकस्य कवेः ( वाल्मीकि-व्यास-गुणाढ्य-कालिदासादेः ) कर्म काव्यं शब्दार्थलक्षणं यथालक्ष्यं प्रादुष्क्रियमाणं व्यवहारपदं प्रतिपद्यते । अत्र 'कव्रृ वर्णे' इत्यनुशासनमाश्रित्य भट्टश्रीतोतोऽप्यगदत्—

'नानृषिः कविरित्युक्तमृषिश्च किल दर्शनात् ।
विचित्रभावधर्मांशतत्त्वप्रख्या च दर्शनम् ॥
स तत्त्वदर्शनादेव शास्त्रेषु कथितः कविः ।
दर्शनाद्वर्णनाच्चाथ रूढा लोके कविश्रुतिः ॥
तथाहि दर्शने स्वच्छे नित्येऽप्यादिकवेर्मुनेः ।
नोदिता कविता लोके यावज्जाता न वर्णना ॥'

---

१. विक्रमाङ्कदेवचरिताख्यमहाकाव्यादिकर्तुर्विल्हणस्यात्र "विन्दुद्वन्द्वतरङ्गिताग्रसरणिः कर्ता, शिरोविन्दुकं कर्मेति क्रमशिक्षितान्वयकथा ये केऽपि तेभ्यो नमः । ये तु ग्रन्थसहस्रशाणकषणत्रुट्यत्कलङ्कैर्गिरामुल्लेखैः कवयन्ति विल्हणकविस्तेष्वेव संनह्यति ॥" इति शक्तिमात्रसहायान् 'वाताधिका हि पुरुषाः कवयो भवन्ति' इत्येवंविधान् दुर्विदग्धान् विदग्धयन्तीयं सूक्तिरपि न विसरणीया ॥

इति । तदेतच्च, सूत्रितदिशैव त्रयीलक्षणं[1] काव्यमिवाङ्गोपाङ्गादिविभूतिभिरुपक्रियमाणकर्तव्यताकं व्यवहारगत्योपमानोपमेयभावं भजदप्यन्योन्यानुग्राहकं परीक्ष्यते । एवं च विचारभिदयाङ्गेभ्योऽतिरिक्तमङ्गि[2]; अङ्गविन्यासविशेष एवाङ्गीति[3] यथाप्रतिभानं परिभावनीयम् । तथा—शब्दः, द्रव्यं[4] वा गुणो[5] वा स्यात्; अर्थः, पारमार्थिको[6] वा व्यावहारिको वा प्रातिभासिको वा स्यात्, एतयोः संबन्धः, नित्यो[7] वा कृतको[8] वा स्यादित्यन्यदेतत् । प्रकृते स्वस्वसमयमर्यादया भिद्यमानोऽपि संज्ञासंज्ञ्यङ्गाङ्गिभावबन्धुरो विश्वजनीनो वाङ्मयप्रवाहः साहित्येन नीयते । तत्र शिक्षा तावत्—(१) शिक्ष्यतेऽनयेति, शिक्षणं वा **शिक्षा**; वेद इवात्राप्युच्चारणसौष्ठवपुरस्कारेणैव गुण-रीतिसंक्रान्तशरीरा । यामन्तरेण 'अविदितगुणापि सत्कविभणितिः कर्णेषु वमति मधुधाराम्' इति **सुबन्धूक्तिं** तिरोदधती **कालिदाससूक्तिरप्यात्मनो** नैसर्गिकीं श्रवणाञ्जलिपुटपेयतां जहती श्रवणमुद्वेजयति । तदेतदुक्तं भगवता **पतञ्जलिना** महाभाष्ये—'ग्रस्तं निरस्तमविलम्बितं—' इत्यादि (प.) । तथा प्राकृतमुद्दिश्य **हालेनाप्युक्तम्**—'अमिअं पाउवकव्वं पढिउं सोउं अ जेण आणन्ति'[9] (गाथा. १।२) इत्यादि । एतद्वर्जनेनैव पुनः—

> "अनभ्रवृष्टिः श्रवणामृतस्य
> सरस्वती-विभ्रम-जन्मभूमिः ।
> वैदर्भरीतिः कृतिनामुदेति
> सौभाग्य-लाभ-प्रतिभूः पदानाम् ॥'
> 'जयन्ति ते पञ्चमनादमित्र-
> चित्रोक्ति-संदर्भ-विभूषणेषु ।
> सरस्वती यद्वदनेषु नित्य-
> माभाति वीणामिव वादयन्ती ॥" (विक्रमाङ्क. १।९-१०)

इति शब्दात्मककाव्यशरीरस्वरूपपर्यवसिता कवयितॄनावेदयन्ती **बिल्हणोक्तिरिति** दिक् ॥

---

१. "तेषामृग्यत्रार्थवशेन पादव्यवस्था' । 'गीतिषु सामाख्या' । 'शेषे यजुःशब्दः' (मी. सू. २।१।३३–३५) इति जैमिनिसूत्रैर्ऋक्सामयजुषां लक्षणानि । एभ्योऽथर्ववेदो नातिरिच्यत इति सूक्ष्मं द्रष्टव्यम् ॥ २. इदं न्यायदर्शनानुसारेण ॥ ३. इदं बौद्धदर्शनानुसारेण ॥ ४. शब्दो द्रव्यमिति मीमांसकाः ॥ ५. शब्दो गुण इति नैयायिकाः ॥ ६. अयं विभागो वेदान्तिकानाम् । एते कतिपयैर्मायावादिन इति व्यपदिश्यन्ते । अयं मायावादो बौद्धदर्शनानुसारी शारीरक-मीमांसाकारैः श्रीशंकराचार्यैरुद्भावित इति बहूनां भ्रमः । वस्तुतस्तु नायं तथाभूतः, किंतु ततोऽपि भूयाँश्चिरंतन इति नूतनविज्ञानोन्मीलितलोचनानामपि सिद्धान्त इति दिक् ॥ ७. नित्य इति मीमांसकाः ॥ ८. कृतक इति नैयायिकादयः ॥ ९. 'अमृतं प्राकृतकाव्यं पठितुं श्रोतुं च ये न जानन्ति' इति संस्कृतम् । एतेन तत्तद्देशीयानां भाषाकाव्यानामपि श्रवणं पठनं च व्याख्यातम् ॥

(२) कल्प्यतेऽनेनेति कल्पः, कल्पसूत्रम् । स च श्रौतः स्मार्त इति द्विविधः। सोऽयं वेद[१] इवात्रापि वेदोपजीविनि कविकर्मणि देशकालपात्राण्यनुरुन्धानोऽनेकधा वर्ण्यते । तत्राग्निहोत्र[२]विषये—

'प्रतिशरणमशीर्णज्योतिरग्न्याहितानां
विधिविहित-विरिब्धैः सामिधेनीरधीत्य ।
कृतगुरुदुरितौघध्वंसमध्वर्युवर्यै-
र्हुतमयमुपलीढे साधु सांनाय्यमग्निः ॥' (११।४१)

इति माघोक्तिः तथा राजसूयविषये—'आननेन—' (१४।१८—५३) इत्यादयः। एवं तत्र तत्र स्मार्तोदाहरणमपि द्रष्टव्यम् । स्मार्तशब्दस्य गृह्यार्थाधिकव्यापारे तु—

'अवामावामार्धे सकलमुभयाकारघटनाद्
द्विधाभूतं रूपं भगवदभिधेयं भवति यत् ।
तदन्तर्मन्त्रं मे स्मरहरमयं सेन्दुममलं
निराकारं शश्वज्जप नरपते सिध्यतु स ते ॥'

इत्यादि (१४।८८—९१) नैषधीयचरितस्य पद्यमुदाहार्यम् ॥

(३) व्याक्रियते शब्दजातमनेनेति व्याकरणम् । तद् वेद इवात्रापि नामरूपव्याकरणयोगतयैव व्युत्पाद्यते । उक्तं च 'तदधीते तद्वेद' (पा. सू. ४।२।५९) इति स्मरतानन्दवर्धनाचार्येण—"प्रथमे हि विद्वांसो वैयाकरणाः, व्याकरणमूलत्वात्सर्वविद्यानाम्" इति । अत्र—

'द्वन्द्वोऽस्मि द्विगुरस्मि च गृहे च मे सततमव्ययीभावः ।
तत्पुरुष कर्म धारय येनाहं स्यां बहुव्रीहिः ॥'

इति षट्समासीसमाससूक्तं सामान्यम् । पाणिनिशास्त्राभिप्रायकं तु 'क्रियेत चेत्साधुविभक्तिचिन्ता—' (३।२३) इति नैषधीयस्य पद्यम्; भारतीयानां प्राथमिकशिक्षाशैलीमभिदधत् 'दाक्षीपुत्रस्य तन्त्रे ध्रुवमयमभवत्कोऽप्यधीती कपोतः—' (१९।६१) इति वोदाहार्यम्[३] ॥

(४) निरुच्यतेऽनेनेति निरुक्तम् । तच्च यद्यपि निर्वचनयोगेनापाततो व्याकरणेऽन्तर्भवद् विभाव्यते तथापि विशेषाभिधित्सया पृथगेव गण्यते । तदेतद्बाहुलकादिकक्षातिक्रान्तं भगवता पाणिनिना—'पृषोदरादीनि यथोपदिष्टम्' (पा. सू. ६।३।१०९) इत्येवं सूत्रितम् । तदनुगामिभिः—'वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ । धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम् ॥'

---

१. अत्र विशेषतस्तैत्तिरीयसंहिता, ब्राह्मणानि च द्रष्टव्यानि, यदुद्भूतानि कल्पसूत्राणि मीमांसादर्शनं च ॥ २. इदानीं तु अग्निहोत्रकर्म काश्यादावपि विरलं प्रवर्तते, यत्पुरा त्रैवर्णिकानां गृहेषु प्रातःसायं जज्वाल ॥ ३. एवमादिसूक्तिव्युत्पादनाय महामहोपाध्यायमल्लिनाथादिव्याख्यानानि द्रष्टव्यानि ॥

इति निरवाचि[1] । निघण्टुप्रभृतीनां शब्दानामेतदनुसार्येव व्युत्पादनम् । बहुत्र गत्यन्तरे सत्यप्यहोरात्रादितो होरादिपदव्युत्पादनमेतदुपज्ञमेव विधीयत[2] इत्यलं प्रसङ्गान्तरेण । प्रकृते श्रौतानि स्मार्तानि चोदाहरणानि बहूनि । तदितरत्तु—

'मधुकैटभदानवेन्द्रमेदः-
प्लवविस्रा विषमैव मेदिनीयम् ।
अधिवास्य यदि स्वकैर्यशोभि-
श्चिरमेतामुपभुञ्जते नरेन्द्राः ॥' (अनर्घ. १।१४)

इत्यादिकमूह्यम् । एवं च मेदसो मेदिनीति नैरुक्ताः । मिद्यतेस्तु वैयाकरणाः ॥

(५) छाद्यते छन्द्यते वाऽनेनेति छन्द इति नैरुक्ताः । चन्द्यतेऽनेनेति तु वैयाकरणाः । तच्च वेद इवात्रापि ऋग्यजुःसामभिरिव तत्सधर्मभिः पद्यगद्यगानैरुपकारीति यथालक्ष्यं लक्षणीयम् । तत्र लक्षणाभिधानयोः संगतौ—

'द्विजपुरुपरिभवकारी यो
नरपतिरतिधनलुब्धात्मा ।
ध्रुवमिह निपतति पापोऽसौ
फलमिव पवनहतं वृन्तात् ॥'

इत्युदाहरणीयम् । इह श्लेषमर्यादयाभिधानोपादानेऽलंकारान्तरमिच्छन्ति कतिपये ॥

(६) द्योत्यतेऽनेनेति, द्योतनं वेति ज्योतिः । अन्ये तु 'ज्युत्' इति पठित्वा व्युत्पादयन्ति । अस्माद् अणि अचि वा ज्योतिषम् । एतच्च वेद इवात्रापि निखिलव्यवहारसाधननिमित्तस्य व्यञ्ज्यस्य कालस्य, तद्व्यञ्जकग्रहनक्षत्रादेश्च बोधनेनोपकारकमिति निर्णायकानां प्रत्यक्षम् । तत्र गणितविषये विज्ञानघटितानि भूयांसि श्रुतिस्मृतिलिङ्गानि[3] । पौरुषाण्यपि—'हरिदश्वदीधितेरनुप्रवेशादिव[4] बालचन्द्रमाः' (रघु. ३।२२) 'प्रतिपच्चन्द्रनिभोऽयमात्मजः' (रघु. ८।६५) 'प्रतिपच्चन्द्रमिव प्रजा नृपम्' (किरात. २।११) इत्येवमादीनि । इह प्रथमेन प्रतिपत्प्रारम्भिकी पूर्णापार्यन्तिकी चन्द्रस्य शौक्ल्यवृद्धिरिष्यते; द्वितीयतृतीयाभ्यां तूद्यन्ती प्राथमिकी दशेति । यत्त्विह प्रतिपदि चन्द्रादृश्यत्वमभ्युपगत्य द्वितीया गृह्यते, तन्न चतुरस्रम् । लल्लादिसूक्ष्मविधिना शुक्ले साधिते बहुत्र प्रतिपद्यपि चन्द्रदर्शनोपलम्भात्, दूर-

---

१. अत्र निघण्टुपदव्याख्या नैरुक्ती द्रष्टव्या ॥ २. 'होरेत्यहोरात्रविकल्पमेके वाञ्छन्ति पूर्वापरवर्णलोपात्' इति वराहमिहिराचार्यः ॥

३. 'सप्त युञ्जन्ति रथमेकचक्रमेको अश्वो वहति सप्तनामा ।
त्रिनाभि चक्रमजरमनर्वं यत्रेमा विश्वा भुवनाधितस्थुः ॥'
(ऋ. सं. १, १६४, २)

४. 'नवो नवो भवति जायमानोऽह्नां केतुरुषसामेत्यग्रम् ।
भागं देवेभ्यो विदधात्यायन् प्रचन्द्रमास्तिरते दीर्घमायुः ॥'
(ऋ. सं. १०, १९)

दर्शिनोः कवित्रोरुपमेययोरतितुल्यापादनस्य प्रतिपादयितुमिष्टत्वाद् एवंविधस्थले द्वितीयायां चन्द्रबिम्बाधिक्यदर्शनप्रसङ्गात् । किंबहुना । १९७४ एतस्मिन्नपि विक्रमसंवत्सरे राजपूतानाख्यपञ्चाङ्गे[1] बहूनि प्रातिपदानि चन्द्रदर्शनानीति । फलितविषये तु 'ग्रहैस्ततः पञ्चभिरुच्चसंश्रयैः—' (रघु. ३।१३) इत्येवमादीन्युदाहरणानि ॥

इत्थं शिक्षादिषडङ्गानि कविसूक्तिषु निरूप्य संप्रति न्यायादिदर्शनानि मनाङ् निरूप्यन्ते—यथा खलु शिक्षादिषडङ्गकल्पना श्रौती, न तथा न्यायादिषड्दर्शनीविभागकल्पनेति । चतुर्दशविद्याविभजनावसरे भगवता याज्ञवल्क्येन न्यायमीमांसे सामान्यत उद्दिष्टे । चतुर्विद्याविभजनपक्षे आन्वीक्षिकीत्यपि तथा । तत्रान्वीक्षिकी न्यायतर्कपर्यायेत्यक्षचरणकणभक्षपक्षपातिनः । 'यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः' (मनुः १२।१०६) इत्येवमादिवचनेन तु तर्कशब्दः पूर्वोत्तरमीमांसाशासनापेक्षीति व्यक्तम् । कतिपये पुनः—

'अथ चत्वार्युपाङ्गानि वेदानां संप्रचक्षते ।
धर्मशास्त्रं पुराणं च मीमांसा न्यायविस्तरः ॥'

इत्युपाङ्गविभागं प्रतिपेदिरे । इहापि न्यायमीमांसे एव पठ्येते । अतोऽनुयोगिप्रतियोगितया सकलानि दर्शनानि प्रतिपत्तव्यानि ।

अथोपक्रम्यमाणे कविकर्मणि समानतन्त्रयोर्न्यायवैशेषिकयोः संकीर्णोदाहरणं यथा मम देवराजचरिते—

'न्यक्कुर्वन् स्फुटकोटिभङ्गिरचनैः प्राभाकरं मण्डलं
शक्तिं काञ्चनभास्वरां प्रकटयञ्जात्याकृतिव्यक्तिषु ।
अर्थापत्तिनिवारणैकनिपुणो व्याख्यातसर्वेक्षणो
यस्यां तर्कवदैक्षि येन कृतिना श्रीविश्वनाथालयः ॥'

अनयोः शुद्धोदाहरणे तु मम दशकण्ठवधे—"यत्र च च्छलप्रसङ्गो न्याये, न व्यवहारे; पदार्थकल्पनालाघवं वैशेषिके, न प्राघुणिकसत्कारे" इति । यथा वा नैषधीयचरिते—

'ध्वान्तस्य वामोरु विचारणायां
वैशेषिकं चारु मतं मतं मे ।
औलूकमाहुः खलु दर्शनं तत्
क्षमं तमस्तत्त्वनिरूपणाय ॥' (२२।३६)

सांख्य–योगयोर्यथा—

'प्रकृतेः पृथग् विकृतिशून्यतां गतः
प्रतिषिद्धवस्तुगतधर्मनिष्क्रियः ।

१. राजपूतानापञ्चाङ्गमस्माकं शिष्येण आचार्य–भँवरलालेन प्रवर्तितम्, ज्यौतिषरत्न–झूथालालेन च चालितम् ॥ २. श्रीश्रीधराचार्यैर्वैशेषिकसूत्राविरोधेनैतन्निर्णीतम् । सांख्यदर्शनमप्यत्रानुग्राहकम् ॥

पुरुषस्त्वमेव किल पञ्चविंशकः
स्फुटचूलिकार्थवचनैर्निगद्यसे ॥'
( हरविजये ६।१८ )

'मैत्र्यादिचित्तपरिकर्मविदो विधाय
क्लेशप्रहाणमिह लब्धसबीजयोगाः ।
ख्यातिं च सत्त्वपुरुषान्यतयाऽधिगम्य
वाञ्छन्ति तामपि समाधिभृतो निरोद्धुम् ॥'
( शिशु. ४।५५ )

पूर्वोत्तरमीमांसयोर्यथा—

'क्रतौ सुप्ते जाग्रत्त्वमसि फलयोगे क्रतुमतां
क्व कर्म प्रध्वस्तं फलति पुरुषाराधनमृते ।
अतस्त्वां संप्रेक्ष्य क्रतुषु फलदानप्रतिभुवं
श्रुतौ श्रद्धां बद्ध्वा कृतपरिकरः कर्मसु जनः ॥'
(शिवमहिम्नि ।)

'निःश्वसितमस्य वेदा वीक्षितमेतस्य पञ्च भूतानि ।
स्मितमेतस्य चराचरमस्य च सुप्तं महाप्रलयः ॥'
( भामत्याम् )

एवमन्यान्यप्यास्तिकनास्तिकशासनानि तत्र तत्र कविकर्मसु शतधा गुम्फितानि । अत्र कौतुकिभिर्हरविजयमहाकवेः 'प्रकृतेः पृथक्—' इत्यादिः '—भगवान् भवानिव भवत्यणुः स्फुटम्' इत्यन्ता ( ६।१८–१७० ) अदृष्टपूर्वा भगवत्स्तुतिः; नैषधीयचरितस्य सप्तदशः सर्गः; महामहोपाध्यायधुरंधरस्य गङ्गाधरशास्त्रिणोऽलिविलासिसंलापश्च सधीविभवं विभावनीय इति ।

२. एतच्च ( साहित्यं ) कदा प्रादुर्भूतम् इति मीमांसावसरे वेदाङ्गोपाङ्गसमानकालिकमित्यध्यवसायः प्रमातृहृदयंगमः स्यात्; तत्तद्दर्शनानां तदनुप्राणितानामितरेषां चोच्चावचानां निबन्धानां वेदोपजीवकत्वेन विवेचकानां विश्रमोपलम्भात् । वेदेषु तत्र तत्रांशतोऽनुस्यूतानां विषयजातानां रहस्यमादायैवाधिगतयाथातथ्यैर्लोकगुरुभिर्महर्षिभिर्जगदुद्दिधीर्षया प्रसादमधुराणि गभीराणि शास्त्राणि निरमायिषत । इति व्यक्तमपि—

---

१. स कविरेवं भूतार्थमुक्तवान्—ललितमधुराः सालंकाराः प्रसादमनोरमा विकटयमकश्लेषोद्गारप्रबन्धनिरर्गलाः । असदृशगतीश्चित्रे मार्गे ममोद्गिरतो गिरो न खलु नृपते चेतो वाचस्पतेरपि शङ्कते ॥ धाराकाव्यप्रबन्धप्रणिहितपरमा श्रोत्रपेया कवीनां भाषाषट्केऽपि यस्य क्वचिदपि न गता भारती भारवत्वम् । प्रासश्रेयावसानस्फुरदमलतरप्रातिभज्ञानसंपद्राजन् रत्नाकरस्ते सदसि कृतपदः क्ष्माप वागीश्वराङ्कः ॥ हरविजयमहाकवेः प्रतिज्ञां शृणुत कृतप्रणयो मम प्रबन्धे । अपि शिशुरकविः कविः प्रभावाद्भवति कविश्च महाकविः क्रमेण ॥' ( हरविज. ५० स. ९६–१०२ ) इति ॥

'कालः स्वभावो नियतिर्यदृच्छा
भूतानि योनिः पुरुष इति चिन्त्या ।
संयोग एषां न त्वात्मभावा-
दात्माप्यनीशः सुखदुःखहेतोः' ॥ (१।२)

इति कालस्वभावादिवादवादिन्या श्वेताश्वतराणां मन्त्रोपनिषदा व्यक्ततरमवसीयते । एवं वाजसनेयिनां ब्राह्मणोपनिषदा—'इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानानि' इति । एवमेव छान्दोग्योपनिषदापि—'इतिहासपुराणः पञ्चमो वेदानां वेदः पित्र्यो राशिर्दैवो निधिर्वाकोवाक्यमेकायनं देवविद्या ब्रह्मविद्या भूतविद्या क्षत्रविद्या नक्षत्रविद्या सर्पदेवजनविद्या' इति । साहित्यप्रतिपाद्यं दृश्यकाव्यमधिकृत्य भगवता भरतेन तु स्पष्टमाम्नातम्—

'जग्राह पाठ्यमृग्वेदात्सामभ्यो गीतमेव च ।
यजुर्वेदादभिनयान्रसानाथर्वणादपि ॥'
(नाट्यशा० १।१७)

आग्नेये तु श्रव्यदृश्ये उभे अपि काव्ये सम्यग् व्युत्पादिते इत्युपरिष्टान्निवेदयिष्यते । एतेनान्यशास्त्रवत् साहित्यस्यापि वेदोपजीवकत्वम्, तत एव साहित्यमूलस्य वेदाङ्गोपाङ्गसमानकालिकत्वं च प्रतिपत्तव्यम् ॥

तत्रभवतो राजशेखरस्य काव्यमीमांसायां कविरहस्ये तु निरूपितार्थो महतार्थवादेन प्रस्तूयते—"यथोपदिदेश श्रीकण्ठः परमेष्ठिवैकुण्ठादिभ्यश्चतुःषष्ट्ये शिष्येभ्यः । सोऽपि भगवान् स्वयंभूरिच्छाजन्मभ्यः स्वान्तेवासिभ्यः । तेषु सारस्वतेयः वृन्दीयसामपि वन्द्यः काव्यपुरुष आसीत् । तं च सर्वसमयविदं दिव्येन चक्षुषा भविष्यदर्थदर्शिनं भूर्भुवःस्वस्त्रितयवर्तिनीषु प्रजासु हितकाम्यया प्रजापतिः काव्यविद्याप्रवर्तनायै प्रायुङ्क्त । सोऽष्टादशाधिकरणीं दिव्येभ्यः काव्यविद्यास्नातकेभ्यः सप्रपञ्चं प्रोवाच । तत्र कविरहस्यं सहस्राक्षः समाम्नासीत्, औक्तिकमुक्तिगर्भः, रीतिनिर्णयं सुवर्णनाभः, आनुप्रासिकं प्रचेतायनः, यमकानि—चित्रं चित्राङ्गदः, शब्दश्लेषं शेषः, वास्तवं पुलस्त्यः, औपम्यमौपकायनः, अतिशयं पाराशरः, अर्थश्लेषमुतथ्यः, उभयालंकारिकं कुबेरः, वैनोदिकं कामदेवः, रूपकनिरूपणीयं भरतः, रसाधिकारिकं नन्दिकेश्वरः, दोषाधिकरणं धिषणः, गुणौपादानिकमुपमन्युः, औपनिषदिकं कुचमार इति । ततस्ते पृथक् पृथक् स्वशास्त्राणि विरचयांचक्रुः ।

अथैवं गुरुभ्यो गिरः पुण्याः पुराणीः शृणुमःस्म यत्किल धिषणं शिष्याः कथाप्रसङ्गे पप्रच्छुः, कीदृशः पुनरसौ सारस्वतेयः काव्यपुरुषो वो गुरुरिति । स तान् वृद्ध-

१. काल इति कालविदः, स्वभाव इति लौकायतिकाः, नियतिरिति मीमांसकाः, यदृच्छेति निरीश्वराः, भूतानीति जगन्नित्यत्ववादिनः, योनिरिति प्रकृतिवादिनः, पुरुष इति पातञ्जला जगतः कारणं प्रतिपेदिरे ॥

तांपतिरूचे । पुरा पुत्रीयन्ती सरस्वती तुषारगिरौ ( तपस्यामास ) प्रीतेन मनसा तां विरिञ्चः प्रोवाच–पुत्रं ते सृजामि । अथैषा काव्यपुरुषं सुषुवे । सोऽभ्युत्थाय सपादोपग्रहं छन्दस्वतीं वाचमुदचीचरत् ।

यदेतद्वाङ्मयं विश्वमर्थमूर्त्या विवर्तते ।
सोऽस्मि काव्यपुमानम्ब पादौ वन्देय तावकौ ॥

तामाम्नायदृष्टचरीमुपलभ्य भाषाविषये छन्दोमुद्रां देवी ससंभ्रमदमङ्कपर्यङ्केनादाय तमुदलापयत् । वत्स, सच्छन्दस्काया गिरः प्रणेतः, वाङ्मयमातरमपि मातरं मां विजयसे । प्रशस्यतमं चेदमुदाहरन्ति यदुत 'पुत्रात्पराजयो द्वितीयं पुत्रजन्म' इति । त्वत्तः पूर्वे हि विद्वांसो गद्यं ददृशुर्न पद्यम् । त्वदुपज्ञमथातः छन्दस्वद्वचः प्रवर्त्स्यति । अहो श्लाघनीयोऽसि । शब्दार्थौ ते शरीरम्, संस्कृतं मुखम्, प्राकृतं बाहुः, जघनमपभ्रंशः, पैशाचं पादौ, उरो मिश्रम् । समः प्रसन्नो मधुर उदार ओजस्वी चासि । उक्तिचणं च ते वचः, रस आत्मा, रोमाणि च्छन्दांसि, प्रश्नोत्तर-प्रवह्लिकादिकं च वाक्केलिः, अनुप्रासोपमादयश्च त्वामलंकुर्वन्ति । भविष्यतोऽर्थस्याभिधात्री श्रुतिरपि भवन्तमभिस्तौति—

चत्वारि शृङ्गा त्रयो अस्य पादा
द्वे शीर्षे सप्त हस्तासो अस्य ।
त्रिधा बद्धो वृषभो रोरवीति
महो देवो मर्त्यां आ विवेश ॥ (ऋ. सं. ३ अष्ट. ८ अ. १० व.)

'तथापि संवृणु प्रगल्भस्य पुंसः कर्म, बालोचितं चेष्टस्व' इति निगद्य निवेश्य चैनमनोकहाश्रयिणि गण्डशैलतलतल्पे स्नातुमभ्रगङ्गां जगाम । तावच्च कुशान् समिधश्च समाहर्तुं निःसृतो महामुनिरुशनाः परिवृत्तं पूषण्युष्मोपप्लुतं तमद्राक्षीत् । कस्यायमनाथो बाल इति चिन्तयन् स्वाश्रमपदमनैषीत् । क्षणादाश्वस्तश्च स सारस्वतेयस्तस्मै छन्दस्वतीं वाचं समचारयत् । अकस्माद्विस्मापयन् स चाभ्युवाच—

या दुग्धापि न दुग्धेव कविदोग्धृभिरन्वहम् ।
हृदि नः संनिधत्तां सा सूक्तिधेनुः सरस्वती ॥ इति ।

तत्पूर्वकमध्येतॄणां च सुमेधस्त्वमादिदेश । ततःप्रभृति तमुशनसं सन्तः कविरित्याचक्षते । तदुपचाराच्च कवयः कवय इति लोकयात्रा कविशब्दश्च 'कवृ वर्णे' इत्यस्य धातोः काव्यकर्मणो रूपम् । काव्यैकरूपत्वाच्च सारस्वतेयोऽपि काव्यपुरुष इति भक्त्या प्रयुज्यते । ततश्च विनिवृत्ता वाग्देवी तत्र पुत्रमपश्यन्ती मध्येहृदयं चक्रन्द । प्रसङ्गतश्च वाल्मीकिर्मुनिवृषा सप्रश्रयं तमुदन्तमुदाहृत्य भगवत्यै भृगुसूतेराश्रमपदमदर्शयत् । सापि प्रस्नुतपयोधरा पुत्रायाङ्कपालीं ददाना शिरसि च चुम्बन्ती स्वस्तिमता चेतसा प्राचेतसायापि महर्षये निभृतं सच्छन्दांसि वचांसि प्रायच्छत् । अनुप्रेषितश्च स तया निषादनिहतसहचरीकं क्रौञ्चयुवानं करुणकेंकारयानिशं क्रन्दन्तमुदीक्ष्य शोकवाञ्श्लोकमुज्जगाद—

'मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥'

ततो दिव्यदृष्टिर्देवी तस्मा अपि श्लोकाय वरमदात् । यदुतान्यदनधीयानो यः प्रथममेनमध्येष्यते स सारस्वतः कविः संपत्स्यत इति । स तु महामुनिः प्रवृत्तवचनो रामायणमितिहासं समदृभत् । द्वैपायनस्तु श्लोकप्रथमाध्यायी तत्प्रभावेण शतसाहस्रीं संहितां भारतम् । एकदा तु ब्रह्मर्षिवृन्दारकयोः श्रुतिविवादे दाक्षिण्यवान् देवः स्वयंभूस्तामिमां निर्णेत्रीमुद्दिदेश । उपश्रुतवृत्तान्तश्च मातरं व्रजन्तीं सोऽनुवव्राज । वत्स, परमेष्ठिनाऽननुमतस्य ते न ब्रह्मलोकयात्रा निःश्रेयसायेत्यभिदधाना हठाद्व्यवर्तयदेनमात्मना तु प्रववृते । ततः स काव्यपुरुषो रुषा निश्चक्राम प्रियं मित्रमस्य च कुमारः साक्रन्दं रुदन्नभ्यधीयत गौर्या—तात, तूष्णीमास्स्व, साहमेषा निषेधामीति निगदन्ती समचिन्तयत् । प्रायः प्राणभृतां प्रेमाणमन्तरेण नान्यद्बन्धनमस्ति तदेतस्य वशीकरणं कामपि स्त्रियं सृजामीति विचिन्तयन्ती साहित्यविद्यावधूमुदपादयदादिशच्चैनामेष ते रुषा धर्मपतिः पुरः प्रतिष्ठते तदनुवर्तस्वैनं निवर्तय च । भवन्तोऽपि हन्त मुनयः काव्यविद्यास्नातकाश्चरितमेतयोः स्तुध्वमेतद्धि वः काव्यसर्वस्वं भविष्यतीत्यभिधाय भगवती भवानी जोषमासिष्ट । तेऽपि तथा कर्तुमवतस्थिरे ।

अथ सर्वे प्रथमं प्राचीं दिशं शिश्रियुः, यत्राङ्गवङ्गसुह्मब्रह्मपुण्ड्राद्या जनपदाः । तत्राभियुञ्जाना तमौमेयी यं वेषं यथेष्टमसेविष्ट, स तत्रत्याभिः स्त्रीभिरन्वाक्रियत । सा प्रवृत्ती रौद्रमागधी । तां च ते मुनयोऽभितुष्टुवुः । यदृच्छयापि यादृङ्नेपथ्यः स सारस्वतेय आसीत्, तद्वेषाः पुरुषा बभूवुः । सापि सैव प्रवृत्तिः । यदपरं नृत्तवाद्यादिकमेषा चक्रे, सा भारती वृत्तिः । तां ते मुनयोऽभितुष्टुवुः । तथाविधाकल्पयापि तया यदवशंवदीकृतः समासवदनुप्रासवद्योगवृत्तिपरम्परागर्भं जगाद, सा गौडीया रीतिः । तां ते मुनयोऽभितुष्टुवुः । ततश्च स पाञ्चालान् प्रत्युच्चचाल, यत्र पाञ्चालशूरसेनहस्तिनापुरकाश्मीरवाहीकबाह्लीकबाह्लवेयादयो जनपदाः । तत्राभियुञ्जाना तमौमेयी यं वेशमसेविष्ट, स तत्रत्याभिरन्वाक्रियत । सा प्रवृत्तिः पाञ्चालमध्यमा । तां ते मुनयोऽभितुष्टुवुः । किंचिदार्द्रितमना यन्नेपथ्यः स सारस्वतेय आसीत्, तद्वेषाः पुरुषा बभूवुः । सापि यदीषन्नृत्तगीतवाद्यविलासादिकं दर्शयांबभूव, सा सात्त्वती वृत्तिः । आविद्धगतिमत्त्वात्सा चारभटी । तां ते मुनयोऽभितुष्टुवुः । तथाविधाकल्पयापि तया यदीषद्वशंवदीकृत ईषदसमासमीषदनुप्रासमुपचारगर्भं च जगाद, सा पाञ्चाली रीतिः । तां ते मुनयोऽभितुष्टुवुः । ततः सोऽवन्तीन् प्रत्युच्चचाल, यत्रावन्तीवैदिशसुराष्ट्रमालवार्बुदभृगुकच्छादयो जनपदाः । तत्राभियुञ्जाना तमौमेयी यं वेषमसेविष्ट स तत्रत्याभिरन्वाक्रियत । सा प्रवृत्तिरावन्ती । पाञ्चालमध्यमादाक्षिणात्ययोरन्तरचारिणी हि सा । अत एव सात्त्वतीकैशिक्यौ तत्र वृत्ती । तां ते मुनयोऽभितुष्टुवुः । ततश्च स दक्षिणां दिशमाससाद, यत्र मलयमेकलकुन्तलकेरलपालमञ्जरमहाराष्ट्रवङ्गकलिङ्गादयो जनपदाः । तत्राभियुञ्जाना तमौमेयी यं वेषमसेविष्ट,

स तत्रस्थाभिरन्वाक्रियत। सा दाक्षिणात्या प्रवृत्तिः। तां ते मुनयोऽभितुष्टुवुः। तामनुरक्तमना यन्नेपथ्यः स सारस्वतेयस्तद्वेषाः पुरुषाः। सापि यद्विचित्रनृत्तगीतवाद्यविलासादिकमाविर्भावयामास, सा कैशिकी वृत्तिः। तां ते मुनयोऽभितुष्टुवुः यदल्पार्थं च स तया वशंवदीकृतः स्थानानुप्रासवदसमासं योगवृत्तिगर्भं च जगाद, सा वैदर्भी रीतिः। तां ते मुनयोऽभितुष्टुवुः। तत्र वेषविन्यासक्रमः प्रवृत्तिः, विलासविन्यासक्रमो वृत्तिः, वचनविन्यासक्रमो रीतिः। चतुष्टयी गतिर्वृत्तीनां प्रवृत्तीनां च, देशानां च पुनरानन्त्यं तत्कथमिव कार्त्स्न्येन परिग्रह इत्याचार्या अनन्तानपि च देशांश्चतुर्धैवाकल्प्य कल्पयन्ति। चक्रवर्तिक्षेत्रं सामान्येन तदवान्तरविशेषैः पुनरनन्ता एवेति यायावरीयः। दक्षिणात्समुद्रादुदीचीं प्रति योजनसहस्रं चक्रवर्तिक्षेत्रम्, तत्रैव नेपथ्यविधिः। ततः परं दिव्याया अपि यं देशमधिवसेयुस्तद्देश्यं वेषमाश्रयन्तो निबन्धनीयाः। स्वभूमौ तु कामचारः। द्वीपान्तरभवानां तदनुसारेण वृत्तिप्रवृत्ती। रीतयस्तु तिस्रस्तास्तु पुरस्तात्। तत्रास्ति मनोजन्मनो देवस्य क्रीडावासो विदर्भेषु वत्सगुल्मं नाम नगरम्। तत्र सारस्वतेयस्तामौमेयीं गन्धर्ववत्परिणिनाय। ततस्तद्वधूवरं विनिवृत्य तेषु प्रदेशेषु विहरमाणं तुषारगिरिमेवाजगाम, यत्र च गौरी सरस्वती च मिथः संबन्धिन्यौ तस्थतुः। तौ च कृतवन्दनौ दम्पती दत्वाशिषं प्रभावमयेन वपुषा कविमानसनिवासिनौ चक्रतुः। तयोश्च कविलोकस्वर्गसर्गं तमकल्पतां, यत्र काव्यमयेन शरीरेण मर्त्यमधिवसन्तो दिव्येन देहेन कवय आकल्पं मोदन्ते" इति॥

वयं तु संप्रत्येवं मन्यामहे—

'कष्टं भारतवासिनः कतिपयात्कालाद्यथाशासनं
साहित्यं परिहाय दुर्व्यसनिनोऽभूवन्नितीमांस्त्यजन्।
साधूल्लास्यकलाकलापकलितां लक्ष्मीं युरोपाजिरे
विज्ञानोदयदक्षिणां वितनुते सारस्वतेयोऽधुना॥

किंच। भो भारता! निर्मलकर्मयोगैः
सारस्वतेयं शरणं प्रयात।
यतो भवेयुर्भवतां प्रभावाः
पुनः पुनः किं कलिगर्हणेन'॥ इति॥

अवोचं च प्राग् वेदाङ्गोपाङ्गसमानकालिकत्वं साहित्यस्य (भूमि. ७. पृ.) तत्रैतत्पुनः पर्यनुयुज्यते—किंकालो वेद इति। मीमांसिते च वेदकालेऽदसीयान्यङ्गोपाङ्गानि स्वयं नियन्त्रितकालकलनानि स्युः। श्रूयते हि श्वेताश्वतरशाखिनां मन्त्रोपनिषदि—

'यो ब्रह्माणं विदधाति पूर्वं
यो वै वेदांश्च प्रहिणोति तस्मै।
तꣳह देवमात्मबुद्धिप्रकाशं
मुमुक्षुर्वै शरणमहं प्रपद्ये॥' इति॥ (६।१८)

यो हि (कारणब्रह्म) सृष्ट्यादौ ब्रह्माणं विधायास्मै कार्यब्रह्मणे स्वज्ञान-

लक्षणान् वेदान् प्राहैषीत् । तमात्मदेवं शरणं प्रपद्ये संसारसागरनिमज्जनत्रासत्रस्त इति मन्त्रतात्पर्यम् । अयमादिदेवो **योगदर्शने**—'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः' (१।२४) इत्येवं लक्षणतः सूत्रितः पुनर्व्याचिख्यासायां— 'पूर्वेषामपि गुरुः कालेनानवच्छेदात्' (१।२६) इत्यनेन गुणप्राधान्यविभक्त- ब्रह्मादिगुरुतयाऽपि सूत्र्यते । इत्थं च 'हिरण्यगर्भः समवर्तताग्रे—' (ऋ. सं. ८ अष्ट. ७ अ. ३ व.) इति श्रुत्यनुगृहीतया 'स वै शरीरी प्रथमः स वै पुरुष उच्यते । आदिभूतः स देवानां ब्रह्माग्रे समवर्तत ॥' इति स्मृत्या प्रथमशरीरिणो ब्रह्मणो वेदोपलब्धिकालः सृष्ट्यादिः प्रतीयते । तत्र पूर्वं द्वितीयस्य शरीरिणः श्रवणस्मरणा- नुपलम्भात् परमेश्वरप्रेरणया ब्रह्मणो हृदि वेदाः प्रादुर्बभूवुरिति । तत एव 'तेने ब्रह्म हृदा य आदिकवये' इत्यादि स्मर्यते सोऽयमादिकालो ब्रह्मद्वारको वेदाना- माविर्भावकाल इति । तथा चाम्नायते—'यज्ञेन वाचः पदवीयमायन्तामन्व- विन्दन्नृषिषु प्रविष्टाम्' (ऋ. सं. ८. २. २३) इति । 'युगान्तेऽन्तर्हितान्वे- दान् सेतिहासान्महर्षयः । लेभिरे तपसा पूर्वमनुज्ञाताः स्वयंभुवा ॥' इति ।

एतेन वेदानां नित्यत्वाभ्युपगमात् सृष्ट्यादिरपि तत्प्रणयनकालो न भवितु- मर्हति । एतच्च तेषां नित्यत्वं 'वाचा विरूप नित्यया' (ऋ. सं. ६. ५. २५) इत्यादिमन्त्रवर्णैः स्पष्टतरं श्राव्यते । एतदेवाकलय्य भगवता **जैमिनिना** पूर्वमी- मांसाशास्त्रे 'कर्मैके तत्र दर्शनात्' (१।१।६) इत्यादिद्वादशसूत्रैरनित्यत्वं पूर्वपक्षीकृत्य 'नित्यस्तु स्याद् दर्शनस्य परार्थत्वात्' (१।१।१८) इत्यादि- षट्सूत्रैर्नित्यत्वं सिद्धान्तितम् । उत्तरमीमांसाशास्त्रेऽपि भगवता **पाराशर्येण** शास्त्रयोनित्वाधिकरणेन वेदानां ब्रह्मकार्यतां सूत्रयतापि 'अत एव च नित्यत्वम्' (१।३।२९) इत्यनेन नित्यत्वं व्यवस्थापितम् ।

यद्येवमुच्येत, वेदेषु बहुत्र कथांशका विभाव्यन्ते—'उतासि मैत्रावरुणो वसि- ष्ठोर्वश्या ब्रह्मन्मनसोऽधिजातः । द्रप्सं स्कन्नं ब्रह्मणा दैव्येन विश्वेदेवाः पुष्करे त्वाददन्त ॥' (ऋ. सं. ५. ३. २४) इति । एतदुपक्रम्य **निरुक्तम्** (५. अ. ३ पा. १–२ खं.) (श. ब्रा. ३ प्रपा. २ ब्रा. २२ कं.) इति च, एवं विश्वामित्रमुपक्रम्य **निरुक्तम्** (२. ७. २–३) इत्येवमादयोऽन्येऽपि म- न्त्रब्राह्मणभागा उदाहार्याः । ततश्च **रामायणभारतबृहत्कथारघुवंशादि**षूपल- भ्यानां **वाल्मीकि**पाराशर्यगुणाढ्यकालिदासादय इव ऋग्वेदादिषु श्रूयमाणा ऋषय एव तेषां कर्तार इति; तथा ऋषीणां लक्ष्यभूताः पुरूरवउर्वशीप्र- भृतय एव तेषां कथांशकप्राणा इति व्यक्तं प्रतिफलति । तत एव 'पुराणेति- हासबलेन वेदनिर्माणकालनिर्णयो नाशक्य इति कृत एवाधुनिकैः क्षोदः' इति वेदानां नित्यत्वादिप्रस्तावोऽप्रयोजक इत्यपि न युक्तम् ।

स्यादेतत्, यदि नाम वेदेषु संज्ञात्वेन विभाव्यमाना वसिष्ठादिशब्दाः कासांच- नानित्यव्यक्तीनां वाचका उपपत्त्या संगच्छेरन्, तत्र पुनः मन्त्रब्राह्मणात्मके वेद- काये तदुपबृंहके निरुक्तपूर्वोत्तरमीमांसाविस्तरे च वसिष्ठादिशब्दास्तद्घटिता मन्त्र- ब्राह्मणभागाश्च नित्यत्वतात्पर्येणैव नीयमाना यथायोगं व्याख्यायमानाश्च स्पष्ट-

मुपलभ्यन्ते । तथाहि—छान्दोग्ये "यो ह वै वसिष्ठं वेद, वसिष्ठो ह स्वानां भवति, वाग्वाव वसिष्ठः" इति वसिष्ठपदार्थव्युत्पादनम् । एवमन्येषामपि व्याख्या द्रष्टव्या । निरुक्ते—"इन्द्रशत्रुः तत्को वृत्रो मेघ इति नैरुक्ताः, त्वाष्ट्रोऽसुर इत्यैतिहासिकाः, अपां च ज्योतिषां च मिश्रीभावकर्मणो वर्षकर्म जायते तत्रोपमार्थेन युद्धवर्णा भवन्ति, अहिवत्तु खलु मन्त्रवर्णा ब्राह्मणवादाश्च—" (२. ५. २) इति वृत्रकथातत्त्वम् । एवं प्रजापतेः सुतानुगमनम्, इन्द्रस्य अहल्योपगमनम्, इत्यादि भिन्नतात्पर्यतया नीयमानमुपलभ्यते । श्रूयते हि ऋक्संहितायां 'शुक्रः शुशुक्वां उषो न जारः—' ( १. ५. १३ ) इति । 'उषो न जारः पृथुपाजो—' ( ५. २. १३ ) इति च । एतदेव पुनर्ऋक्संहितायां ऐतरेये ब्राह्मणे—'प्रजापतिर्वै स्वां दुहितरमभ्यध्यायद् दिवमित्यन्य आहुरुषसमित्यन्ये तामृश्यो भूत्वा रोहितंभूतामभ्यैत्—' इति कथारूपेण निरूपितम् । अत्र जैमिनिसूत्रभाष्यवार्तिककाराः—'प्रजापतिस्तावत्प्रजापालनाधिकारादादित्य एवोच्यते स चारुणोदयवेलायामुषसमुद्यन्नभ्यैत् । सा तदागमनादेवोपजायत इति तद्दुहितृत्वेन व्यपदिश्यते । तस्यां चारुणकिरणाख्यबीजनिक्षेपात्स्त्रीपुरुषयोगवदुपचारः' इत्याहुः । अत्रैव 'प्रजानाथं नाथ प्रसभमभिकं स्वां दुहितरं गतं रोहिद्भूतां रिरमयिषुमृश्यस्य वपुषा । धनुष्पाणेर्यातं दिवमपि सपत्राकृतममुं त्रसन्तं तेऽद्यापि त्यजति न मृगव्याधरभसः ॥' इति नक्षत्रपुञ्जसंनिवेशरूपकाश्रितं महिमस्तवपद्यमपि द्रष्टव्यम् । एवमेव ऋक्संहितायां 'उदीरय पितरा जारमाभगं—' ( ७. ६. १०. ) इति । एतज्जारपदमालम्ब्य तैत्तिरीयारण्यके "—गौरास्कन्दिन्, अहल्यायै जार, कौशिकब्राह्मण गौतमब्रुवाण—" ( १. १२ ) इति पाणिनिसूत्रितः सुब्रह्मण्यानिगदः ( १ । २ । ३७ ) तथा शतपथब्राह्मणे ( ३. ३. ४. १८ ) । इदमिन्द्राहल्यावृत्तं वाल्मीकीये रामायणे विततम् ( १. ४८-४९ ) अत्र निरुक्तकाराः—'आदित्योऽत्र जार उच्यते रात्रेर्जरयिता—' ( ३. ३. ४ ) । वार्तिककारा अपि—"एवं समस्ततेजाः परमैश्वर्यनिमित्तेन्द्रशब्दवाच्यः सवितैव अहनि लीयमानतया रात्रेरहल्याशब्दवाच्यायाः क्षयात्मकजरया हेतुत्वाज्जीर्यत्यस्मादनेनैवोदितेनेत्यादित्य एवाहल्याजार इत्युच्यते, न तु परस्त्रीव्यभिचारात्" इति दिक् । अतो नित्या वेदा इति स्थितम् ॥

यत्पुनः पुरुषसूक्ते—'तस्माद्यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे । छन्दांसि जज्ञिरे तस्माद् यजुस्तस्मादजायत ॥' ( ऋ. सं. १० मं । य. सं. ३१ अ. । अ. सं. १९ कां. ) इति । ऐतरेये—'ऋग्वेद एवाग्नेरजायत यजुर्वेदो वायोः सामवेद आदित्यात्' ( ५. ५. ७ ) इति । एवमन्यत्र । 'अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम् । दुदोह यज्ञसिद्ध्यर्थमृग्यजुःसामलक्षणम् ॥' ( म. १ ) इत्यादिस्मृतिषु वेदानामनेकधा जनिमत्त्वमाम्नायते, तदपि तत्राम्नातानां, भूर्भुवःस्वःप्रधानानामग्निवाय्वादित्यानां तिसृणां देवतानां यज्ञप्रपञ्चार्थम् । ततश्च अग्निवायुरविभ्य इति चतुर्थ्यपि साध्वी । तत्र द्वितीयं कर्म आत्मा; दोहनं च अध्यापनं, परसंक्रान्तिसामान्येन । तथाच मुण्डके श्रूयते—'ब्रह्मा देवानां प्रथमः संबभूव

विश्वस्य कर्ता भुवनस्य गोप्ता। स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह ॥ अथर्वणे यां प्रवदेत ब्रह्मा तां पुरोवाचाङ्गिरे ब्रह्मविद्याम्। स भारद्वाजाय सत्यवाहाय प्राह भारद्वाजोऽङ्गिरसे परावराम् ॥' इति। उपपद्यते चैतद् दोहनं=क्षारणं=व्युत्पादनम्=अध्यापनं च। तदेतद् ब्राह्मणैर्मन्त्राणां संभवति, स्वाभिप्रेतस्य स्वेनैव विशकलनदर्शनात्; उच्छिष्टसूक्ते-'पुराणं यजुषा सह' इत्यत्र पुराणपदेन पुराणमूलानां ब्राह्मणानामेव ग्रहणौचित्याच्च ( अथर्वसं. ११. २५. ४ ) वेदानां जनिमत्त्वश्रुतिस्मृती अपि प्रादुर्भावमूलिके इत्यन्यत्र विस्तरः ॥

येऽपि पुनर्वैशेषिका नैयायिकाश्च शब्दानामुत्पन्नप्रध्वंसशीलतया तद्राशीनां वेदानामनित्यत्वं प्रतिपेदिरे, तदपि प्रादुर्भावनिबन्धनम्। तथात्वेऽपि आ च हिरण्यगर्भादिदानीमवधि त एव मन्त्रा विधयश्च गुरुशिष्यपारम्पर्येण प्रवर्तन्त इति वैदिको व्यवहारो निर्बाध एव। सांख्यास्तु वेदानामपौरुषेयतां स्वतःप्रमाणतां च प्रतिपद्यमाना अपि तदनित्यतामङ्गीचक्रिरे। तथा च सांख्यानां सूत्राणि—'न पौरुषेयत्वं तत्कर्तुः पुरुषस्याभावात्। न मुक्तामुक्तयोरयोग्यत्वात्। नापौरुषेयत्वान्नित्यत्वमङ्कुरादिवत्। तेषामपि तद्योगे दृष्टबाधादिप्रसक्तिः। यस्मिन्नदृष्टेऽपि कृतबुद्धिरुपजायते तत्पौरुषेयम्। निजशक्त्यभिव्यक्तेः स्वतःप्रामाण्यम् ॥' ( ५।४६-५१ ) इति। अत्र वैशेषिकास्तु—'तद्वचनादाम्नायस्य प्रामाण्यम्' ( वै. १. १. ३।१०२. ९ ) इत्यत्र तदा, अनुपक्रान्तोऽपि परमेश्वरः 'तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्यः' ( न्या. द. २. १. ५६ ) इति गौतमसूत्रे वेद इव परामृष्ट इति ( तेन ईश्वरेण वचनात् प्रणयनात् आम्नायस्य वेदस्य प्रामाण्यम् ) ईश्वरप्रामाण्येन वेदप्रामाण्यमाकलय्य तस्य परतःप्रामाण्यं व्यवजह्रुः। वस्तुतस्तु 'अथातो धर्मं व्याख्यास्यामः' ( वै. १।१।१—३ ) इत्यादिना 'प्रमाण—' ( न्या. द. १।१।१-२ ) इत्यादिना च स्वर्गापवर्गतन्मार्गगवेषणायां प्रत्यक्षानुमानकक्षाधिकचर्चायां तावदाप्तोपदेशः शब्दः शरणमिति निष्प्रत्यूहप्राये प्रयत्ने—सांख्यानां परिभाषितसाधनासौष्ठवेन चरमकोटिप्रवेशाभावाद् ईश्वरासिद्धिरिव ( सां. द. १।९२ ); चार्वाकचार्वीचर्वणाचणानां प्रमेयप्रथमकोटिप्रवणानां तार्किकाणां भूतभौतिकपदार्थसामान्येन शब्दकार्यतासरणिः। किंवा, प्रतिपादकदृष्ट्या प्रतिपाद्यस्य सौक्ष्म्ये तद्वारेण प्रतिपादकसिद्धिस्तस्य भूतभौतिकपदार्थातिशयित्वे परिणामिनीति। तत ईश्वरस्य तद्वेदकस्य ज्ञानस्य, वा ज्ञानस्य तद्वेद्यस्य ईश्वरस्य चाविशेषाद् ब्रह्म-ब्रह्म-ब्रह्मेति लौकिको वैदिकश्च व्याहारः। तार्किकाणां सरणावपि पुनः कार्यकारणभावनित्यत्वानित्यत्वविभागादिक्लृप्तिः प्राधान्येन लोकायतवस्तुनिर्णायिकेत्यलमियता। सिद्धान्ततत्त्वविवेके स्पष्टाधिकारे आचार्य कमलाकरेण परमाणूनां सावयवतां साधयित्वा पर्यन्ते—'अहर्निशं रासभचर्चयैव कालो गतस्तर्कविदामतस्तैः। अवर्गमूलानवबोधयुक्तैर्ज्ञातो निरग्रः परमाणुरेषः ॥' इत्येवमुपहासेनोपसंहृतम्। परमाणुं परममहत्परिमाणं च लक्ष्यीकृत्य—'शून्याल्लघीयाचृणरूपराशिर्महाननन्तो गणितेन यस्मात्। सिध्यत्यतः सेश इवास्ति नूनमणोरणीयान् महतो महीयान् ॥' इति श्रीबापुदेवपादानां

श्रौतसमस्यापूर्तिरपि समनोनियोगं विवेचनीयात्र । अतो नित्या वेदा इत्येव स्थितम् ॥

यत्त्वत्र सांप्रतिका वेदवाचस्पतयो दयानन्दस्वामिन ऋग्वेदादिभाष्यभूमिकायां वेदानां नित्यत्वमङ्गीकृत्यापि तदुत्पत्तिगणनामकार्षुस्तत्र त्रेधा भ्रमोऽजनि । नित्यस्योत्पत्तिकालप्रदर्शनं प्रथमो भ्रमः । उपत्तिकालप्रदर्शने स्वायंभुवादिगतमनूनां संधिकालस्य (१२०९६०००) एतावद्वर्षसंख्यस्य परित्यागो द्वितीयो भ्रमः । यस्माद्गणनायामेकसप्तत्या महायुगैरेको मनुः, ब्रह्मणो दिने तु चतुर्दश मनवः एवं षड्नं सहस्रं ब्रह्मदिनं भवति ७१×१४=९९४ । तत्पूर्त्यै संधिकालयोजनं शिरस्यापतति, उत्पत्तिकालोऽपि यदि वक्तव्यस्तर्हि ब्राह्मकल्पारम्भादिति तृतीयो भ्रमः । परं नहि ब्रह्मणो विलयाभावे वेदविलयः संघटते । अत्रेयं गणनापद्धतिः—

दैवयुगानि । मानुषयुगानि ।

१२०००० = ( ३६०×१२०००० ) = ४३२००००

ब्र. दि = १०००×१२०००० = ( १०००×४३२०००० ) = ४३२००००००

अथवा, एकमनुमानं चतुर्दशगुणं ४२९४०८०००० स्वसंधिकालेन २५९२०००० = १५×१७२८००० युतं ब्रह्मदिनं भवति ।

ब्रह्मदिनगतकालस्त्वयम्—

७१×मनु ४३२०००० = ३०६७२००००

६×३०६७२०००० = १८४०३२००००

७×मनुसं. १२०९६००० = १२०९६०००

२७×४३२०००० = ११६६४००००

कृतम् = १७२८०००

त्रेता = १२९६०००

द्वापरम् = ८६४०००

शकादौ गतकलिः = ३१७९

वर्तमाने ब्रह्मदिने गतम् = १९७२९४७१७९+ शकवर्षाणि ।

यत्पुनरत्र सांप्रतिका वेदविद्यानिधयः सत्यव्रतसामश्रमिणो निरुक्तालोचने वेदकालनिर्णयः शक्योऽशक्यो वास्माकमिति कोटीकृत्याशक्य इति निरणैषुस्तदपि भूम्यादिभौतिककार्यसमानसत्ताकं सांख्यानां वेदापौरुषेयत्वे सति तत्कृतकत्वमिव प्राकृतिकप्रलयावधिकं द्रष्टव्यम् । सांख्या हि अपौरुषेयत्वनित्यत्वयोरङ्कुरादौ व्याप्तिव्यभिचारं मन्यमानास्तथा प्रतिपद्यन्ते । इत्थं च सांख्यानां स्वोत्प्रेक्षितपुरुषाभाव इव सामश्रमिणां साधनाभावे वेदकालनिर्णयोऽशक्य इति परिणमति । ऋग्वेदादिभाष्यभूमिकापेक्षया निरुक्तालोचनोक्तयोऽधिकतरा वैदिकसाम्राज्यसुखसाधनहेतव इति तत्परीक्षकाणां पुरस्तादस्त्येव व्यक्तम् ॥

यत्त्वत्र विद्वद्बालगङ्गाधरतिलकः स्वोपज्ञे ओरायननिबन्धे संहितासहायेन ब्राह्मणादिग्रन्थेन वेदानां सापेक्षं लौकिकं प्राचीनत्वं साधितवान्; तदपि खिष्टाब्दतः

प्राक् (२०००) वर्षाण्यारभ्य (१४००) वर्षपर्यन्तं वेदनिर्माणमुत्प्रेक्षमाणानां विद्वद्रमेशचन्द्रदत्तप्रभृतीनां भ्रान्तिभञ्जनार्थमेवालमित्याहुः। सैषा गणनापद्धतिर्वेदानां वास्तविके कालनिर्णये कुण्ठितशक्तिः प्रौढगाणितिकैकवेद्या बहुशाखा चेत्युपेक्ष्यते। कौतुकिभिर्भारतीयज्योतिःशास्त्रवेदकालनिर्णय–दिङ्मीमांसादिषु विक्षेपपातभगणवत् क्रान्तिपाताख्यायनांशभगणा अपि पर्यालोचनीयाः॥

एवंच चतुरस्रमीमांसया वेदानां नित्यत्वे निष्पन्ने, किंकालो वेद इति (११ पृ.) तदीया कालकलनलिप्सा आयुष्मतां धात्रीकरकलितचन्द्रबिम्बमुखपिण्डिकेव प्रमोदावहा वहतु कल्पनाभूमौ, किं तावता। इत्थंच मीमांसिते च वेदकालेऽदसीयान्यङ्गोपाङ्गानि स्वयं नियन्त्रितकालकलनानि स्युः' इति कथं सुसंधानम्। तदपि प्रतिपाद्यते—अङ्गिनो वेदस्यैव तावन्नित्यत्वं प्रतिज्ञायते, नत्वङ्गानाम्। एवमङ्गाङ्गिभावो विरुद्ध्यते। मैवं वादीः। नात्र करचरणसंघात इवाङ्गी विवक्ष्यते। केवलं रूपकम्। किंवा तथास्तु। ननु विरुध्यत इत्युक्तम्। नैवं दोषः। वेदमुपजीव्यैव तदङ्गोपाङ्गानां प्रवृत्तिदर्शनात्। ननु मन्त्रानुपजीव्य ब्राह्मणानि प्रवृत्तानि, तत एतेषामपि व्याकरणादिवदङ्गादित्वं प्राप्नोति। मैवं भ्रमीः। युक्तिप्रमाणाभ्यां मन्त्राणां ब्राह्मणानां चेत्युभयेषामेव वेदत्वव्यपदेशाभ्युपगमात्। तथाहि—मननान्मन्त्राः। [1]बृंवणाद् ब्राह्मणानीति च खलु निरुच्यते। एवमपि वैदिकव्यवहारमन्तरेण न मन्त्राणां तादृशं किमपि लक्षणं प्रणीतं, प्रणेतुं वा पार्यते, यस्माद् ब्राह्मणासंश्लिष्टं ते विज्ञायेरन्निति तत्र तत्र लक्षणविदां सूक्तयोऽववोधयन्ति। व्यवहारेणापि मन्त्रब्राह्मणयोः पार्थक्यावबोधे बहुत्र संहितापाठेषु ब्राह्मणसंकीर्णा एव मन्त्रा अद्यावधि पठ्यमाना ग्रन्थतः कण्ठतश्चोपलभ्यन्ते। तदेतन्निर्बाधं तैत्तिरीयाणां परस्सहस्राणां संहिताब्राह्मणारण्यकपाठपर्यालोचनतोऽवसीयते। [2]तैत्तिरीयाणां वाजसनेयिनां च संहितादिपाठाः पाठभेदादिकुतर्कसाहित्यबलेन शाखाभेदमुपेक्षमाणैरप्याधुनिकैर्नैकीकर्तुं शक्याः; यदधुना वेदगलग्रहकालेऽपि शाखाभेदप्रयुक्तसंहिताद्वैधोन्मूलनमुपपद्येत। एवंच द्वित्रशाखामात्रशेषे चरणव्यूहादिविदिते विलीने वेदविस्तरे, यावदुपलब्धवेदभागावगाहनेनापि सर्वथा मन्त्रराशिषु ब्राह्मणसंक्रमो नेति; वा ब्राह्मणराशिषु मन्त्रसंक्रमो नेति सशपथं कः प्रेक्षावान् सिद्धान्तयितुं शक्नुयात्। तत ऋग्यजुःसामबोधको मन्त्रशब्द इव मन्त्रब्राह्मणबोधको वेदशब्दः प्रायेणात्मपर्यायेण सहाजनिष्ट। तत्रापि श्रुतिस्वाध्यायाम्नायागमादिपर्याये सत्यपि प्रकृतिवैलक्षण्येन बह्वर्थो वेदशब्दो मन्त्रब्राह्मणवाच्यार्थे संकेतित इति मन्यन्ते। तथाचापस्तम्बसूत्रम्—'मन्त्रब्राह्मणयोर्वेदनामधेयम्' इति। एवमेव शुक्लयजुःप्रातिशाख्येऽपि निरूपितम्। 'तच्चोदकेषु

---

१ वैयाकरणैरपि॥

२ सांप्रतमस्माकं सौभाग्यभूम्ना युरोपदेशे मैत्रायणीयानां कठानां चापि वेदग्रन्थौ मुद्रितौ। एवं कृष्णयजुषि तैत्तिरीयं मैत्रायणीयं काठकं चेति वेदग्रन्थत्रयम्। अहो अस्माकं सुदिनम्॥

मन्त्राख्या । शेषे ब्राह्मणशब्दः' (२।१।३०—३१) इति सूत्राभ्यां मन्त्रब्राह्मणे विभजतो भगवतो जैमिनेरपि तयोर्वेदत्वाख्यानमेवाभिप्रेतम् तदेतद्विभजनमृग्यजुःसामविभागवद् याज्ञिकानां कर्मसंपादनार्थमेव जज्ञे; न पुनः स्वाध्यायतारतम्यसंपादनार्थमिति सर्वं तदङ्गोपाङ्गालोडनेनासकृज्ज्ञायत एव । अपि च। अत्र शेषत्वेन ब्राह्मणत्वाख्यानं ब्राह्मणस्य मन्त्रसादृश्यमवबोधयति; न तस्मादेकान्ततः पार्थक्यम् । ऋचः साम्न इव वा ऋक्सामाभ्यां यजुष इवेति । किं पल्लवितेन, मन्त्रतो ब्राह्मणविभाग इव कर्मप्रतिपत्त्यै ब्राह्मणतोऽपि ब्राह्मणविभागः शेषशब्देनैवापस्तम्बेन मुनिना व्यवाहारि । तथा च तत्सूत्राणि—'कर्मचोदना ब्राह्मणानि । ब्राह्मणशेषोऽर्थवादः, निन्दाप्रशंसा परकृतिः पुराकल्पश्च ।' इति, यदि पुनरत्र शेषशब्द इतरथानीयते तर्हि ब्राह्मणशेषः कल्प इत्यनिष्टं प्रसज्यते । नहि ब्राह्मणानामिव कल्पानां (श्रौतस्मार्तसूत्राणाम्) अपौरुषेयत्वं स्वतःप्रमाणत्वं वा मीमांसकैरङ्गीक्रियते । मन्त्रस्येव ब्राह्मणस्य त्वपौरुषेयाधिकरणे 'आख्या प्रवचनात् । परंतु श्रुतिसामान्यम् । कृते वा नियोगः स्यात् कर्मणः संबन्धात्' (१।१।३०—३२) इति सूत्रैरपौरुषेयत्वं सिद्धान्तितमेवेति संक्षेपः ॥

एतेनाङ्गिनो वेदस्य नित्यत्वेऽप्येतस्याङ्गानामुपाङ्गानां चानित्यत्वमविरुद्धमिति स्थितम् । अनित्यत्वे चैतेषां कालजिज्ञासायां यद्यपि मौलिकं कालविज्ञानं दुर्विभाव्यं तथापि प्रचरद्ग्रन्थानुरोधेन तु तत् सुसंधानमेव । तत्रापि सांप्रतिकग्रन्थे यत्र यः कालो निर्दिश्यते स इव चिरंतनग्रन्थेऽपि काललिङ्गोपलम्भे स काल एवास्थेयः । सोऽयं संवादविपर्यासेऽपि समस्यापूर्तिवर्त्मना सहसाऽन्यथा न संगमनीयः । तथात्वे हि वेदेष्विव ऋषिप्रोक्तेषु ग्रन्थेष्वपि बहुत्र भाषाभेदाद् अभिधानसादृश्याद् अतीतानागतवस्तुदर्शनाच्च योगविज्ञानविधुराणां परमार्थस्खलनावसर आपततीति मन्यन्ते स्थेयाः । तत्रेयं दिक्—वेदेषु वसिष्ठादिपदार्था नित्या एवाश्रीयन्ते; तदङ्गोपाङ्गेषु तु ते ह्यनित्या अपि । तत एव वसिष्ठादयो गोत्रप्रवरप्रवर्तका उपपद्यन्त इत्यन्यत्र विस्तरः ॥

३ । साहित्यस्य किमुद्देश्यम् । अत्र तत्रभवान् भामहः—

> 'धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च ।
> करोति कीर्तिं प्रीतिं च साधुकाव्यनिबन्धनम्॥'

आचार्यदण्डी—

> 'इह शिष्टानुशिष्टानां शिष्टानामपि सर्वथा ।
> वाचामेव प्रसादेन लोकयात्रा प्रवर्तते ॥
> इदमन्धंतमः कृत्स्नं जायेत भुवनत्रयम् ।
> यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते ॥
> आदिराजयशोबिम्बमादर्शं प्राप्य वाङ्मयम् ।
> तेषामसंनिधानेऽपि न स्वयं पश्य नश्यति ॥'

---

१ 'निषेवणम्' इति दर्पणस्थः पाठः.

आचार्यमम्मटः—

'काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।
सद्यः परनिर्वृतये कान्तासंमिततयोपदेशयुजे ॥'

चतुर्वर्गसर्गो हि लोकयात्रा साहित्योपज्ञातेन हृदयंगमेन वाचां गुम्फेन संपद्यमाना कल्पलतेव व्यवहारभूमिमलंकुरुते । 'न स शब्दो न तद्वाच्यम्—' इत्यादिसमुदयेन संपन्नं कविकर्म शब्दपूर्वकसृष्टिकर्मेव किं किं संपाद्यं न संपादयेत् ।

मयाप्युपश्लोक्यते—

'त एव साहित्यगुणा न चान्ये
यैरद्भुतैर्बुद्धिपथाधिरूढैः ।
निरर्गलोद्यद्व्यवसायशूरै-
राकृष्यमाणं जगदुन्नतं स्यात् ॥'

अत्र जयदेवादीनां गीतगोविन्दादिषु शास्त्रसमयोल्लङ्घनदिगपि नोपेक्षणीया अभ्युदयनिश्रेयसकाङ्क्षिभिः । ममापि पुरोभागितेयम्—

कायेन वाचा मनसाऽपि कामं
शृङ्गारसाम्राज्यरसं प्रपन्नाः ।
रतिं गुरूणामपि वर्णयन्तो
विशृङ्खलाः किङ्कवयो विभान्ति ॥

४ । अस्य (साहित्यस्य) प्रधानतः प्रवन्धाः, बन्धकाश्च के इति प्रस्तावे संप्रति कालकवलनावशिष्टं नाट्यशास्त्रं तत्रभवता भरतेन मुनिना प्रणीतं पूर्वम् । महापुराणमाग्नेयं भगवता कृष्णद्वैपायनेन प्रणीतं परस्ताद्; इति द्वितयं प्रेक्षावतां विचारभूमाववतरति ।

तत्र भरतो मुनिर्महेन्द्रविजयोत्सवे पितामहमहेश्वरोपदिष्टं नाट्यवेदं प्रथमं प्रायौक्षीत् । ततो भरतान्तेवासिन ऋषीणां न्यङ्गकरणं कुर्वन्तस्तैरभिशप्ताः । ततो राज्ञो नहुषस्याभ्यर्थनया भरतानुमोदितास्ते भूमौ तस्य च गृहेषु नाट्यप्रयोगमकार्षुर्ऋषीणां शापतश्चामुचन् । इत्यादि नाट्यशास्त्रस्याद्यान्त्योपान्त्याध्यायैरवसीयते । एतन्मूलकमेव—

'उद्धृत्योद्धृत्य सारं यमखिलनिगमान्नाट्यवेदं विरिञ्चि-
श्चक्रे यस्य प्रयोगं मुनिरपि भरतस्ताण्डवं नीलकण्ठः[१] ।
शर्वाणी लास्यमस्य प्रतिपदमपरं लक्ष्म कः कर्तुमीष्टे
नाट्यानां किंतु किंचित्प्रगुणरचनया लक्षणं संक्षिपामि ॥'

इति दशरूपोक्तम् । भरतेन कृतं नाट्यशास्त्रं तद्वंशजाश्च लक्षणया भरतनाम्ना कीर्त्यन्ते । यथा किल दौष्यन्तेः शाकुन्तलेयस्य राज्ञो भरतस्योत्तरे राजानः क्षत्रि-

१. महेश्वराज्ञया भरतकृते तण्डुना प्रोक्तत्वात्ताण्डवमिति संज्ञा.

त्र्याश्च भरता इति । तदिदं 'बह्वच इञः प्राच्यभरतेषु' ( २।४।६६ ) इति पाणिनिसूत्रतोऽपि स्पष्टम् । नाट्यशास्त्रतः पुनरन्येऽपि नाट्याचार्या उपलभ्यन्ते—

'यथोक्तं मुनिभिः पूर्वं स्वातिनारदपुष्करैः ।'
( ३४ अ. २ श्लो. )

'न शक्यं चान्यथा कर्तुं वचनं पार्थिवस्य हि ।
अस्माकं चैव सर्वेषां नहुषस्य महात्मनः ॥
आत्मोपदेशसिद्धं हि नाट्यं प्रोक्तं स्वयंभुवा ।
शेषं प्रस्तारतन्त्रेण कोहलः कथयिष्यति ॥'
( ३७ अ. १७—१८ श्लो. )

'भरतानां च वंशोऽयं भविष्यंश्च प्रवर्तितः ।
कोहलादिभिरेवं तु वत्सशाण्डिल्यधूर्तिलैः ॥'
( ३७ अ. २४ श्लो. )

नाट्यशास्त्रस्य प्रणयनं त्वेवमुच्यते—

'समाप्तजप्यं व्रतिनं स्वसुतैः परिवारितम् ।
अनध्याये कदाचित्तं भरतं नाट्यकोविदम् ॥
मुनयः पर्युपास्यैनमात्रेयप्रमुखाः पुरा ।
पप्रच्छुस्ते महात्मानो नियतेन्द्रियबुद्धयः ॥
योऽयं भगवता सम्यक्कथितो वेदसंमितः ।
नाट्यवेदः कथं चायमुत्पन्नः कस्य वा कृते ॥
कत्यङ्गः किंप्रमाणश्च प्रयोगश्चास्य कीदृशः ।
सर्वमेतद्यथातत्त्वं भगवन्वक्तुमर्हसि ॥
तेषां तद्वचनं श्रुत्वा मुनीनां भरतो मुनिः ।
प्रत्युवाच ततो वाक्यं नाट्यवेदकथां प्रति ॥
भवद्भिः शुचिभिर्भूत्वा तथावहितमानसैः ।
श्रूयतां नाट्यवेदस्य संभवो ब्रह्मनिर्मितः ॥
पूर्वं कृतयुगे विप्रा वृत्ते स्वायंभुवेऽन्तरे ।
त्रेतायुगे संप्रवृत्ते मनोर्वैवस्वतस्य च ॥
ग्राम्यधर्मे प्रवृत्ते तु कामलोभवशं गते ।
ईर्ष्याक्रोधादिसंमूढे लोके सुखितदुःखिते ॥
देवदानवगन्धर्वै रक्षोयक्षमहोरगैः ।
जम्बूद्वीपे समाक्रान्ते लोकपालप्रतिष्ठिते ॥
महेन्द्रप्रमुखैर्देवैरुक्तः किल पितामहः ।
क्रीडनीयकमिच्छामो दृश्यं श्रव्यं च यद्भवेत् ॥

१ एवं लेखेऽपि यत्कालनिर्णयः संदिह्यते तदस्माकं कापेयम्.

न च वेदविहारोऽयं संश्राव्यः शूद्रजातिषु ।
तस्मात्सृजापरं वेदं पञ्चमं सार्ववर्णिकम् ॥
एवमस्त्विति तानुक्त्वा देवराजं विसृज्य च ।
सस्मार चतुरो वेदान् योगमास्थाय तत्त्ववित् ॥
धर्म्यमर्थ्यं यशस्यं च सोपदेशं ससंग्रहम् ।
भविष्यतश्च लोकस्य सर्वकर्मानुदर्शकम् ॥
सर्वशास्त्रार्थसंपन्नं सर्वशिष्यप्रवर्तकम् ।
नाट्याख्यं पञ्चमं वेदं सेतिहासं करोम्यहम् ॥
संकल्प्य भगवानेवं सर्वान्वेदाननुस्मरन् ।
नाट्यवेदं ततश्चक्रे चतुर्वेदाङ्गसंभवम् ॥'
(१ अ. २—१६ श्लो०)

एतेन वैवस्वताख्यस्य सप्तमस्य मनोः कस्मिंश्चित्त्रेतायुगे राज्ञो नहुषस्य राज्यकाले; यद्वा सांप्रतिकाद् गतकलेः प्राग् द्वापरयुगे प्रोक्तेभ्यः पुराणेभ्यः पूर्वं त्रेतायुगे नाट्यशास्त्रस्य प्रणयनमिति व्यक्तम् । तत्र प्रथमकोटावन्यो नहुषो द्वितीयकोटावन्य इत्यपि संभवन् पन्थाः । नहुषश्च आयुषः पुत्रो ययातेः पितेति महाभारतम् ( आदिपर्व ९५ अध्या. ७ ग. ) ॥

अत्र मनुष्यस्य यावदायुः संभाव्यते तावतो बह्वधिकनिबन्धनादिदानींतना इतिहासपुराणेषु संदिहानास्तान्यन्यथाऽन्यथा गमयन्तोऽपि वस्तुतो न विश्रान्तिं संश्रयन्ते । उपपद्यते चैतत् । यद् यथोत्पादितं तत् तथैव परीक्षितं स्वरूपप्रतिष्ठितं भवति । इतरथा परीक्ष्यमाणं तु स्वरूपाप्रतिष्ठितमेव । नहि मृद्व्यतिरेकेण विभाव्यमानो मृद्घटः स्वरूपमधितिष्ठतीति । एवमस्माकमार्यावर्तभुवामितिहासः पुराणं चापि न यथाश्रुतनामार्थमात्रमभिदधत्प्रवर्तेते, किंतु पातञ्जलादिप्रख्यातयोगविभूतिसंदृब्धतया ( यो. द. वि. पा. ) तत्रतत्र विलक्षणदेशकालपात्रघटितमपि वस्तु पल्लवयत् । अत एव भगवता वेदव्यासेन—

'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यति ॥'
( म. भा. आदिप. १ अ. ३६७ श्लो. )

इत्येवमितिहासपुराणाभ्यां वेदार्थोपबृंहणं विधीयते । न स्यादप्येवमादरभूरितिहासः पुराणं चेति, यदि नाम कथमपि लोकवञ्चनार्थं प्रवर्तमानं सिध्येत् । नैवं पुनर्विज्ञायते जल्पवितण्डावर्जम् । अत एव चात्र प्रमेयानवबोधेन कुतर्कोत्थानमपि 'नैष स्थाणोरपराधो यदेनमन्धो न पश्यति' इत्यनेन परिह्रियते । वेदानामिवैतेषां कण्ठपाठसंप्रदायाभावात् क्वचित्प्रक्षेपयोगेन संक्रान्तपातकमिव संसर्गदूषणमपि त्रयीतदनुदर्शनसंवादक्रियया 'विहितप्रायश्चित्तमवसेयम् ।

१ अद्यावधि बहूनां पुराणानां सम्यङ् मुद्रणं नाजनिष्ट, जातेऽपि श्लोकानुक्रमणीविरहेण परसंवादो दुःशकः.

यदि चात्र सांप्रतिकपर्यालोचनदृष्ट्या कालसंकोचचिकीर्षायां मीमांसकानां सहस्रसंवत्सरशब्दस्य सहस्रदिनपरताधिकरणन्यायोऽवतार्येत ( जैमिनिद. ६ अ. ७ पा. १३ अधि. ). तदापि विसंवादाधिस्तदवस्थ एवाभिलक्ष्यते । यतस्तत्र साधारण्येनाधिकारिचिन्तायां ब्राह्मणानुगृहीतः कालसंकोच आश्रीयते; इह पुनरविशेषेण कालकलनायां गमकाननुगृहीतः कालसंकोचो विकासो वा कथमाश्रीयेत । या च शतायुःश्रुतिः, सापि युगपरतया मन्वादिभिः स्मर्यते ( म. स्मृ. १ अ. ८१–८४ श्लो. ); इत्थमितिहासपुराणाभ्यामेव किमपराद्धम् । यत्तदुक्तजातं गमकानुपलम्भेऽप्यन्यथा नीयते । एतेन हि भगवन्तं **रामभद्रं** तत्पितरं तत्रभवन्तं **दशरथं** चाभिलक्ष्यीकृत्य प्रवृत्तम्—

> **'दशवर्षसहस्राणि दशवर्षशतानि च ।**
> **रामो राज्यमुपासित्वा ब्रह्मलोकं प्रयास्यति ॥'**
> ( रा. वा. कां १ स. ९७ श्लो. )

> **'षष्टिर्वर्षसहस्राणि जातस्य मम कौशिक ।'**
> ( रा. वा. कां. २० स. १०. श्लो. )

इत्यादिवाक्यं नासंगतं मन्तव्यम् । बलादन्यथानयने तु सौरमानेन $\frac{१०१००}{३६०}$=२८$\frac{१}{१८}$ इति $\frac{६००००}{३६०}$=१६६$\frac{२}{३}$ इति तयोः कालावागच्छतः । अत्र द्वितीयस्य श्रद्धेयत्वेऽपि प्रथमः सर्वथाऽनुपपन्न एव । तथा तत्रैव **रामायणे** 'ऊनषोडशवर्षो मे रामो राजीवलोचनः' इत्येवमादिरुक्तकालो दिनत्वेन परिणममानोऽतितरामनुपपन्नो द्रष्टव्यः । नैवमत्रैवानुपपत्त्या पराक्रम्यते । यानि पुनर्ज्यौतिषे **होरा**स्कन्धे नानाप्रकाराणि योगोत्थितानि पुरुषायुषाणि पठितानि तत्रापि विसंवादगलग्रहान्न मुच्यामहे । जैमिनीयन्यायोऽपि स्वातन्त्र्येणावतार्यमाणः कालकलनासु प्रमाणपदवीं नाधिरोहतीत्यपि दर्शितमेव । देशकालविषयविप्रकृष्टानामेकस्वरालापोऽपि दूरदर्शिभिरेकहेलयाऽवहेलयितुमशक्यः । प्रक्षेपोऽपि साजात्यान्न विशिष्य मूलास्कन्दीत्यादि कणेहत्य परीक्षणीयम् । तस्माद् वेदेष्विव तदङ्गोपाङ्गेष्वपि यद् यथा स्मर्यते व्यवस्थाप्यते वा तत् तथैव नीयमानं पूर्वोपज्ञं भवितुमर्हतीति स्थितम् ॥

इहेदमपि पुरातत्त्वं प्रकृत्य पर्यालोच्यम्—

> **'श्रुतौ शतायुः पुरुषः प्रदिष्टो**
> **बहुत्वयोगी शतशब्दशक्यः ।**
> **रामादिकानामधिकायुरास्तौ**
> **युक्तं प्रतीमः फलितेऽसितायुः ॥'** इति ।

बहुत्वं चात्र लक्ष्यानुसारेण प्रतिपत्तव्यम् । इत्थं च जैमिनीयन्यायास्कन्दने पुनरिदमपि पर्यालोच्यमेव—

> **'स त्वार्षिको वासरिको भचक्र ( भवृत्त )-**
> **भोगो भवेद् भास्करसंश्रयेण ।**

तत्रापरं ( न्तिमं ) ब्राह्मणगौरवेण ( दर्शनेन )
स स्वीचकारेति विरोधभङ्गः ॥' इति ।

अथवा भवत्तीयापरभोगस्य प्रथमान्तत्वे—'महर्षिणाप्राहि ( ऽमानि ) विरोधशान्त्यै' इत्येवं चरमपादः पठनीयः ॥

प्रास्तावयं च प्राक् ( भूमि. १८ पृ. ) साहित्यस्य प्रबन्धा बन्धकाश्च क इति। तत्रावशिष्यते पौराणिकी कोटिः। यत्र सूक्ष्मेक्षिकया निरीक्षणायामनेके वैज्ञानिका विषयाः पुरस्क्रियन्ते । इदानीं तु प्रस्तुतमुपक्षिप्यते यत्पुराणेष्वन्यतममाग्नेयमिति । इह विषयान्तरवत् साहित्यविषयोऽपि भामहादिग्रन्थेभ्यस्तत्पूर्वेभ्यो वा संक्रामितः, आहोस्विद् वेदार्थोपबृंहकेभ्य आग्नेयादिभ्य एव भामहादिग्रन्था व्यधायिषत । तत्राद्यकोटिर्विशीर्यते बृहत्कथारघुवंशादिपर्यालोचनेन तत्कर्तृकालेऽपि कविकर्मपद्धतेरवश्यंभावाद्, यत्प्रयातान्येतानि गुणाढ्यकालिदासादिसूक्तान्यस्माकमवलम्बनानीति। आलंकारिकेषु भामहवर्जं नान्यः कश्चन चिरंतनत्वेन संप्रति संभावनामारूढ इति बहवः। भामहग्रन्थस्तदुपज्ञमित्यपि न सिध्यति। यस्मात्तस्मादेव—

'रूपकादिरलंकारस्तस्यान्यैर्बहुधोदितः।
न कान्तमपि निर्भूषं विभाति वनिताननम् ॥ १३ ॥
रूपकादिमलंकारं बाह्यमाचक्षते परे।
सुपां तिङां च व्युत्पत्तिं वाचां वाञ्छन्त्यलंकृतिम् ॥ १४ ॥
तदेतदाहुः सौशब्द्यं नार्थव्युत्पत्तिरीदृशी।
शब्दाभिधेयालंकारभेदमिष्टं द्वयं तु नः ॥ १५ ॥
( १ परिच्छे. )

इत्येतेन; तथा—

'इति निगदितास्तास्ता वाचामलंकृतयो मया
बहुविधकृतीर्दृष्ट्वाऽन्येषां स्वयं परितर्क्य च।
प्रथितवचसः सन्तोऽभिज्ञाः प्रमाणमिहापरे
गुरुतरधियामस्वाराध्यं मनोऽकृतबुद्धिभिः ॥ १६ ॥'
( १५ परिच्छे. )

इत्येवमादिना च तदीयेन सूक्तेन प्राचां काव्यानुशासनानां ज्ञापनात्। नाट्यशास्त्रे हि—

'उपमा दीपकं चैव रूपकं यमकं तथा।
काव्यस्यैते ह्यलंकाराश्चत्वारः परिकीर्तिताः ॥'
( १६ अ. ४१ श्लो. )

इत्येवमलंकारानुद्दिश्य लक्षयित्वा चाथ—

'गूढार्थमर्थान्तरमर्थहीनं
भिन्नार्थमेकार्थमभिप्लुतार्थम्।

१ तथा च ब्राह्मणम्—"आदित्यो वा सर्व ऋतवः—स यदोदेत्यथ वसन्तः, यदा संगवोऽथ ग्रीष्मः, यदा मध्यंदिनोऽथ वर्षाः, यदाऽपराह्णोऽथ शरत्, यदाऽस्तमेत्यथ हेमन्तशिशिरौ" इति। २ 'रूपकादी'तिश्लोकत्रयं प्रकाशस्य षष्ठपरिच्छेदेप्युद्धृतम्।

न्यायादपेतं विषमं विसंधि
शब्दच्युतं वै दश काव्यदोषाः ॥'
( १६ अ. ८४ श्लो. )

'श्लेषः प्रसादः समता समाधि-
र्माधुर्यमोजः पदसौकुमार्यम् ।
अर्थस्य च व्यक्तिरुदारता च
कान्तिश्च काव्यार्थगुणा दशैते ॥'
( १६ अ. ९२ श्लो. )

इत्येवं दश दोषास्तावन्तो गुणा उद्दिष्टा यथोद्देशं लक्षिताश्च । एत एव काव्यालंकारसूत्रे–'ओजप्रसादश्लेषसमतासमाधिमाधुर्यसौकुमार्योदारतार्थव्यक्तिकान्तयो बन्धगुणाः' ( ३ अधिकर. १ अध्या. ४ सू. ) इति **वामनेनोक्ताः**; 'माधुर्यौजःप्रसादाख्यास्त्रयस्ते न पुनर्दश' इति **प्रकाशकारादिभिः** प्रयुक्ता व्याख्यातृभिर्वामनोक्ततया ख्यापिताश्चेति । परमेते ( दश गुणा ) वामनतः प्रत्नत्वेन संभावितस्य **दण्डिनः काव्यादर्शे**ऽपि सन्ति । दण्डिवामनयोर्ग्रन्थतो गुणानां भरताद्युपज्ञत्वं न ज्ञायते । भरतेन स्मृतानां **स्वातिनारदपुष्करादीनां** ग्रन्थेषु पारम्पर्येषु वा त एतेऽधिका वा काव्यालंकारविषया इति को निर्णयेत् । इतः 'पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः । कर्मन्दकृशाश्वादिनिः' (४।३।११०–१११) इति **पाणिनिसूत्राभ्यां शिलालिकृशाश्व**प्रणीतानां केषांचन नटसूत्राणां सत्तावगमः स्वरूपानवबोधात्संकुचितप्रसरः । दण्डिनः प्रत्नत्वेन संभावितस्य **भामहस्य** काव्यालंकारे तु भरतोक्तेभ्यो दोषगुणेभ्यः कतिपय एव दर्शिताः । एवं समासव्यासवर्णनाभिप्रायतो भामहो भरतात्पूर्व इत्याख्यातुमपि रसना न स्फुरति; यतो भामहादिभिर्भरतादेव नाट्यविषय उद्धृत इति, विषयोपलब्धावपि तस्य समासव्यासाभ्यामुपपादनं तु ग्रन्थकृतामैच्छिकमिति मन्यन्ते ।

नाट्यशास्त्रस्येवार्षस्याग्नेयस्यापि यथाऽन्ये प्रतिपाद्यास्तत्र तत्र शब्दतोऽर्थतस्तात्पर्यतो गृहीता विभाव्यन्ते. तथैतेऽलंकारविषया अपीति बहुदर्शिनां प्रत्यक्षम् । तदेतदालोकावकाशे दर्शनवैचित्र्येण शुक्तिशकलेषु रजतखण्डवद्, दामभक्तिषु भुजगभोगवद्, याम्योत्तरवलयावलम्बिनो मरीचिमालिनो मरीचिनिचयेषु पानीयपूरवदुत्तरकाले बाधाभावान्न प्रत्याख्येयम् । इदानीमाग्नेयस्य विशुद्धपुस्तकालाभेऽपि तदीयस्य विषयजातस्य तत्प्रभवत्वं तु **नारदीयवाक्यबलेन** संवादान्तरेण च श्रद्धेयमेव । आग्नेयपुराणं प्रस्तूय पठ्यते नारदीये पूर्वभागे ९९ एकोनशततमेऽध्याये । तत्र '—छन्दःशास्त्रमतः परम् । साहित्यं च ततः पश्चात्—' इदमपि ।

इत्थं च खलु यथा नामग्राहमगृहीतमपि भामहादिप्रोक्तं काव्यादर्शादिषूपलब्धं तदीयतया परिगृह्यते तथैवाग्नेयप्रोक्तमपि परिगृह्यताम् ।

तत्रेयं तुलनादिक्—

'अन्यैः स्वचरितं तस्यां नायकेन तु नोच्यते ।
स्वगुणाविष्कृतिं कुर्यादभिजातः कथं जनः ॥'
इति भामहः ( १ परिच्छे. २९ श्लो. )

'नायकेनैव वाच्यान्या नायकेनेतरेण वा ।
स्वगुणाविष्क्रियादोषो नात्र भूतार्थशंसिनः ॥'
इति दण्डी ( १ परिच्छे. २४ श्लो. )

'अपार्थं व्यर्थमेकार्थं ससंशयमपक्रमम् ।
शब्दहीनं यतिभ्रष्टं भिन्नवृत्तं विसंधि च ॥
देशकालकलालोकन्यायागमविरोधि च ।
प्रतिज्ञाहेतुदृष्टान्तहीनं दुष्टं च नेष्यते ॥'
इति भामहः ( ४ परिच्छे. १–२ श्लो. )

'अपार्थं व्यर्थमेकार्थं ससंशयमपक्रमम् ।
शब्दहीनं यतिभ्रष्टं भिन्नवृत्तं विसंधिकम् ॥
देशकालकलालोकन्यायागमविरोधि च ।
इति दोषा दशैवैते वर्ज्याः काव्येषु सूरिभिः ॥'
इति दण्डी ( ३ परिच्छे. १२५–१२६ श्लो. )

'कर्तृवंशप्रशंसा स्याद् यत्र गद्येन विस्तरात् ।
कन्याहरणसंग्रामविप्रलम्भविपत्तयः ॥
भवन्ति यत्र दीप्ताश्च रीतिवृत्तिप्रवृत्तयः ।
उच्छ्वासैश्च परिच्छेदो यत्र सा चूर्णकोत्तरा ॥
वक्त्रं वाऽपरवक्त्रं वा यत्र साऽऽख्यायिका स्मृता ।
श्लोकैः स्ववंशं संक्षेपात् कविर्यत्र प्रशंसति ॥'
( इत्याग्नेयम् ३३७ अ. )

'प्रकृतानाकुलश्रव्यशब्दार्थपदवृत्तिना
गद्येन मुक्तोदात्तार्था सोच्छ्वासाऽऽख्यायिका मता ॥
वृत्तमाख्यायते तस्यां नायकेन स्वचेष्टितम् ।
वक्त्रं चापरवक्त्रं च काले भाव्यार्थशंसि च ॥
कवेरभिप्रायकृतैः कथनैः कैश्चिदङ्किता ।
कन्याहरणसंग्रामविप्रलम्भोदयान्विता ॥'
( इति भामहः १ परिच्छे. )

'संक्षेपाद् वाक्यमिष्टार्थव्यवच्छिन्ना पदावली ॥'
( इत्याग्नेयम् ३३७ अ. )

'शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावली ॥'
( इति दण्डी १ परिच्छे. )

"काव्यशोभाकरान् धर्मानलंकारान् प्रचक्षते ।
अलंकरिष्णवस्ते च शब्दमर्थमुभौ त्रिधा ॥"

( इत्याग्नेयम् ३४२ अ. )

'काव्यशोभाकरान् धर्मानलंकारान् प्रचक्षते ।
ते चाद्यापि विकल्प्यन्ते कस्तान् कार्त्स्न्येन वक्ष्यति ॥'

( इति दण्डी २ परिच्छे. )

'अपारे काव्यसंसारे कविरेव प्रजापतिः ।
यथा वै रोचते विश्वं तथैतत्परिवर्तते ॥
शृङ्गारी चेत्कविः काव्ये जातं रसमयं जगत् ।
स चेत्कविर्वीतरागो नीरसं व्यक्तमेव तत् ॥'

( इत्याग्नेयम्. ३३९ अ. )

तथा चेदमुच्यते—

'अपारे काव्यसंसारे कविरेव(रेकः ) प्रजापतिः ।
यथास्मै रोचते विश्वं तथेदं परिवर्तते ॥
शृङ्गारी चेत्कविः काव्ये जातं रसमयं जगत् ।
स एव वीतरागश्चेन्नीरसं सर्वमेव तत् ॥'

( इति ध्वन्यालोकः ३ उद्यो. )

'नैरत्वं दुर्लभं लोके विद्या तत्र सुदुर्लभा ।
कवित्वं दुर्लभं तत्र शक्तिस्तत्र सुदुर्लभा ॥
व्युत्पत्तिर्दुर्लभा तत्र विवेकस्तत्र दुर्लभः ॥ ४ ॥'
'वाग्वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितम् ।
पृथक्प्रयत्ननिर्वर्त्यं वाग्वक्रिम्णि रसाद्वपुः ॥ ३६ ॥
त्रिवर्गसाधनं नाट्यमित्याहुः करणं च यत् ॥ ७ ॥'

इत्याग्नेयं ( ३३७-३३८ अ. ) स्वनाम्नैव साहित्यदर्पणस्य प्रथमपरिच्छेदे न्यस्तम् ( ५, १९, ६ पृ. )

एतेन यावद् भामहात्प्राचीनः कश्चन साहित्यसंदर्भो नोपलभ्येत, उपलभ्यमानो वा न परीक्ष्येत; तावद् भरताग्नेयादिभ्य एव भामहादिग्रन्था व्यधायिषत ( २२ पृ.) इति द्वितीयकोटिरेव प्रभवतीति स्वीकारे न कोऽपि प्रत्यवाय इति स्थितम् ॥

---

१. कार्त्स्न्येनेति । नात्र तत्रभवान् कुवलयानन्दं पल्लवयन्नलंकाराणां समुचितपरिच्छेदाय प्राभवत् ॥

२. प्रजेति । नेह पण्डितराजोऽपि गजनिमीलिकया—'स्मृतापि तरुणातपम्—' इति मङ्गलयन्—'किं सेव्यते सुमनसां मनसापि गन्धः—' इति कवयँश्च नालंकर्मीणोऽमानि कौस्तुभकारादिना ॥

३. नरत्वमिति । किममुत्र—'कविसमरसिंहनादः—' इत्येवमुपसंहरन्नाचार्यः स्वानुरूपं कविकर्मफलमुपदिष्टवान्; न पुनः 'चतुर्वर्गफलप्राप्तिः—' इति विश्वजनीनां शिक्षामाकुलीकृतवान् । तदिदं काव्यप्रयोजनानि चतुरस्रदृशा सममाकलयतां पुरस्तादेव ॥

भरतमुनिस्त्रेतायुगे नाट्यशास्त्रं प्राणैषीदिति प्रादर्शयं प्राक् । तेन स स्वोक्त्यैव त्रेतायुगीय इति निष्प्रत्यूहम् । एवं पाराशर्यो व्यासो द्वापरयुगे पुराणान्यकार्षीदिति तत्र तत्र प्रसिद्धम् । तदेतद्देवीभागवतेऽपि पठ्यते—

अष्टादश पुराणानि कृत्वा सत्यवतीसुतः ।
भारताख्यानमतुलं चक्रे तदुपबृंहितम् ॥
मन्वन्तरेषु सर्वेषु द्वापरे द्वापरे युगे ।
प्रादुष्करोति धर्मार्थी पुराणानि यथाविधि ॥'
(१ स्कं. ३ अ. १७–१८ श्लो०)

तेन प्रतिमन्वन्तरं द्वापरे द्वापरे युगे महापुराणानां प्रादुष्करणात्तन्मध्ये निर्विवादं परिगणितस्याग्नेयस्यापि प्रादुष्करणं क्रमारूढम् ॥

इह कतिपये तु—

'आसन्मघासु मुनयः शासति पृथ्वीं युधिष्ठिरे नृपतौ ।
षड्द्विकपञ्चद्वियुतः (२५२६) शककालस्तस्य राज्ञश्च ॥'

इति वराह-मिहिरोक्त्या ( बृ. सं. १३ अ. ३ श्लो. ) युधिष्ठिरशकादौ ३१७९—२५२६=६५३ एतावत्कलिगतमधिगत्यैतावन्तं भारताहवकालं कलयन्ति। एतदुपजीव्य राजतरङ्गिण्यां कल्हणोऽपि—

'शतेषु षट्सु सार्धेषु त्र्यधिकेषु (६५३) च भूतले ।
कलेर्गतेषु वर्षाणामभूवन्कुरुपाण्डवाः ॥'

इत्याद्याह स्म । तेन शंतनु-भीष्मसमानकालिकस्य पाराशर्यस्य द्वापरे पुराणकरणं विरुद्धमिति चेदुच्यते—

शकारम्भे ३१७९ एतावत्कलिगतमासीद् इति ब्रह्मगुप्तादयो गाणितिकाः । तथाच पठ्यते ब्राह्मस्फुटसिद्धान्ते मध्यमाधिकारे—'गोऽगैकगुणाः शकान्तेऽब्दाः' इति । एवमेव सिद्धान्तशिरोमणावपि, एवमेव च चालुक्यवंशोद्भूतस्य श्रीपुलकेशिनो जैनमन्दिरस्थ-शिलालेखेऽपि—

'त्रिंशत्सु त्रिसहस्रेषु भारतादाहवादितः ।
सप्ताब्दशतयुक्तेषु गतेष्वब्देषु पञ्चसु (३७३५) ॥
पञ्चाशत्सु कलौ काले षट्सु पञ्चशतासु च (५५६) ।
समासु समतीतासु शकानामपि भूभुजाम् ॥'

इत्यतः ३७३५–५५६=३१७९ पूर्वोक्तमेव कलिगतं सिद्ध्यति । तथा 'भारतादाहवादितः' इत्युक्त्या तत्रैव कुरुपाण्डवसत्तापि समायाति । तदेतद् आचार्यार्यभटेनापि स्वसिद्धान्ते ( आर्यभटीये ) दशगीतिकसूत्रेऽपि निरूपितम्—'गुरुदिवसाच्च भारतात्पूर्वम्' इति । "कदैवमित्यत्राह—कल्पादेर्भारताद् गुरुदिवसाच्च पूर्वमिति । भारता युधिष्ठिरादयः, तैरुपलक्षितो गुरुदिवसो भारतगुरुदिवसः । राज्यं चरतां युधिष्ठिरादीनामन्त्यो गुरुदिवसो द्वापरावसानगत इत्यर्थः । तस्मिन् दिने युधिष्ठिरादयो राज्यमुत्सृज्य महाप्रस्थानं गता इति प्रसिद्धिः ।" इति तट्टी-

१. पुराणेति । बहुधा पुराणोपमर्दकालेऽद्य श्रेयस्कामेन भारतसुहृदा रामायण-भारतमर्यौ तु दयादृशाऽऽकलनीये एव ॥

काकारः परमादीश्वरः ( परमेश्वरः ) वदति । एवं सिद्धान्तशेखरे श्रीपतिरपि । मतान्तरेणापि गणनान्तरेणापि द्वापरान्ते लङ्कायामौदयिकः सावनोऽहर्गणो ब्राह्म-सिद्धान्तसिद्धोऽयम्=७२०६३४४४२७१५ अस्मादपि गुरुदिनवार एव समायाति ।

अथ यदि कल्हणोक्त्या ६५३ इयति कलिवर्षेयाते मघासु सप्तऋषीणां संचार ऊरीक्रियेत, तर्हि तद्वृत्तनिर्णयेन कलिप्रारम्भे मघातः प्राङ् नक्षत्रेषु ( रोहिणी-प्रायेषु ) तेषां संचारः संभाव्येत । प्राचां ग्रन्थेषु तु 'आसन्मघासु मुनयः—' इति व्याख्याने भट्टोत्पलोद्धृतेन वृद्धगर्गवचनेन—

'कलिद्वापरसंधौ तु स्थितास्ते पितृदैवतम् ।
मुनयो धर्मनिरताः प्रजानां पालने रताः ॥'

इत्यनेन पुनस्त ऋषयः कलिप्रारम्भेऽपि मघास्वेव वर्तमाना आसन्निति स्मर्यते । इत्थं च प्रकृतोपयुक्तस्य संचारस्यासत्त्वे—

'ऋक्षादृक्षं शतेनाब्दैर्यात्सु चित्रशिखण्डिषु ।
तच्चारे संहिताकारैरेवं दत्तोऽत्र निर्णयः ॥

इत्यपि कल्हणोक्तिः कथमिव निर्णायिका भवन्ती भ्रमावर्तेषु मज्जत ऐतिहासि-कानुद्धरेत् ।

कल्हणकाले तदुक्त्यैव कालगणना—

| | | |
|---|---|---|
| गतकलिः | = | ६५३ |
| द्वापञ्चाशद्राजराज्यकालः | = | १२६६ |
| तृतीयगोनन्दात् | = | २३३० |
| | | ४२४९ |

अथवा ।

| | | |
|---|---|---|
| गतकलिः | = | ६५३ |
| युधिष्ठिरशककालः | = | २५२६ |
| शककालः | = | १०७० |
| | | ४२४९ |

'कलेर्गतैः सायकनेत्र ( २५ ) वर्षैः
सप्तर्षिवर्यास्त्रिदिवं प्रयाताः ।
लोके हि संवत्सरपत्रिकायां
सप्तर्षिमानं कथयन्ति सन्तः ॥'

इत्यनेन लौकिकाब्दः=४२४९–२५=४२२४, $\frac{४२२४}{१००}$=शेषम् २४ । उक्तं च कल्हणेन—

'लौकिकेऽब्दे चतुर्विंशे ( २४ ) शककालस्य सांप्रतम् ।
सप्तत्याऽभ्यधिकं जातं सहस्रं ( १०७० ) परिवत्सराः ।'

अत्र 'राजा तृतीयगोनन्दः' ( १।१८५ ) इति राजतरङ्गिणीदर्शितात्तृतीय-गोनन्दात्—

'[1]प्रायस्तृतीयगोनन्दादारभ्य शरदां तदा ।

---

१. प्राय इत्यादि । 'सहसा विदधीत न क्रियाम्—' इति स्मरतैव प्राचां ग्रन्था आलोचनीया इत्यलं साहसेन ॥

द्वे सहस्रे गते त्रिंशदधिकं च शतत्रयम् ॥'

इत्ययं कालः=२३३० संवदत्येव । किंतु यः पुनः—

वर्षाणां द्वादशशती षष्टिः षड्भिश्च संयुता ।
भूभुजां कालसंख्यायां तद्द्वापञ्चाशतो मता ॥'

इत्ययं द्वापञ्चाशतो राज्ञां कालः=१२६६ स च न संवदति । एतदुक्तं भवति—यदि नाम प्रकृतोपयुक्ता सप्तर्षीणां गतिर्नोपलभ्यते, तर्हि तया युधिष्ठिरकालनिर्णयोऽशक्यः । अत्र सिद्धान्ततत्त्वविवेके कमलाकरभट्टाः ।

'अद्यापि कैरपि नरैर्गतिरार्यवर्यै-
र्दृष्टा न या च कथिता किल संहितासु ।
तत्काव्यमेव हि पुराणवदत्र तज्ज्ञा-
स्तेनैव तत्त्वविषयं गदितुं प्रवृत्ताः ॥"

( भग्रह. ३२ )

इत्यादि निर्णयति । तथा सिद्धान्तदर्पणे चन्द्रशेखरसामन्तोऽपि—

'सप्तर्षीणां ध्रुवः प्राग्भिर्नोक्तः संचारसंभवात् ।
तथाप्यनुभवात्तेषां व्यवस्था क्रियतेऽधुना ॥
पूर्वाग्रं शकटाकारमुदक्स्थमुडुसप्तकम् ।
सप्तर्षिमण्डलं प्रोक्तं व्यक्तं विश्वनमस्कृतम् ॥
तत्पूर्वोन्नतरेखाग्रे मरीचिः पश्चिमे ततः ।'
वसिष्ठोऽरुन्धतीयुक्तस्तत्पश्चादङ्गिराः स्थितः ॥
तत्पश्चाच्चतुरस्रस्य शम्भुदिश्यत्रिरस्य तु ।
पुलस्त्यो दक्षिणे तस्य पश्चिमे पुलहः स्थितः ॥
क्रतुस्तदुत्तरस्थानस्तत्रोक्तौ पुलहक्रतू ।
ध्रुवसूत्रेण यल्लग्नौ तद्दक्षस्था महर्षयः ॥
कथ्यन्ते सांप्रतं (४९७०)सिंहे भूभुजां(२१)शान्तगौ हि तौ ।
कालांशैर्विश्वकैः १३ प्राच्यां पुलस्त्यो वर्तते ततः ॥
ततस्तैः सायकै ( ५ ) रत्रिरङ्गिरा नवभि(९)स्ततः ॥
ततोऽष्टाभि(८)र्वसिष्ठोऽस्मान्मरीचिर्वर्ततेऽष्टभिः(८) ॥'

इत्येवमादि सविशेषमुक्त्वान्ते—

'प्रत्यब्दं प्राग्गतिः प्रोक्ता पुराणैरष्टलिप्तिकाः ।
तेषां नो निश्चिता पूर्वानुभवादर्शनान्मया ॥'

इत्युपसमहार्षीत् । एतेन सप्तर्षिचाराभावात् ६५३ एतावत्कलिगतज्ञानं तदानीं राजतरङ्गिणीभ्रममूलकमेव । ततो हि कलेः २५ वर्षानन्तर्यमिव ६५३ वर्षानन्तर्यमपि प्रकृतानुपयुक्तमेव तत एव सप्तर्षिसंवत् ( लौकिकाब्दः ) इव कलियुगसंवत् ( युधिष्ठिराब्दः=भारताहवाब्दः ) इत्येवं कल्पनमपि श्लथप्रमेयकमेव । नहि ३१७९–२५२६=६५३ एतावतान्तरेण धार्तराष्ट्रपाण्डवसत्ताकालस्य, वा भारतसंग्रामस्य, वा युधिष्ठिरसाम्राज्यस्य, वा सप्तर्षिसमानाकलनस्य सशुनकद्रौपदीकस्य युधिष्ठिरादेः पञ्चपाण्डवस्य महाप्रस्थानयात्राया श्चोल्लेखः प्राप्यते । तस्मात्—

'भारतं द्वापरान्तेऽभूद्वार्तयेति विमोहिताः ।
केचिदेतां मृषा तेषां कालसंख्यां प्रचक्रिरे ॥'

इत्यन्यथा परिणतां महामात्यचणपकसूनोः कल्हणस्य कृतिमुपेक्ष्याम्नायभ्रष्टनृपावलौ ६५३ एतावन्ति वर्षाणि संकलय्य ३१७९ एतावदेव सर्वसंमत्या कलिगतं ( कलियुगसंवत् ) शकारम्भसमये मन्तव्यम् । एवमप्यत्र नीलमुनिरात्मनः काश्मीरिकपुराणमतं न जहातीति परीक्षणीयम् । इत्थंच पूर्वदत्तसंहितावाक्ये युधिष्ठिर इत्यत्र लक्षणया कस्मिंश्चित्तत्संताने नृपतौ पृथ्वीं शासतीत्युन्नेयम् । किंवा, यथाश्रुतार्थे 'गोद्रिमृगाङ्कत्रियुतः' इति पाठश्च स्यादिति संक्षेपः ॥

अथात्र किंचिदैतिहासिकदृष्ट्यापि विविच्यते—राज्ञः शंतनोर्गङ्गातो गाङ्गेयो भीष्मो जज्ञे ( म. भा. आदिप. १०० अ. ) । ऋषेः पराशरात् सत्यवत्याः पाराशर्यो व्यासः कानीनश्च ( म. भा. आदिप. १०५ अ. ) । शंतनुर्विवाहितायां सत्यवत्यां चित्राङ्गदविचित्रवीर्यौ जनयामास । तत्र विचित्रवीर्योऽम्बिकाऽम्बालिके काशिराजसुते उपयेमे । ततश्च—

'ताभ्यां सह समाः सप्त विहरन्पृथिवीपतिः ।
विचित्रवीर्यस्तरुणो यक्ष्मणा समगृह्यत ॥
सुहृदां यतमानानामाप्तैः सह चिकित्सकैः ।
जगामास्तमिवादित्यः,

(म. भा. आदिप. १०२ अ.) । मातुः सत्यवत्या आज्ञया पाराशर्यो विचित्रवीर्यस्य क्षेत्रेऽम्बिकायां धृतराष्ट्रं तथाम्बालिकायां पाण्डुमुत्पादयामास ( म. भा. आदिप. १०६ अ. ) । पाण्डोर्युधिष्ठिरादयः ( म. भा. आदिप. १२३ अ.) 'तत्रार्जुनाद् अभिमन्युः, अभिमन्योः परीक्षित्, परीक्षितो जनमेजयादयः । एवं शांतनोः सप्तमो जनमेजयः, येन पृष्टः पाराशर्यो महाभारतं (जयं) चक्रे ( म. भा. आदिप. १ अ. ) । यदि तदानीं राज्ञो जनमेजयस्य वयः ३६ वर्षाणि कल्प्येत, तदा—

'आकर्णपलितः श्यामो वयसाशीतिपञ्चकः ( ८५ )
रणे पर्यचरद् द्रोणो वृद्धः षोडशवर्षवत् ॥'

( म. भा. द्रोणप. १२५ अ. ७३ श्लो. ) इत्यनेन, तथा—

'वयः प्राप्य परीक्षित्तु वेदव्रतमवाप्य च ॥ १३ ॥
कृपाच्छारद्वताच्छूरः सर्वास्त्राण्युपपत्स्यते ।
विदित्वा परमास्त्राणि क्षत्रधर्मव्रते स्थितः ॥ १४ ॥
षष्टिं ( ६० ) वर्षाणि धर्मात्मा वसुधां पालयिष्यति ।'

( म. भा. सौप्तिकप. १६ अ. ) इति वासुदेववाक्येन ८५+६०+३६=१८१ एतदासन्ने वयसि भगवतः पाराशर्यस्य महाभारतनिर्माणं सूपपद्यते । १८१ इयं कालसंख्या अवधिज्ञप्त्यै द्वापरकलिसंधितः—

'अन्तरे चैव संप्राप्ते कलिद्वापरयोरभूत् ।
समन्तपञ्चके युद्धं कुरुपाण्डवसेनयोः ॥'

( म. भा. आदिप. २ अ. ) इत्यनेनापि ८५ पञ्चाशीत्या समाभिः प्राक् ३६

षण्णवत्या समाप्तिः पश्चाद् विभज्यते, पाराशर्यस्य भीष्मद्रोणसमानकालिकत्वेनावगमात् । यद्यपीह—

त्वमप्युपस्थिते वर्षे षट्त्रिंशे ( ३६ ) मधुसूदन ! ।
हतज्ञातिर्हतामात्यो हतपुत्रो वनेचरः ॥'

( म. भा. स्त्रीप. २५ अ. ) इति गान्धारीशापदानेन, तथा—

'षोडशे ( १६ )मानि वर्षाणि गतानि मुनिपुंगव ! ।
अस्य राज्ञो हतान्पुत्राञ्शोचतो न शमो विभो !! ॥'

( म. भा. आश्रमवासिकप. २९ अ. ) इति षट्त्रिंशदन्तःपातिना गान्धारीनिवेदितधृतराष्ट्रराज्यभोगाभाससमयेन, तथा—

'षट्त्रिंशे त्वथ संप्राप्ते वर्षे कौरवनन्दनः ।
ददर्श विपरीतानि निमित्तानि युधिष्ठिरः ॥'

( म. भा. मौसलप. १ अ. ) इत्यनेन गान्धारीशापपरिपाकावसरेण भारताहवात् ३६ षट्त्रिंशदब्दानन्तरं युधिष्ठिरादीनां महाप्रस्थानं लभ्यते, तथापि लोके गान्धारीशापदानकालोऽपि महाप्रस्थानदिवसत्वेन व्यवजह्रे । यत्तु [1]प्राचीनलिपिमालायां भारताहवात् ( १५+३६= ) ५१ एकपञ्चाशदब्दानन्तरं महाप्रस्थानं निर्णीयते, तद्भ्रान्तिमूलकं प्रतीयते ।

इत्थंच कलेर्द्वितीयस्यां शताब्द्यां राज्ञो जनमेजयस्यावस्थानं नासमञ्जसम् । तथैव तदानीं दीर्घजीविनो भगवतः पाराशर्यस्यापि सशिष्यप्रशिष्यस्यावस्थानं नासंगतं भवितुमर्हम् । महाभारतग्रथनोत्तरकालमेव भिक्षुसूत्रापरनामधेयानां ब्रह्मसूत्राणां प्रणयनावधारणात् । ब्रह्मसूत्राणि हि ( स्मृतेश्च १।२६=ईश्वरः सर्वभूतानां १८।६१ ) ( अपि च स्मर्यते २।३।४५=ममैवांशो जीवलोके १५।७ ) ( अतश्चायनेऽपि दक्षिणे । योगिनः प्रति च स्मर्यते; स्मार्ते चैते ४।२।२०—२१=यत्र काले ८।२३-२७ ) एवमादिस्थले शारीरकादिभाष्यसंमत्यापि महाभारतीयभीष्मपर्वसमुद्भूता भगवद्गीतोपनिषदोऽनुसरन्तीति परीक्षणीयम् । एतेन च [2]पुराणं महाभारतं ब्रह्मसूत्रं चेति त्रयं यथोत्तरं तेन भगवता व्यरचीति व्यक्तम् ॥

अत्र केचिन्नूतनविज्ञानोन्मीलितलोचनास्तु 'ब्रह्मसूत्रपदैश्चैव' ( गी. १३।४ ) इत्युक्त्वा भगवद्गीतातः प्राग् ब्रह्मसूत्राणां प्रणयनं निर्णयन्ति; तत्संगतिप्रदर्शनार्थं भारतं महाभारतमिति पूर्वापरकालिकं ग्रन्थद्वयमुररीकुर्वन्ति; तत्साधनार्थं 'सूत्र'

---

१ 'इयं 'भारतीयप्राचीनलिपिमाला' रायबहादुरपण्डितश्रीगौरीशंकरहीराचन्दमहोदयेन रचिता वस्तुतो दर्शनार्हा संग्राह्या च.

२. पुराणवत् रामायणमपि भारतात् पूर्वं जातम् । उक्तंच भारते द्रोणपर्वणि 'अपि चायं पुरागीतः श्लोको वाल्मीकिना भुवि । न हन्तव्याः स्त्रिय इति यद्ब्रवीषि प्लवंगम ॥ ६७ ॥' ( १४७ अ. ) एतेन रामायणात्पूर्वं भारतं निर्मितमिति सांप्रतिकानां श्रद्धापि निरस्यते ॥

भाष्यभारतमहाभारतधर्माचार्याः, (३ अ. ४ कं.) इत्याश्वलायनीयं गृह्यसूत्रमपि दर्शयन्ति । तत्रेदं विवेचनीयम्—ब्रह्मसूत्रपदार्थो हि **शांकरे** गीताभाष्ये 'ब्रह्मणः सूचकानि वाक्यानि ब्रह्मसूत्राणि—' इत्याद्यभिप्रायान्तरेण वर्णितः । तथैव **नैलकण्ठीये** भारतभावदीपे 'ब्रह्मसूत्रपदैः ब्रह्मणः सूचकानि पदानि समुच्चित्य वाक्यभावमापन्नानि तैर्ब्रह्मसूचकैर्ब्राह्मणवाक्यैस्तत्त्वमस्याद्यैः—' इति । तथैव **परमार्थ**प्रपायां 'ब्रह्मणः सूत्रैः पदैश्च ब्रह्म सूच्यते यैः पदैः–' इति । एवं चात्र ब्रह्मसूत्रपदानि विशिष्य वेदान्तसूत्रबोधकानि नाभिप्रेतानीति स्पष्टम् । वस्तुतस्त्वेतानि सूत्राणि प्राचीनै**र्भिक्षुसूत्र**संज्ञया व्यवहृतानि । भारतं महाभारतमिति ग्रन्थद्वयस्योररीकरणमपि न निरर्गलम् । प्रक्षेपयोगेन वर्धमानस्यापि शरीरान्तरोत्पादासंभवात् । नहि पुष्टो धान्यादिराशिः स्वशरीरादतिरिच्यत इति । भरतान् अधिकृत्य कृतो ग्रन्थ एव प्राशस्त्यादिना महाभारतसंज्ञां लेभे इति तूपपद्यते बाढम् । आकरे (जये) भारतं महाभारतमित्युभयं प्रयुज्यमानं पठ्यते । 'महत्त्वाद् भारवत्त्वाच्च महाभारतमुच्यते' इत्यस्य निरुक्तमपि तत्रैव (म. भा. आदिप. १ अ.) पाणिनिरपि महाभारतमस्मार्षीत् 'महान् व्रीह्यपराह्णगृष्टीष्वासजाबालभारभारतहैलिहिलरौरवप्रवृद्धेषु' (पा. सू. ६।२।३८) । एवमाश्वलायनीये गृह्यसूत्रेऽप्युभयथा प्रयोगे का क्षतिः । एवमाम्नाये जाग्रत्येव इन्द्रो महेन्द्र इति पार्थक्येन व्यवह्रियमाणोऽत्र भगवान् **पाणिनिरपि** न पर्यनुयोज्यो भवेत् । लक्ष्यैकशरणा वैयाकरणा इति न्यायात् । ग्रन्थभूयस्त्वाकलनाद् हृदयसंकोचे तथा प्रतिभानमिति चेत्, तदपि न सांप्रतम् । षडङ्गेष्वन्यतमस्य व्याकरणस्य विषयेऽपि महामुनिना व्याडिना विहितः **संग्रहो** नाम लक्षश्लोकसंख्यो ग्रन्थो जजागारैव; यदनुरोधेन **वाक्यपदीये** द्वितीयकाण्डे—

> 'प्रायेण संक्षेपरुचीनल्पविद्यापरिग्रहान् ।
> संप्राप्य वैयाकरणान् संग्रहेस्तमुपागते ॥ ४८४ ॥

इत्यवादि तत्रभवता **भर्तृहरिणा** । अस्य संगतौ 'इह पुरा पाणिनीयेऽस्मिन् व्याकरणे व्याड्युपरचितं ग्रन्थलक्षप्रमाणं संग्रहाभिधानं निबन्धनमासीत्' इत्याह स **पुण्यराजः** । अत्र **नागेश**भट्टप्रभृतयोऽपि सहमताः । यद्येवमेकविषयिणी चर्चा तर्हि चतुर्वर्गावभासकस्य भारतस्य महाभारतस्य कृते कथैव केति । अतोऽग्रे पुनः—

> 'कृतेऽथ पतञ्जलिना गुरुणा तीर्थदर्शिना ।
> सर्वेषां न्यायबीजानां महाभाष्ये निबन्धने ॥ ४८५ ॥
> अलब्धगाधे गाम्भीर्यादुत्तान इव सौष्ठवात् ।
> तस्मिन्नकृतबुद्धीनां नैवावास्थित निश्चयः ॥४८६ ॥

---

१. अग्रे 'संग्रहप्रतिकञ्चुके' इत्युक्त्या यथा संग्रहो महाभाष्यस्य लक्ष्यभूत इत्यवगम्यते, तथा प्राक् संग्रहस्यापि सूत्रवार्तिकातिरिक्तं किमपि व्याकरणनिबन्धनमवश्यमवलम्बनमासीद् इतरथैकहेलया महाभाष्यतोऽपि महीयसः संग्रहस्य प्रणयनमसंभवि तदिदं मदुक्तं संग्रहमानमतोऽपि ज्ञायत इति भृशं विचार्यम् ॥

वैजिसौभवहर्यक्षैः शुष्कतर्कानुसारिभिः ।
आर्षे विप्लाविते ग्रन्थे संग्रहप्रतिकञ्चुके ॥ ४८७ ॥
यः पतञ्जलिशिष्येभ्यो भ्रष्टो व्याकरणागमः ।
काले स दाक्षिणात्येषु ग्रन्थमात्रे व्यवस्थितः ॥ ४८८ ॥
पर्वतादागमं लब्ध्वा भाष्यबीजानुसारिभिः ।
स नीतो बहुशाखत्वं चन्द्राचार्यादिभिः पुनः ॥ ४८९ ॥'

इति च । राजतरङ्गिण्यां कल्हणोऽपि—

'चन्द्राचार्यादिभिर्लब्ध्वाऽऽदेशं यस्मात्तदागमम् ।
प्रवर्तितं महाभाष्यं स्वं च व्याकरणं कृतम् ॥'

( १ तरं. १७६ श्लो. )

अहो अनतिप्राचीनस्य महाभाष्यस्य संप्रदायवैधुर्याद् यदीत्थंकारा दुरवस्थाऽजनिष्ट, तर्हि परमेषामध्ययनाध्यापनविधाविधुराणां पुराणेतिहासप्रभृतीनां यथावदवस्थोपलब्धिर्दूरापास्तैवेति किं चित्रम् । अत्रेदानीं भविष्यपुराणाद्युदाहरणम् । नैतावता पुराणेतिहाससत्तैव खिलीभवति, विवेचनसंभवात् । न वा वेदावस्थितैव पुराणेतिहाससत्ता, अङ्गस्येवोपाङ्गस्यापि पार्थक्येन श्रवणस्मरणसद्भावात् । तथाच श्रूयतेऽथर्ववेदसंहितायां पञ्चदशे काण्डे—'स बृहतीं दिशमनुव्यचलत् तमितिहासश्च पुराणं च गाथाश्च नाराशंसीश्चानुव्यचलन् । इतिहासस्य च वै स पुराणस्य च गाथानां च नाराशंसीनां च प्रियं धाम भवति य एवं वेद ॥', छान्दोग्योपनिषदि सप्तमे प्रपाठकेऽपि '—इतिहासपुराणं पञ्चमं वेदानां वेदम्—' मनुस्मृतौ तृतीयाध्यायेऽपि—'स्वाध्यायं श्रावयेत्पित्रे धर्मशास्त्राणि चैव हि । आख्यानानीतिहासांश्च पुराणान्यखिलानि च' ॥ २३२ ॥'

प्रकृते भगवतः पाणिनेः सूत्रेषु राज्ञो जनमेजयादुत्तरकालिको न सूत्र्यते, पाराशर्य-व्याससूनोः शुकस्यापि नाम नास्ति; पश्चात्तु वैयासिकपदसाधनाय कात्यायनेन वररुचिना व्यासवरुडेति वार्तिकमारब्धमेव; वैशम्पायनान्तेवासिषु कलाप्यन्तेवासिग्रहणात्कलाप्यन्तेवास्यन्तेवासिग्रहणमविवक्षितमिति वैशम्पायनाच्चतुर्थोऽनादृत एवेत्येतेभ्यो नातिपरभवः शालातुरीयो दाक्षीपुत्रः पाणिनिः कलेश्चतुर्थ्यां

---

१. 'पाणिनिस्त्वाहिको दाक्षीपुत्रः शालङ्किपाणिनौ । शालातुरीयः' इति त्रिकाण्डशेषे पाणिनिपर्यायाः । अत्रेदमाहुः—पणनं पणः, सोऽस्यास्तीति पणी मुनिविशेषः । तस्य गोत्रापत्यं पाणिनः । पाणिनो यूनि अपत्ये चतुर्थे प्राणिनात् पाणिनिरिति सर्ववेदलोकोपकारकस्य शब्दानुशासनस्य ( व्याकरणस्य ) रचयिता मुनिः । स च जाम्बवतीजयाख्यकाव्यकर्तापि । तथाच पठ्यते सूक्तिमुक्तावलिसुभाषितहारावल्योरेष राजशेखरमहाकविश्लोकः—'स्वस्ति पाणिनये तस्मै यस्य रुद्रप्रसादतः । आदौ व्याकरणं काव्यमनु जाम्बवतीजयम् ॥' इति । यस्य जाम्बवतीजयस्य 'पातालविजयम्' नामान्तरं रायमुकुटकृतामरकोशटीकातोऽवसीयते । सुभाषितावल्यादावनेके पाणिनिश्लोका उपलभ्यन्ते । पाणिनिर्व्याघ्रेणाघानीति प्रसिद्धिः । तत्र—'सिंहो व्याकरणस्य कर्तुरहरत्प्राणा-

शताब्द्यां संभवति सैव। निरुक्तालोचने **सत्यव्रत**सामश्रमिमहाशयेन तु पाणिनेरष्टम्यां शताब्द्यां संभवो राजतरङ्गिणीभ्रमादुदटङ्कि। क्वचित्तु कलेः सप्तविंश्यां शताब्द्यां पाणिनेरस्तित्वमुक्तं तदप्युपेक्षार्हम्। केचित्पुनः पाणिनिसूत्राणां मूलं **शाकटायनीयं** व्याकरणं ब्रुवते, तदपि तथाभूतम्। यस्मात्खलु यः शाकटायनो यास्कीये निरुक्ते; पाणिनीये सूत्रे, कात्यायनीये श्लोके च गृह्यते; स तावच्चिरंतनः। तस्य पारम्पर्येण केवलं मतं ज्ञायते, तदीयं व्याकरणं तु नोपलभ्यते। इदानीमुपलभ्यमानं शाकटायनव्याकरणं तु केनचिज्जैनेन शाकटायनेन कृतं नवीनमिति भारतीय-**प्राचीनलिपिमालायां** द्रष्टव्यम्। पाणिनिसूत्राणि लक्ष्यीकृत्य वार्तिकानां विरचयिता कात्यायनापरनामशाली भगवान् **वररुचि**रपि पाणिनेः परस्तात् पञ्चषशतसंख्येयासु समासु, अर्थात् कलेः सहस्रासन्नायां शताब्द्यां संभवत्सत्ताकः प्रतिभाति। यस्मान्नितान्तमपेक्षितानां वररुचिवार्तिकानां प्रणयनात् प्राक् पाणिनि-

---

न्प्रियान्पाणिनेर्मीमांसाकृतमुन्ममाथ सहसा हस्ती मुनिं जैमिनिम्। छन्दोज्ञाननिधिं जघान मकरो वेलातटे पिङ्गलं ह्यज्ञानावृतचेतसामतिरुषां कोऽर्थस्तिरश्चां गुणैः॥' इति पञ्चतन्त्रश्लोकः। केचिदत्र पाणिनिद्वितयं मन्यन्त इति दिक्। सोऽयं भगवान् पाणिनिः शलातुरे नगरे संभवतो **गान्धार**–देशासन्ने पाणिनाद् दाक्ष्यां जन्म लेभे इति '—पणिनश्च' (६।४।१६५) 'तूदीशलातुर—' (४।३।९४) 'शालातुरीयमतमेतदनुक्रमेण—' (भामहश्लो.) '—दाक्षीपुत्रस्य पाणिनेः।' (महाभा.) इत्यादितो विज्ञायते। स तावल्लोकोपचिकीर्षया महीयस्या तपश्चर्यया भगवन्तं महेश्वरं साक्षात्कृत्य तस्माद् अइउण्-प्रभृतिं शब्दब्रह्म-परब्रह्मबृंहणीमपौरुषेयीं चतुर्दशसूत्रीं विन्दति स्मेति तद्व्याख्याया नन्दिकेश्वरकाशिकाख्यायाः—'नृत्तावसाने नटराजराजो ननाद ढक्कां नवपञ्च (१४) वारम्। उद्धर्तुकामः सनकादिसिद्धानेतद्विमर्शे शिवसूत्रजालम्॥ अत्र सर्वत्र सूत्रेषु ह्यन्त्यवर्णचतुर्दशम्। धात्वर्थं समुपादिष्टं पाणिन्यादीष्टसिद्धये॥' इति श्लोकाभ्यामवसीयते। 'अन्त्यं वर्णचतुर्दशम्' इति तु शब्देन्दुशेखरस्थः पाठः। अत्र शब्दब्रह्मोपबृंहणं त्रिमुनिव्याकरणम्। परब्रह्मोपबृंहणं तु—'अकारो ब्रह्मरूपः स्यान्निर्गुणः सर्ववस्तुषु। चित्कलामिं समाश्रित्य जगद्रूप उणीश्वरः॥ अकारः सर्ववर्णाग्र्यः प्रकाशः परमेश्वरः। आद्यमन्त्येन संयोगादहमित्येव जायते॥ सर्वं परात्मकं पूर्वं ज्ञप्तिमात्रमिदं जगत्। ज्ञप्तेर्बभूव पश्यन्ती, मध्यमा वाक् ततः स्मृता॥ चक्रे विशुद्धिचक्राख्ये वैखरी सा मता ततः।' इत्यादिनाग्रे नन्दिकेश्वरेणैवाकारीति दिक्। एतेन सनकाद्युद्धारोऽपि व्यक्तः॥

१. अयं वररुचिः कात्यायननाम्नापि ख्याप्यते। तत्र कतस्य गोत्रापत्यं कात्यायन इति व्युत्पत्त्या कतनाम्नः कस्यचिन्मुनेर्वंशधरः। कतशब्दो गर्गादिषु पठ्यते। 'प्रियतद्धिता दाक्षिणात्याः' इति पतञ्जलिलेखेन तद्देशतः स दक्षिणदिङ्निवासी। "यत् तेन कृतम्, नच तेन प्रोक्तम्। वाररुचं काव्यम्" (४ अ. ३ पा. १ आ. १०१ सू.) इति पतञ्जलिलेखेन, स कस्यचित्काव्यस्यापि कवयिता। कात्यायननामतोऽनेके ग्रन्थाः प्रसिद्धाः तेषु कस्को वररुचिना कात्यायनेन कृतः, कस्कश्चेतरेणेति बहुवक्तव्यत्वादुपेक्षि॥

सूत्राणां पठनपाठनयोः प्रवृत्तिर्दुःशकैवेति प्रत्यक्षं वैयाकरणानाम् । आसीच्च पूर्वं **माथुरी** नाम काचिद्वृत्तिः, या च भगवता पतञ्जलिना 'तेन प्रोक्तम्' (४।३।१०१) इति सूत्रभाष्ये निर्दिष्टा। सैषा माथुरेण प्रोक्ता (प्रकाशिता) तदितरेण कृतेति स्पष्टं प्रमातृद्वयम् । 'वृत्तौ भाष्ये—' इति श्लोकयन् **काशिका**कारोऽपि कांचन वृत्तिं सस्मार । इह **पदमञ्जर्यां** हरदत्तः 'सूत्रार्थप्रधानो ग्रन्थो वृत्तिः। सा चेह पाणिनिप्रणीतानां सूत्राणां **कुणि**प्रभृतिभिराचार्यैर्विरचितं विवरणम्' इत्यूचे। इतो भाष्ये पस्पशादिके—'संग्रहे तावत्कार्यप्रतिद्वन्द्विभावान्मन्यामहे नित्यपर्यायवाचिनो ग्रहणम्' इति वार्तिकीयसिद्धपदार्थफक्किका भगवतो **व्याडेः** संग्रहनामानं महानिबन्धं प्रमाणयन्ती तदानीमपि वार्तिकसद्भावमवभासयतीति नातिच्छन्नम् । एतेन व्याडिपतञ्जलिभ्यां पूर्वमपि पाणिनिसूत्राणां वृत्तिः सापि वररुचिवार्तिकोपश्लिष्टेति स्पष्टं सिध्यति; सिध्यति च सूत्रेभ्यो नातिविप्रकृष्टो वार्तिकानां प्रणयनकालः । पाणिनिसूत्रसंबद्धं वररुच्युपज्ञं **प्राकृतव्याकरणमपि** चिराय प्रवृत्तम् । तदेतद् दृश्यकविकर्मणां जैनधर्मग्रन्थानां च जीवातुभूतम् । एतेनापि निवेदितार्थोऽनुगृह्यत इति दिक् । **निरुक्तालोचने** तु कलेर्विंशी शताब्दी वररुचिस्थितिकाल उक्तः । अस्मन्मते त्वेतदासन्नः संग्रहकर्तुर्व्याडेः सत्ताकालः । यच्च आचार्योपसर्जनसूत्रवार्तिकभाष्ये व्याडीय-पदं तदपि न व्याडितो वररुचेः परभवत्वसाधनायालंकर्मीणम् (६।२।३६) इति वार्तिकभाष्यभेदज्ञानां नातिगूढम् । यत्तु बृहत्कथायां पाणिनिप्रभृतीनामन्यथान्यथा कथानकं लभ्यते; तन्नाट्यवेदानुसारेण दृश्यकविकर्मैकार्यघटकम् । तत एव रूपकोपरूपकाणामितिवृत्तानि न सर्वथा भूतार्थावलम्बीनि । एवंभूतानि श्रव्यकविकर्माण्यपि कानिचित् । एतदनुसंधाय **दशरूपके**—'रामायणादि च विभाव्य बृहत्कथां च' इति विभागेनोक्तम् । सेयं बृहत्कथा भूतभाषारूपिणी । उक्तं च **काव्यादर्शे**—'भूतभाषामयीं प्राहुरद्भुतार्थां बृहत्कथाम् ॥' भूतभाषा पैशाची; यत्प्रकृतिः[2] सौरसेनी । रत्नावली-प्रियदर्शिका-नागानन्द-मालतीमाधव-मुद्राराक्षस-कादम्बरी-वेतालपञ्चविंशतिकाप्रभृतीनां जननीयमेव बृहत्कथा । सेयं व्यासदासापरनाम्ना क्षेमेन्द्रेण संस्कृतेऽवतारिता **बृहत्कथामञ्जरीति**, सोमदेवेनानूदिता **कथासरित्सागर** इति नाम लेभे । व्याकरणमहाभाष्यभाषको गोनर्दीयो गोणिकापुत्रो भगवान् **पतञ्जलिः**[3] कलेः सप्तविंश्यां शताब्द्यां भारतभुवं भूषयामासेति सत्यव्रतसामश्रमिलेखतोऽपि निर्व्यूढम् । एष महाभाष्यकारपतञ्जलिसत्ताकालो योगदर्शनकाराद् भगवत्पतञ्जलेर्बहुपश्चाद् बुद्धमहामुनेरीषत्पश्चात् । चाणक्यशिष्याच्चन्द्रगुप्तात्तु प्रागेवापततीति हेत्वाभासनिरासपुरस्कारेण परीक्षणीयम् । तत्र योगदर्शनं, **तत्त्वसमा**साख्यसांख्यमूलतो ह्यर्वाचीनात् षडध्यायात्म-

---

१. एतस्य वृत्तिर्भामहेन कृता ॥ २. 'प्रकृतिः सौरसेनी' इति वररुचिसूत्रम् ॥ ३ अयमस्माकं सौभाग्यं भगवान् पतञ्जलिः—'योगेन चित्तस्य पदेन वाचां मलं शरीरस्य च वैद्यकेन । योऽपाकरोत्तं प्रवरं मुनीनां पतञ्जलिं प्राञ्जलिरानतोऽस्मि ॥' इति सुप्रसिद्धेन पद्येन योग-वैद्यक-व्याकरणानां कर्ता ज्ञायते । अत्रेदं पर्यालो-

कात् सांख्यदर्शनात्पराचीनमेव । यस्मात्—'वृत्तयः पञ्चतय्यः क्लिष्टाक्लिष्टाः १।५॥ स्थिरसुखमासनम् २।४६॥' इति पातञ्जलयोगसूत्रे क्रमात् षडध्याय्या द्वितीय-तृतीयाध्याययोः । एवमन्यदपि । एषा **सांख्यषडध्याय्यपि** महाभाष्यकारात्पतञ्जलेः पूर्वैव । यद्यप्यस्याः षडध्याय्या अनेकानि सूत्राणि पाठतोऽपीश्वरकृष्णीयासु सांख्यकारिकासु संक्रान्तानि दृश्यन्ते, तावता तास्ताः कारिकास्तत्तत्सूत्राणां मूलानीति बहूनामाधुनिकानामैकमत्यं प्रथते; तथापि—'सप्तत्यां किल येऽर्थास्तेऽर्थाः कृत्स्नस्य षष्टितन्त्रस्य । आख्यायिकाविरहिताः परवादविवर्जिताश्चापि ॥' **इतीश्वरकृष्ण**स्मृताख्यायिकापरवादप्रकरणगर्भं कारिकामूलं यावन्न प्राप्यते तावत्षडध्याय्यामनाश्वासो हृदयदौर्बल्यपरिचायक इति प्रतीमः । **योगदर्शनकारः** पतञ्जलिस्तु 'एतेन योगः प्रत्युक्तः २।१।३' इति **वेदान्तदर्शन**सूत्रेण पाराशर्यतोऽपि पूर्वं इति । **बुद्धमहामुनिस्तु** सांप्रतिकानां धावनेऽप्यनिर्णीतसत्ताकालः, तत्र **गौरीशंकरप**ण्डितास्तु तस्य महात्मनो निर्वाणसंवत्—४८७ **ईशातः** प्राक् संभावयन्ति अ-

---

च्यम्—को नाम योगः यस्य कर्ताऽयम् । यदीह योगशब्देन सुप्रसिद्धं चतुष्पादात्मकं पातञ्जलदर्शनं गृह्येत; तर्ह्यस्य महाभाष्यभाषकपतञ्जलिकर्तृत्वमैतिहासिकदृष्ट्या विरुध्यते । यतो वैयासिके वेदान्तदर्शने सांख्यादिदर्शनवद् अंशतो योगदर्शनमपि प्रत्युच्यते । तथाच वेदान्तसूत्रम्—'एतेन योगः प्रत्युक्तः ( २।१।३ )' वेदान्तसूत्रवृत्तिभाष्याणामाकलनेन सुप्रसिद्धस्य पातञ्जलदर्शनस्यैव निरासोऽवसीयते । वेदान्तसूत्रकृद् व्यासः ( पाराशर्यः ) व्याकरणसूत्रकृत् पाणिनिः, पाणिनिसूत्रोपरि वार्तिककृत् वररुचिः ( कात्यायनः ) सूत्रवार्तिकभाष्यकृत् पतञ्जलिः ( गोनर्दीयः ) इति तु ग्रन्थानुरुद्ध आचार्यक्रमः । एतेन व्यासतोऽपि पूर्ववर्तिनो योगदर्शनकर्तुः पतञ्जलेः सकाशात्परवर्ती महाभाष्यकर्ता पतञ्जलिरिति स्पष्टम् । अथ वैद्यकप्रणेतापि पतञ्जलिः । अतएव मञ्जूषादौ चरके पतञ्जलिरिति लेखः । चरकः चरकाख्यग्रन्थः, पतञ्जलिः शेष इति लेखाशयः । तथाच पठ्यते भावप्रकाशे—'यदा मत्स्यावतारेण हरिणा वेद उद्धृतः । तदा शेषश्च तत्रैव वेदं साङ्गमवाप्तवान् ॥ अथर्वान्तर्गतं सम्यगायुर्वेदं च लब्धवान् । एकदा स महीवृत्तं द्रष्टुं चर इवागतः ॥ तत्र लोकान् गदैर्ग्रस्तान् व्यथया परिपीडितान् । स्थलेषु बहुषु व्यग्रान् म्रियमाणांश्च दृष्टवान् ॥ तान् दृष्ट्वाऽतिदयायुक्तस्तेषां दुःखेन दुःखितः । अनन्तश्चिन्तयामास रोगोपशमकारणम् ॥ संचिन्त्य स स्वयं तत्र मुनेः पुत्रो बभूव ह । प्रसिद्धस्य विशुद्धस्य वेदवेदाङ्गवेदिनः ॥ यतश्चर इवायातो न ज्ञातः केनचिद् यतः । तस्माच्चरकनाम्नासौ विख्यातः क्षितिमण्डले । स भाति चरकाचार्यो वेदाचार्यो यथा दिवि । सहस्रवदनस्यांशो येन ध्वंसो रुजां कृतः ॥ आत्रेयस्य मुनेः शिष्या अग्निवेशादयोऽभवन् । मुनयो बहवस्तैश्च कृतं तन्त्रं स्वकं स्वकम् ॥ तेषां तन्त्राणि संस्कृत्य समाहृत्य विपश्चिता । चरकेणात्मनो नाम्ना ग्रन्थोऽयं चरकः कृतः ॥' इति । एतेन यदि **चरकपतञ्जली** एकव्यक्तिवचनौ, तर्हि सर्वं सुस्थम् । इह कौतुकिभी रामभद्रयज्वविरचितमष्टसर्गात्मकं **पतञ्जलिचरिताख्यं** महाकाव्यं द्रष्टव्यम् । पतञ्जलेर्निवासो गोनर्ददेशः कश्मीरेति बहवः, अयोध्यामण्डले गोण्डेति कतिपये इति दिक् ॥

र्थात् ३१००—४८७=२६१३ कलिगतम् । एष च—'यदुदुम्बरवर्णानां घटीनां मण्डलं महत् । पीतं न गमयेत्स्वर्गं तत्किं क्रतुगतं नयेत् ॥' इत्येवमुक्तवान् पस्पशायाम्—'प्रमत्तगीत एष तत्रभवतो यस्त्वप्रमत्तगीतस्तत्प्रमाणम्' इत्येवं महाभाष्यकारेण प्रत्युच्यते । यद्युक्तो बुद्धनिर्वाणकालः सर्ववादिसंमतः स्यात्तदास्मात्पूर्वं तीर्थंकर-**महावीर**सत्ताकालो व्यक्त एव, यतो वीरनिर्वाणसंवत्—५२७ ईशात ऊर्ध्वम् अर्थात् कलिगतम् २५७३। 'चन्द्रगुप्तसभा' इति प्रत्युदाहरणं तु स्वावसरे महाभाष्ये काशिकायामपि न दृश्यते, केवलं सिद्धान्तकौमुद्याम् । चन्द्रगुप्तसंबन्धितया संभाव्यमानः पुष्यमित्रो वर्तमाने लट्सूत्रभाष्ये—'इह पुष्यमित्रं याजयामः' ( ३।२।१२३ ) इत्येवं स्मृतोऽपि कुशकाशावलम्बनायितः । नहि देवदत्तेन्द्रवर्मेन्द्रपालितप्रायैरुदाहरणैः ( ८।२।८३ ) केचन नियता व्यक्तिविशेषा भाष्यकाराभिमता भवितुमर्हा इति दिक् ।

अथ किंचिद्दर्शनान्तरमुपक्षिप्य भूयः प्रकृतप्रघट्टकफलं दर्शयिष्यते । दर्शनेऽनुयोगितया प्रतियोगितया वा परस्परस्य परस्परं प्रवेशो लक्ष्यते । सोऽयं शब्दतोऽर्थत इति यथोत्तरं भूयान् प्रेक्षाविषयः । तद्बीजं तु—'कालः स्वभावो नियतिर्यदृच्छा भूतानि योनिः—' (पृ. ८) इत्येवंजातीया भगवती श्रुतिरेव । नहीयता श्रुतिरुपालभ्या, तदनुवर्तिप्रमातॄणां प्रवृत्तिर्वा; यदेष प्रमेयस्य प्राकृतिको दोषः स्वभावो वा यथायं विचारं सहते तथागत्या तैर्थिकैर्नीयत इति । अत्रेदं स्थूलतः पर्यालोचनम्—

**वैशेषिकं न्यायश्चेति** द्वये दर्शने समानतन्त्रे तत्र उलूकापरनाम्ना महामुनिना **कणादेन** विशेषं पञ्चमं पदार्थभेदमधिकृत्य कृतो ग्रन्थो वैशेषिकम् । विशेषाय स्वाश्रयस्येतरेभ्यो व्यावर्तनाय प्रभवतीति वैशेषिकस्तत्प्रमाता । तथाचोक्तमौलूक्यदर्शने **माधवाचार्यैः**—'द्वित्वे च पाकजोत्पत्तौ विभागे च विभागजे । यस्य न स्खलिता बुद्धिस्तं वै वैशेषिकं विदुः ॥' इह भूतात्मपुरस्कारेण पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसपार्यन्तिकी परमात्मचिन्ता । अत्र दश अध्यायाः । प्रत्यध्यायं द्वे आह्निके । सर्वसूत्राणि ३६६। इदं न्यायदर्शनतः प्राचीनं तत्रेयं तुलना—

| वैशेषिकद. | न्यायद. |
| --- | --- |
| सुखदुःखेच्छाद्वेषप्रयत्नाश्चात्मनो लिङ्गानि ३।२।४ ॥ विद्याविद्यातश्च संशयः २।२।२० ॥ | इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गम् १।१।१० ॥ विद्याऽविद्याद्वैविध्यात् संशयः ४।३।४ ॥ |

अपिच वैशेषिके—'अप्रसिद्धोऽनपदेशः—( ३।१।१५-१७ )' इत्यादिना असिद्ध-विरुद्ध-सव्यभिचारेति त्रय एव हेत्वाभासा उपदिष्टाः । न्याये तु—'सव्यभि-

१. कणभक्षणेन कणादः । तपस्यते तस्मै उलूकरूपधारी ईश्वरः शास्त्रमुपदिदेश, तेन उलूकः । अस्य दर्शनम्, औलूकम्, औलूक्यम् । स्वयमपि औलूकः, औलूक्यः । तथा काश्यपोऽपि ॥

चार—' ( १।२।४५—५० ) इत्यादिना पञ्चाप्युपदिष्टाः । एतेन पूर्वं त्रय एव हेत्वाभासा आकलिताः, पश्चात् पञ्चत्वमुपनीता इति व्यक्तम् । अत्र 'विरुद्धासिद्ध-संदिग्धमलिङ्गं काश्यपोऽब्रवीत्' इति वैशेषिक-पदार्थधर्मसंग्रहकारः **प्रशस्त**पादाचार्योऽपि संवादी । एवं वृत्तौ **जयनारायण**-तर्कपञ्चाननोऽपि । तदेतन्महामहोपाध्याय-**चन्द्रकान्त**भट्टाचार्यः स्वभाष्यभूमिकायां स्पष्टमुक्तवान् । किंच, न्यायसूत्रापेक्षया वैशेषिकसूत्राणां प्रणयनशैलीसारल्यमपि तत्प्राचीनतामवगमयतीति प्रत्यक्षं परीक्षकाणाम् । एवमपि यन्न्यायकोशभूमिकायां महामहोपाध्यायभट्ट**भीमा**चार्येण विपरीतमुच्यते तन्न हृदयारोहीति द्रष्टव्यम् ।

प्रमाणैः प्रमेयपरीक्षणं **न्यायः**, नीयते प्रमेयसिद्धिरनेनेति वा । एषोऽक्षपादापरनाम्ना महामुनिना **गोतमेन**[१] न्यरूपि । इष्टान्तरात्मपुरस्कारेण पदार्थतत्त्वज्ञानान्निःश्रेयसपार्यन्तिकी परमात्मचिन्ता । अत्र पञ्च अध्यायाः । प्रत्यध्यायमाह्निकद्वयम् । सर्वसूत्राणि ५३१ । भगवतो गौतमस्य समये आयुर्वेद इव **मन्त्र**काण्डोऽपि दृष्टप्रत्यय आसीत्, तत एव दृष्टान्तविधया द्वयोरप्युपादानं वेदप्रामाण्यावसरे कृतम्—'मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात् २।१।६८ ।' इति । स्वारस्याद्विशेषेणागमिका मन्त्रा लक्ष्यन्ते । आगमं च—'आगतं शिववक्त्रेभ्यो गतं च गिरिजामुखे । मतं श्रीवासुदेवस्य तस्मादागममुच्यते ॥' इति **शब्दार्थ**चिन्तामणौ निरुक्तम् । वक्त्राणि—तत्पुरुषा-घोर-सद्योजात-वामदेवे-शानसंज्ञानि पूर्वदक्षिणपश्चिमोत्तरोर्ध्वरूपाणि पञ्च । तत्पुरुषादिवक्त्रप्रतिपादका मन्त्रास्तु **तैत्तिरीये** आरण्यके दशमप्रपाठके श्रूयन्ते ॥

**सांख्यं योग**श्चेति समानतन्त्रे । तत्र तत्त्वानां समासो यत्र स तत्त्वसमासः सांख्यापरनामा नारायणावतारेण देवहूतिनन्दनेन महामुनिना **कपिले**नोपादेशि । तथाचोक्तम्—'पञ्चमे कपिलो नाम सिद्धेशः कालविप्लुतम् । प्रोवाचासुरये सांख्यं तत्त्वग्रामविनिर्णयम् ॥' इति **भागवते** ( १ स्कं. ३ अ. १० श्लो. ) । तथा—'दुःखत्रयाभिघातादि'त्यादिसांख्यकारिकामूलभूता सांख्यषडध्यायी तु वैश्वानरावतारेण महामुनिना कपिलेनोपादर्शि । तथा चोक्तम्—'शुक्लकृष्णगतिर्देवो यो बिभर्ति हुताशनम् । अकल्मषः कल्मषाणां कर्ता क्रोधाश्रितस्तु सः ॥ कपिलं परमर्षिं च यं प्राहुर्यतयः सदा । अग्निः स कपिलो नाम सांख्ययोगप्रवर्तकः ॥' इति **भारते** । विज्ञानभिक्षुस्तु द्वयोरैक्यं मन्यते । 'संख्यां प्रकुर्वते चैव प्रकृतिं च प्रचक्षते । चतुर्विंशतितत्त्वानि तेन सांख्याः प्रकीर्तिताः ॥' इत्यनेन सांख्यसंज्ञायोगोऽवसेयः । एतेन तत्त्वसमासरूपं षडध्यायीरूपं चेति द्वेधा सांख्यदर्शनमवसीयते । तत्र प्रथमं प्राचीनतमम्, द्वितीयं तु—न्यायवैशेषिकदर्शनाभ्यां पश्चाज्जज्ञे । तत्रैतल्लिङ्गम्—'न वयं षट्पदार्थवादिनो वैशेषिकादिवत् १।२५॥' 'न षट्पदार्थनियमस्तद्बोधान्मुक्तिः ५।८५ ॥' 'षोडशादिष्वप्येवम् ५।८६ ॥' इति । षडध्याय्यां सूत्राणि ५२६। तत्त्वसमासे तु २२ सूत्राणि ॥

---

१. गोतमः, गौतमोऽपि । पादे आलोचनसत्त्वाद् अक्षपाद इत्युक्तः ॥

महामुनिना पतञ्जलिनानुशिष्टो **योगः**। युजिर् योग इति धातोर्व्युत्पादितस्यास्य प्रवृत्तिनिमित्तं चित्तवृत्तिनिरोध एव। अत्र 'संयोगो योग इत्युक्तो जीवात्मपरमात्मनोः' तथा-'परेण ब्रह्मणा सार्धमेकत्वं यन्नृपात्मनः। स एव योगो विख्यातः किमन्यद् योगलक्षणम् ॥' इत्यनेन योगस्य, तथैव—'वृत्तिहीनं मनः कृत्वा क्षेत्रज्ञं परमात्मनि। एकीकृत्य किमुच्येत योगयुक्तः स उच्यते ॥' इत्यनेन योगिनश्च स्वरूपमवधातव्यम्। योगदर्शने चत्वारः पादाः, सूत्राणि १९५। इहान्तरात्मपुरस्कारेण—'जलसैन्धवयोः साम्यं यथा भवति योगतः। तथात्ममनसोरैक्यं समाधिरिति कथ्यते ॥' इति समाधितः कैवल्यपार्यन्तिकी निर्गुणपरमात्मचिन्ता। सांख्ये तु अन्तरात्मपुरस्कारेण तत्त्वज्ञानान्निर्वाणपार्यन्तिकी निर्गुणात्मचिन्ता। एतानि चत्वारि दर्शनानि लक्ष्यीकृत्य **पराशरोपपुराणादिषूक्तम्**—'अक्षपादप्रणीते च काणादे सांख्ययोगयोः। त्याज्यः श्रुतिविरुद्धोंऽशः श्रुत्येकशरणैर्नृभिः ॥' त्याज्योंऽशो नानात्मवादप्रभृतिः ॥

**धर्ममीमांसा**-ब्रह्ममीमांसेति दर्शने प्रतिज्ञासूत्रतो जिज्ञासापदोपस्थाप्यकर्मज्ञानप्रधाने। तत्र धर्ममीमांसा महामुनिना **जैमिनिना** मन्त्रब्राह्मणात्मकेभ्यो वेदेभ्यः कर्माणि संकलय्य निरूपिता। इह द्वादशाध्यायाः। प्रत्यध्यायं चत्वारः पादाः, परंतु तृतीये षष्ठे दशमे चाध्याये चत्वारोऽधिकाः, अर्थाद् अष्टपादाः। सूत्राणि २७४५। अधिकरणानि ९०७। वस्तुतस्त्विह संकर्षकाण्डेन चतुरध्यायात्मकेन सह षोडशाध्यायाः। एवं द्वादशानन्तरं त्रयोदशेऽध्याये ८४ सूत्राणि, चतुर्दशे १०४, पञ्चदशे ९५, षोडशे ६४। एवंच पूर्वमीमांसा न द्वादशलक्षण्येव; किंतु षोडशलक्षणीति। अतएव **भाट्टदीपिका**यामन्ते—'आसीत् षोडशलक्षणी श्रुतिपदा या धर्ममीमांसिका संकर्षाख्यचतुर्थभागविधुरा कालेन साजायत। गायत्री त्रिपदात्मिकेव विबुधैरद्यापि पापठ्यते तां पूर्णामतनोच्छ्रमेण महता गम्भीरजो भास्करः ॥' इत्युक्तम् ॥

**ब्रह्ममीमांसा** महामुनिना वेदव्यासापरनामधेयेन भगवन्नारायणावतारेण पाराशर्येण वेदेभ्यो ब्रह्मण उपासनाज्ञाने उपादायोपदिष्टा। इह चत्वारोऽध्यायाः। प्रत्यध्यायं चत्वारः पादाः, सूत्राणि ५५४ अधिकरणानि १९१। एते द्वे दर्शने उद्दिश्य पराशरोपपुराणादिषु—'जैमिनीये च वैयासे विरुद्धांशो न कश्चन। श्रुत्या वेदार्थविज्ञाने श्रुतिपारं गतौ हि तौ ॥' इत्युपश्लोकितमस्तीति **सांख्यप्रवचनभाष्य**तो ज्ञायते। ते एते दर्शने समानकालिके, यस्माद् उभयोरुभयत्र नामधेयं भगवतो व्यासस्यान्तेवासी च जैमिनिरिति सुप्रसिद्धम् ॥

अत्र दर्शनेषु ब्रह्ममीमांसाया (वेदान्तदर्शनस्य) एव तादृङ् महिमा यदेतस्या नानाविधानि भाष्याणि जातानि। तत्र शारीरकभाष्यं चिरंतनम्, यत्कर्ता व्यासस्यैव शिष्यसंताने प्रादुर्भूतः शंकरावतारः **शंकराचार्य** इति। तथाच स्मर्यते **कूर्म**महापुराणे त्रिंशत्तमेऽध्याये युगधर्मानुकीर्तने—'कलौ रुद्रो महादेवो लोकानामीश्वरः परः। तदेव साधयन्नृणां देवतानां च दैवतम् ॥ करिष्यत्यवतारांस्

शंकरो नीललोहितः । श्रौतस्मार्तप्रतिष्ठार्थं भक्तानां हितकाम्यया ॥ उपदेक्ष्यति तज्ज्ञानं शिष्याणां ब्रह्मसंज्ञितम् । सर्ववेदान्तसारं हि धर्मान् वेदनिदर्शितान् ॥ ये तं प्रीत्या निषेवन्ते येनकेनोपचारतः । विजित्य कलिजान् दोषान् यान्ति ते परमं पदम् ॥' इति । 'नारायणं पद्मभुवं वसिष्ठं शक्तिं च तत्पुत्रपराशरं च । व्यासं शुकं गौडपदं महान्तं गोविन्दयोगीन्द्रमथास्य शिष्यम् ॥ श्रीशंकराचार्यमथास्य पद्मपादं च हस्तामलकं च शिष्यम् । तं तोटकं वार्तिककारमन्यानस्मद्गुरून्संततमानतोऽस्मि ॥' इति गोस्वामिमण्डले सायंकाले पुष्पाञ्जलिप्रदानपूर्वकप्रणामाञ्जलिकरणसमये पठ्यमानमभियुक्तपद्यं चेति । अस्य महात्मनः [1]संवत् २३६२, तथा चोक्तं भारतीयज्योतिःशास्त्रे सायनगणनाप्रस्तावे—'श्रीमच्छंकरभगवत्पूज्यपादाचार्याणामवतारशकाब्दाः[2] २३६२' इत्यादि ।

एतयैतिहासिकदृष्ट्या द्वापरान्ताद् अर्थात् पाण्डवसत्ताकालादारभ्य शालिवाहनीय–शककालपर्यन्तमतिक्रान्तासु ३१७९ एतावतीषु कलिगतसमासु लक्ष्यभूतानां कालपरिच्छेदकानां मुनीनामाचार्याणां भूपतीनां चावस्थानाकलनेन ग्रन्थपौर्वापर्यभाषाविज्ञानसंवादेन च पुराणेषु भविष्यतया कीर्तिता राजगणनापद्धतिरपि साधूपपद्यते । तथाहि विष्णुमहापुराणे चतुर्थेऽंशे चतुर्विंशेऽध्याये—'यावत्परीक्षितो जन्म यावन्नन्दाभिषेचनम् । एतद्वर्षसहस्रं तु ज्ञेयं पञ्चाशदुत्तरम् ॥ १०४ ॥' इति । श्रीमद्भागवते द्वादशस्कन्धे द्वितीयाध्याये तु—'आरभ्य भवतो जन्म यावन्नन्दाभिषेचनम् । एतद्वर्षसहस्रं तु शतं पञ्चदशोत्तरम् ॥' इति पाठभेदः । तत्र ३००० काले परीक्षितमारभ्य क्षेमकान्तम् २८ अष्टाविंशती राजानो युधिष्ठिरकुले । तथा बृहद्बलमारभ्य सुमित्रान्तम् ३० त्रिंशद् राजान ऐक्ष्वाकवः । तथैव जरासंधमारभ्य रिपुंजयान्तम् २२ द्वाविंशती राजानो बार्हद्रथा मागधा बभूवुः । अथ १००० एतदुक्तकालोत्तरं द्वाविंशस्य रिपुंजयस्यामात्यो मुनिक एतं ( रिपुंजयं ) हत्वा स्वपुत्रं प्रद्योतं राजानं चक्रे । १३८ अस्मिन् काले नन्द्यन्ताः पञ्च प्राद्योता राजानो बभूवुः । अर्थात् अस्मिन् काले विष्णुमहापुराणरीत्या ११३८ एतावन्तः कलिगताब्दा व्यतीयुः । इहैव विष्णुपुराणोक्तः १०५० इति, भागवतोक्तः १११५ इति वा कालो निपतति । प्राद्योतेषु चतुर्थः 'नन्दिवर्धनः' पञ्चमः 'नन्दी' भवति । एतयोरन्यतरः 'यावत्परीक्षितो जन्म यावन्नन्दाभिषेचनम्' इति प्रागुक्तस्य लक्ष्यो भवितुमर्हति । यतो महापद्मनामा नन्दः, एतत्सुताः सुमाल्यादयो नन्दा वा १३८ एतत्कलिगतोत्तरम् ३६२ एतच्छैशुनाभभूपालभोग्यवर्षानन्तरं लब्धावकाशा भवन्ति । एतेन प्रागुक्तमेव ज्यायः, तथोभयत्र 'नन्दा' 'नन्दी' वा पाठः समानाकार

---

१. अत्र कैश्चित् ३८८९ एतावत् कलिगतम्, अन्यैः ३९११ एतावद्, इतरैरन्यत् उच्यते; तत्प्रधानशंकराचार्यादर्वाक्तनानां तत्पीठवर्तिनामभिप्रायेण नेतव्यम् । यत एतत्पीठारूढाः सर्वे शंकराचार्यसंज्ञयैव व्यवह्रियन्ते । एवं नामसादृश्याद् बहुत्र कविकर्मसु भ्रमो जातः ॥ २. अयमवतारशकाब्दकालो द्वारकाधिष्ठित–शारदापीठे प्रवर्तमान इति तदाज्ञापत्रतो व्यक्तम् ॥

इष्यत इत्यपि द्रष्टव्यम् । अथो इक्ष्वाकुषु त्रिंशति राजसु त्रयोविंशः=शाक्यः, चतुर्विंशः=शुद्धोदनः, पञ्चविंशः=राहुलः । इयमानुपूर्वी भगवन्तं बुद्धं स्पृशति। यतः 'शाक्यमुनिस्तु यः । स शाक्यसिंहः सर्वार्थसिद्धः शौद्धोदनिश्च सः । गौतमश्चार्कबन्धुश्च मायादेवीसुतश्च सः ॥' इत्यमरकोशनिर्दिष्टानि तन्नामान्यालम्ब्य तदीयं चरितमुपनिबद्धं दृश्यते । एवमयं मुनिः कलेर्नवमशतकासन्नो भवति तदैतत्पूर्वोक्तैरतिविरुद्धम् ( भूमि. ३५ पृ. ) । एवमुक्तगणनया कलेः षोडशशताब्द्यां नन्दकौटिल्यादयः सिध्यन्ति । एतदपि सांप्रतिकानां नयेनातिविरुद्धमिति किं क्रियताम् ।

अथैतिहासिकदृष्ट्या द्वापरान्ताच्छालिवाहनीयशकारम्भं यावल्लक्ष्यभूताः कालपरिच्छेदकाः [३]केचिदुद्दिश्यन्ते—

| | कलिशताब्दी— | |
|---|---|---|
| महाराजः परीक्षित् | १०० | निश्चिता । |
| महाराजो जनमेजयः | २०० | |
| भगवान् पाराशर्यः | २०० | |
| महामुनिः पाणिनिः | ४०० | संभाविता । |
| महाराजः शाक्यः | ९०० | गाणितिकी । |
| महामुनिः कात्यायनः ( वररुचिः ) | १००० | संभाविता । |
| तत्रभवान् कौटिल्यः | १६०० | निश्चिता । |

१. बुद्ध इति प्रशस्तज्ञाननिमित्तकं नाम, बुध्यत इति व्युत्पत्तेः । गौतम–बुद्धतः प्राक् चतुर्विंशतिर्बुद्धा जाता इति पाली-सुत्तपितके खुद्दकनिकायस्य चतुर्दशात् बुद्धवंशतो ज्ञायते । एतेन बुद्धान्तरसत्त्वे 'यथा हि चोरः स तथा हि बुद्धस्तथागतं नास्तिकमत्र विद्धि । ३४ ॥' इत्येवं भगवतो दशरथपुत्रस्य रामचन्द्रस्य जाबालिनिर्दिष्टनिराकरणपरायणानि वाक्यानि संगच्छन्ते ( वाल्मीकिरामा० अयोध्या० १०८—१०९ स. )। विष्णुपुराणसूचितोऽमरसिंहगृहीतः क्षेमेन्द्रोक्तदशावतारचरितवर्णितो बुद्धस्तु गौतमबुद्धतो न भिद्यते । इतो गौतमबुद्धस्य कालनिर्णये शिलालेखादिसाधनं विसंवादि लभ्यते । एवं यावदिदमित्थमिति निर्णयो न जायेत, तावद् विष्णुपुराणलब्धार्थस्य ग्रहणेऽप्यस्माकं प्रत्यवायो नास्ति । नहि यत्र शिलालेखो नासाद्यते तदप्रमाणमिति न्याय्यः पन्थाः ॥
२. कौटिल्यश्चाणक्यो विष्णुगुप्त इत्येकव्यक्तिवचना भवन्तु । परं ख्रिस्ताब्दारम्भात्पूर्वं वत्सराणां चतुर्थे शतके विष्णुपुराणरीत्या कौटिल्यसमयो नायाति । तत एव कौटिलीयस्य अर्थशास्त्रस्य उपोद्धातोऽसंलग्नः । एतदर्थशास्त्रं वात्स्यायनीयकामसूत्रसब्रह्मचारि भारतीयकाणिकनीतिसंश्लिष्टं मानवादिविरुद्धमपि । अस्य औपनिषदिकं चतुर्दशमधिकरणं तु सिद्धनागार्जुनीययोगरत्नावलीकल्पम् । चाणक्यसूत्राणि तु मानवशासनानुरुद्धानि ॥
३. अन्तरस्य प्रान्तरत्वे संदिहानैस्तु लक्ष्यानुबन्धिनोऽन्येप्युदाहार्याः । यथा–पाराशर्यस्य भिक्षुसूत्रत आश्मरथ्यः, औडुलोमिः, आत्रेयः । जैमिनेर्मीमांसासूत्रत ऐतिशायनः, कामुकायनः, लावुकायनः । पाणिनिसूत्रतः स्फोटायनः, चाक्रवर्मणः, सेनकः । एवमितरेऽपि ॥

| | | |
|---|---|---|
| महामुनिर्व्याडिः | २००० | संभाविता । |
| भगवान् शंकराचार्यः[1] | २३६२ | निश्चिता । |
| महामुनिर्महावीरः[2] | २५७३ | निश्चिता । |
| महामुनिः पतञ्जलिः | २७०० | संभाविता । |
| महाराजो विक्रमः ( शकक्कारः[3] ) | ३०४४ | निश्चिता । |
| प्रभुरीशा | ३१०० | निश्चिता । |
| महाराजः शालिवाहनः | ३१७९ | निश्चिता । |

अथ विष्णुमहापुराणाद् भारतानामिक्ष्वाकूणां बार्हद्रथानां च भविष्यतां राज्ञां यथाक्रमं नामान्युद्ध्रियन्ते—

१।

( १ ) परीक्षित्
( २ ) जनमेजयः[4]
( ३ ) शतानीकः ( प्र. )
( ४ ) अश्वमेधदत्तः
( ५ ) अधिसीमकृष्णः
( ६ ) निचक्नुः[5]
( ७ ) उष्णः
( ८ ) विचित्ररथः
( ९ ) शुचिरथः
( १० ) वृष्णिमान्
( ११ ) सुषेणः
( १२ ) सुतीर्थः
( १३ ) तृणचक्षुः
( १४ ) सुखिबलः
( १५ ) पारिप्लवः
( १६ ) सुनयः
( १७ ) मेधावी
( १८ ) रिपुंजयः
( १९ ) अर्वः
( २० ) तिग्मः
( २१ ) बृहद्रथः
( २२ ) वसुदासः
( २३ ) शतानीकः ( द्वि. )
( २४ ) उदयनः
( २५ ) विहीनरः
( २६ ) दण्डपाणिः
( २७ ) निमित्तः
( २८ ) क्षेमकः ।

अत्रायं श्लोकः—

'ब्रह्मक्षत्रस्य यो योनिर्वंशो देवर्षिसत्कृतः । क्षेमकं प्राप्य राजानं संस्थानं प्राप्यते कलौ ॥ १८ ॥ ( वि. म. पुरा० चतुर्था० २१ अ० )

२।

( १ ) बृहद्बलः
( २ ) बृहत्क्षणः
( ३ ) उरुक्षयः
( ४ ) वत्सव्यूहः
( ५ ) प्रतिव्योमः
( ६ ) दिवाकरः
( ७ ) सहदेवः

---

१. प्रथमो नतु भट्टपादनाम्ना प्रसिद्धस्य कुमारिलस्य मण्डनस्य वा समकालिकः शंकराचार्य इति ॥ २. जैनानामन्तिमतीर्थंकरः । चतुर्विंश इत्यर्थः ॥ ३. शकशब्दो जातिबोधकोऽपि स्वापकर्षककालबोधको जातः ॥ ४. 'एजेः खश्' इति पाणिनिसूत्रेण व्युत्पाद्यते । श्रुतसेनः, उग्रसेनः, भीमसेन इति त्रयो जनमेजयस्य भ्रातरः ॥ ५. निचक्नुः गङ्गया अपहृते हस्तिनपुरे कौशाम्बीमध्युवास अतो भारतानां कौशाम्बी राजधानी जाता ;

( ८ ) बृहदश्वः
( ९ ) भानुरथः
( १० ) प्रतीताश्वः
( ११ ) सुप्रतीकः
( १२ ) मरुदेवः
( १३ ) सुनक्षत्रः
( १४ ) किंनरः
( १५ ) अन्तरिक्षः
( १६ ) सुपर्णः
( १७ ) अमित्रजित्
( १८ ) बृहद्भ्राजः
( १९ ) धर्मी
( २० ) कृतंजयः
( २१ ) रणंजयः
( २२ ) संजयः
( २३ ) शाक्यः
( २४ ) शुद्धोदनः
( २५ ) राहुलः
( २६ ) प्रसेनजित्
( २७ ) क्षुद्रकः
( २८ ) कुण्डकः
( २९ ) सुरथः
( ३० ) सुमित्राः ।

अत्रानुवंशश्लोकः—

इक्ष्वाकूणामयं वंशः सुमित्रान्तो भविष्यति । यतस्तं प्राप्य राजानं संस्थां प्राप्स्यति वै कलौ ॥ १३ ॥ ( वि. म. पुरा० चतुर्थां० २२ अ० )

३ ।

( १ ) जरासंधः
( २ ) सहदेवः
( ३ ) सोमापिः
( ४ ) अनुश्रुतश्रवाः
( ५ ) अयुतायुः
( ६ ) निरमित्रः
( ७ ) सुनेत्रः
( ८ ) बृहत्कर्मा
( ९ ) सेनजित्
( १० ) श्रुतंजयः
( ११ ) विप्रः
( १२ ) शुचिः
( १३ ) क्षेम्यः
( १४ ) सुव्रतः
( १५ ) धर्मः
( १६ ) सुश्रवाः
( १७ ) दृढसेनः
( १८ ) सुबलः
( १९ ) सुनीतः
( २० ) सत्यजित्
( २१ ) विश्वजित्
( २२ ) रिपुंजयः ।

रिपुंजयस्यामात्यो मुनिको नामैतं ( रिपुंजयं ) हत्वा स्वपुत्रं प्रद्योतनामानमभिषेक्ष्यति ।

( १ ) मुनिकः
( २ ) प्रद्योतः
( ३ ) बलाकः
( ४ ) विशाखयूपः
( ५ ) जनकः
( ६ ) नन्दिवर्धनः
( ७ ) नन्दी ।

बलाकादयः पञ्च प्राद्योताः ।

तदनु—

( १ ) शिशुनाभः
( २ ) काकवर्णः
( ३ ) क्षेमधर्मा
( ४ ) क्षतौजाः
( ५ ) विधिसारः
( ६ ) अजातशत्रुः
( ७ ) अर्भकः
( ८ ) उदयनः
( ९ ) नन्दिवर्धनः
(१०) महानन्दी ।

शैशुनाभा एते । ततो महानन्दिनः शूद्रागर्भोद्भवो महापद्मनामा नन्दः । अस्य सुमाल्यादयोऽष्टौ सुता भवितारः । ततश्च नव चैतान्नन्दान् कौटिल्यो ब्राह्मणः समुद्धरिष्यति । तेषामभावे मौर्याः पृथिवीं भोक्ष्यन्ति । कौटिल्य एव चन्द्रगुप्तमुत्पन्नं राज्येऽभिषेक्ष्यति ।

( १ ) चन्द्रगुप्तः
( २ ) बिन्दुसारः
( ३ ) अशोकवर्धनः
( ४ ) सुयशाः
( ५ ) दशरथः
( ६ ) संयुतः
( ७ ) शालिशूकः
( ८ ) सोमशर्मा
( ९ ) शतधन्वा
( १० ) बृहद्रथः

मौर्या एते । तदनु पुष्पमित्रः सेनापतिः स्वामिनं हत्वा राज्यं करिष्यति ।

( १ ) पुष्पमित्रः
( २ ) अग्निमित्रः
( ३ ) सुज्येष्ठः
( ४ ) वसुमित्रः
( ५ ) उदङ्कः
( ६ ) पुलिन्दकः
( ७ ) घोषवसुः
( ८ ) वज्रमित्रः
( ९ ) भागवतः
( १० ) देवभूतिः

एते शुङ्गाः । ततः कण्वादयः[१] काण्वायनाः । ततो बलिपुच्छकादयः । तत आन्ध्रभृत्यप्रभृतयः । ततो मौनाः । ततः कैङ्किलाश्च ।

( वि० म० पुरा० चतुर्थां० २३–२४ अध्या० ) ।

अथोद्धृतानां राज्ञां कलिगतवर्षाणि यथाक्रमं लिख्यन्ते—

| | | राज्यकालः । |
|---|---|---|
| परीक्षिदादि–क्षेमकान्तानाम्<br>बृहद्बलादि–सुमित्रान्तानाम्<br>जरासंधादि–रिपुंजयान्तानाम् | ... ... ... | १००० |
| प्राद्योतानाम् | ... ... ... | १३८ |
| शैशुनाभा(गा)नाम् | ... ... ... | ३६२ |
| महापद्मादीनाम् | ... ... ... | १०० |
| मौर्याणाम् | ... ... ... | १३७ |
| शुङ्गानाम् | ... ... ... | ११२ |
| काण्वायनानाम् | ... ... ... | (३)४५ |
| बलिपुच्छकादीनाम् | ... ... ... | ४५६ |
| आन्ध्र(व)भृत्यादीनाम् | ... ... ... | १०९(९) |
| मौनानाम् | ... ... ... | ३०० |
| कैङ्किलानाम् | ... ... ... | १०६ |
| विष्णुपुराणानुसारेण | = | ३८४६ |
| भागवतानुसारेण | = | ४१५५(क) |

१. 'काण्वाः' इति भागवते पाठः.

(क) अत्र श्रीमद्भागवतानुसारेण काण्वायनराज्यकाले त्रिशती आन्ध्रभृत्यादिकाले नव ३००+९=३०९ योजिताः । मतद्वयेनापि महाराजशालिवाहनस्य शककाला भविष्यन्नधस्तनसमयः कथितोऽवधातव्यः । इयं राज्ञां राज्यकालकलना सूर्यसिद्धान्तस्य किरणावल्याख्यव्याख्यायां वितता । परं तत्रत्या लेखशैली कठिना बहुत्र नात्युपयुक्तेत्यस्माभिरन्यथा प्रयतितमिति निर्णायकैरालोचनीयम् ॥

इत्थं पुराणकोटिमुपसंहृत्य ( भूमि. २२ पृ० ) प्रकृतं चतुर्थप्रश्नशेषं समासादुपक्षिप्यते—

अलंकारापरपर्यायं साहित्यदर्शनमस्माकं दर्शनेन त्रिधा विभागार्हं प्रतीयते। तदित्थम् । 'कविकर्म काव्यमाहुः—' इति ( सा. द. छा. ६ पृ. ) प्राचां घण्टाघोषः । तदिदं ( कविकर्म ) श्रव्यदृश्यरूपतया द्विप्रवाहं प्रवर्तते । द्वयोरपि घटयित्री दोषगुणरीत्यलंकृतिमीमांसा । द्वितीयस्य (दृश्यस्य) तु दर्शनप्रयोजकरूपकोपरूपकमीमांसापि । एते ( मीमांसे ) द्विशाखतया तत्र तत्र निबद्धे इति भामहादिनिबन्धान्निगदव्यक्तम् । अभिधातात्पर्यलक्षणाव्यञ्जनाख्यवृत्तिवितीर्णावलम्बना तृतीयापि शाखा भामहादिहृदयानुमेया ध्वनिकारादिदार्शनिकसहृदयधुरीणैरुद्भाविता मीमांसिता अभिनवगुप्तपादाचार्यमम्मटप्रभृतिभिराकलिता तत्र तत्र प्रतीतैव । तत्र च त्रैविध्ये कतमस्य प्राथम्यमिति निर्णिनीषायां गमकस्य यत्र क्वापि दर्शनाद् दर्शनेष्विव विशिष्यैकस्य तन्नावसीयते तथापि निबन्धावष्टम्भने यथा दर्शितं प्रतिभानवतां हृदयपथमधिरोहतीति । तथा चास्य दर्शनस्य 'अलंकारः' इति प्राक् 'साहित्यम्' इत्यर्वाक् संज्ञा पप्रथे । कविकर्मणः काव्यस्य तु पूर्वत्र लक्ष्यानुसृतमप्यनुग्राहकत्वम् ।

आलंकारिकाचार्येषु प्रथमत्वेन संभावितो रक्रिलगोमिसूनुः पाणिनिव्याकरणैकरसिको नानादर्शननिष्णातो भामहनामा आचार्यः काव्यालंकारनाम सलक्ष्यलक्षणं षट्परिच्छेदात्मकं ग्रन्थरत्नं व्यधत्त । तदेतत्—

"शालातुरीयमतमेतदनुक्रमेण
को वक्ष्यतीति विरतोऽहमतो विचारात् ।
शब्दार्णवस्य यदि कश्चिदुपैति पारं
भीमाम्भसश्च जलधेरिति विस्मयोऽसौ ॥ ६२ ॥
विद्यानां सततमुपाश्रयोऽपरासां
तासूक्तान्न च विरुणद्धि कांश्चिदर्थान् ।
श्रद्धेयं जगति मतं च पाणिनीयं
माध्यस्थ्याद् भवति न कस्यचित्प्रमाणम् ॥ ६३ ॥
अवलोक्य मतानि सत्कवीना-
मवगम्य स्वधिया च काव्यलक्ष्म ।
सुजनावगमाय भामहेन
ग्रथितं रक्रिलगोमिसूनुनेदम् ॥ ६४ ॥" इति ।
"षष्ट्या शरीरं निर्णीतं, शतषष्ट्या त्वलंकृतिः ।
पञ्चाशता दोषदृष्टिः, सप्तत्या न्यायनिर्णयः ॥

१. असद्दृष्टं काव्यालंकारपुस्तकं तु क्वचित्त्रुटितं प्रतीयते, यतो राघवभट्टेन लिखितस्य भामहोक्तपर्यायोक्तलक्षणस्योत्तरार्धमिह न दृश्यत इत्यादि.

षष्ठ्या शब्दस्य शुद्धिः स्यादित्येवं वस्तुपञ्चकम् ।
उक्तं षड्भिः परिच्छेदैर्भामहेन क्रमेण यः ॥"

इति च श्लोकेभ्यो ज्ञायते । तत्र षष्ठ्येति श्लोकद्वयस्य लेख 'इति श्रीभामहालंकारे पाश्चात्त्यः षष्ठः परिच्छेदः' इत्यतोऽग्रे दृश्यते । अयं भामहो महाभाष्यकारात्पतञ्जलेः पश्चात् काव्यादर्शकाराद् दण्डिनः पूर्वं संभवतो विदर्भेषु तदासन्नेषु वा देशेषु बभूव । यस्मादेष 'समुदायार्थशून्यं यत्तदपार्थकमिष्यते । दाडिमानि दशापूपाः षडित्यादि यथोदितम् ।' (४ परि. ८ श्लो.) इति महाभाष्योक्तं दशदाडिमादिवाक्यमुपन्यस्तवान् । दण्डी च काव्यादर्शे भामहग्रन्थं गृहीतवान् (भू. मि. २४ पृ.) भामहेन वररुचिकृतस्य प्राकृतव्याकरणस्य (प्राकृतप्रकाशस्य) वृत्तिरपि विरचिता । भामहालंकारस्य भामहविवरणं भट्टोद्भटेन विरचितमिति प्रतीहारेन्दुराजलेखतो ज्ञायते ।

अस्मिन्भामहालंकारे (काव्यालंकारे) द्वितीयतृतीयपरिच्छेदयोरलंकृतयो विवेचिताः । तत्र द्वितीये 'अनुप्रासः सयमको रूपकं दीपकोपमे । इति वाचामलंकाराः पञ्चैवान्यैरुदाहृताः ॥ ४ ॥' इत्युद्दिश्यैषां विमर्शः । इह 'स्वरूपवर्णविन्यासमनुप्रासं प्रचक्षते' इत्यनेन 'उपनागरिकानुप्रासः बुध्यते । ग्राम्यानुप्रासमन्यत्तु' इत्यनेन ग्राम्यानुप्रासस्तु स्फुटः । एवं भामहमतेऽनुप्रासद्वयम् । परुषा, उपनागरिका, ग्राम्येति तिस्रो वृत्तयः । ग्राम्यैव उद्भट—मम्मटादिभिः कोमलेति व्यपदिष्टा । एवं वृत्तीनां त्रैविध्ये तदुपारूढतया परुषानुप्रासादयस्त्रयोऽनुप्रासा अप्युद्भटमते व्याख्याताः । उक्तं चोद्भटेन प्रथमवर्गे 'सरूपव्यञ्जनन्यासं तिसृष्वेतासु वृत्तिषु । पृथक्पृथगनुप्रासमुशन्ति कवयः सदा ॥' इति । अथ यमकम् 'आदिमध्यान्तयमकं पादाभ्यासस्तथाऽऽवली । समस्तपादयमकमित्येतत्पञ्चधोच्यते ॥' इत्यनेन पञ्चविधमुक्तम् । द्विविधं रूपकम् । त्रिविधं दीपकम् । उपमा, उपमाया हीनत्वादयः सप्त दोषाः । इत एव काव्यालंकारसूत्रेषु वामनेन, काव्यप्रकाशे मम्मटेनोपमादोषा गृहीताः । उपमाप्रसङ्गेन प्रतिवस्तूपमा निर्दिष्टा, मालोपमा सूचितेति पञ्चालंकारी । अयं विषय उद्भटालंकारे प्रथमवर्गे, तत्र उपमा व्याकरणप्रवणा विस्तीर्य निरूपिता । इत उपमाया बहवः प्रकारा मम्मटेन गृहीताः ।

पुनश्च द्वितीये—'आक्षेपोऽर्थान्तरन्यासो व्यतिरेको विभावना । समासातिशयोक्ती च षडलंकृतयोऽपराः ॥ ६७ ॥' इत्युद्दिश्यासां विमर्शः । इह द्विविध आक्षेपस्ततो यथोद्देशमर्थान्तरन्यासप्रभृतयः पञ्चालंकाराः । इति षडलंकारीं लक्षयित्वा तदवसाने—'सैषा सर्वैव वक्रोक्तिरनयार्थो विभाव्यते । यत्नोऽस्यां कविना कार्यः कोऽलंकारोऽनया विना ॥ ८६ ॥ हेतुश्च सूक्ष्मो लेशोऽथ नालंकारतया मतः ।

१. 'अर्थवत्—' (१।२।४५) सूत्रभाष्ये ॥ २. भट्टोद्भटः कश्मीराधिपतेर्जयापीडस्य सभायामासीद्-इति 'विद्वान् दीनारलक्षेण प्रत्यहं कृतवेतनः । भट्टोऽभूदुद्भटस्तस्य भूमिभर्तुः सभापतिः ॥' इति राजतरङ्गिणीतो व्यक्तम् (४ त. ४९५ श्लो.) । जयापीडस्तु ७५५ खिस्ताब्दात् ७८६ खिस्ताब्दपर्यन्तं काश्मीरान्शशास ॥

समुदायाभिधानस्य वक्रोत्त्यनभिधानतः ॥ ८७ ॥" इत्यभिहितम् । काव्यप्रकाशे दशमे मम्मटेनापि—'एवंविधविषयेऽतिशयोक्तिरेव प्राणत्वेनावतिष्ठते यां विना प्रायेणालंकारत्वायोगात् । अत एवोक्तम्' इत्यभिधाय सैषा सर्वैवेति भामहश्लोकः प्रमाणत्वेनोपन्यस्तः । एते आक्षेपादयः षड् उद्भटेन द्वितीयवर्गे लक्षिताः । अथ यथासंख्यम्, उत्प्रेक्षा, स्वभावोक्तिः, इत्यलंकारत्रयी दर्शिता । सेयमौद्भटीये तृतीयवर्गे 'यथासंख्यमथोत्प्रेक्षां स्वभावोक्तिं तथैव च । अपरे त्रीनलंकारान् गिरामाहुरलंकृतौ ॥' इत्यादिना निरूपिता । अपरे इति कथनं भामहाभिप्रायेणापि । तृतीयपरिच्छेदे—'प्रेयो रसवदूर्जस्वि पर्यायोक्तं समाहितम् । द्विप्रकारमुदात्तं च भेदैः श्लिष्टमपि त्रिधा ॥ १ ॥ अपह्नुतिं विशेषोक्तिं विरोधं तुल्ययोगिताम् । अप्रस्तुतप्रशंसां च व्याजस्तुतिनिदर्शने ॥ २ ॥ उपमारूपकं चान्यदुपमेयोपमामपि । सहोक्तिपरिवृत्ती च ससंदेहमनन्वयम् ॥ ३ ॥ उत्प्रेक्षावयवं चान्ये संसृष्टमपि चापरे । भाविकत्वं च निजगुरलंकारं सुमेधसः ॥ ४ ॥' इति त्रयोविंशतिमलंकारानुद्दिश्यैषां विमर्शः । इह प्रेयआदयः श्लिष्टपर्यन्ताः सप्तालंकारा औद्भटीये चतुर्थवर्गे । उपमारूपकं विहाय अपह्नुतिमारभ्य परिवृत्तिपर्यन्ता दशालंकाराः पञ्चमवर्गे । उपमारूपकस्य तु—"उपमानेन तद्भावमुपमेयस्य साधयत् । यां वदत्युपमामेतदुपमारूपकं यथा ॥ ३५ ॥ समग्रगगनायाममानदण्डो रथाङ्गिणः । पादो जयति सिद्धस्त्रीमुखेन्दुनवदर्पणः ॥ ३६ ॥" इति भामहोक्तं लक्षणं लक्ष्यं च । उत्प्रेक्षावयवं विहाय शिष्टाः षष्ठवर्गे । उत्प्रेक्षावयवस्य तु—"श्लिष्टस्यार्थेन संयुक्तः किंचिदुत्प्रेक्षयान्वितः । रूपकार्थेन च पुनरुत्प्रेक्षावयवो यथा ॥ ४७ ॥ तुल्योदयावसानत्वाद्गतेऽस्तं प्रति भास्वति । वासाय वासरः क्रान्तो विशतीव तमोगृहम् ॥ ४८ ॥" इति भामहीये लक्षणोदाहरणे । एष उपमारूपकं च काव्यालंकारसूत्रेषु वामनेनापि सूत्रितम्—'तद्भेदावुपमारूपकोत्प्रेक्षावयवौ' । (५ अधिक. १ अध्या० ३१ सू.) तच्छब्देन संसृष्टिः । उपमाजन्यं रूपकमुपमारूपकम् । उत्प्रेक्षाया हेतुरलंकारे उत्प्रेक्षावयवतः । अवयवेन आरम्भको लक्ष्यते । अथ 'आशीरपि च केषांचिदलंकारतया मता' इत्युक्तम् । द्वितीयतृतीययोस्त्रिचत्वारिंशदलंकृतयः ४३ । **उद्भटालंकारे** (काव्यालंकारसंग्रहे) तु पुनरुक्तवदाभासः, छेकानुप्रासः, लाटानुप्रासः, संकरः, काव्यहेतुः (काव्यलिङ्गम्) काव्यदृष्टान्तः (दृष्टान्तः) इत्येतेऽलंकारा अधिकाः । दण्डिनः **काव्यादर्शे** तु न कश्चन नूतनोऽलंकारः कल्पितः । वस्तुतो भामहाशय एव महत्या वाचोयुक्त्या भामहोक्तितोऽपि सरसया सूक्त्या परिष्कृतो दृश्यते । विशेषतो लक्ष्यभूतविषयस्तु तत्तच्चक्रे नियन्त्रितश्च । रुद्रटस्य **काव्यालंकारे** तु 'वक्रोक्तिरनुप्रासो यमकं श्लेषस्तथा परं चित्रम् । शब्दस्यालंकाराः श्लेषोऽर्थस्यापि सोऽन्यस्तु ॥' (२ अध्या. १३ आ.) इति वक्रोक्तिप्रभृतयः पञ्च शब्दालंकारा यथोद्देशं मीमांसिताः । एषा वक्रोक्तिः पूर्वतो भिन्ना । श्लेषोऽपि शब्दार्थाभ्यां विशकलितः । सर्वत्र मौलिकविषयाभेदेऽप्यवान्तरभेदो जागर्त्येव । अथ वास्तवौपम्यातिशयश्लेषाणां चतुर्णां विशेषतया यावदर्थालंकाराणां क्रोडीकरणम् (छा. ५०१ पृ.) । तत्र सहोक्तिः, समुच्चयः,

जातिः, यथासंख्यम्, भावः, पर्यायः, विषमः, अनुमानम्, दीपकम्, परिकरः, परिवृत्तिः, परिसंख्या, हेतुः, कारणमाला, व्यतिरेकः, अन्योन्यम्, उत्तरम्, सारम्, सूक्ष्मम्, लेशः, अवसरः, मीलितम्, एकावली, इति त्रयोविंशतिर्वास्तवस्य भेदाः। उपमा, उत्प्रेक्षा, रूपकम्, अपह्नुतिः, संशयः, समासोक्तिः, मतम्, **उत्तरम्**, अन्योक्तिः, प्रतीपम्, अर्थान्तरन्यासः, उभयन्यासः, भ्रान्तिमान्, आक्षेपः, प्रत्यनीकम्, दृष्टान्तः, पूर्वम्, **सहोक्तिः**, **समुच्चयः**, साम्यम्, स्मरणम्, इत्येकविंशतिरौपम्यस्य भेदाः। **पूर्वम्**, विशेषः, उत्प्रेक्षा, विभावना, तद्गुणः, अधिकम्, विरोधः, **विषमः**, असंगतिः, पिहितम्, व्याघातः, अहेतुः, इति द्वादशातिशयस्य भेदाः। अविशेषः, विरोधः, **अधिकम्**, वक्रम्, व्याजः, उक्तिः, असंभवः, अवयवः, तत्त्वम्, विरोधाभासः, इति दश श्लेषस्य भेदाः। एतेष्वलंकारेषु वास्तवभेदे—समुच्चयः, भावः, विषयः, अनुमानम्, परिकरः, परिसंख्या, कारणमाला, अन्योन्यम्, उत्तरम्, सारम्, अवसरः, मीलितम्, एकावली—इति। औपम्यभेदे—मतम्, उत्तरम्, अन्योक्तिः, प्रतीपम्, उभयन्यासः, भ्रान्तिमान्, प्रत्यनीकम्, पूर्वम्, समुच्चयः, साम्यम्, स्मरणम्—इति। अतिशयभेदे—पूर्वम्, तद्गुणः अधिकम्, असंगतिः, पिहितम्, व्याघातः, अहेतुः—इति। श्लेषभेदे तु प्रायः सर्वेऽधिकाः'। वामनस्य **काव्यालंकारसूत्रेषु** तु प्रायः सर्वे पूर्वत्र निपतन्तीति पञ्च यथापूर्वं प्राचीनाः संदर्भाः। यथोत्तरमर्वाचीनास्तु **काव्यप्रकाश**चन्द्रालोक[1]कुवलयानन्द[2]रसगङ्गाधरालंकारकौस्तुभाः। एतेषु यावदुपयुक्तसर्वशास्त्रमथननिर्यासे काव्यप्रकाशे एवालंकारशास्त्रीया प्रौढशिक्षा परिसमाप्यते **रसगङ्गाधरे**[3] तु विचारचर्चा। **अलंकार**कौस्तुभीया[4] विचारचर्चा तु केवलतर्कचर्वणा। यत एषा अधीततर्केण आलंकारिकेण सुखेनावबोद्धुं शक्यते, अनधीततर्केण तु पठ्यमानापि बोद्धुं न शक्यते। उक्तंचापि कौस्तुभे—'धियो वैधेयानां भवति विषयोऽसावविषयः—' इति। चन्द्रालोकपञ्चममयूखसमुद्भूतः **कुवलयानन्दस्तु** सुतरामलंकारव्युत्पादकः, केवलमेनं शतालंकारपरिपूर्णं धावनमेवायासयतीत्यलम्। अत्र 'उपमाऽनन्वयस्तद्वदुपमेयोपमा ततः। उत्प्रेक्षा चापि संदेहो रूपकापह्नुती तथा॥ श्लेषस्तथा समासोक्तिः प्रोक्ता चैव निदर्शना। अप्रस्तुतप्रशंसातिशयोक्ती परिकीर्तिते॥ प्रतिवस्तूपमा तद्वद् दृष्टान्तो दीपकं तथा। तुल्ययोगितया चैव व्यतिरेकः प्रकीर्तितः॥ आक्षेपो विभावना च विशेषोक्तिस्तथैव च। यथासंख्यमर्थान्तरन्यासः स्यातां विरोधवत्॥ स्वभावोक्तिस्तथा व्याजस्तुतिः प्रोक्ता सहोक्तिवत्। विनोक्तिपरिवृत्ती च भाविकं काव्यलिङ्गवत्॥ पर्यायोक्-

---

१. चन्द्रालोकः पक्षधर-मिश्रापरनाम्ना जयदेवेन तार्किकमूर्धन्येन कृतः। स च ११८९ शकाब्दत ऊर्ध्वतनः॥ २. कुवलयानन्दः अप्पय-दीक्षितेन कृतः। स च १५५९ शकाब्दत ऊर्ध्वतनो यतोयं कालोऽस्य पौत्रस्य नीलकण्ठदीक्षितस्येति॥ ३. रसगङ्गाधरो जगन्नाथपण्डितराजेन रचितः। स च १५८१ शकाब्दासन्नकालिकः॥ ४. अलंकारकौस्तुभो विश्वेश्वर-पण्डितेन रचितः। स च १७०० शकाब्दासन्नकालिकः॥

मुदात्तं च समुच्चय उदीरितः । पर्यायश्चानुमानं च प्रोक्तः परिकरस्तथा ॥ व्याजोक्तिपरिसंख्ये च विज्ञेये हेतुमालया । अन्योन्यमुत्तरं सूक्ष्मसारौ तद्वदसंगतिः ॥ समाधिश्च समेन स्याद् विषमस्त्वधिकेन च । प्रत्यनीकं मीलितं च स्यातामेकावली स्मृता ॥ भ्रान्तिमांस्तु प्रतीपेन सामान्यं च विशेषवत् । तद्गुणातद्गुणौ चैव व्याघातः परिकीर्तितः ॥ संसृष्टिसंकरौ चैवमेकषष्टिरुदाहृताः ॥' इत्येते काव्यप्रदीपोपनिबद्धा अलंकाराः काव्यप्रकाशे स्थिरीकृताः । त एते किंचिन्न्यूनाधिकरूपतया तदग्रिमग्रन्थेषु संचारिताः । तत्र कुवलयानन्देऽलंकारान्तरव्यवस्थापने भूयान् यत्न इत्युक्तमेव । तदेतद्दर्पणान्ते विन्यस्तादलंकारसंख्यानात्सुखेनावगम्यते ( छा. ६२३ पृ. ) किमत्र पौनरुक्त्येन ॥

अथ भामहेन उपनागरिकादिवृत्तिमातृकारीतिः 'गौडीयमिदमेतत्तु वैदर्भमिति किं पृथक्' ( १ परि. ३२ श्लो. इत्यादिना मनाक् स्पृष्टा । सा च उद्भट–दण्डि–रुद्रटैर्यथोत्तरं परीक्षिता । गौडविदर्भदेशादिनिबन्धनेयं रीतीनां संज्ञा । तथा चोक्तं वामनेन—'विदर्भादिषु दृष्टत्वात्तत्समाख्या' ( १ अधि. २ अध्या. १० सू. ) इति 'सापि वैदर्भी, तात्स्थ्यात्' ( १।२।२२ ) इति च । एतेन शौरसेन्यादिभाषाविभागोऽपि व्याख्यातः । विदर्भादिवासिभिर्वैदर्भ्यादिरीतिरिव शूरसेनादिवासिभिः शौरसेन्यादिभाषाऽनुशिष्टेति तात्पर्यम् । अत्र 'महाराष्ट्राश्रयां भाषां प्रकृष्टं प्राकृतं विदुः' इति दण्डिनः काव्यादर्शतो विशेषोऽपि विभावनीयः ॥

भामहेन—'माधुर्यमभिवाञ्छन्तः प्रसादं च सुमेधसः । समासवन्ति भूयांसि न पदानि प्रयुञ्जते ॥ केचिदोजोऽभिधित्सन्तः समस्यन्ति बहून्यपि ।' ( २ परि १ श्लो. ) इत्येवं गुणा उपादीयन्ते । उद्भटरुद्रटाभ्यां नैवमपि गुणा गुण्यन्ते, आक्षेपाद् गण्यन्त इत्यन्यदेतत् । दण्डिना तु—'श्लेषः प्रसादः समता माधुर्यं सुकुमारता । अर्थव्यक्तिरुदारत्वमोजःकान्तिसमाधयः । इति वैदर्भमार्गस्य प्राणा दशगुणाः स्मृताः । एषां विपर्ययः प्रायो दृश्यते गौडवर्त्मनि ॥' ( १ परि. ४१—४२ श्लो. ) इत्येते गुणा यथोद्देशं सम्यङ् मीमांसिताः । तत्र श्लिष्टमभिप्रेत्य—'अनुप्रासधिया गौडैस्तदिष्टं बन्धगौरवात् ।' इति; समतामनादृत्य—'इत्यनालोच्य वैषम्यमर्थालंकारडम्बरौ । अपेक्षमाणा ववृधे पौरस्त्या काव्यपद्धतिः ॥' इति; श्रुत्यनुप्रासमालक्ष्य—'इतीदं नादृतं गौडैरनुप्रासस्तु तत्प्रियः । अनुप्रासादपि प्रायो वैदर्भैरिदमिष्यते ॥' इति; अनुप्रासदुष्टिमाकलय्य—'इत्यादिबन्धपारुष्यं शैथिल्यं च नियच्छति । अतो नैवमनुप्रासं दाक्षिणात्याः प्रयुञ्जते ॥' इति; ओजःप्रक्रम्य—'ओजः समासभूयस्त्वमेतद्गद्यस्य जीवितम् । पद्येऽप्यदाक्षिणात्यानामिदमेकं परायणम् ॥' इति च परीक्षितम् । एवं दैशिकपर्यालोचनयैव—'श्लेषप्रायमुदीच्येषु प्रतीच्येष्वर्थमात्रकम् । उत्प्रेक्षा दाक्षिणात्येषु गौडेष्वक्षरडम्बरः ॥' इत्यवाक्षेपि बाणेन हर्षचरिते । वस्तुतस्तु यथासमयं सर्वं शोभनम् । नहि गौडेन दाक्षिणात्येन वा प्रकृत्यैव किमपि सूयते । एत एव गुणा वामनेन काव्यालंकारसूत्रेषु शब्दार्थपरतया दण्डिपथभिन्नया भङ्ग्या निरूपिताः । यत एते पुनर्मम्मटादिभिः

न्तर्भाव्य भामहनिर्दिष्टं त्रित्वमानीताः । अनयैव धिया किमलंकृतयो नोपसंह्रियेरन् ? यदि नाम गतानुगतिकं न स्यात् । दोषा गुणा रीतयश्चैवं संह्रियन्ते, नालंकृतय इति वाङ्मात्रम् । अलंकृतिवद् रीतिवद्वा गुणानामुत्कर्षाधायकत्वेऽपि न पारमार्थिकी शब्दार्थवृत्तिता किंतु रसवृत्तिता । एवं च 'काव्यशोभायाः कर्तारो धर्मा गुणाः । तदतिशयहेतवस्त्वलंकाराः ।' ( ३।१।१–२ ) इति वामनसूत्रे उपचारेण नेये । शरीरिणं शौर्यादिगुणा इवाङ्गिनं रसं माधुर्यादिगुणाः समवायसंबन्धेन, तथा शरीरं हाराद्यलंकारा इवाङ्गं शब्दार्थावनुप्रासोपमाद्यलंकाराः संयोगसंबन्धेनोपकुर्वते । तत्र गुणानां साक्षादङ्ग्युपकारकत्वम्, अलंकाराणां त्वङ्गद्वारेणोपकारकत्वमिति भेदः । तत एव—'रसभावतदाभासभावशान्तिनिबन्धनाः । चत्वारो रसवत्प्रेय ऊर्जस्वि च समाहितम् ॥' इत्येवमादीनां शब्दार्थालंकारवन्नालंकारत्वं भाक्तं वालंकारत्वम् ॥

भामहेन दोषज्ञप्त्यै प्रथमपरिच्छेदे 'नेयार्थं क्लिष्टमन्यार्थमवाचकमयुक्तिमत् । गूढशब्दाभिधानं च कवयो न प्रयुञ्जते ॥ ३७ ॥' इति, यथा—'श्रुतिदुष्टार्थदुष्टं च कल्पनादुष्टमित्यपि । श्रुतिकष्टं तथैवाहुर्वाचां दोषं चतुर्विधम् ॥ ४७ ॥' इति च यथायथं व्याख्याय, पुनः—'अपार्थं व्यर्थमेकार्थं ससंशयमपक्रमम् । शब्दहीनं यतिभ्रष्टं भिन्नवृत्तं विसंधि च ॥ १ ॥ देशकालकलालोकन्यायागमविरोधि च । प्रतिज्ञाहेतुदृष्टान्तहीनं दुष्टं च नेष्यते ॥ २ ॥' इत्यादिदोषदृष्टिनिक्षेपेणैव चतुर्थः परिच्छेदः समाप्तिं नीतः । पुनरपि—'अथ प्रतिज्ञाहेत्वादिहीनं दुष्टं च वर्ण्यते । समासेन यथान्यायं तन्मात्रार्थप्रतीतये ॥ १ ॥ प्रायेण दुर्बोधतया शास्त्राद् बिभ्यत्यमेधसः । तदुपच्छन्दनायैष हेतुन्यायलवोच्चयः ॥ २ ॥' इत्यादिना न्यायनिर्णयेन पञ्चमः परिच्छेदश्च ।

अत्रेत्थं विचारपद्धतिः—

'पदानामेव संघातः सापेक्षाणां परस्परम् ।
निराकाङ्क्षं च तद्वाक्यमेकवस्तुनिबन्धनम् ॥ ४ ॥
क्रमवृत्तिषु वर्णेषु संघातादि न युज्यते ।
बुद्धौ तु संभवत्येतदन्यत्वेऽपि प्रतिक्षणम् ॥ ५ ॥
धीरन्त्यशब्दविषयावृत्तवर्णाहितस्मृतिः ।
वाक्यमित्याहुरपरे न शब्दाः क्षणनश्वराः ॥ ६ ॥
अत्रापि बहु वक्तव्यं जायते तत्तु नोदितम् ।
गुरुभिः किं विवादेन यथाप्रकृतमुच्यते ॥ ७ ॥

इत्यादि । इत एव प्रायो दोषादिविचारा दण्डिरुद्रटवामनमम्मटादिग्रन्थेषु संकलिताः पल्लविताश्चेति किं निर्वचनभूयस्त्वेन ॥

कविकर्मणो गुणरीत्यलंकृतयस्तृणारणिमणिन्यायेनोत्कर्षहेतव इष्यन्ते, नतु दण्डचक्रादिन्यायेन हेतुरिति । दोषास्तु अपकर्षहेतवः । इत्थं चोत्कर्षसत्त्वेऽपक-

षविरहे तन्निर्वाधम्। तदेतदुक्तिविशेषमनुगृह्णीते नातिशेते वा। दोषविरहगुणरीत्यलंकृतिभ्योऽन्यतमस्य पोषकस्य सत्त्वेऽपि काव्यं निर्वहति। पोषकस्यैष स्वभावो यत् प्रवर्तमानः प्रायेण परेण संसृज्यते। यत्र पुनरेकहेलया पोषकाणां प्रवृत्तिस्तत्र खलूच्चावचानां सहकारिणां संनिपाते काव्यस्य परा काष्ठा।

अत्रानलंकृतिदिक्—

'यः कौमारहरः—' इति (सा. द. १५ पृ.)

यथा वा—

'कथमपि कृतप्रत्यापत्तौ प्रिये स्खलितोत्तरे
विरहकृशया कृत्वा व्याजप्रकल्पितमश्रुतम्।
असहनसखीश्रोत्रप्राप्तिप्रमादससंभ्रमं
विवलितदृशा शून्ये गेहे समुच्छ्वसितं ततः॥'

इह पूर्वस्मिन्नुदाहरणेऽयं वक्तव्याशयः—'कारणाभावात्कार्याभावः' इति वैशेषिकसूत्रप्रत्यनीके "कारणाभावे कार्यस्योत्पत्तिर्विभावना।" "कारणसामग्र्ये कार्यानुत्पत्तिर्विशेषोक्तिः" इति भामहाद्यप्पय्यदीक्षितान्ताकलिते विभावनाविशेषोक्ती अलंकृती तावत्। तत्र क्षीरनीरन्यायेन पयोव्यतिकरन्यायेन वा संदेहसंकरविचारावतारे संदिह्यमानयोः स्वरूपे यथालक्षणं लब्धजन्मनी, सति कुड्ये चित्रमिति न्यायादभिमते। यः कौमारहर इत्यादिना उत्कण्ठाकारणाभावे उत्कण्ठाया उत्पत्तौ कारणविरुद्धमुखेन कारणाभावः पुरस्क्रियते। एवं ह्युत्कण्ठाकारणसत्त्वेऽपि अनुत्कण्ठाया अनुत्पत्तौ चेतः समुत्कण्ठत इति विरोधोत्पत्तिमुखेन कार्यानुत्पत्तिश्च। एवमिमे विभावनाविशेषोक्ती साधकबाधकमानराहित्येन अस्फुटे इत्येवानयोः संदेहसंकरोऽप्यस्फुट एव। यथा खलु 'मुखचन्द्रं पश्यामि' इत्यादौ। मुखं चन्द्र इवेति किमुपमा, आहोस्वित् मुखमेव चन्द्र इति रूपकम्। उभयथापि पूर्वत्र व्याघ्रादेः परत्र मयूरव्यंसकादेश्चाकृतिगणत्वात्समासो विधीयते। साधकबाधकविचारः स्फुटसंदेहसंकरश्च मूल एव स्फुटौ (सा. द. ६३० पृ.)। सेयं स्फुटालंकारविरहरूपा अनलंकृतिः एवंजातीये कापि लक्ष्ये लक्ष्यमाणा कथमपह्नोतुं शक्या। यदत्र पुनः 'रसस्य प्राधान्यान्नालंकारता' इति मम्मटोक्तिः सापि भामहादिमताभिप्रायेण। भामहोद्भटदण्डिरुद्रटवामनप्रभृतयो हि प्रतीयमानमर्थं वाच्योपस्कारकत्वेन अलंकारकोटिप्रविष्टं मन्यन्ते। एवं चात्र रसवदलंकारः प्राप्नुवन् रसप्राधान्यात्मकेन हेतुना वार्यते। ध्वनिहृदयग्राहिणां मम्मटाचार्याणां तु मते वस्तुतो गुणीभूतव्यङ्ग्यप्रवाहपतितानां रसवदादीनामलंकारत्वमेव नास्ति। एतेन भामहादिभी रसवदादिचतुरलंकारेभ्यः पार्थक्येनानिर्दिष्टाः 'भावोदयो भावसंधिर्भावशबलता च पृथगलंकाराः' इत्यलंकारसर्वस्वे राजानकरुय्यकनिर्दिष्टा भावोदयादित्रयोऽलंकाराः प्रतीताः। अधस्तनैस्त्वेते सर्वेऽपि संगृहीताः' (सा. द. ६१८ पृ.)।

अथो औद्भटकाव्यलिङ्गलक्षणं प्रकृत्य **प्रतीहारेन्दुराजेन** "ननु काव्यग्रहणेन कथं काव्यस्य सरसपदार्थनिष्ठतोपदर्श्यते—" इत्याद्याशङ्क्य मध्ये कथमपीत्य-मरुकपद्यं दृष्टान्तीकृत्य "न खल्वत्रार्थालंकारः कश्चित्परिदृश्यते। अथ माधुर्यौजोभ्यां परिबृंहितस्य प्रसादस्य विद्यमानत्वात्काव्यता।" इत्यभिधाय च पुनरपि "—ननु चात्रापि ईर्ष्याविप्रलम्भविरहविप्रलम्भशृङ्गाराभ्यां स्वतिरोधानेनोपकृतः संभोगशृङ्गारो नायिकानिष्ठो निबद्धस्तद्योगाच्च रसवत्त्वमलं भविष्यति—" इत्यादिशङ्कासमाधी महता संरम्भेणाकारिषाताम्। तेन द्वितीयस्मिन्नुदाहरणेऽलंकृतिविरह एवापतति। **भोजदेवेनापि**—"याञ्चां दैन्यपराभवप्रणयिनीं नेक्ष्वाकवः शिक्षिताः सेवासंवलितः कदा रघुकुले मौलौ निबद्धोऽञ्जलिः। सर्वं तद्विहितं तथाप्युदधिना नैवोपरोधः कृतः पाणिः संप्रति मे हठात्किमपरं स्प्रष्टुं धनुर्वाञ्छति॥ अत्र निरलंकारत्वेऽपि अर्थौर्जित्याद् गुणत्वम्" (स. कं. १ परि.) इति निर-णायि। इत्थं चालंकार्ये निर्व्यूढेऽनलंकारेऽपि—

'अङ्गीकरोति यः काव्यं शब्दार्थावनलंकृती।
असौ न मन्यते कस्मादनुष्णमनलं कृती॥'

इत्येवमलंकारनिबन्धनं **चन्द्रालोककारा**णामनलंकार एव॥

**अगुणदिक्**—

'स्वच्छन्दोच्छलदच्छ—' इति (का. प्र. १ उ.)।

अत्र अद्यपि दीर्घसमासादिरूप ओजोगुणस्तथा 'दीप्त्यात्मविस्तृतेर्हेतुरोजो वीररसस्थितिः। बीभत्सरौद्ररसयोस्तस्याधिक्यं क्रमेण च॥' (का. प्र. ८ उ.) इत्यनेन वीररसादावेव तस्योपयुक्तत्वेनात्र गङ्गावर्णनेऽनुपयुक्तत्वात्प्रत्युत दोषत्वाच्च नैर्गुण्यमेव। यद्यपीदं काव्यप्रकाशेऽव्यङ्ग्यात्मकावरकाव्यगशब्दचित्रत्वेनोदाहृतं तथाप्युक्तरीत्या निर्गुणत्वसत्त्वात्तदुदाहरणमपीति न दोषः। एवम्—

'मोक्षः स कृष्णसारेक्षणे क्षणेनैव तत्क्षणाद्भवति।
इत्याचक्षाणरुयक्षः समैक्षि गौर्या कटाक्षेण॥'

इत्येवंजातीयकं गुणहीनार्थालंकारोदाहरणमपि ज्ञेयम्। अत्र यद्यपि शब्दालंकार एव भाति तथा श्लेषेणार्थालंकारोऽस्तीति सरसामोदेऽ**च्युतराय**पण्डिताः। एवं सत्यप्यलंकारतोऽलंकार्यस्य गुण्यस्यान्तरङ्गाणां गुणानां संकोचो न शोभनः। तथा चोक्तं **भोजदेवेन**—'अलंकृतमपि श्रव्यं न काव्यं गुणवर्जितम्। गुणयोगस्तयोर्मुख्यो गुणालंकारयोगयोः॥' इति। पुनश्च **वामन**भोजदेवाभ्याम्—'युवतेरिव रूपमङ्गकाव्यं स्वदते शुद्धगुणं तदप्यतीव। विहितप्रणयं निरन्तराभिः सदलंकारविकल्पकल्पनाभिः॥ यदि भवति वचश्च्युतं गुणेभ्यो वपुरिव यौवनवन्ध्यमङ्गनायाः। अपि जनदयितानि दुर्भगत्वं नियतमलंकरणानि संश्रयन्ते॥' इति च। इदमेव **प्रतीहारेन्दुराजो**ऽप्यवोचत्—"मुख्यया तावद् वृत्त्या गुण-

संस्कृतशब्दार्थशरीरमेव काव्यम् । गुणरहितशब्दार्थशरीरे तु काव्यमात्रे काव्यशब्दस्य काव्यसादृश्यादुपचारात्प्रयोगो भविष्यति । उक्तं च—'काव्यशब्दोऽयं गुणालंकारसंस्कृतयोः शब्दार्थयोर्वर्तते । भक्त्या तु शब्दार्थमात्रवचनोऽत्र गृह्यते ।' इति" ॥

· अरीतिदिक्—

येषां मते शुद्धवैदर्भी वैदर्भी वा रीतिरिष्यते तत्र गौडी पाञ्चाली वा स्तोकगुणत्वाद् अरीतिः । तथा चोक्तं काव्यालंकारसूत्रेषु वामनेन—'तदारोहणार्थमितराभ्यास इत्येके ।' अत्र तच्छब्देन वैदर्भी, इतरशब्देन गौडी–पाञ्चाल्यौ । 'तत्तु न अतत्त्वशीलस्य तत्त्वानिष्पत्तेः ।' 'न शणसूत्रवानाभ्यासे त्रसरसूत्रवानवैचित्र्यलाभः ।' अत्र प्रथमसूत्रेण वैदर्भीलाभार्थं गौडीपाञ्चाल्योरभ्यासोऽनुमतोऽपि द्वितीयतृतीयसूत्राभ्यां सदृष्टान्तं प्रत्याख्यायते । येषां मते पुनरेतास्तिस्रोऽभ्युपादीयन्ते तत्र मागधी लक्ष्या ।

एवमेकस्य विकलतायामपि पोष्यप्रतिपत्त्या पोषकान्तरप्रत्यासत्त्या वा चमत्कृतीस्पर्शे कविकर्मबाधविरहो मन्तव्यः ॥

अथ श्रव्य इव दृश्येऽपि कविकर्मणि, त एत उत्कर्षहेतवोऽलंकृतिप्रभृतय आननादौ पद्माद्यारोपादिव नटे नायकारोपाद् रूपकसंज्ञां दधानेऽभिनेये श्रवणसरणिभूषणेन प्रेक्षणेनाधिकाधिकव्यापृतयो भवन्ति ।

इह प्रेक्ष्यकाव्ये सपरिकरं नाट्यशास्त्रं परिसमाप्यते । तथाहि अवस्थानुकारात्मकस्याभिनयस्य आङ्गिकविधायाम्—उपाङ्गाङ्गाभिनयाध्यायावष्टमनवमौ; तदनु चारीविधानमण्डलकल्पनगतिप्रचारकरयुक्तिधर्मीव्यञ्जकाध्यायाश्च । वाचिकविधायाम्—छन्दोविधानादयः; इहैवालंकृतिविशेषाः, भूषणसंमितानि भूषणादिषट्त्रिंशल्लक्षणानि, आशीरादित्रयस्त्रिंशन्नाट्यालंकाराश्च, रीतिसब्रह्मचारिण्यो भारत्यादयश्चतस्रो वृत्तयः, पञ्च संधयस्तदङ्गानि चतुःषष्टिः, दोषा गुणाश्चेति । आहार्यविधायाम्—आहार्याभिनयसामान्याभिनयचित्राभिनयाध्याया एकविंशद्वाविंशपञ्चविंशाश्च । सात्त्विकविधायाम्—ताण्डवं च । एवमातोद्यपुष्करवाद्याध्यायावष्टाविंशपञ्चत्रिंशौ । हृदयभूतौ रसभावाध्यायौ षष्ठसप्तमावन्यच्च यथायथम् । इति श्रव्यदृश्यीयम् ॥

> "शब्दचित्रं वाच्यचित्रमव्यङ्ग्यं त्ववरं स्मृतम् ।
> इदमाद्रियते श्रव्ये दृश्ये तु विरलं पुनः ॥"

अथ चतुष्टयी शब्दानां प्रवृत्तिरिति महाभाष्यकारनीत्या—"अर्थः पुनरभिधावान् प्रवर्तते, यस्य वाचकः शब्दः । तस्य भवन्ति द्रव्यं, गुणः, क्रिया, जातिः इति भेदाः ॥ 'जातिक्रियागुणानां पृथगाधारोऽत्र मूर्तिमद् द्रव्यम् । दिक्कालाकाशादि तु नीरूपमविक्रियं भवति ॥ नित्यानित्यचराचरसचेतनाचेत-

१ चारीव धर्मी स्त्रीलिङ्गा.

नैर्बहुभिः । भेदैर्विभिन्नमेतद् द्विधा विधा भूरिशो भवति ॥ द्रव्यादपृथग्भूतो भवति गुणो नियतमिन्द्रियग्राह्यः । सहजाऽहार्याऽऽवस्थिकभावविशेषादयं त्रेधा ॥ नित्यं क्रियानुमेया द्रव्यविकारेण भवति धात्वर्थः । कारकसाध्या द्वेधा सकर्मिकाऽकर्मिका चेति ॥ भिन्नक्रियागुणेष्वपि बहुषु द्रव्येषु चित्रगात्रेषु । एकाकारा बुद्धिर्भवति यतः सा भवेज्जातिः ॥" इत्येवं शब्दविभागः । एष एवालंकारिकाणामभिमतो जातिगुणक्रियाद्रव्याणामुत्प्रेक्ष्यत्वेन निबन्धनात् । शब्दोऽर्थो रसश्च मुख्यः । शब्दो वाचकः, लाक्षणिकव्यञ्जकाभ्यां प्रागुपस्थानात्; अर्थो वाच्यः, लक्ष्यव्यङ्ग्यतात्पर्येभ्यः प्रागवमननात्; मुखवन्मुख्य इति व्यपदिश्यते । रसस्तु सर्ववादिनामादरास्पदं मुख्य एव । रसादिशब्दस्य रसादिप्रत्यायने संकेताभावान्नाभिधाव्यापारः प्रभवति । अत एवाभिधेयेन अविनाभूतस्य प्रतीतिराहित्याल्लक्षणापि नाक्रमते । अभिधापूर्वको हि लक्षणाव्यापार इति । अतएव च "साक्षात्संकेतविषयो मुख्यः ॥ मुख्यार्थबाधे निमित्ते प्रयोजने च भेदाभेदाभ्यामारोपितो गौणः । मुख्यार्थसंबद्धस्तत्त्वेन लक्ष्यमाणो लक्ष्यः ॥" इति सूत्र्यते । अथ तात्पर्याख्या वृत्तिरपि संसर्गमात्रे विरतव्यापारा । इत्थगत्या अभिधादिपथातिशायिनी तुरीया व्यञ्जनावृत्ती रसादिबोधने **स्फोटायन**मतानुसारिभिरालंकारिकैरूरीकृता । यद्यपि रसो न केनापि निह्नोतुं पार्यते तथापि तस्य बोधनव्यापारे वैमत्याद् विकल्पाः । व्यञ्जनावृत्तिप्रतिपाद्यो व्यङ्ग्यो हि वस्त्वलंकाररसादिलक्षणः, स तावत्प्रतीयमान एव ( छा० २३८ पृ० ) । अन्येनाप्यन्ववाचि—'मुख्याद्व्यतिरिक्तः प्रतीयमानो व्यङ्ग्यो ध्वनिः ।' ध्वनति, ध्वन्यते, ध्वननं वेति यथायोगमवधातव्यम् । अस्य व्यतिरेकविधा, यथा खलु ध्वनिकारेण अङ्कुरिता; आलोककारेण पल्लविता; लोचनकारेण पुष्पिता; तथैव प्रकाशकारेण फलिता, नान्येन केनापि कोऽपि विशेषोऽद्यावधि वस्तुतोऽत्र प्राकाशि ॥

अथ प्रतीयमानो व्यङ्ग्यो ध्वनिरित्यपि रसादिवेदनभङ्गिमात्रम्, न प्रत्येकमर्थान्तरम् । यथा खलु व्यवहारभूमौ वाच्यस्तात्पर्यार्थो लक्ष्यो वेति । 'विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्तिः' ( छा० ७२ पृ० ) इति सर्ववादिसंमता भारतीया रसनीवी । एतदुक्तं भवति—कारणादीनां विभावनादिव्यापारवत्त्वाद् विभावादिपदाभिधाने दृष्टान्तमर्यादया विभावादिविभागलाभः । संयोगादिति भरतोक्तपञ्चम्या विभावानुभावव्यभिचारिणः समूहालम्बनतया रसं प्रति हेतुतां प्रतिपन्नाः । तत्र शब्दोपहितरूपाणां विभावादीनां व्यापाराद् उत्पाद्योत्पादक-गम्यगमक-पोष्यपोषक-व्यङ्ग्यव्यञ्जकरूपा भावा वादिभिरादृताः । रसबोधने निरूपितदृशा अभिधातात्पर्ये निरस्ते अपि पुनर्मीमांसकमतेन **लोल्लटा**दिभिरुत्प्रेक्ष्यमाणोऽभिधाया दीर्घदीर्घतरो व्यापारो रसस्यानुकार्यगतत्वं च निरस्यते ( सा. द. ८९ पृ० २५३ पृ० ) "भट्टलोल्लटादयस्तु—रसस्य व्यङ्ग्यत्वमेवाङ्गीकुर्वन्ति" इति विवृतिग्रन्थस्तूपेक्ष्यः ( ८० पृ० ) । एवं संयोगादिति बुद्धो रसस्य विभावादेश्च उत्पाद्योत्पादकभावः सुदूरं निरस्तो मन्तव्यः । लक्षणापि निरस्तैव, यत्पुनस्तार्किकंमन्यैः **श्रीशङ्कुकमहिमभट्ट**प्रभृतिभी रसोऽनुमाप्य इत्यास्थीयते, तदपि तस्यानुकर्तृगतत्वेन सहैव

निराक्रियते ( सा० द० ९० पृ० २६२ पृ० )। एवं गम्यगमकभावोऽप्यर्धचन्द्रेण सुदूरमुदस्तो वेदितव्यः। सांख्यनीत्या भट्टनायकादिभी रसे गृहीतेऽपि भावकत्व-भोजकत्वलक्षणौ व्यापारावन्तर्गड्डू क्रियेते। यत आद्यो ह्यलौकिक-विभावादिसामान्येन, द्वितीयः स्वाभिन्नरत्यादिरसनेन गतार्थः। एवं वराकः पोष्य-पोषकभावोऽपि हताशो द्रष्टव्यः। एतेन धनिकोऽपि प्रत्युक्तः ( छा० २५३ पृ० )। इत्थमेतास्तिस्रो भरतोक्तसंयोगपदव्याख्या यथोत्तरं रुचिराः, सिद्धान्तभूता तु व्यङ्ग्यव्यञ्जकभावरूपा श्रीमदाचार्याभिनवगुप्तपादोपदिष्टा मम्मटप्रकाशिता सुप्रसि-द्धैव। तत्र शृङ्गारः—'शून्यं-' ( सा० द० २३ पृ० )॥

अन्ववोचं च प्राक् प्राञ्चः प्रतीयमानमर्थमलङ्कारपक्षनिक्षिप्तं मन्यन्त इति ( भू० ५० पृ० ) तदत्राक्षिप्य प्रकृतमुपसंह्रियते—ध्वनिकारमतेन वाच्यविशेषवपुः-प्रत्ययनात् प्रतीयमान इति; वस्त्वलंकाररसादिव्यञ्जकाद् व्यङ्ग्य इति; स्फोटात्मक-व्यङ्ग्यध्वननाद् ध्वनिरिति व्यवह्रियते। इह काव्यपुरुषावतारस्य ध्वनिकारस्य व्यवहा-राद् ध्वनतीति ध्वनिः शब्दः, ध्वन्यऽनेनेति ध्वनिः शब्दादिशक्तिः; ध्वन्यत इति ध्वनिः रसादिरर्थः; ध्वननं ध्वनिरिति रसादिप्रतीतिः; ध्वन्यतेऽस्मिन्निति ध्वनिः काव्यम्; इत्येवं ध्वनियोगा लभ्यन्ते। तस्य च ध्वनेः शब्दार्थपुरस्कारेण प्रतीतावपि तत्पारमा-र्थिकस्वरूपावगमार्थमालंकारिकैरभिधातात्पर्यलक्षणाकक्षातिक्रान्ता व्यञ्जना अवता-रिता। तत्रेदं ध्वनिकारहृदयम्—'सोऽर्थस्तद्व्यक्तिसामर्थ्ययोगी शब्दश्च कश्चन। यत्नतः प्रत्यभिज्ञेयौ तौ शब्दार्थौ महाकवेः॥' इत्यादि। 'व्यङ्ग्यव्यञ्जकाभ्या-मेव हि सुप्रयुक्ताभ्यां महाकवित्वलाभो महाकवीनां, न वाच्यवाचकरचनामात्रेण" इत्यादिरालोकः। "यो महाकविरित्यहं भूयासमित्याशास्ते। एवं व्यङ्ग्यस्यार्थस्य व्यञ्जकस्य शब्दस्य च प्राधान्यं वदता व्यङ्ग्यव्यञ्जकभावस्यापि प्राधान्यमुक्तम्" इत्यादि लोचनम्। एतेन शब्दार्थभित्तिकया व्यङ्ग्यार्थप्रतिफलनमेव महाकवित्वलाभप्रयोजकं मन्तव्यम्। तत्र तात्पर्यलक्ष्यार्थौ तूपस्कारकौ। वस्तुतस्तात्पर्यमपि संसर्गान्नातिरिच्यते, अतिरिच्यमानमपि व्यङ्ग्यमनुसरति। यैः स्फोटो न मन्यते, तैरवश्यं स्फोटात्मकव्य-ङ्ग्योपजीव्यं तात्पर्यादि शरणीकर्तव्यम्। सैषा विधा मीमांसकादीनाम्। वैयाकरणानां तु स्फोटाभ्युपगमाद् व्यङ्ग्याभ्युपगमः स्फुट एव। अत एव मञ्जूषायां नागोजि-भट्टपादैर्व्यञ्जनां लक्ष्यीकृत्य "निपातानां द्योतकत्वं, स्फोटस्य व्यङ्ग्यता च हर्यादि-भिरुक्ता" इति पाणिन्यादिमुनित्रयीमतप्रकाशकहरिसंमतिं प्रधानीकृत्य च; पुनः "द्योतकत्वं च, स्वसमभिव्याहृतपदनिष्ठशक्तिव्यञ्जकत्वमिति वैयाकरणानामप्येतत्-स्वीकार आवश्यकः" इत्यभिहितम्, लक्षणैव गतार्था व्यञ्जनेति प्रत्यवतिष्ठमानानां तार्किकाणां च मतं निरस्तम्। अत्र छायापि द्रष्टव्या ( २५१ पृ०। २०६ पृ० )॥

रसो न वाच्यः, न च तात्पर्यम्, न वा लक्ष्यः; किंतु व्यङ्ग्य एवेत्यनेकधा दर्शितम्। एवं वस्त्वलंकाररसादिध्वनयोऽपि। भामहादिभिस्तु पर्यायोक्ता-प्रस्तुतप्रशंसासमासोक्त्याक्षेपव्याजस्तुत्युपमेयोपमानन्वयादौ वस्तुमात्रं गम्यमानं वाच्योपस्कारकतया 'स्वसिद्धये पराक्षेपः परार्थे स्वसमर्पणम्' इति यथायोगम्—अर्थात् क्वचित् वाच्योऽर्थः स्वसिद्धये परं प्रतीयमानमर्थमाक्षिपति, क्वचित्

स्वयमनुपपद्यमानः सन् प्रतीयमान एवार्थे स्वं समर्पयति—इत्येवं द्विविधया भङ्ग्या प्रत्यपादि । तथाहि—'अथाक्षीन्नो लङ्कामयमयमुदन्वन्तमतरद्विशल्यां सौमित्रेरयमुपनिनायौषधिवनात् । इति स्मारंस्मारं त्वदरिवलभीचित्रलिखितं हनूमन्तं दन्तैर्दशति कुपितो राक्षसगणः ॥' इति पर्यायोक्त राक्षसवृत्तान्तो वाच्यः सन् स्वसिद्धये परं कारणरूपमरिपलायनाद्याक्षिपति, तत्पलायनाद्यन्तरेण राक्षसवृत्तान्तस्यासंगतेः । एवमन्यदपि । **रुद्रटेन** तु—'यस्य विकारः प्रभवन्नप्रतिबद्धेन हेतुना येन । गमयति तदभिप्रायं तत्प्रतिबद्धं च भावोऽसौ ॥' 'ग्रामतरुणं तरुण्या नववञ्जुलमञ्जरीसनाथकरम् । पश्यन्त्या भवति मुहुर्नितरां मलिना मुखच्छाया ॥' इति । 'अभिधेयमभिदधानं तदेव तदसदृशगुणदोषम् । अर्थान्तरमवगमयति यद्वाक्यं सोऽपरो भावः ॥' 'एकाकिनी यदवला तरुणी तथाहमस्मद्गृहे गृहपतिः स गतो विदेशम् । कं याचसे तदिह वासमियं वराकी श्वश्रूर्ममान्धबधिरा ननु मूढ पान्थ ॥'' इति च सोदाहरणं भावालंकारद्वयं गुणीभूतागुणीभूतविषयत्वेन द्विधैवाभ्यधायि । अथवा पूर्ववदुपादानलक्षणलक्षणाभ्यां द्वैविध्यम् । तेन आद्ये स्वसिद्धये पराक्षेपः, परत्र अपरार्थं स्वसमर्पणम् । तथा रूपकदीपकापह्नुतितुल्ययोगितादावुपमालंकारो वाच्योपस्कारकतया प्रत्यपादि । तत्र रूपकं यथा—'भीमभ्रूकुटिपन्नगीफणमणिः कामस्य चण्डं चिताकुण्डं कुण्डलितेन्दुनालवलयप्रभ्रंशि रक्तोत्पलम् । प्राणस्फाटिकमल्लिकापरिचिते भालाग्रशालाजिरे दीप्रा दीपशिखा शिवस्य नयनं कार्शानवं पातु नः ॥' अत्र नयनादीनां मणिप्रभृतीनां चोपमा वाच्योपस्कारायावगम्यते, तां विना सादृश्याप्रतीतेः । एवमग्रे । उत्प्रेक्षा तु स्वयमेव प्रतीयमाना निरूपिता । रसवत्प्रेयःप्रभृतौ तु रसभावादिर्वाच्यहेतुत्वेन निरुक्तः । तदित्थं त्रिविधमपि प्रतीयमानमलंकारतया ख्यापितम् । **वामनेन** तु 'सादृश्याल्लक्षणा वक्रोक्तिः' इति सादृश्यनिबन्धनाया लक्षणाया वक्रोक्त्यलंकारत्वं ब्रुवता कश्चिद् ध्वनिभेदोऽलंकारतयैवोक्तः । **उद्भटादिभिस्तु** गुणालंकाराणां प्रायशः साम्यमेव सूचितम्, विषयमात्रेण भेदप्रतिपादनाद् संघटनाधर्मत्वेन चेष्टेः । भिन्नकक्ष्याणां हि उपस्कार्योपस्कारकत्वस्यानुपपत्तेः, तथात्वे चालंकाराणामपि गुणोपस्कार्यत्वं प्रसज्यते समानन्यायात्; तद् गुणालंकाराणां तुल्यवादिन औद्भटा इति तत्त्वम् । वक्रोक्तिजीवितकार आचार्य**कुन्तक**स्तु पुनर्वैदग्ध्यभङ्गीभणितिस्वभावां बहुविधां वक्रोक्तिमेव प्राधान्यात्काव्यजीवितमुक्तवान् । कविप्रतिभोल्लिखितस्य प्राधान्यं च काव्यस्य प्रतिपेदे । अभिधानप्रकारविशेषा एव चालंकाराः । सत्यपि त्रिभेदे प्रतीयमाने व्यापाररूपा भणितिरेव कविसंरम्भगोचरः । उपचारवक्रतादिभिः समस्तो ध्वनिप्रपञ्चः स्वीकृतः । केवलमुक्तिवैचित्र्यजीवितं काव्यं, न व्यङ्ग्यप्रतीतिजीवितमिति तदीयं दर्शनं व्यवस्थितम् । **भट्टनायकेन** तु व्यङ्ग्यव्यापारस्य प्रौढोक्त्या अभ्युपगतस्य काव्यांशत्वं ब्रुवता न्यग्भावितशब्दार्थस्वरूपस्य कविकर्मणः प्राधान्यमुक्तम् । तत्रापि अभिधाभावकत्वलक्षणव्यापारधर्मोत्तीर्णो रसचर्वणात्मा भोगापरपर्यायो व्यापारः प्राधान्येन विश्रान्तिस्थानतया स्वीकृत इति यथायथं तदुक्तितोऽवसीयते—'ध्वनिर्नामापरो योऽपि व्यापारो व्यञ्जनात्मकः । तस्य सिद्धेऽपि भेदे

स्यात्काव्यांशत्वं, न रूपिता ॥ शब्दप्राधान्यमाश्रित्य तत्र शास्त्रं पृथग्विदुः। अर्थतत्त्वेन युक्तं तु वदन्त्याख्यानमेतयोः ॥ द्वयोर्गुणत्वे व्यापारप्राधान्ये काव्यधीर्भवेत्। अभिधा भावना चान्या तद्भोगीकृतिरेव च ॥ अभिधाधामतां याते शब्दार्थालंकृती ततः। भावनाभाव्य एषोऽपि शृङ्गारादिगणो मतः ॥ तद्भोगीकृतिरूपेण व्याप्यते सिद्धिमान्नरः। दृश्यमानाथवा मोक्षे यात्यङ्गत्वमियं स्फुटम् ॥" इति। तदित्थमन्यथान्यथा प्रतीयमानो नीत इत्यपि द्रष्टव्यम्। इति शब्दार्थीयम् ॥

अथ श्रव्यदृश्यीयस्य शब्दार्थीयस्य च विभावनाद् व्याकरणातिशायीवार्थवाचकत्वाश्रयणान्मीमांसादिसमयातिक्रान्तस्फोटवादाभ्युपगमान्न्यायादिविसंवादिव्यञ्जनारोहणाच्च साहित्यमलंकारशास्त्रं काव्यानुशासनं न कस्याप्यनुयायि पुच्छमङ्गं वा भवितुमर्हति; किंतु—

'प्रसत्तेर्यः पात्रं, तिलकयति यं सूक्तिरचना,
य आद्यः स्वादूनां श्रुतिचुलुकलेह्येन मधुना।
यदात्मानो विद्याः, परिणमति यश्चार्थवपुषा,
स गुम्फो वाणीनां कविवृषनिषेव्यो विजयते ॥'

इत्येवमादिनिरूपितलिङ्गबलेन प्रधानमङ्गीति सिध्यति। अतएव मयाप्यवाचि—

'शब्दार्थयोरुक्तिविशेषसत्त्वे लक्ष्येषु काव्यव्यवहारयोगात्।
न्यायादिवद् दर्शनकोटिमाप्तं साहित्यमङ्गीति वदन्ति विज्ञाः ॥'

साहित्यस्य भामहालंकारादयः कतिपये प्रबन्धाः प्रागुक्ताः, (भू० ४४ पृ०) टीकाप्रबन्धा मम्मटसमयदर्शने निर्दिष्टाः, अन्येऽपि यत्र तत्र प्रसङ्गादुपात्ताः। केचिदिह लक्ष्यभूता निरूप्यन्ते—

## तत्र ध्वनिग्रन्थाः।

(१) ध्वनिकारिका। (२) आलोकः। (३) लोचनम्। (४) हृदयदर्पणः। (५) व्यक्तिविवेकः। एते पञ्चापि कश्मीरजन्मानोऽत्यन्तप्रौढाः।

## वृत्तिप्रकरणानि।

(१) कश्मीरवास्तव्यस्य भट्टकल्लटसूनोर्मुकुलस्य[२] अभिधावृत्तिमातृका। (२) सुप्रसिद्धराजानक—मम्मटस्य शब्दव्यापारविचारः। (३) दाक्षिणात्यस्य अप्पयदीक्षितस्य वृत्तिवार्तिकम्।

---

१. सहृदयनिषेव्य इति तु शोभनः पाठः. २. अस्यैव शिष्यः प्रतीहारेन्दुराज उद्भटालंकारवृत्तिकर्ता, य आत्मानं कौङ्कणं निर्दिशति स्म.

## अलंकारग्रन्थाः ।

(१) काश्मीरकस्य राजानक—रुय्य (च)कस्य अलंकारसर्वस्वम् । (२) काश्मीरकस्य राजानक—जयरथस्य अलंकारविमर्शिनी । (३) काश्मीरकस्य भट्टशोभाकरमित्रस्य अलंकाररत्नाकरः । (४) दाक्षिणात्यस्य अप्पयदीक्षितस्य चित्रमीमांसा । (५) दाक्षिणात्यस्य पण्डितराज—जगन्नाथस्य चित्रमीमांसाखण्डनम् ।

## नायिकारसप्रकरणानि ।

(१) रुद्रस्य शृङ्गारतिलकम् । मैथिलस्य भानुदत्तमिश्रस्य (२-३) रसमञ्जरीरसतरङ्गिण्यौ । (४) शिवरामत्रिपाठिनो रसरत्नहारः ।

## कतिपयविचारप्रकरणानि ।

(१) काश्मीरिकस्य राजानक—रुय्यकस्य सहृदयलीला । (२-४) काश्मीरिकस्य व्यासदासापरनाम्नः क्षेमेन्द्रस्य कविकण्ठाभरणसुवृत्ततिलकौचित्यविचारचर्चा । (५) राजशेखरस्य काव्यमीमांसा । (६) जैनयोररिसिंहामरचन्द्रयोः काव्यकल्पलतावृत्ती । (७) देवेश्वरस्य कविकल्पलता । (८) पर्वतीयस्य विश्वेश्वरपण्डितेन्द्रस्य कवीन्द्रकर्णाभरणम् ।

## साहित्यग्रन्थाः ।

(१) धारापतेर्भोजदेवस्य सरस्वतीकण्ठाभरणम् । (२) महामाहेश्वरस्य विद्याधरपण्डितस्य एकावलीशास्त्रम् । (३) दाक्षिणात्यस्य विद्यानाथस्य प्रतापरुद्रीयम् ।

---

१. अस्यैव महापण्डितस्य शिष्यो राजानक—मङ्खक—महाकविरिंलेतेन कृतस्य श्रीकण्ठचरितस्य पञ्चविंशात्सर्गाद् व्यक्तम्. २. अयमेव जयरथ आचार्याभिनवगुप्तकृतस्य श्रीतन्त्रालोकमहार्णवस्य कर्णधारो जज्ञे. ३. अयं महानुभावो वेदान्तकल्पतरु—परिमलादिकर्ता । उक्तं चानेन—'कणभक्षपदक्षकपक्षपरिष्करणक्षणतक्षणदक्षगिरम् । अतिकर्कशतर्कशतक्षुभितक्षपितक्षपणक्षणभङ्गपदम् ॥ कपिलोक्तिनिराकरणप्रवणं कृतपन्नगसूक्तिपरिष्करणम् । नयमौक्तिकभूषितभट्टमतं विमलाद्वयचित्सुखमग्रधियम् ॥ महतामपि मान्यतमं विदुषां विनिवेश्य गुरुं ( श्रीरङ्गराजदीक्षितं ) हृदि वैश्वजितम् । नयसंहतिशालिनि कल्पतरौ विवृतश्चरणः प्रथमः प्रथितः ॥' इत्यादि. ४. अनेनैव सिद्धान्तकौमुदीव्याख्यायाः प्रौढमनोरमायाः खण्डनरूपं मनोरमाकुचमर्दनं निरमायि । उक्तं च तदारम्भे—'लक्ष्मीकान्तपदाम्भोजमानम्य श्रेयसां पदम् । पण्डितेन्द्रो जगन्नाथः स्यति गर्वं गुरुद्रुहां ( भट्टोजिदीक्षितानाम् )' इत्यादि. ५. काव्यकल्पलता—कविकल्पलते श्लोकरचनाप्रकारदर्शिके. ६. कवीन्द्रकर्णाभरणं बौद्धस्य धर्मदासस्य विदग्धमुखमण्डनमप्यतिशेते. ७ अस्यैकावलीनाम्नोऽलंकारशास्त्रस्योपरि सुप्रसिद्धानां कोलाचलमल्लिनाथसूरीणां तरलाख्या व्याख्या वर्तते । अत्रोदाहरणनायकः कलिङ्गेश्वरो नृसिंहभूपः । नृसिंहवर्णनश्लोका अत्रत्याश्चित्रमीमांसादावुदाहृताः. ८. कोलाचलमल्लिनाथसूरिसूनुना कुमारस्वामिसोमपीथिना कृता प्रतापरुद्रीयस्य रत्नापणाख्या व्याख्या । अत्रोदाहरणनायकः काकतीयकुलोत्पन्नो रुद्रभूपालः प्रसिद्धः.

(४) केशवमिश्रस्य अलंकारशेखरः। (५) जैनस्य आचार्यहेमचन्द्रस्य स्वोपज्ञालंकारचूडामणिवृत्तिसहितं काव्यानुशासनम्। (६) जैनस्य वाग्भटस्य काव्यानुशासनम्। (७) जैनस्य वाग्भटस्य वाग्भटालंकारः। (८) दाक्षिणात्यस्य अच्युतरायस्य स्वोपज्ञसरसामोदसहितः साहित्यसारः। (९) दाक्षिणात्यस्य कृष्णकवेर्मन्दारमरन्दः।

## रूपकप्रकरणानि।

धनंजयस्य दशरूपकं धनिककृतालोकसंवलितम्। भारतीयस्य नाट्यशास्त्रस्य अष्टादश एकोनविंशो विंशश्चतुस्त्रिंशश्चाध्यायाः[2]। अनेके रूपकग्रन्थाः सर्वतन्त्रस्वतन्त्रस्य राघवभट्टपादस्य अभिज्ञानशाकुन्तलार्थद्योतनिकातोऽवधेया इति॥

अथ प्रसङ्गात्साहित्यस्य लक्ष्यभूताः प्राच्योदीच्यप्रतीच्यदाक्षिणात्याः कतिपये कविकर्मणः श्रव्यदृश्यग्रन्था निरूप्यन्ते—

## तत्र काव्यग्रन्थाः।

(१-३) कालिदासस्य रघुवंश-कुमारसंभव-मेघदूतानि। (४) छत्र-भारवेः किरातार्जुनीयम्। (५) घण्टा-माघस्य[3] शिशुपालवधम्। (६) श्रीहर्षस्य नैषधीयचरितम्। (काव्यशास्त्रम्) (७) काश्मीरिकस्य ताल-रत्नाकरस्य हरविजयम्। (८) काश्मीरिकस्य बिह्लणस्य विक्रमाङ्कदेवचरितम्। (९) काश्मीरिकस्य जगद्धरस्य स्तुतिकुसुमाञ्जलिः। (१०) शालिवाहनस्य गाथासप्तशती[4] (गाहासत्तसई)। (११) प्रवरसेनस्य सेतुबन्धम्[5] (दसमुहवहो)। (१२) वाक्पति-

१. काव्यानुशासनं काव्यप्रकाशानुसारि। वाग्भटीयं काव्यानुशासनं तु प्राचीनशैलीकम्. २. एते हालसाहिबैः स्वमुद्रिते दशरूपकपुस्तके संश्लेषिताः. ३. 'वहति गिरिरयं विलम्बिघण्टाद्वयपरिवारितवारणेन्द्रलीलाम्' लक्षणोक्त्या यथा माघस्य घण्टामाघेति प्राचीनैः संज्ञा कृता, 'छत्र-भारवि, ताल-रत्नाकर, यमुना-त्रिविक्रमेति'. ४. दक्षिणापथे गोदावरीतीरे कुन्तलेषु प्रतिष्ठानं नाम नगरमासीत्। यत्स्वामी हालसातवाहनादिनामा शकप्रवर्तकः शालिवाहनः। येन च गाथासप्तशती संकलिता। इयं बाणस्य हर्षचरिते कोषतया स्तुता। गोवर्धनाचार्यस्य आर्यासप्तशत्यां—'वाणी प्राकृतसमुचितरसा बलेनैव संस्कृतं नीता। निम्नानुरूपनीरा कलिन्दकन्येव गगनतलम्॥' इत्येवं स्मृता। सरस्वतीकण्ठाभरणे तु द्वितीयपरिच्छेदे 'केऽभूवन्नाढ्यराजस्य राज्ये प्राकृतभाषिणः। काले श्रीसाहसाङ्कस्य के न संस्कृतभाषिणः॥' इत्युक्तम्। तत्र आढ्यराजः शालिवाहनः; साहसाङ्को विक्रमादित्य इति तट्टीकाकृतो रत्नेश्वरमिश्राः। शालिवाहनस्यैव सभायां भूतभाषामयबृहत्कथानिर्मातृ-गुणाढ्य-कालापव्याकरणकर्तृ-शर्ववर्मप्रभृतयो महाविद्वांस आसन्। अतः शकप्रवृत्तेरासन्नकाले गाथासप्तशतीसंकलनकालो भवितुमर्हतीति दिक्. ५. राजतरङ्गिणीगणनया एकः प्रवरसेनः ३१८९ कलिगतेऽभूत्। अस्यैव पौत्रो द्वितीयः प्रवरसेनः। एतत्समये उज्जयिन्यां हर्षापरनामा विक्रमादित्योऽप्यभूत्। उक्तप्रवरसेनयोरन्यतरेण सेतुबन्धापरनामधेयं दशमुखवधं प्रणीतं स्यात्। अकब्बरजल्लालदीन्द्र (अबुलमुजफ्फरजलालुद्दीनमहम्मद अकबर) सचिवो रामदासभूपतिस्तं स्वकृतसेतुबन्धटीकाप्रारम्भे—'महाराजप्रवरसेननिमित्तं

देवस्य गउडवहो ( गौडवधम् )।

## आख्यानग्रन्थाः ।

(१) दण्डिनो दशकुमारचरितम् । (२) सुबन्धोर्वासवदत्ता । (३-४) बाणभट्टस्य हर्षचरित-कादम्बर्यौ । (५) विष्णुशर्मणः पञ्चतन्त्रम् । (६) नारायणस्य हितोपदेशः ।

## चम्पूग्रन्थाः ।

(१) यमुना-त्रिविक्रमस्य दमयन्तीकथा । (२) भोजदेवस्य रामायणचम्पूः । (३) अनन्तस्य भारतचम्पूः ।

## नाटकग्रन्थाः ।

(१-३) कालिदासस्य अभिज्ञानशाकुन्तल-विक्रमोर्वशीय-मालविकाग्निमित्राणि । (४-६) श्रीहर्षस्य रत्नावली-प्रियदर्शिका-नागानन्दानि । (७-९) भवभूतेर्महावीरचरित-मालतीमाधवोत्तररामचरितानि । (१०-१२) राजशेखरस्य बालरामायण-विद्धशालभञ्जिका-कर्पूरमञ्जर्यः। (१३) भट्टनारायणस्य वेणीसंहारम्। (१४) मुरारेरनर्घराघवम् । (१५) विशाखदत्तस्य मुद्राराक्षसम् । (१६) श्रीकृष्णमिश्रस्य प्रबोधचन्द्रोदयम् ।

एतेष्वनेकान्काव्यसाहित्यग्रन्थान्काव्यमालानुषङ्गादुद्धरद्भिरस्मत्तातपादानां सुहृद्भिर्महामहोपाध्यायश्रीदुर्गाप्रसादपण्डितरत्नैः काव्यसंसारः साधूपकृत इति ॥

५। साहित्यदर्पणस्य च किमितिवृत्तम्? अयं दर्पणो यावदुपयुक्तकाव्यशिक्षाधायकत्वात् साहित्यशास्त्रमिति व्यपदिश्यताम् । यदयं न सरस्वतीकण्ठाभरणवद् अनतिप्रयोजनीयविषयविस्तीर्णो नवीनविचारविकलश्च; न काव्यप्रदीपवद् रूपकप्रकरणरहितोऽतिस्थगितप्रमेयश्च; न साहित्यसारवद् विषयसंकलनैकतात्पर्यो दुरूहरचनश्च । एकदेशीयैः सह तु तुलनावकाश एवास्य नास्ति । सोऽयं कारिकावृत्त्युदाहृतिभिस्त्रिधा विभज्यते । तत्र कारिका वृत्तयश्च स्वकीया एव, उदाहृतयस्तु क्वचिदेव स्वकीयाः । प्रमेयाणामुपपादनशैली प्रायेण सर्वत्र प्राञ्जलैव, यत्र क्वापि

---

महाराजाधिराजविक्रमादित्येनाज्ञप्तः कालिदासमहाशयः सेतुबन्धं चिकीर्षुः' इत्यनेन कालिदासस्यैव सेतुबन्धकर्तृत्वं व्यलिखत् । तत्र तादृशसंबन्धदर्शने मूलं मृग्यम् । विक्रमकालिदासयोः संबन्धकस्तु न विरुध्यते तयोरनेकत्वात् । वाकाटकवंशे गृहीतजन्मनोः खिस्ताब्दस्य चतुर्थ-पञ्चमशतकयोर्वर्तमानयोः प्रवरसेनभूभुजोः सेतुबन्धकर्तृत्वं तु दण्डिनः स्थितिकालासन्ने पतति । यतो दण्डी काव्यादर्शे सेतुबन्धं स्मरतीति दिक्।

१. गौडवधे का(क)न्यकुब्जाधिपतेर्यशोवर्मणो महिमा आश्चर्यकर्या भङ्ग्या वाक्पतिराजेनावर्णि. अत्र १२०९ गाथाः । रामाभ्युदयादिनाटकरचयिता अयमेव यशोवर्मा कालगत्या कश्मीराधिपतिना ललितादित्येन पराजितः । 'कविर्वाक्पतिराजश्रीभवभूत्यादिसेवितः । जितो ययौ यशोवर्मा तद्गुणस्तुतिवन्दिताम् ॥' इति राजतरङ्गिणी (४।१४४)। अस्य समयः खिस्ताब्दीयसप्तमशतकोत्तरार्धम्.

गहना सा तावद् विषयस्वभावात्समुद्भूता । शास्त्रकारेण तु सुखावबोधायैव यतितम् । उक्तं च चरमे—'साहित्यदर्पणममुं सुधियो विलोक्य साहित्यतत्त्वमखिलं सुखमेव वित्त ॥' इति ॥

यत्त्वत्र कुत्रचिच्छृङ्गारतरङ्गितः प्रस्तावः स चापरिहार्यतया नैतस्य दूषणाय प्रभवति । इति दोषमाशङ्क्यैव काव्यालंकारे रुद्रटेनाभ्यधायि—

'नहि कविना परदारा एष्टव्या नापि चोपदेष्टव्या ।
कर्तव्यतयान्येषां न च तदुपायोऽभिधातव्यः ॥
किं तु तदीयं वृत्तं काव्याङ्गतया स केवलं वक्ति ।
आराधयितुं विदुषस्तेन न दोषः कवेरत्र ॥'

किंबहूक्त्या, अङ्गिनि कामसूत्रेऽप्येवमभिहितम्—'धर्ममर्थं च कामं च' इति (श्लो. ११९ पृ०)।

साहित्यदर्पणकारो विश्वनाथः । अयं दर्पणस्य चतुर्थे परिच्छेदे (२४४ पृ०) अलावद्दीनं स्मरति । 'यः कौमारहरः—' इति काव्यप्रकाशोदाहरणविचारे ग-संज्ञकपुस्तकपाठे (सा. द. १७ पृ०) जयन्तं स्मरति । काव्यप्रकाशस्य दर्पणव्याख्याने 'यदाहुः श्रीकलिङ्गभूमण्डलाखण्डलमहाराजाधिराजश्रीनरसिंहदेवसभायां धर्मदत्तं स्थगयन्तः सकलसहृदयगोष्ठीगरिष्ठकविपण्डितास्मत्पितामहश्रीमन्नारायणदासपादाः' इत्युद्गिरति । तत्र अलावद्दीनः (अलाउद्दीन मसऊद) दिल्लीपरिवृढः, यः ख्रिस्ताब्दे १२४६ मारितः । जयन्तः काव्यप्रकाशस्य दीपिकाव्याख्यान्ते संवत् १३५० अर्थात् ख्रिस्ताब्दं १३५०—५७=१२९३ विलिखति । एवमेताभ्यामधस्तनो दर्पणकारो विश्वनाथः ख्रिस्ताब्दीयचतुर्दशशतकस्य पूर्वभागेऽवश्यं भवितुमर्हति । यस्मादयं कलिङ्गेश्वरस्य नरसिंहदेवस्य सभायां स्वपितामहं नारायणं निर्दिशति । स च नरसिंहदेवः 'अस्ति सप्तदशोत्तरद्वादशशतकवत्सरे (१२१७) चतुर्दशभुवनाधिपत्यादिविरुदावलीविराजमानः श्रीवीरनरसिंहदेवमहीपतिः स्वराज्यस्यैकत्रिंशत्यङ्केऽभिलिख्यमाने सिंहशुक्लषष्ठ्यां सोमवारे' इत्यैतिहासिकफक्किकया ख्रिस्ताब्दे ११६० सिद्ध्यति । यद्यपि १२९३—११६०=१३३ उक्तख्रिस्ताब्दयोरन्तरं पुरुषत्रयपर्याप्तेः किंचिदधिकं प्रतीयते तथापि दर्पणे (७८ पृ०) नारायणस्य वृद्धप्रपितामहत्वेन लेखात्तन्नासमञ्जसम् । प्रकाशदर्पणे नारायणस्य अन्ते दास-दर्शनात्, साहित्यदर्पणे दासादर्शनाद् व्यक्तिभेदस्तु नाशङ्क्यः । विश्वनाथात्मजस्य अनन्तदासनामोपलम्भाद् विश्वनाथपितामहानुजस्य चण्डीदासस्यापि तथानामनिर्देशाच्च (सा. द. ४४६ पृ०)। दर्पणे विश्वनाथपित्रा चन्द्रशेखरेण वर्णितावुमाभानुदेवावपि [1]नरसिंहमहीपतेरेवानुबन्धिनौ ज्ञायेते (सा. द. ६३)।

---

१. नरसिंहनाम्ना प्रसिद्धा बहवः श्लोकाः । नरसिंह उत्कलपतित्वेनापि वर्ण्यते विद्याधरमहापण्डितैनैकावल्याम्.

विश्वनाथस्य नाम सांधिविग्रहिक–महापात्र–कविराजेत्युपाधिभिर्घटितं दृश्यते । तत्र सांधिविग्रहिक इति राज्याधिकारविशेषः । तदानीं विद्याप्रणयिनां कलिङ्ग-पार्थिवानां राज्याधिकारे विश्वनाथस्य पूर्वपुरुषास्तदनुबन्धिनः श्रीधर–राघवानन्द–कृष्णानन्दप्रभृतयश्चासन् । अत एतन्नामापि सांधिविग्रहिक–महापात्र-विशेषणाभ्यां भूषितम् । अत्र **श्रीधर–राघवानन्दौ** काव्यप्रकाशस्य टीकाकृतावपि । **कृष्णानन्दस्तु** वैदर्भरीतिप्रधानस्य सहृदयानन्दाख्यस्य नलचरित-महाकाव्यस्य रचयिता । राघवानन्दनाम दर्पणस्य प्रथमपरिच्छेदे; सहृदयानन्दस्य 'सूचीमुखेन–'इति पद्यं सप्तमपरिच्छेदे वर्तते । सांधिविग्रहिक इति संधिविग्रहाधिकृतः । 'तत्र नियुक्तः–' ( पा० सू० ४।४।६९ ) इति ठक् । एष उपाधी **राजतरङ्गिण्यादौ** सुप्रसिद्धः । महापात्रो ब्राह्मणविशेष इति केचित्, संशेरुपरे । ननु महामात्र इति संभावनीयम् । कविराज इति महाकविसमानार्थकम् । ननु अवध( अयोध्या )प्रान्तीयप्रधानहिंदीभाषायां 'भाट' इति प्रसिद्धब्राह्मणजातेरवगमकम् । श्रीनारायणचरणारविन्देत्यादि तु आस्तिक्यादिप्रदर्शनार्थम् । **काव्यप्रकाशदर्पणे** तु '...संगीतविद्याविद्याधर-कलाविद्यामालतीमधुकर-विविध-विद्यार्णवकर्णधार...'इति विश्वनाथस्य त्रीणि विशेषणान्यधिकानि । वस्तुतोऽयं महाकुलप्रसूतो बहुज्ञः सहृदयश्चेति । एतत्प्रणीतग्रन्थास्त्वेते ज्ञायन्ते—( १ ) राघवविलासमहाकाव्यम् ( २ ) कुवलयाश्वचरितप्राकृतमहाकाव्यम् ( ३ ) चन्द्रकला नाटिका ( ४ ) प्रभावती नाटिका ( ५ ) षोडशभाषामयी प्रशस्तिरत्नावली ( एतेषां निर्माणोत्तरं ) ( ६ ) साहित्यदर्पणः ( ७ ) नरसिंहविजयम् ( ८ ) काव्यप्रकाशदर्पणः । एतत्पितुश्चन्द्रशेखरस्य पुष्पमाला नाटिका, भाषार्णव इति ग्रन्थद्वयी दर्पणतो व्यक्ता । तत्र—

> **'भाषामध्यमपात्राणां नाटकोक्तौ विशेषतः ।**
> **महाराष्ट्री सौरसेनीत्युक्ता भाषा द्विधा बुधैः ॥**
> **हीनैर्भाष्या विभाषा स्यात्सा च सप्तविधा स्मृता ।**
> **प्राच्यावन्ती मागधी च शाकारी च तथापरा ॥**
> **चाण्डाली शाबरी चापि तथाऽऽभीरीति भेदतः ।'**

इत्येतत्पुत्रस्य अनन्तदासस्य लेखेन भाषार्णवस्वरूपमवसीयते । प्रशस्ति-रत्नावल्याः षोडशधा भाषाविभागो नावसीयत इति भूयान्खेदविषयः ।

विश्वनाथपूर्वपुरुषाणां कलिङ्गराज्यसंबन्धः स्फुट एव । किंच । "कुरु-रुचिम्, इति पादयोर्वैपरीत्ये" इति काव्यप्रकाशप्रतीकमुपादाय तदीयदर्पणे "वैपरीत्यं रुचिं कुरु" इति पाठः । अत्र चिक्कु–पदं काश्मीरादिभाषायामश्लीलार्थबोधकम्, उत्कलादिभाषायां 'धृतवाण्डकद्रव' इत्यादि" इति लेखाद् उत्कलदेशनिवासोपि वक्तुं सुशकः । आल्ब्रेट वेबरसाहिबास्तु खिस्ताब्दीयपञ्चदशशतकमध्ये पूर्वबङ्ग

ब्रह्मपुत्रतटे साहित्यदर्पणो व्यरचीति जगन्मोहनशर्मसंदब्धचण्डकौशिकनाटक-भूमिकातोऽवसेयमिति विलिखन्ति।

साहित्यदर्पणस्य हस्तलिखितानि त्रीणि मूलपुस्तकानि संकलितानि। तत्र प्रथम-मस्माकं पुस्तकालयस्थं शुद्धप्रायं १८१६ वैक्रमाब्दे लिखितम्। एतत्पत्राणि २०८ प्रतिपत्रं पङ्क्तयः १८ इदं पुस्तकं क-संज्ञया व्यवहृतम्।

द्वितीय-तृतीये पुस्तके जयपुरराजगुरु-श्रीनारायणशास्त्रिणां पर्वणीकरोपाख्या-नाम्। इमे प्राचीने पञ्चमपरिच्छेदपर्यन्ते, तदुत्तरं तु भिन्नलिप्या पूर्णीकृते क्रमेण ख-ग-संज्ञाभ्यां व्यवहृते।

अथ चतुर्थं पुस्तकं रामचरणतर्कवागीशभट्टाचार्यकृतविवृतिसमेतं श्रीचण्डी-चरणस्मृतिभूषणश्रीभूतनाथविद्यारत्नाभ्यां परिशोधितं कलिकाताराजधान्यां १९४२ वैक्रमाब्दे मुद्रितं घ-संज्ञितमिति। एषु पुस्तकेषु ग-संज्ञितमत्यन्तं भिन्नमातृकम्, नूनमिदं साहित्यदर्पणस्य प्रथमपुस्तकप्रतिरूपकम्। इदं विश्वनाथेन प्राग् विप्रकीर्णानां विषयाणां संकलनार्थं लिखितं भवेत्। स च लेखनावसरः पञ्चमपरिच्छेदान्तग्रन्थस्यैव संभाव्यते, तदानीमेतत्पूर्वार्धविषयाणां काव्यप्रकाश-मपहाय परत्र संकलनाभावात्, काव्यप्रकाशेऽपि नायिकाभेदादिविषयसंकलना-दर्शनात्। एतत्परार्धविषयेषु तु प्रायो दशरूपक—काव्यप्रकाशावेव सहाय-भूताविति न विशेषतो लेखनपरिवर्तनावसर आपतित इति नातितिरोहितम्। तदेतद्वृत्तं ग-संज्ञकपुस्तकपाठान्तराण्यपि विचार्यमाणान्यवबोधयन्ति। काव्य-प्रकाशस्य आप्यायितप्रतिकृतितया साहित्यशास्त्रेऽप्रतिमोऽप्ययं दर्पणः स्वानुरूपया टीकया असंश्लिष्ट इति मन्यामहे।

दर्पणस्य टीकाद्वयमस्माभिरुपलब्धम्। तत्र प्रथमा दर्पणकारस्यैव पुत्रेण अनन्तदासेन कृता दर्पणलोचनाख्या। सेयं प्रौढा संक्षिप्ता च। अस्या एकं मामकं पुस्तकम्। 'अत्ता एत्थ-'इत्युदाहरणव्याख्यांशमादाय सप्तम-परिच्छेदान्तमेव नात्यशुद्धम्। अत्र सप्तमपरिच्छेदान्ते एवम्—'इत्यालंकारिक-चक्रवर्तिध्वनिप्रस्थापनपरमाचार्यमहापात्रश्रीविश्वनाथात्मजश्रीमदनन्तदासकृतौ साहि-त्यदर्पणलोचने दोषनिरूपणो नाम सप्तमः परिच्छेदः समाप्तः।' एतत्पुस्तकस्य पत्राणि ५६½ प्रतिपत्रं पङ्क्तयः २०। प्रतिपङ्क्ति अक्षराणि ४२। द्वितीया, रामचरणतर्कवागीशभट्टाचार्यकृता दर्पणविवृतिः। अस्या निर्माणकालः—'अक्षि-पक्षरसचन्द्र (१६२२) संमिते हायने शकवसुंधरापतेः' इति विवृतावेव निर्दिष्टः। इयं विवृतिर्ग्रन्थं योजयन्ती प्रमेयांशविचारे प्रौढिं प्रकटयन्ती सच्छात्राणामुप-कर्त्रीति न संदेहः। किंतु बहुत्रात्र प्रतीकविकलो विरलार्थप्रतिपादकश्च लेखो मूलं न नियन्त्रयतीति मूलानुपूर्वीगवेषणे महान् क्लेशः। कचित् कचिच्च श्लोकानां संक्षिप्तं व्याख्यानं व्याकरणांशशून्यं चेति। अस्या विवृतेर्हस्तलिखितानि

१. अस्य बालैंटन् साहिबैः प्रमदादासमित्रस्यानुवादोऽपि कृतः.

त्रीणि पुस्तकान्यासादितानि। तत्र प्रथममस्माकं पुस्तकालयस्थं शुद्धप्रायं नवीनम्। एतत्पत्राणि ३०४ प्रतिपत्रं पङ्क्तयः १२। द्वितीयं पुस्तकं **पूना**-डेक्कनकालेजस्थं नात्यशुद्धं द्विशतीवर्षलिखितमिवोपलक्ष्यमाणम्। एतत्पत्राणि १८२ प्रतिपत्रं पङ्क्तयः १८। तृतीयमपि **पूना**-डेक्कनकालेजस्थं शुद्धं प्राचीनम्। एतत्पत्राणि २५४ प्रतिपत्रं पङ्क्तयः २०। इदं पुस्तकं तु प्रथमतः १५० पत्रैः खण्डितं किंचिदूनसप्तमपरिच्छेदाद् दशमपरिच्छेदान्तमेव। इमे द्वितीयतृतीयपुस्तके डाक्टर एस्० के० बेलवलकर एम्. ए. महाशयैः डेक्कनकालेजसंस्कृताध्यापकैः कृपया अस्मत्सविधे प्रहिते इति तेषां महान्तमुपकारमाकलयामः। इदं पुस्तकत्रयं पुस्तकान्तरनाम्ना व्यवहृतम्। प्रागुक्तं मूलेन सह मुद्रितं चतुर्थं विवृतिपुस्तकं तु मुद्रितनाम्नैव व्यवहृतम्। तदेतन्मुद्रितपुस्तकं वङ्गक्रोडपत्रलेखमिश्रम्।

इत्थं मूलस्य विवृतेश्च पुस्तकचतुष्टयाधारेण प्राक् १९०२ खिस्ताब्दे मुम्बापुर्यां **निर्णयसागराख्ये** यन्त्रालये मुद्रितस्यैव साहित्यदर्पणस्य विवृत्या विवृतिपूर्त्या च सहितस्य पुनरेतत्पूर्वविशेषं द्वितीयसंस्करणमस्माभिरकारि। अस्मन्मुद्रणात्प्राङ् मुद्रितेषु साहित्यदर्पणपुस्तकेषु कारिकादीनां दुरवस्थैव प्राप्यते। यथा—'नापि भविष्यन्–' (सा० द० ९२ पृ०) इति कारिका पदच्छेदवैलक्षण्येन वृत्तिरूपतां नीता। 'मन्त्री स्यादर्थानां चिन्तायां तदवरोधे' (सा० द० १०२ पृ०) इति कारिका वृत्तियोजनादिना 'मन्त्री स्यादर्थचिन्तायामर्थास्तत्रावपादयः।' इत्येवमनुष्टुब्रूपतां प्रापिता। 'काव्यान्तर्गड्डुभूततया तु नेह प्रपञ्च्यते।' (सा० द०) इति वृत्तिः 'काव्यान्तर्गड्डुभूता या सा तु नेह प्रपञ्च्यते।' इत्येवमनुष्टुब्रूपतां गमिता। इति दिक्।

**रामचरणतर्कवागीशभट्टाचार्यैर्विरचिता** विवृतिरेव बहुगुणसंपन्नेति मन्यमानेन मयका तदाराधनाय विशेषानेव विचिन्वता **छायाख्या** विवृतिपूर्तिर्व्यधायि। इह प्राचामर्वाचां चालंकारिकाणां संदर्भेभ्यो विशिष्टभागं शब्दतस्तात्पर्यतश्चानूद्य मांसलीकृतो दर्पणविवृत्यनुक्तविषयो यत्नतो न्यासि। अनुक्तत्वेन ज्ञायमाना अपि नातिप्रयोजनीया उक्तिमुद्रादिका उपैक्षिषत। क्वचित्क्वचित्तु नातिप्रयोजनीया अपि सूक्तयः संवादसौष्ठवाय न्यधायिषत। किं बहूक्त्या यावतायासेन विवृतिपूर्तिरग्रन्थि तावता तदल्पेन वा विवृतिसाहाय्येनाभिनवा विवृतिर्भवितुमर्हा। भवति चात्र नामकं पद्यम्—

> 'मूलं वा व्याकृतिं वा किमपि विरचयेत्पूर्वतोहारि पूर्वं
> किंवा पूर्वानुरूपं सहृदयहृदयावर्जकं संग्रहं वा।
> भ्रातर्भूयस्त्वपङ्काः परकृतिकलनापिच्छिला ये प्रबन्धा
> ग्रथ्यन्ते तैरिदानीं समयगमनिकामन्तरा कोऽस्ति लाभः॥'

अथैका नूतना, बी० ए० उपाधिधारिणा श्रीजीवानन्दविद्यासागरभट्टाचार्येण विरचिता साहित्यदर्पणस्य **विमलाख्या** व्याख्या कलिकाताराजधान्यां मुद्रिता। द्वितीया नूतनतरा, काव्यतीर्थविशेषणान्तर**श्रीगुरुनाथ**विद्यानिधिभट्टाचार्येण संपा-

दिता साहित्यदर्पणमूलविवृतिसंस्कृतिः। यत्र १९०२ खिस्ताब्दे मुम्बापुर्यां मुद्रितस्य अस्मत्साहित्यदर्पणपुस्तकस्य भूमिका-टिप्पणीभागावपहृताविति ज्ञेयम्। तृतीया नूतनतमा, गौडशिवदत्त-कविरत्नेन संपादिता रुचिराख्यटीका। यत्र मूलं ग-पुस्तकपाठयोजनादिना संकीर्णम्।

अथ साहित्यदर्पणे प्रसंगादुद्धृतानां ग्रन्थकाराणां समयादिकमकारादिवर्णक्रमेण मनाङ् निरूप्यते—

इहेयं गउडवहस्य गाहा न विस्मरणीया—

'कालवसा णासमुवागयस्स सप्पुरिस-जस-सरीरस्स।
अट्ठि-लवायन्ति कहिं पि विरल-विरला गुणुग्गारा॥ ९४५॥'

## अभिनवगुप्तः।

अभिनवभारत्याख्यभारतीयनाट्यशास्त्रव्याख्या-नाट्यलोचन-ध्वन्यालोकलोचनप्रभृतिनानानिबन्धनिर्माता महामाहेश्वराचार्यवर्योऽभिनवगुप्तपादः कश्मीरेषु बभूव। अस्याचार्यवर्यस्य विषये बहु वक्तव्यमुपेक्ष्य केवलं लोचनं प्रकृत्य किंचिदुच्यते—इदं लोचनं ध्वन्यालोकाय लोचनीभवद् वादिनामपि हृदयदर्पणोऽभूत्। मन्ये तत एव मत्सरतया ध्वनिनिरासाय प्रवर्तमानोऽपि महिमा ध्वनिकारे सगौरव एव। किंबहुना, आलोकेन ध्वनिषु विपर्यासप्तसंदेहाज्ञानतिमिरोत्करे कवलितेऽपि लोचनसांनिध्येनैव प्रतिभानम्। इत एव द्वितीयोद्योताद् रसस्वरूपे मतभेदसिद्धान्ता मम्मटाचार्येण गृहीताश्चेति दिक्॥

लोचनस्य प्रारम्भे—

'अपूर्वं यद् वस्तु प्रथयति विना कारणकलां
जगद्ग्रावप्रख्यं निजरसभरात्सारयति च।
क्रमात्प्रख्योपाख्याप्रसरसुभगं भासयति त-
त्सरस्वत्यास्तत्त्वं कविसहृदयाख्यं विजयतात्॥'

इति। पर्यन्ते तु—

'किं लोचनं निरालोको भाति चन्द्रिकयापि हि।
तेनाभिनवगुप्तोऽत्र लोचनोन्मीलनं व्यधात्॥'

इति। श्रीमदभिनवगुप्ताचार्यपादैः प्रणीताः प्रत्यभिज्ञादर्शनानुसारिणो ग्रन्थास्त्वेते—(१) प्रत्यभिज्ञाविमर्षिणी बृहती वृत्तिः, (२) प्रत्यभिज्ञाविमर्षिणी लघुवृत्तिः, (३) तन्त्रालोकः, (४) तन्त्रसारः, (५) परमार्थसारः, (६) मालिनीविजयवार्तिकम्, (७) अनुत्तराष्टिका, (८) क्रमस्तोत्रम्, (९) तन्त्रवटधानिका, (१०) देहस्थदेवताचक्रस्तोत्रम्, (११) परमार्थचर्चा, (१२) परमार्थद्वादशिका, (१३) परात्रिंशिकाविवरणम्, (१४) प्रकरणस्तोत्रम्, (१५) बोधपञ्चदशिका, (१६) महोपदेशविंशतिः, (१७) भैरवस्तोत्रम्, एतद्ग्रन्थानामुद्देश्यम्—

"तरत तरसा संसाराब्धिं, विधत्त परे पदे
पदमविचलं नित्यालोकप्रमोदसुनिर्भरे ।
विमृशत शिवादिष्टाद्वैतावबोधसुधारसं
प्रसभविलसत्सद्युक्त्यान्तःसमुत्प्लवदायिनम् ॥"

इति तत्पादपयोपजीवि-राजानकश्रीक्षेमराजाचार्यपद्यतोऽवधार्यम् । श्रीमदभिनवगुप्तस्थितिकालस्तु—

'इति नवतितमेऽस्मिन्वत्सरेऽन्त्ये युगांशे
तिथिशशिजलधि (४११५) स्थे मार्गशीर्षावसाने ।'

इति तट्टीकेयं बृहत्प्रत्यभिज्ञाविमर्षिणीपद्यतोऽवगम्यते । तस्य मातापितरौ **विमला-नरसिंहगुप्ता**वित्यादि तदीयग्रन्थटीकाटिप्पणीभ्योऽवसीयते ॥

## आनन्दवर्धनः ।

आलोकादिविविधसंदर्भरचयिता राजानकसंज्ञकब्राह्मणकुलोत्पन्न आनन्दवर्धनाचार्यः कश्मीरेषु बभूव । अयं कारिका-वृत्तिविभक्त**मालोका**ख्यं ध्वनिप्रतिपादकं प्रबन्धं निर्ममे । येन च विशिष्यमाणा काव्यमीमांसा परां दर्शनकोटिं निन्ये । सोऽयं काव्यसंसारालोक आलोको ध्वनिप्रदर्शकतया **ध्वन्यालोक**नाम्नापि **राजशेखरा**दिभिर्व्यवह्रियते । वस्तुतस्तु आलोकाद् ध्वनिकारिकात्वेन व्यवहार्या मूलकारिका भिन्नकर्तृका एव । यद्यपि ध्वनिकारिकाकारस्य नाम नोपलभ्यते, तथापि आलोकव्याख्यातु**र्लोचन**निर्मातुरुक्तिभिर्ध्वन्यालोकयोः पार्थक्यव्यवहारो विविक्तः । तथाहि—'अत एव मूलकारिका साक्षात्तन्निराकरणार्था न श्रूयते । वृत्तिकृत्तु निराकृतमपि प्रमेयसंख्यापूरणाय कण्ठेन तत्पक्षमनूद्य निराकरोति' इत्येवमादयो लोचनोक्तयः । एवं पार्थक्ये सत्यपि यदि काश्चन कारिका वृत्तिकृता आनन्दवर्धनाचार्येण परिष्कृता वर्धिता वा भवेयुर्यन्मूलकश्च ध्वन्यालोक इत्यविविक्तो व्यवहारः प्रथत इत्यपि को वेद ।

आलोकस्य चत्वार उद्द्योताः । तत्र प्रथमे ध्वनिमतभेदप्रदर्शनपूर्वकं ध्वनिस्थापनम्, द्वितीये अविवक्षितवाच्यप्रभेदनिरूपणम्; तृतीये अविवक्षितवाच्यप्रभेदनम्; चतुर्थे ध्वनिव्युत्पादनप्रयोजनान्तरम् । अत्र ध्वनिकारिकायाः प्रारम्भः—'काव्यस्यात्मा ध्वनिरिति-' ( छा० १७ पृ० ) इति । समाप्तिः—'प्रतायन्तां वाचो निमितविविधार्थामृतरसा न वादः कर्तव्यः कविभिरनवद्ये स्वविषये । परस्वादानेच्छाविरतमनसो वस्तु सुकवेः सरस्वत्यैवैषा घटयति यथेष्टं भगवती ॥' इति । एवमालोकस्यापि प्रारम्भसमाप्ती द्रष्टव्ये । ध्वनिग्रन्थस्य कारिकात्मकस्य सवृत्तेः, अर्थाद्

---

१. अत्रैवं प्रत्यभिज्ञाहृदयान्ते क्षेमाचार्येणोपसंह्रियते—'देहप्राणसुखादिभिः प्रतिकलं सं(रुध्य)कथ्यमानो जनः पूर्णानन्दघनामिमां न चिनुते माहेश्वरीं स्वां (चितिम्) स्थितिम् । मध्येबोधसुधाब्धि विश्वमभितस्तत्फेनपिण्डोपमं यः पश्येदुपदेशतस्तु कथितः साक्षात्स एकः शिवः ॥' इति ॥

ध्वन्यालोकस्योपरि सहृदयालोकापरसंज्ञं **लोचन**-नामकं प्रौढतरं व्याख्यानमस्ति। तत्र लोचनमिति नामकरणे ध्वन्यालोकस्य **चन्द्रिकाख्या** व्याख्या बीजम्। उक्तंच लोचने—'किं लोचनं विना लोको भाति चन्द्रिकयापि हि।' इति। इमानि ध्वन्यालोकलोचनानि **मम्मटस्य** प्रतिभारूढानि काव्यप्रकाशस्य सर्वोत्कृष्टत्वे बीजमजनि। यत्प्रकाशेऽनेकेऽलंकारनिबन्धाश्चक्रिरे। आनन्दवर्धनाचार्यस्य समयस्तु—

'मुक्ताकणः शिवस्वामी कविरानन्दवर्धनः।
प्रथां रत्नाकरश्चागात्साम्राज्येऽवन्तिवर्मणः॥'

इति कह्लणस्य राजतरङ्गिणीश्लोकेन (५।३९) अवन्तिवर्मसमकालिकः। अवन्तिवर्मणो राज्यं ८५५ ख्रिस्ताब्दात् ८८४ ख्रिस्ताब्दपर्यन्तं सुप्रसिद्धम्।

## उदयनः।

न्यायवार्तिकतात्पर्यपरिशुद्धि-किरणावल्यादिग्रन्थरचयिता न्यायाचार्यपदाङ्कित उदयनाचार्यो मिथिलामण्डले गौडमण्डले वा बभूव। सोऽयं प्रशस्तपादाचार्यप्रणीतस्य पदार्थधर्मसंग्रहस्य न्यायकन्दल्याख्यटीकाकाराद् भट्ट**श्रीधराद्** अधस्तनस्तत्समानकालिको वेति कन्दलीकिरणावल्योः संवादेनावधार्यते। कन्दलीनिर्माणकालस्तु—

'त्र्यधिकदशोत्तरनवशत (९१३) शाकाब्दे न्यायकन्दली रचिता।
श्रीपाण्डुदास्ययाचितभट्टश्रीश्रीधरेणैषा॥'

इति। अर्थात् ९१३+७८=९९१ ख्रिस्ताब्दः। **गोवर्धनाचार्य** आर्यासप्तशत्यन्ते स्वशिष्यत्वेन सादरमुदयनं स्मरति—

'उदयन-बलभद्राभ्यां सप्तशती शिष्यसोदराभ्यां मे।
द्यौरिव रविचन्द्राभ्यां प्रकाशिता निर्मलीकृत्य॥'

इति। गोवर्धनश्च वङ्गाधिपतेर्लक्ष्मणसेनस्य सभायां विद्वत्पञ्चरत्नेष्वन्यतम आसीद् इति तस्यैव सभासद्मनि शिलायामुत्कीर्णादस्माच्छ्लोकाज्ज्ञायते—

'गोवर्धनश्च शरणो जयदेव उमापतिः।
कविराजश्च रत्नानि समितौ लक्ष्मणस्य च॥'

स बल्लालसेनसूनुर्लक्ष्मणसेनस्तु ख्रिस्तैकादशशताब्याश्चरमभागपर्यन्तं वङ्गानशात्, वङ्गमैथिलप्रसिद्धो लक्ष्मणसेनभूभुजः संवत्सरोऽपि यस्य त्रिंशदधिकसहस्र-(१०३०) शकशताब्याम्, अर्थात् ११०८ ख्रिस्ताब्दे प्रवृत्तिर्बभूव।

एवं च श्रीधराद् उदयनस्य अधस्तनत्वे उदयनगोवर्धनादयः समानकालिकाः सिध्यन्ति। तत्र **जयदेवो** गीतगोविन्दकारो न तु प्रसन्नराघवनाटककारः, मातापित्रोः कालस्य च भेदात्। जयदेवेन **गीतगोविन्दे** स्वसमानकालिकाः कवयोऽसारिषत—

१. अत्र श्रीचन्द्रकान्त-तर्कालंकारस्य श्रीविन्ध्येश्वरीप्रसादद्विवेदस्य च महामहोपाध्यायस्य न्यायकुसुमाञ्जलि-प्रशस्तपादभाष्यभूमिके अपि विलोक्ये.

"वाचः पल्लवयत्युमापतिधरः, संदर्भशुद्धिं गिरां
जानीते जयदेव एव, शरणः श्लाघ्यो दुरूढद्रुते।
शृङ्गारोत्तरसत्प्रमेयरचनैराचार्यगोवर्धन-
स्पर्धी कोपि न, विश्रुतः श्रुतधरो, धोयी कविक्ष्मापतिः॥"

## कालिदासः।

आसीत् कश्चित् कालिदासो नाम यशस्वी। यश्चिराय भारते लक्ष्यभूतोऽभूत्। तत एव श्रीपुलकेशिनः शिलालेखेऽन्ते—

'येनाऽयोजि नवेऽश्मस्थिरमर्थविधौ विवेकिना जिनवेश्म।
स विजयतां रविकीर्तिः कविताश्रितकालीदासभारविकीर्तिः॥'

इत्युदटङ्कि (इण्डियन् आण्टिक्वेरी ५।६७–७१)। स च शिलालेखः ३१७९+५५६=३७३५ इयति कलिगते ५५६ शालिवाहनीये शके, अर्थात् ५५६+७८=६३४ खिस्ताब्दे उत्कीर्ण इति प्रागपि दर्शितम् (भू० ३६ पृ०)। अथ स्वगुणगरिम्णा रामविक्रमभोजादिशब्दवत् कालिदासशब्दोऽपि व्यक्त्यन्तरेषु संक्रान्तः। तथाच—

'एकोऽपि जीयते हन्त कालिदासो न केनचित्।
शृङ्गारे ललितोद्गारे कालिदासत्रयी किमु॥'

इति महाकविराजशेखरसूक्तिः। तथा—

'हालेनोत्तमपूजया कविवृषा श्रीपालितो लालितः,
ख्यातिं कामपि कालिदासकवयो नीताः शकारातिना।
श्रीहर्षो विततार गद्यकवये बाणाय वाणीफलं,
सद्यः सत्क्रिययाभिनन्दमपि च श्रीहारवर्षोऽग्रहीत्॥'

इति रामचरितीयाभिनन्दसूक्तिश्च पप्रथे। इतो ध्वनिकारः—'कालिदासप्रभृतयो द्वित्राः पञ्चषा वा महाकवयः' इति। काव्यप्रकाशकारः—'कालिदासादीनामिव यशः' इति चावोचत। एवमन्येऽपि कालिदासं पुरस्कुर्वन्ति। एतेन कालिदासस्यानेकत्वम्, तत्कृतीनामनेकत्वं तु रघुवंशादितः प्रत्यक्षम्। एवं च कस्य कतमा कृतिरिति निर्णयो गमकाभावे कथं जायेत? एकस्यैव सर्वा कृतिरित्यपि कालिदासानेकत्वे कथं संगच्छेत? अभिनन्दसूक्तौ कालिदासकवय इत्यादरार्थकबहुवचनस्वीकारेऽपि राजशेखरात्प्राक् कालिदासत्रयीति कथं संघटेत? इत्येवं

---

१. एक इति श्लोकः आरोहक–भगदत्त–जह्लणसंकलितसूक्तिमुक्तावलौ हरिकविसंकलितसुभाषितहारावलौ च राजशेखरनाम्ना समुद्धृतोऽस्ति। राजशेखरश्च खिस्तसंवत्सरस्य दशमशताब्द्यामासीद् इति श्रीरामकृष्ण–गोपाल–भाण्डारकराणां निर्णयः। अनेनैव राजशेखरेण बालरामायण–कर्पूरमञ्जरी–विद्धशालभञ्जिकादयो ग्रन्था निरमायिषत। प्रबन्धकोषकर्ता राजशेखरस्तु खिस्तसंवत्सरस्य चतुर्दशशताब्द्यामासीद्।

विप्रतिपत्तौ प्रतिविधीयते—तत्र रघुवंश-कुमारसंभवयोरेककर्तृकतायां न मनागपि संशयावसरः, एतयोर्बहुत्र श्लोकवाक्यपदांशानामैकरूप्यात् ॥ तथाहि—

| रघौ— | कुमारे— |
| --- | --- |
| ( १ ) धनुष्यमोघं समधत्त सायकम् ( ३।५३ ) | ( १ ) धनुष्यमोघं समधत्त बाणम् ( ३।६६ ) |
| ( २ ) ततस्तदालोकनतत्पराणां सौधेषु चामीकरजालवत्सु । बभूवुरित्थं पुरसुन्दरीणां त्यक्तान्यकर्माणि विचेष्टितानि ॥ ( ७।५ ) | ( २ ) तस्मिन्मुहूर्ते पुरसुन्दरीणामीशानसंदर्शनलालसानाम् । प्रासादमालासु बभूवुरित्थं त्यक्तान्यकार्याणि विचेष्टितानि ॥ ( ७।५६ ) |
| ( ३ ) ( ७।६—११ श्लो. ) | ( ३ ) ( ७।५७—६२ श्लो. ) |

एवमग्रेऽपि ।

अत्रेदमपि द्रष्टव्यम्—रघुवंशं समग्रम्, कुमारसंभवम् अष्टमसर्गान्तमेव एककर्तृकं भवितुमर्हतीति । अथ—

'जानकीहरणं कर्तुं रघुवंशे स्थिते सति ।
कविः कुमारदासश्च रावणश्च यदि क्षमः ॥'

इत्यपरापि पूर्वोद्दिष्टस्य राजशेखरस्यैव सूक्तिमुक्तावलीधृता सूक्तिः । एवं च कुमारदासात्प्राग् रघुवंशस्य कुमारसंभवस्य चावस्थानमवसीयते । अत्रेदमपि विचारणीयम्—क्षेमेन्द्रस्य औचित्यविचारचर्चायाम् । 'अपि विजहीहि दृढोपगूहनं त्यज नवसंगमभीरु वल्लभम् । अरुणकरोद्गम एष वर्तते **वरतनु संप्रवदन्ति कुक्कुटाः** ॥' इति श्लोकः कुमारदासनाम्ना समुद्धृतः । एतस्य चरमचरणः 'व्यक्तवाचां समुच्चारणे' ( १।३।४८ ) इति पाणिनिसूत्रभाष्ये दृश्यते । कुमारदासो विक्रमार्कसप्तमशताब्दीप्रारम्भवर्तीत्युच्यते । क्षेमेन्द्रस्यैव औचित्यविचारचर्चायां पुनः—'चुम्बनसक्तः सोऽस्या दशनं च्युतमूलमात्मनो वदनात् । जिह्वामूलप्राप्तं **खादितिकृत्वा निरष्ठीवत्** ॥' इति श्लोकः **श्यामल**नाम्ना समुद्धृतः । एतस्य चतुर्थचरणः 'अनुकरणं चानतिपरम्' ( १।४।६२ ) इति पाणिनिसूत्रभाष्येऽवलोक्यते । श्यामलो व्यक्तिविवेककारस्य गुरुराचार्याभिनवगुप्तपादादधस्तन इत्याद्यसमञ्जसम् ( भू. ४८ पृ० ) अस्मन्मते त्वेवंप्रायाः श्लोकांशा भाष्ये प्रक्षिप्ताः समस्याविधया क्वापि कविभिः पूरिता वेति सकलमकलङ्कम् । प्रकृते—'शृङ्गारे ललितोद्गारे कालिदासत्रयी किमु' इत्युत्तरार्धेन शृङ्गारविषये कालिदासत्रयी विवक्ष्यत इति राजशेखराभिप्रायः । शृङ्गारप्रधानं हि मेघदूतम्, अभिज्ञानशाकुन्तलम्, वि-

१. अरुणगिरिनाथविरचिता कुमारसंभवप्रकाशिका अष्टमसर्गान्तैव । नारायणकृतं कुमारसंभवविवरणमपि तावदेव । उभयत्रापि व्याख्याकर्तृभ्यां श्लोकतः काव्यसमाप्तिर्दर्शिता । एवं कोलाचलमल्लिनाथस्यापि व्याख्या अष्टमसर्गान्तैव.

क्रमोर्वशीयम्, मालविकाग्निमित्रम् इति। अत्र[1] प्रत्नत्वादिना मेघदूतं रघुवंशसोदरमेव भाति। मेघदूते हि कविर्न केवलं शास्त्रीयामेव प्रसिद्धिमनुससार, अपि तु स्वकालिकीमपि। इह रामगिरेश्चित्रकूटत्वेन अन्यथा व्याख्यानम्, दिङ्नागानामित्य[2]स्यार्थान्तरम्, मालस्य विदिशाया उज्जयिन्याः दशपुरस्य च उल्लेखः धाराया अनुल्लेखश्च प्रत्नत्वे साधनानि। पुरा यत्र स्रोऽत इति भवभूतिन्यायादिति दिक्। एतेन रघु–कुमारमेघानां समानप्रभवत्वम्। सोऽयं प्रभवः किंदेशः किंकालो वेति—आवन्तिकः, उदयनाधस्तन इति संभाव्यते। तत्र वक्रः[3] पन्थाः, अवन्ती[4] उदयनकथाकोविदग्रामवृद्धान् इत्यादि गमकम्। किंच, 'तासां च पश्चात्कनकप्रभाणां कालीकपालाभरणा चकासे' (कुमार ७।३९) इत्यनेन सामिसंधिनिर्देशेन काली दक्षिणा, तस्या दास इति पञ्चगौडाभिधानसमाच्छायं नामापि लक्ष्यानुसारेण सिध्यतीति दिक्॥ अथ शृङ्गारप्रधानेषु अभिज्ञानशाकुन्तल–विक्रमोर्वशीय–मालविकाग्निमित्रेषु त्रिषु नाटकेषु प्रथमं द्वितीयं चातीव प्रशस्तम्, तत एवैतयो रघुवंशादिवद् ध्वनिग्रन्थादौ श्लोका उदाहृताः[5]। मालविकाग्निमित्रस्य तु दर्पणादावेव कतिपये। अपि च—'प्रथितयशसां धावक–सौमिल्ल–कविपुत्रादीनां प्रबन्धानतिक्रम्य वर्तमानकवेः कालिदासस्य कृतौ किंकृतो बहुमानः' इति तदीयलेखादपि धावकेन धन[6]लिप्सया श्रीहर्षनाम्ना प्रणीतानां नागानन्द–रत्नावली–प्रियदर्शिकानामपेक्षया तदवरत्वं प्रेक्षकाणां पुरस्तादस्त्येव तावत्। एतेन मालविकाग्निमित्रस्य अभिज्ञानशाकुन्तलाद्यपेक्षया भिन्नः कर्तेति नातितिरोहितम्[7]। किंच, 'काव्यत्रयं सुमतिकृद् रघुवंशपूर्वम्' इति ज्योतिर्विदाभरणभागोपि पूर्वोद्दिष्टरघुवंशादित्रितयमेककर्तृतया प्रतिजानीते। एवं च राजशेखरावधि विशेषग्राहिकया विविक्तापि कालिदासत्रयी तदुत्तरं संशयसागरे निमग्ना नोपेक्ष्या प्रेक्षावद्भिः, तथा ऋतुसंहार–नलोदयादिप्रबन्धा अपि कालिदासं संभावयन्तो न विस्मर्तव्याः। तथैव—

---

१. रामगिरिः अमरकण्टकासन्नः सिध्यति, चित्रकूटेति मल्लिकानाथव्याख्यानं तु भूगोलविद्याविरुद्धम्। दक्षिणावर्तनाथस्तु रामनामा पर्वत इति सम्यगेव व्याख्यत्.

२. दिङ्नागानामित्यनेन दिङ्नागाचार्यविषयकार्थान्तरप्रकाशनं तु सादृश्यभ्रममूलकम्.

३. वक्रत्वं भूगोलविद्यया विज्ञायते.

४. आसन्नभूतपूर्वत्वे एवंप्रायाः कविकुलालापा अन्यत्रापि दृश्यन्ते.

५. अत्र द्रष्टव्यं तारानाथतर्कवाचस्पतिभट्टाचार्याणां व्याख्यानम्.

६. 'श्रीहर्षादेर्धावकादीनामिव धनम्' इति काव्यप्रकाशव्याख्यासु प्रसिद्धमेतत्.

७. बाबू रामकृष्णमुखोपाध्यायः (एम्. ए. बी. एल्.) महाशयोऽपि वङ्गभाषोपनिबन्धे 'नानाप्रबन्ध' इति प्रबन्धे स्वमतमेवं प्रादर्शयत्—मालविकाग्निमित्रकारः कालिदासो रघुवंशादिकाराद् भिन्न एव। अस्य नाटकस्य रचनायाः कवित्वस्य च नितान्तमपकृष्टत्वात्। भोजराजसभागतो यः कश्चिदेकः कालिदासो विज्ञायते स एव मालविकाग्निमित्रकार इत्यादि.

'धन्वंन्तरिः क्षपणकोऽमरसिंहशङ्कु-
वेतालभट्ट-घटखर्पर-कालिदासाः ।
ख्यातो वराहमिहिरो नृपतेः सभायां
रत्नानि वै वररुचिर्नव विक्रमस्य ॥'[1]

इत्येवमादिश्लोकाः परीक्षापेक्षाः । अत्रेयं भ्रान्तिदिक्—वराहमिहिरो हि—'सप्ताश्विवेदसंख्यं शककाल-( ४२७ )' इति स्वसमयं निर्दिदेश । तेन बहूनां समयो व्यभिचरितो द्रष्टव्यः । कालकलनानादरे तु—

'भासो रामिल-सोमिलौ वररुचिः श्रीसाहसाङ्कः कवि-
र्माघो भारवि-कालिदास-तरलाः स्कन्धः सुबन्धुश्च यः ।
दण्डी बाणदिवाकरौ गणपतिः कान्तश्च रत्नाकरः
सिद्धा यस्य सरस्वती भगवती के तस्य सर्वेऽप्यमी ॥'[2]

इत्येवमादिश्लोका अदुष्टा इत्यलम् ।

## दण्डी ।

अयमाचार्यदण्डी कविः कुत्र कदा बभूवेति विज्ञानं दुःशकम् । दण्डीति नाम्ना चतुर्थाश्रमिणमेनं मन्यन्ते कतिपये । कतिपये पुनः काव्यादर्शे वैदर्भीरीतेर्भूयः प्रशंसनाद् विदर्भजनपदस्थं दाक्षिणात्यं कीर्तयन्ते । अथ—

'त्रयोऽग्नयस्त्रयो वेदास्त्रयो देवास्त्रयो गुणाः ।
त्रयो दण्डिप्रबन्धाश्च त्रिषु लोकेषु विश्रुताः ॥'

इति सुभाषितहारावलीधृत-राजशेखरमहाकविश्लोकाद्दण्डिनो ग्रन्थत्रयकर्तृत्वं सुप्रतीतम् । तत्र काव्यादर्श-दशकुमारचरिते तावदतिरोहिते । तृतीयो ग्रन्थः क इति गवेषणायाम्—'छन्दोविचित्यां सकलस्तत्प्रपञ्चो निरूपित' इति काव्यादर्शेन, 'छन्दोविचितिरिव मालिनीसनाथा' इति सौबन्धवीयवासवदत्ताश्लेषेण 'छन्दोविचितिग्रन्थविशेषः' इति त्रिपाठिशिवरामप्रणीतया तट्टीकया च छन्दोविचितिरेवेति । केचित्पुनश्छन्दोविचितिशब्दं यौगिकं मन्यन्ते । तथाच विचितिः प्रस्तार इति फलति । अन्ये तु तृतीयं ग्रन्थं कलापरिच्छेदं कलयन्ते । मल्लिकामारुतनिर्माता तु उद्दण्डो न तु दण्डीति । दण्डिनः समयस्तु प्रवरसेनादधस्ताद् रुद्रटादूर्ध्वं संभवति ॥

## धनिकः ।

अयं विष्णुतनूजन्मा दशरूपस्यालोककर्ता, दशरूपकं तु विष्णुतनूजन्मना धनञ्जयेन कृतम्, एतौ विष्णुतनूजत्वाद् भ्रातरौ । धनञ्जयः—

---

१. ज्योतिर्विदाभरणादौ.

२. भास इति श्लोकः शार्ङ्गधरपद्धतौ । शार्ङ्गधरस्य पितामहो राघवदेवो हम्मीरचाहमान ( चौहाण )स्य सभायामवर्तत । हम्मीर-वीरस्तु १२९५ ख्रिस्ताब्दे स्वर्गातिथिरभूत् ।

'विष्णोः सुतेनापि धनञ्जयेन विद्वन्मनोरागनिबन्धहेतुः ॥
आविष्कृतं मुञ्जमहीशगोष्ठीवैदग्ध्यभाजा दशरूपमेतत् ॥'

इत्यनेनात्मानं वाक्पतिराजदेवापरनाम्नो मुञ्जभूभुजः सभायामाख्यत् । स च मुञ्जः ९९४ खिस्ताब्दे आसीदिति सुभाषितरत्नसंदोहतो ज्ञायते । अयमेव कालो धनिकस्यापि भवितुं युक्तः । धनिकेन काव्यनिर्णयोऽपि निरमायीति दशरूपालोकतो व्यक्तम् ॥

## नखकुट्टः ।

कोऽयं कश्चैतन्निर्मितो निबन्ध इति नाद्यावधि ज्ञायते । एतन्मतं तु दर्पणस्य षष्ठपरिच्छेदे 'नेपथ्योक्तं श्रुतं तत्र' इत्याद्युक्तम् ॥

## पुरुषोत्तमः ।

द्वौ पुरुषोत्तमौ ज्ञायेते । एकस्त्रिकाण्डशेषकर्ता, अन्यो विष्णुभक्तिकल्पलतारचयिता । तत्राद्यस्य त्रिकाण्डशेषसमाप्तौ पुरुषोत्तमदेव इति नाम, द्वितीयस्य तु पुरुषोत्तम इति । परमाद्यस्यापि पद्यरचनायां पुरुषोत्तम इत्येव नामधेयं दृश्यते । तथाहि त्रिकाण्डशेषप्रारम्भे 'अयं प्रयत्नः पुरुषोत्तमस्य' इति । हारावलीप्रारम्भे 'हारावली विरचिता पुरुषोत्तमेन' इति च । अतो द्वयोरेकता संभवति । यद्ययमेव दर्पणस्य नवमपरिच्छेदे 'पुरुषोत्तमस्त्वाह' इत्यादिना स्मृतस्तर्हि दर्पणकारात्प्राक् खिस्ताब्दस्य दशमशतकपर्यन्तं पुरुषोत्तमसत्तां कल्पयतामैतिहासिकानामुक्तयो विभावनीयाः ॥

## भरतः ।

एतदुपज्ञमेव नाट्यशास्त्रं लोके प्रसिद्धम् । एतस्य द्वित्रपुस्तकं त्रुटिविकलमेवास्माभिर्दृष्टम् । एकमादिभरतसंज्ञकमपि नाट्यशास्त्रमभिज्ञानशाकुन्तलार्थद्योतनिकातो ज्ञायते । तत्र भरतः, आदि-भरत इति द्वेधा लेखो बहुत्रावलोक्यते । भरतस्य आदिभरत उपजीव्यो भवेत् । अनेकत्र आदिभरतवाक्यानि भरतवाक्यसमानाकाराण्यपि परीक्षितानि । भरतप्रणीतस्य नाट्यशास्त्रस्यैवोपरि अभिनवभारतीति समाख्या व्याख्या अभिनवगुप्तपादाचार्यविरचितेति ॥

## भर्तृहरिः ।

भर्तृहरिः, हरिः—इत्युभयाकारं नाम दृश्यते । तत्र भाष्यप्रदीप ( कय्यट ) शब्दकौस्तुभवैयाकरणभूषणमञ्जूषादिषु हरिरित्येव नाम स्मर्यते, भर्तृहरिरिति तु प्रमादपतितं संभाव्यते, इति केचित् । तदन्ये न मन्यन्ते । हस्तलिखितवाक्यपदीयपुस्तकेष्वपि प्रतिकाण्डं भर्तृहरिरिति लेखदर्शनात्, पूर्वग्रन्थेष्वपि क्वापि तथैव दर्शनात्, 'तथापि हरिबद्धेन—' इत्येवमादिलेखस्तु लाघवदृष्ट्या इत्याशयाकलनाच्च । तत्रभवता भर्तृहरिणा काण्डत्रयात्मकं वाक्यपदीयं नीत्यादिशतकत्रयं च विरचितमिति तावत्सुप्रसिद्धम् । वाक्यपदीयं नाम वाक्यपदे अधिकृत्य कृतो ग्रन्थः । 'शिशुक्रन्द—' ( ४।३।८८ ) इत्यादिना छः । अस्य हेलाराजपुञ्जराजौ

व्याख्यातारौ। तत्र हेलाराजः कह्णणात्प्राचीनः। शतकानि तु स्वपरपद्योपनिबद्धानीति ग्रन्थान्तरसंवादतोऽवगम्यते। दुष्टस्त्रीखिन्नमानसेन भर्तृहरिणा राज्यलक्ष्मीमवज्ञाय वैराग्यमाश्रितमिति चिराय प्रसिद्धिः। तत्र—"यां चिन्तयामि सततं मयि सा विरक्ता, सा चान्यमिच्छति जनं, स जनोऽन्यरक्तः, । अस्मत्कृतेऽपि परितुष्यति काचिदन्या, धिक् तां च, तं च, मदनं च, इमां च, मां च॥" इत्यपि तदीयं पद्यं लिङ्गम्। इदं–राज्ञो राज्ञ्याम्, राज्ञ्याः पुरपाले, पुरपालस्य अन्यत्रानुरक्तिं गमयतीति किंवदन्ती। अयमेव भर्तृहरिर्हरिहरोपाध्यायविरचितस्य भर्तृहरिनिर्वेदाख्यनाटकस्य कथानायको विभाव्यते। तत्र राज्ञी भानुमती विशुद्धचरितैव, नतूक्तकिंवदन्तीगन्धोऽपि। राज्ञो योगि–गोरक्षतो दीक्षाग्रहणं चेति दिक्॥

## भोजदेवः।

सरस्वतीकण्ठाभरणादिनानाविधसंदर्भरचयिता कृतिशकुन्तकल्पतरुर्धारानगरीनाथो भूपालरत्नं भोजदेवो विक्रमार्कसंवत् १०७८ आसीत्, तदेतदधो निर्दिष्टात्तस्य दानपत्राद्व्यक्तम्।

रुद्रटस्य काव्यालंकारात्परस्मिन् मम्मटस्य काव्यप्रकाशात् पूर्वस्मिन् काले सरस्वतीकण्ठाभरणमालंकारिकाणां वस्तुतः कण्ठाभरणमेवाभूत्। तत एवास्य बहवो विषया उदाहृतयश्चालंकारग्रन्थेषूद्धृता लभ्यन्ते। अस्य च पञ्च परिच्छेदाः। तत्र प्रथमे परिच्छेदे विस्तरतो दोषगुणविवेचनम्। द्वितीये बाह्यसंज्ञाः शब्दालंकाराः, तृतीये आभ्यन्तरसंज्ञा अर्थालंकाराः, चतुर्थे बाह्याभ्यन्तरसंज्ञा उभयालंकारा विवेचिताः। पञ्चमे तु प्राचीनरीत्या रसादिर्दर्शितः। यद्यप्यत्र मौलिकविषयाणामवान्तरभेदा नातिप्रयोजनीयास्तथाप्यनेके पदार्था उदाहरणश्लोकाश्च साहित्यमाध्यकालिकविवेकादर्शभूता अवश्यं पर्यालोचनीयाः।

एतत् कण्ठाभरणं महाराजश्रीभोजदेवेन अलंकारशास्त्रत्वेन व्यपदिष्टम्। एतस्य प्रारम्भसमाप्ती—

'ध्वनिर्वर्णाः पदं वाक्यमित्यास्पदचतुष्टयम्।
यस्याः सूक्ष्मादिभेदेन वाग्देवीं तामुपास्महे॥'

"यावन्मूर्ध्नि हिमांशुकन्दलभृति स्वर्वाहिनी धूर्जटे-
र्यावद्वक्षसि कौस्तुभस्तबकिते लक्ष्मीर्मुरद्वेषिणः।
यावच्चित्तभुवस्त्रिलोकविजयप्रौढं धनुः कौसुमं
भूयात्तावदियं कृतिः कृतधियां कर्णावतंसोत्पलम्॥"

इत्येवमुपश्लोकिते।

तद्दानपत्रस्यापेक्षितांशोऽयम्—

'........परमभट्टारकमहाराजाधिराजपरमेश्वरश्री-सीयकदेवपादानुध्यातपरमभट्टारकमहाराजाधिराजपरमेश्वरश्रीवाकपतिराजदेवपादानुध्यातपरमभट्टारकमहाराजाधिराजपरमेश्वरश्रीसिन्धुराजदेवपादानुध्यातपरमभट्टारकमहाराजाधिरा-

जपरमेश्वरश्रीभोजदेवः कुशली नागह्रदपश्चिमपथकान्तःपातिवीराणके समुपगता-न्समस्तराजपुरुषान्ब्राह्मणोत्तरान्प्रतिनिवासिपट्टकिलजनपदादींश्च समादिशति—अस्तु वः संविदितम्, यथा अतीताष्टसप्तत्यधिकसाहस्रिकसंवत्सरे ( १०७८ ) माघासित-तृतीयायां रवावुदगयनपर्वणि कल्पितहलानां लेख्ये श्रीमद्धारायामवस्थितैरस्माभिः स्नात्वा चराचरगुरुं भगवन्तं भवानीपतिं समभ्यर्च्य संसारस्यासारतां दृष्ट्वा

'वाताभ्रविभ्रममिदं वसुधाधिपत्य-
मापातमात्रमधुरो विषयोपभोगः ।
प्राणास्तृणाग्रजलबिन्दुसमा नराणां
धर्मः सखा परमहो परलोकयाने ॥
भ्रमत्संसारचक्राग्रधाराधारामिमां श्रियम् ।
प्राप्य ये न ददुस्तेषां पश्चात्तापः परं फलम् ॥'

इति जगतो विनश्वरं स्वरूपमाकलय्य उपरिलिखितग्रामः स्वसीमातृणागोचर-यूतिपर्यन्तः सहिरण्यभागभोगः सोपरिकरः सर्वदायसमेतो ब्राह्मणधनपतिभट्टाय भट्टगोविन्दसुताय बह्वृचाश्वलायनशाखाय त्रिप्रवराय वेल्लवल्लप्रतिवद्धश्रीवादाविनि-र्गतराधसुरसञ्ज्ञकर्णाटाय मातापित्रोरात्मनश्च पुण्ययशोविवृद्धये अदृष्टफलमङ्गीकृत्य आचन्द्रार्कार्णवक्षितिकालं यावत्परया भक्त्या शासनेनोदकपूर्वं प्रतिपादित इति मत्वा यथा दीयमानभोगकरहिरण्यादिकमाज्ञाश्रवणविधेयैर्भूत्वा सर्वमस्मै समुपनेतव्यम् । सामान्यं चैतत्फलं बुद्ध्वा अस्मद्वंशजैरन्यैरपि भाविभोक्तृभिरस्मत्प्रदत्तधर्मदायोऽय-मनुमन्तव्यः पालनीयश्च.................

इति कमलदलाम्बुबिन्दुलोलां श्रियमनुचिन्त्य मनुष्यजीवितं च ।
सकलमिदमुदाहृतं च बुद्ध्वा नहि पुरुषैः परकीर्तयो विलोप्याः ॥

इति । संवत् १०७८ चैत्रसुदि १४ स्वयमाज्ञामङ्गलं महाश्रीः । स्वहस्तोऽयं श्रीभोजदेवस्य ॥

( इण्डियन् ॲण्टिक्केरी ६।५३–५४ )

## महिमा ।

श्यामलशिष्यः श्रीधरसूनू राजानकमहिमाचार्यो लोचनकाराद् अभिनवगुप्त-पादात् किंचिदेवोत्तरस्मिन् अलंकारसर्वस्वकाराद् रुय्यकात् पूर्वस्मिन्, अर्थात् खिस्तैकादशशतके कश्मीरेषु बभूव । एतेन महामतिमता दुरवगाहस्य ध्वनिप्रस्था-नस्य ( ध्वन्यालोकस्य ) निरासायैव विमर्शत्रयात्मको व्यक्तिविवेको[1] व्यरचि । यद्गौरवमाकलयन् कवि–तार्किकचूडामणिः श्रीश्रीहर्षः स्वखण्डनखण्डखाद्यस्य चतुर्थे परिच्छेदे—

'दोषं व्यक्तिविवेकेऽमुं कविलोकविलोचने ।
काव्यमीमांसिषु प्राप्तमहिमा महिमाऽऽदृत ॥'

इत्यभ्यधात् । अत्रास्माभिरियदेवोच्यते—यत्प्रौढच्छात्रैरात्मनो विवेकशक्तिं परां भूमिमारोपयितुमसौ व्यक्तिविवेकोऽवश्यंपरिशीलनीयः । तस्मिन्नस्मिन्व्यक्ति-

---

१. अयम् अनन्तशयनेमहामहोपाध्यायश्रीगणपतिशास्त्रिभिः प्रकाशितः ॥

विवेके प्रथमविमर्शे शब्दानौचित्यविचारः । अत्र "विधेयाविमर्शः, प्रक्रमभेदः, क्रमभेदः, पौनरुक्त्यं, वाच्यावचनम्," इति पञ्च दोषजातीः पुरस्कृत्य महाकविगव्यो बहुधा परीक्षिताः । तृतीयविमर्शे ध्वन्युदाहरणानामनुमानेऽन्तर्भावदर्शनमिति । व्यक्तिविवेकस्य—

'अनुमानेऽन्तर्भावं सर्वस्यैव ध्वनेः प्रकाशयितुम् ।
व्यक्तिविवेकं कुरुते प्रणम्य महिमा परां वाचम् ॥'

इत्यारम्भः;

'अन्यैरनुल्लिखितपूर्वमिदं ब्रुवाणो
नूनं स्मृतेर्विषयतां विदुषामुपेयाम् ।
हासैककारणगवेषणया नवार्थ-
तत्त्वावमर्शपरितोषसमीहया वा ॥'

इति समाप्तिश्च ।

## मम्मटः ।

काव्यप्रकाशकर्ता राजानकसंज्ञब्राह्मणकुलोत्पन्नो **मम्मटाचार्यः** कश्मीरेषु बभूव । अयमेव चिराय रूढान् गड्डलिकाप्रवाहेण विततान् दोषगुणरीत्यलंकारान् संक्षिप्य यथाशास्त्रं परिष्कृत्य च स्वोन्मीलिते काव्यप्रकाशे प्रथमं दर्शितवान्; अचिरात्प्रवृत्तान् ध्वनिविषयान् यथायथं संकलय्य परिसंख्याय च यथावसरं समासव्यासाभ्यां विन्यस्तवान्; पाठ्यदृष्ट्या कारिकासंदृब्धान् प्रमेयान् वृत्त्या मनाग् व्याकृतवान् । एवं यथा शब्दार्थपरिशुद्धये सूत्रवृत्त्युदाहरणैर्वैयाकरणसिद्धान्तकौमुदी विभज्यते, तथैवैष काव्यप्रकाशः शब्दार्थगुम्फपरिष्कृतये । स एष परिकरालंकारपर्यन्तो मम्मटेन तत उर्वरितः किंचिद् **अल्लटेन** ( अलकेन ) कृत इत्येतट्टीकायां निदर्शनाख्यायामुक्तम्—

'कृतः श्रीमम्मटाचार्यवर्यैः परिकरावधिः ।
प्रबन्धः पूरितः शेषो विधायाल्लटसूरिणा ॥'

एतद्वृत्तं काव्यप्रकाशस्य 'इत्येष मार्गो विदुषां-' इत्यन्तिमश्लोकव्याख्यानतोऽपि निवेद्यते । एतस्य टीकास्तत्कर्तारश्च—

( १ ) संकेतः ... ... ... जैनमाणिक्यचन्द्राचार्यैः कृतः ।
( २ ) बालचित्तानुरञ्जिनी ... सरस्वतीतीर्थैः कृता ।
( ३ ) दीपिका ... ... ... जयन्तभट्टैः कृता ।
( ४ ) आदर्शः ( संकेतः ) ... सोमेश्वरभट्टैः कृतः ।
( ५ ) दर्पणः ... ... ... विश्वनाथकविराजैः कृतः ।
( ६ ) विस्तारिका ... ... परमानन्द-चक्रवर्ति-भट्टाचार्यैः कृता ।
( ७ ) निदर्शनम् ( सारसमुच्चयः ) राजानकानन्दकविभिः कृतम् ।
( ८ ) सारबोधिनी ... ... श्रीवत्सलाञ्छनभट्टाचार्यैः कृता ।

(९) आदर्शः ... ... ... महेश्वरभट्टाचार्यैः कृतः।
(१०) काव्यप्रकाशटीका ... कमलाकरभट्टैः कृता।
(११) नरसिंहमनीषा ... ... नरसिंहठक्कुरैः कृता।
(१२) सुधासागरः ... ... भीमसेनदीक्षितैः कृतः।
(१३) बालबोधिनी ... ... भट्टवामनाचार्यैः कृता।

एवमादयो ग्रन्थत उपलब्धाः, श्रीधर-चण्डीदास-भास्करप्रभृतिरचिता नामत उपज्ञाताः संहत्य पञ्चाशदासन्नाः काव्यप्रकाशस्य टीकाः। काव्यप्रकाशस्य कारिकाः प्राय उदाहृतीश्च मूलीकृत्य प्रवर्तमानो महामहोपाध्यायगोविन्दविरचितः काव्यप्रदीपस्तु प्रथितटीकासरणिविलक्षणः प्रौढतरश्च। अत एवास्य प्रभाख्या व्याख्या कुवलयानन्दटीकाकारैर्वैद्यनाथभट्टैः, उद्योताख्या तु मञ्जूषादिसंदर्भरत्नकारैर्नागोजीभट्टैरकारि। एवं काव्यप्रकाशस्य केवलं कारिका मूलीकृत्य विद्याभूषणेव रचिता साहित्यकौमुदी। अस्याः कृष्णानन्दिनीव्याख्येत्यलम्।

अत्र संकेतः 'रसवक्त्रग्रहाधीशवत्सरे मासि माधवे' इति स्वलेखाद् (१२१६) वैक्रमाब्दे निर्मितः। बालचित्तानुरञ्जिनीकारः 'सवसुग्रहहस्तेन ब्रह्मणा समलंकृते। काले—' इत्यादिस्वलेखाद् (१२९८) वत्सरे जन्म लेभे। काश्यां संन्यस्तः सरस्वतीतीर्थसंज्ञां गतो बालचित्तानुरञ्जिनीं चक्रे। दीपिकानिर्माणकालः 'संवत् (१३५०) वर्षे ज्येष्ठवदि ३ रवौ—' इत्येवं जयन्तभट्टेनैव दर्शितः। एवं सोमेश्वरभट्टप्रभृतयोऽपि यथोत्तरं नवीना इति सांप्रतिकभट्टवामनाचार्यस्य बालबोधिनीभूमिकातो व्यक्तम्। काव्यप्रदीपकारो गोविन्दपण्डितस्तु कमलाकरभट्टात् किंचिदेव प्राक्तनः, यस्मात्प्रदीपस्य चर्चा कमलाकरग्रन्थात्प्राग्भवे नास्ति। कमलाकरस्थितिकालस्तु तत्कृतनिर्णयसिन्धुतः (१६६८) विक्रमाब्दः। प्रदीपप्रभाकारो वैद्यनाथभट्टस्तु स्वनिर्मितोदाहरणचन्द्रिकान्ते (१७४०) इति विक्रमाब्दं व्यलिखदेव। प्रदीपोद्योतकारो नागोजीभट्टो( नागेशभट्टः )ऽपि वैद्यनाथासन्नकालिकः। यदेष महात्मा काशीमधितिष्ठन् जयपुरनिर्माणकारिणा महाराजजयसिंहदेवेन अश्वमेधाध्वरे समाहूतो नागतवानिति जयपुरीयब्रह्मपुरीब्राह्मणवृद्धेषु प्रसिद्धम्। सोऽयमश्वमेधः (१७७०) विक्रमवत्सरेऽभूत्। अस्मिन्समये सुधासागरनिर्माता भीमसेनदीक्षितोऽप्यासीत्। यदयं (१७७९) इति संवत् प्रादर्शयत्।

अथ यद्यपि काव्यप्रकाशकर्तुर्मम्मटस्य कालो न प्राप्यते तथाप्येवं सुदृढमनुमीयते—प्रकाशकर्ता हि प्रकाशस्य चतुर्थोल्लासे रसविचारे 'श्रीमदाचार्याभिनवगुप्तपादः' इत्येवं सश्लाघमभिनवगुप्तमेव स्मरति; पदेपदे ध्वनिविषयानाकलयन्नपि आनन्दवर्धनाचार्यस्य नाम न गृह्णीते, केवलं ध्वनिकार इत्येतावदेवाचष्टे; लोल्लटादिनाम गृह्णानोऽपि न तादृशमादरं दर्शयते। इत्येवं मम्मटोऽभिनवगुप्तस्यातिनिकटवर्ती कश्चित्प्रतिभाति। यद् अभिनवगुप्तस्य महामाहेश्वराचार्यत्वं षट्त्रिंशत्तत्त्वप्रतिपादकप्रत्यभिज्ञादर्शनारूढत्वं काश्मीरिकत्वं च नानाग्रन्थेभ्यो व्यक्तम्। मम्म-

टस्य काश्मीरिकत्वमतितरां प्रसिद्धम् । इतश्च काश्मीरिक आनन्दकविर्निदर्शनारम्भे—'...शिवागमप्रसिद्धषट्त्रिंशत्तत्त्वदीक्षाक्षपितमलपटलः प्रकटितसत्स्वरूपश्चिदानन्दघनो राजानककुलतिलको मम्मटनामा दैशिकवरः...' इति निर्दिशति । अभिनवगुप्तस्य समयस्तल्लेखात् (१०७१) इति संवत् सिध्यति । काव्यप्रकाशस्य संकेताख्यटीकासमयः (१२१६) इति संवत् पूर्वमुक्तः । (१२१६–१०७१=१४५ इति समयान्तरम् । एतेन आचार्यमम्मटविषयेऽस्मदनुमानं साधूपपद्यत इति परीक्षणीयम् ॥

## रुद्रटः ।

अयं काव्यालंकारप्रणेता महाकविर्धारापतेर्भोजदेवात्प्राचीनः । यतः—

'किं गौरि मां प्रति रुषा ननु गौरहं किं
कुप्यामि कां प्रति मयीत्यनुमानतोऽहम् ।
जानाम्यतस्त्वमनुमानत एव सत्य-
मित्थं गिरो गिरिभुवः कुटिला जयन्ति ॥'

इति काव्यालंकारपद्यं सरस्वतीकण्ठाभरणे द्वितीयपरिच्छेदे उदाहृतम् । रुद्रटस्य नामान्तरं शतानन्दः, जनको वामकभट्टः, वेदः सामेति सर्वं तत्कृतैः खड्गमुसलचापबाणशूलशक्तिहलबन्धगर्भितैरष्टभिः श्लोकैर्यदष्टारं महाचक्रमुत्पद्यते तन्निर्गतात्—

'शतानन्दापराख्येन भट्टवामकसूनुना ।
साधितं रुद्रटेनेदं सामाजा धीमतां हितम् ॥'

---

१ बन्धसृष्टिरत्नभूतस्य वक्ष्यमाणस्य चक्रबन्धस्य स्वरूपख्यात्यै दर्पणीयबन्धप्रकरणन्यूनतापूर्त्यै च खड्गादिबन्धश्लोकाः प्रदर्श्यन्ते । तत्र—

खड्गबन्धो यथा—

मारारिशक्ररामेभमुखैरासाररंहसा ।
सारारब्धस्तवा नित्यं तदर्तिहरणक्षमा ॥ १ ॥
माता नतानां संघट्टः श्रियां बाधितसंभ्रमा ।
मान्याथ सीमा रामाणां शं मे दिश्यादुमादिजा ॥ २ ॥

मुसलबन्धो यथा—

मायाविनं महाहावा रसायातं लसद्भुजा ।
जातलीला यथासारवाचं महिषमावधीः ॥ ३ ॥

चापबन्धो यथा—

मामभीदा शरण्या मुत्सुदैवारुक्प्रदा च धीः ।
धीरा पवित्रा संत्रासान्नासीष्टा मातरारम ॥ ४ ॥

बाणबन्धो यथा—

माननापरुषं लोकदेवीं सद्रस सन्नम ।
मनसा सादरं गत्वा सर्वदा दास्यमङ्गताम् ॥ ५ ॥

इति श्लोकाज्ज्ञायते । शिशुपालवधादिविलक्षणोऽयं बन्धः कान्न चित्रयति । शृङ्गारतिलककर्ता रुद्र इति नतु रुद्रटः । उक्तं च तिलकान्ते रुद्रेण—'शृङ्गारतिलकविधिना पुनरपि रुद्रः प्रसादयति' इति ।

## वक्रोक्तिजीवितकारः ।

वक्रोक्तिजीवितं नाम अलंकारसंदर्भः । यस्य रचयिता आचार्यकुन्तकः । अस्यैव—

'संरम्भः करिकीटमेघशकलोद्देशेन सिंहस्य यः
सर्वस्यैव स जातिमात्रनियतो हेवाकलेशः किल ।
इत्याशाद्विरदक्षयाम्बुदघटाबन्धेऽप्यसंरब्धवा-
न्योऽसौ कुत्र चमत्कृतेरतिशयं यात्वम्बिकाकेसरी ॥'

इति पद्यं व्यक्तिविवेके द्वितीयविमर्शे महिम्ना अनेकधा दूषयित्वा पर्यन्ते—

'काव्यकाञ्चनकषाभिमानिना कुन्तकेन निजकाव्यलक्ष्मणि ।
यस्य सर्वनिरवद्यतोदिता श्लोक एष स निदर्शितो मया ॥'

इत्युक्तम् । राजानककुन्तकेन वक्रोक्तिजीवितस्य स्वोपज्ञवृत्तेः प्रारम्भे—

'जगत्त्रितयवैचित्र्यचित्रकर्मविधायिनम् ।
शिवं शक्तिपरिस्पन्दमात्रोपकरणं नुमः ॥
यथातत्त्वं विवेच्यन्ते भावास्त्रैलोक्यवर्तिनः ।
यदि तन्नाद्भुतं न स्यादेव रक्ता हि किंशुकाः ॥
स्वमनीषिकयैवाथ तत्त्वं तेषां यथारुचि ।
स्थाप्यते प्रौढिमात्रं तत्परमार्थो न तादृशः ॥'

इत्याद्यभिहितम् । तदानीं वक्रोक्तिजीवित-दर्पण-व्यक्तिविवेकप्रमुखाः कतिपये कविकर्मपरीक्षकाः प्रौढप्रबन्धाः जज्ञिरे ॥

## वाचस्पतिमिश्रः ।

सर्वतन्त्रस्वतन्त्रधिषणोऽयम् उद्द्योतकाराद् अधस्तनः उदयनाद् ऊर्ध्व-

---

शूलबन्धो यथा—

मासुषो राजस स्वासूँल्लोककूटेशदेवताम् ।
तां शिवावाशितां सिद्धाध्यासितां हि स्तुतां स्तुहि ॥ ६ ॥

शक्तिबन्धो यथा—

माहिषाख्ये रणेऽन्यानु सानु नानेयमत्र हि ।
हिमातङ्कादिवासुं च कं कम्पिनमुपप्लुतम् ॥ ७ ॥

हलबन्धो यथा—

मातङ्गानङ्गविधिनासुना पादं तमुद्यतम् ।
तङ्गयित्वा शिरस्यस्य निपात्याहन्ति रंहसा ॥ ८ ॥

एतैः खड्गादिसप्तभिर्बन्धैरष्टमो महाचक्रबन्धो निष्पद्यते । एतेषां चित्राणि ग्रन्थान्ते द्रष्टव्यानि ।

तनः यस्माद्वाचस्पतिना उद्द्योतकारकृतस्य न्यायभाष्यवार्तिकस्योपरि न्यायवार्तिकतात्पर्यमकारि, उदयनेन तु तदुपरि न्यायवार्तिकतात्पर्यपरिशुद्धिरकारीति । विद्यावाचस्पतिना वाचस्पतिना स्वप्रणीतग्रन्था ब्रह्मसूत्रशारीरकभाष्यस्य भामत्यन्ते निर्दिष्टाः—

'यन्न्यायकणिकातत्त्वसमीक्षातत्त्वबिन्दुभिः ।
यन्न्यायसांख्ययोगानां वेदान्तानां निबन्धनैः ॥
समचैषं महत्पुण्यं तत्फलं पुष्कलं मया ।
समर्पितमथैतेन प्रीयतां परमेश्वरः ॥'

खण्डनोद्धारकृद् वाचस्पतिमिश्रस्त्वस्माद्भिन्नो नवीनश्च । खण्डनोद्धारः श्रीहर्षप्रणीतं खण्डनखण्डखाद्यं लक्ष्यीकृत्य कृतो वाचस्पतिना । श्रीहर्षस्तूदयनादधस्तनः । यस्माद् उदयनाचार्यकृतस्य न्यायकुसुमाञ्जलेः—

'शङ्का चेदनुमास्त्येव न चेच्छङ्का ततस्तराम् ।
व्याघातावधिराशङ्का तर्कः शङ्कावधिर्मतः ॥'

इति कारिकैव श्रीहर्षेण खण्डनखण्डखाद्ये—

'तस्मादस्माभिरप्यस्मिन्नर्थे न खलु दुष्पठा ।
त्वद्गाथैवान्यथाकारमक्षराणि कियन्त्यपि ॥
व्याघातो यदि शङ्कास्ति न चेच्छङ्का ततस्तराम् ।
व्याघातावधिराशङ्का तर्कः शङ्कावधिः कुतः ॥'

इत्येवं कटाक्षिता । सोऽयं तत्त्वचिन्तामणिकाराद् गङ्गेश्वरादप्यधस्तनो यस्मात्खण्डनखण्डखाद्ये—

'धीधना बाधनायास्यास्तदा प्रज्ञां प्रयच्छथ ।
क्षेप्तुं चिन्तामणिं पाणिलब्धमब्धौ यदीच्छथ ॥'

इति पठ्यते । सोऽयं श्रीहर्षः खण्डनखण्डखाद्ये नैषधीयचरिते चात्मानं कान्यकुब्जेश्वरसभायामवर्णयत् । तदा कालकलनया महोदयापरनाम्नः कान्यकुब्जनगरस्य कान्यकुब्जदेशस्य वा विद्वद्विहंगमावासकल्पपादपायितेष्वधिपतिषु महाराजो विजयचन्द्रस्तत्सूनुर्जयचन्द्रो वा संभवति । यस्मात्तत्समयस्तदीयदानपत्रात् पञ्चविंशत्यधिकद्वादशशतसंवत्सरः १२२५ ( इण्डियन आण्टिक्वेरी १५—७८८ )। नैषधीयचरितस्य पञ्चमसर्गान्ते कीर्तिता विजयप्रशस्तिः कदाचित्कान्य-

---

१. उद्द्योतकारेण दिङ्नागमतखण्डनार्थं वार्तिकं व्यरचि । अयमेव दिङ्नागो दिङ्नागानामिति मेघव्याख्याने तट्टीकाकारैः कालिदासविपक्षत्वेनोत्प्रेक्षितः ।

२. एतदतिरिक्तग्रन्था नैषधीयचरितस्य सर्गान्तश्लोकतोऽज्ञेयाः । तत्र स्थैर्यविचारणप्रकरणम्, शिवशक्तिसिद्धिः, ईश्वराभिसंधिः, खण्डनखण्डखाद्यम्, इति शास्त्रीया निबन्धाः । अनिर्वचनीयत्रासर्वस्वे खण्डने न केवलं तदानीमुपलभ्यमान—परवाद—खण्डनमात्रम्, अपितु—'तत्तुल्योहस्तदीयं च योजनं विषयान्तरे । शृङ्खला तस्य शेषे च त्रिधा भ्रमति मत्क्रिया ॥' इति संचारार्थमप्युपदिष्टम् ।

कुब्जेश्वरस्य विजयचन्द्रस्यैव भवेत्। श्रीहर्षस्य पिता हीरः (हीरा) माता मामल्लदेवी (मामल्ला) देशो जातिश्च कान्यकुब्जः (कनवजिया)। एतद्वंश्याः कतिपयेऽधुना वङ्गेषु निवसन्तः स्वस्याभिजनं कान्यकुब्जं, स्वपूर्वपुरुषं श्रीहर्षं च कथयन्तीति सुप्रसिद्धम् ॥

## वामनः ।

अयं सवृत्तिकाणां काव्यालंकारसूत्राणां कर्ता ख्रिस्ताब्दसप्तमशतकोत्तरार्धान्नोर्ध्वतनः। यतोऽसौ भवभूतिकृतस्य महावीरचरितस्य 'दोर्दण्डाञ्चितचन्द्रशेखरधनुः—' इति पद्यमुदाजहार। भवभूतिस्तु ख्रिस्ताब्दस्य सप्तमशतकोत्तरार्धे **यशोवर्मणः** सभायामासीत् (भू. ५९ पृ.)। अथ ध्वन्यालोकलोचने 'अनुरागवती संध्या—' इत्युदाहरणविचारावसरे 'वामनाभिप्रायेणायमाक्षेपः—' इत्याचार्याभिनवगुप्तपादोक्त्या आनन्दवर्धनाचार्यान्नाधस्तनः (भू० ६६ पृ०)।

कतिपये पुनः—

> 'मनोरथः शङ्खदत्तश्चटकः संधिमांस्तथा ।
> बभूवुः कवयस्तस्य वामनाद्याश्च मन्त्रिणः ॥'

इति राजतरङ्गिणीबलेन (४।४९७) एनं कश्मीराधिपतेर्जयापीडस्यामात्यं शंसन्ति । वामनस्य काव्यालंकारनिबन्धोऽध्ययनार्हः, तत्रापि शब्दशुद्धिकामुकैः पञ्चममधिकरणं त्ववश्याध्येतव्यम् ॥

इत्येवं दर्पणे प्रतिबिम्बितानां मुष्टिग्राह्यं मामको ग्रहो यद्यपि प्रयासावहस्तथापि परिचयायालमिति शिवम् ॥

भवति चात्रानुषङ्गिकी सप्तश्लोकी—

> शिक्षाविभागाधिपतौ गङ्गोलीकुलदीपके ।
> विद्याप्रिये राजमाने श्रीसंजीवनधीमति ॥
> तत्तद्ग्रन्थावगाहेन शिलालेखादिकेन च ।
> परीक्षितप्रमेयासौ श्रुतार्था भूमिका कृता ॥ (युग्मम्)
> एतया दर्शितपथः प्राक्तने वर्त्मनि व्रजन् ।
> न चाभिभूयते क्वापि प्राज्ञो विज्ञानकञ्चुकः ॥
> आगम[2]प्रवणश्चाहं नापवाद्यः स्खलन्नपि ।
> सर्वा[3]रम्भो हि दोषेण धूमेनाग्निरिवावृतः ॥

---

१. श्रीहर्षः कान्यकुब्ज इति प्रसिद्धमेव, तत्र मिश्रपदमप्यनुग्राहकम् । तथाच प्रायोजि वेदान्तपञ्चदशीकारैः—'निरुक्तावभिमानं ये दधते तार्किकादयः । हर्षमिश्रादिभिस्ते तु खण्डनादौ सुशिक्षिताः ॥' इति ।

२. मीमांसाश्लोकवार्तिकम्.

३. भगवद्गीता.

तातपादो रामभजो बापुदेव इति त्रयी ।
त्रेतेव स्मर्यतां चेतो यया शास्त्रावगाह्यभूः ॥
गुणदोषानुषङ्गेण या प्रीतिः किं तयाधुना ।
ईशानः सर्वविद्यानां स मे स्वामी प्रसीदतु ॥
स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट् ।
स एव विष्णुः स प्राणः स कालोऽग्निः स चन्द्रमाः ॥

जयपुरराजधानी
वैक्रमाब्दाः १९७७

इत्याशास्ते
श्रीदुर्गाप्रसादद्विवेदः ।



१. तैत्तिरीयारण्यकम्.
२. कैवल्योपनिषत्.

# साहित्यदर्पणे विशेषतोऽवलोकनार्हा विषयाः ।



**प्रथमे परिच्छेदे**–काव्यफलनिरूपणं वस्तुतो दर्शनार्हम् ( ३–६ पृ. )। काव्यस्वरूपनिर्वचनावसरे सर्वाणि प्रमाणवचनानि दर्शनार्हाणि ( ६–२० पृ. ) तत्र 'तददोषौ–' इत्यादिकाव्यप्रकाशकारोक्तकाव्यस्वरूपस्य खण्डनग्रन्थगताष्टिप्पण्यो दर्शनार्हाः ॥

**द्वितीये परिच्छेदे**–अभिधा संकेत ( ३३ पृ. ) पदगता टिप्पणी दर्शनार्हा । इतरग्रन्थविशिष्टं लक्षणाभेदानां निरूपणं वस्तुतो नैयायिकानामपि दर्शनार्हम् ( ३७–५६ पृ. ) । यद्यप्यत्र कतिपये भेदास्तत्र तत्र महाकाव्येष्वनवकाशतया मन्दप्रयोजनास्तथापि लक्षणभेदव्युत्पादनाय त्वावश्यका एव ॥

**तृतीये परिच्छेदे**–'विभावेन–' ( ७२ पृ. ) कारिकागता टिप्पणी निपुणं विभावनीया । उत्तमादिस्वरूपजिज्ञासुभिर्नेतृलक्षणगतानि प्रायः सर्वाण्येव विशेषणानि निरीक्षणीयानि ( ९७–१०० पृ. ) । पुरा भारतवर्षेऽन्तःपुरसहायाः किंविधाः कल्पिता इति तत्त्वजिज्ञासुभिः 'वामन–' ( १०३ पृ. ) इत्यार्या समूललक्ष्यलक्षणान्वेषणपूर्वकं समाकलनीया । तत्र किरात–म्लेच्छ–आभीरशब्दगता विशेषा अप्युन्नेयाः । साधारणस्त्रीलक्षण( ११७ पृ. )निरूपणे कलापदार्थाः प्राचीनरहस्यवेदिभिरवश्यमनुसंधेयाः । स्वदारगुप्त्यर्थमनुरागेङ्गितानि ( १३९ पृ. ) दर्शनार्हाणि । तत्र शिल्पिन्याद्या अभिसंधायिका भवन्तीति वात्स्यायनसंमतिर्द्रष्टव्या ( १४१ पृ. )। शृङ्गारादीनां स्वरूपाणि ( १६९ पृ. ) काव्यप्रकाशाद्यपेक्षया स्फीतानि दर्शनार्हाणि ॥

**चतुर्थे परिच्छेदे**—ध्वनिगुणीभूतव्यङ्ग्याख्यकाव्यभेदप्रतिपादनं सुप्रतीतमेव । तत्र 'प्रधान–' ( २४८ पृ. ) पदनिष्ठा टिप्पणी विलोकनीया ॥

**पञ्चमे परिच्छेदे**—व्यञ्जनावृत्तेः स्थापनमितरग्रन्थापेक्षया स्फीतं प्राञ्जलं दर्शनार्हं चास्ते ॥

**षष्ठे परिच्छेदे**—सर्वोऽपि विषयप्रपञ्चो वस्तुतो दर्शनयोग्यः । किंबहुना, यथात्र नाटकादीनां दशरूपकाणां नाटिकादीनामष्टादशोपरूपकाणां तद्गतविशेषजातानामन्येषां चोच्चावचानां विषयाणां विशदरूपेण निरूपणं निपुणतमं प्राप्यते, न तथा दशरूपकादिषु । सांप्रतमुपलभ्यमानेषु नाट्यशास्त्रपुस्तकेषु तु बहुत्र न्यूनता प्रतीयते । यदि किमपि नाट्यशास्त्रस्याविकलं पुस्तकं लभ्येत तर्हि दर्पणोल्लिखितविषयजातानां परीक्षा मौलिकदृश्यकाव्यान्वेषणाय विधातुं पार्येत । सति कुड्ये चित्रमिति न्यायात् । श्रीमता हॉल्साहिबेन दशरूपकेण सह तदुपकारिणो येऽध्यायाः ( १९–२०।३४ ) मुद्रापितास्तेऽपि नाविकलाः ।

किं चात्र परिच्छेदे बहवो दृश्यकाव्यग्रन्था उदाहरणत्वेनोपन्यस्ताः। तेषु कतिपयानां दर्पणादितरत्र नामापि नोपलभ्यते। नामधेयमात्रेणानुमितसत्ताकानां तेषां पुनरुद्भवाय युरोपादिमहापुस्तकालया निरीक्षणीयाः॥

**सप्तमे परिच्छेदे**—झटित्युपस्थितये बहूनि पूर्वोदाहरणानि तनूकृत्य स्थापितानीति तत्र तत्र प्रायो दर्शितमेव। तत एवैतेषामुर्वरितांशान्वेषणाय प्रयासो निष्फलः॥

**अष्टमे परिच्छेदे**—वामनोक्तानां शब्दार्थगुणानां प्रकाशवत्प्रत्याख्यानं 'माधुर्यं द्रुतिकारणम्' इति प्रकाशोक्तिप्रत्याख्यानं च दर्शनार्हम्। वामनोक्तानामितरेषां गुणानामवगमार्थं 'ते त्रिधा–' (४५० पृ.) इति कारिकास्था टिप्पणी विलोक्या। आसीत्प्राग्वामनोक्तानां गुणानां प्रचुरः प्रचारः। यतः—

'प्रसन्नाः कान्तिहारिण्यो नानाश्लेषविचक्षणाः।
भवन्ति कस्यचित्पुण्यैर्मुखे वाचो गृहे स्त्रियः॥

इत्यादयः सूक्तयो जज्ञिरे। एवं तत्तत्कालिककविकर्मावलोकनेन तत्तत्कालिकी साहित्यशास्त्रस्थितिरुन्नेतुं सुशका॥

**नवमे परिच्छेदे**—रीतीनां प्रतिपादनम्। तत्र वैदर्भी—गौडी—पाञ्चाली—लाटीनां स्वरूपाकलनेन भारतवर्षीयाणां चिरंतनी विद्यासमृद्धिरवगन्तुं शक्यते। किंचैता रीतयस्तत्र तत्रोपजीव्यनिबन्धेष्वपि सूपपाद्यन्त इति नूतनत्वशङ्काङ्कुरोऽपि न प्ररोहतीति सूक्ष्मदृशा विभावनीयम्॥

**दशमे परिच्छेदे**—महाकाव्योपयुक्तानां शब्दालंकाराणां (४७१–५०० पृ.) चमत्कृतानामुपमाभेदानां च (५०१–५१८ पृ.) निरूपणं तत्र 'यमकं–' (४७९ पृ.) 'संस्कृतमहाराष्ट्र्योः' (४८८ पृ.) 'साम्यं–' (५०१ पृ.) इत्यादिग्रन्थगतं टिप्पणं च दर्शनार्हम्। एवमग्रेऽपि॥

'एष साहित्यमातङ्गो दुर्ग्राह्योऽतिमहत्तरः।
मुष्टिमेय इवाभाति दर्पणे प्रतिबिम्बितः॥'



# साहित्यदर्पणे प्रमाणत्वेनोद्धृतानां ग्रन्थानां नामानि ।

साहित्यदर्पणभूमिकायां ७६-७७ पृष्ठयोर्वर्णितानां
चित्रबन्धानामाकाराः

## १ खड्गबन्धः

जा
दि

मेदिश्यादु मा रामाणांशं

सी
घ
न्या

श्रियांबाधितसंभ्र मा लाननानांसंघट्टः

| | |
|---|---|
| क्ष | रा |
| ण | रि |
| र | श |
| ह | ऋ |
| र्ति | रा |
| र्द | मे |
| त | भ |
| त्यं | मु |
| नि | खै |
| वा | रा |
| स्त | सा |
| श्च | र |
| र | रं |
| रा | ह |

सा

## २ मुसलबन्धः।









३ चापबन्धः



## ४ बाणबन्धः

ह्र
स
वीं
न्न
दे
म

क
लो
षं
रु
प
ना
न
मा

सा
ग
त्वा
दा
ङ्ग
ता
म्

## ५ शूलबन्धः



## ६ शक्तिबन्धः।




## ७ हलबन्धः



९ पद्मबन्धः (साहित्य पृ. ४९७




१० मुरजबन्धः (साहित्य पृ. ४९८)



# साहित्यदर्पणस्य विषयानुक्रमणिका।

## अष्टमपरिच्छेदे—



## नवमपरिच्छेदे—

॥ श्रीः ॥

श्रीमद्विश्वनाथकविराजप्रणीतः

# साहित्यदर्पणः ।

श्रीमद्रामचरणतर्कवागीशकृतया विवृत्या समेतः ।

## प्रथमः परिच्छेदः ।

ग्रन्थारम्भे निर्विघ्नेन प्रारिप्सितपरिसमाप्तिकामो वाङ्मयाधिकृततया वाग्देवतायाः सांमुख्यमाधत्ते—

---

### विवृतिः ।

वागीश्वरीसरसगीतगुणप्रवाहं सारस्वतीसततसेवितपादपद्मम् ।
हेमाद्रिसारकृतशेखरकान्तमीशं वन्दे खगेन्द्र[1]भुजमौलिगतं मुकुन्दम् ॥
श्रीविश्वनाथकविराजकृतिप्रणीतं साहित्यदर्पणमतिस्थगितप्रमेयम् ।
श्रीमद्विधाय चरणं शरणं गुरूणां यत्नेन रामचरणो विवृणोति विप्रः ॥
यः परः परगुणप्रकाशने लब्धवर्णनिकरो जयत्यसौ ।
दोषगानरचिताघसंचया यात्वधः पिशुनराजिरञ्जसा ॥

समग्रसिद्धान्तग्रहव्यग्रमनसामनभिमते प्रकटदोषप्रकरविघटितादरकाव्यादिनिरूपणे सत्यप्यलंकारग्रन्थनिकरे तेषामभीष्टमदुष्टकाव्यादिनिरूपणमव्याहतराद्धान्तसंतानमलंकारग्रन्थमारभमाणः प्रथमकारिकायाः सरस्वत्याराधनप्रयुक्तस्वार्थनिर्वाहप्रयुक्तिपरतां प्रकाशयितुमवतरणिकां स्वयमेव ग्रन्थकृदाह—**ग्रन्थारम्भ इति** । ग्रन्थस्य महावाक्यविशेषस्यारम्भे आरम्भप्राक्काले आद्यकृतिरूपस्यारम्भस्य मङ्गलाचरणाधिकरणत्वबाधादियं लक्षणा । तत्प्रयोजनं च मङ्गलारम्भयोरव्यवहितत्वबोधः । केचित्तु[2]

---

### विवृतिपूर्तिः ।

एकत्र यत्र नवचम्पकदामहारि हारावदातमितरत्र चकास्ति शोचिः ।
तस्मा इवाद्भुततनूघटनाय तस्मै कस्मैचिदस्तु महसे प्रणतिः परस्मै ॥
आचार्यरामचरणेन विकासितायां यद्दर्पणस्य विवृतौ विकलत्वमस्ति ।
तत्पूर्तये जयपुरेन्द्रसमाश्रितेन दुर्गाप्रसादकृतिना क्रियते प्रयत्नः ॥

1. खगेति । गरुडपृष्ठारूढम्, अत एव कनकाचलोपरिगतमरकतशृङ्गसुन्दरमित्यर्थः ॥
2. काव्यप्रकाशव्याख्यात्रादयः । एवं यथासंभवमग्रेऽपि ॥

**शरदिन्दुसुन्दररुचिश्चेतसि सा मे गिरां देवी ।**
**अपहृत्य तमः संततमर्थानखिलान्प्रकाशयतु ॥ १ ॥**

"आरम्भे भाविनि सतीत्यर्थः" इत्याहुः । तन्न । तथा सत्यारम्भप्राक्काल इति पदादिवारम्भे भाविनि सतीत्यस्मादारम्भप्रागभावसमानकालीनत्वस्यैव बोधः, न तु सदाचारपरम्परापरिप्राप्तस्यारम्भाव्यवहितप्राक्कालीनत्वस्य । नच कालान्तरीणमङ्गलाचरणस्याप्यदृष्टद्वारा प्रकृतोपयोगित्वात्तयोरव्यवहितस्य बोधोऽकिंचित्कर इति वाच्यम् । तस्य प्राशस्त्येनात्यन्तोपयोगित्वकल्पनात् । **निर्विघ्नेन** प्रतिबन्धकीभूतदुरदृष्टविघातद्वारा **प्रारिप्सितस्य** चिकीर्षाविषयस्य **परिसमाप्ति**श्चरमवर्णपर्यन्तानुष्ठानं **तत्कामः** । 'ग्रन्थकृत्' इति शेषः । **वाङ्मया**न्यष्टादश विद्याः काव्यकलाः कामशास्त्रादीनि च, तदधिकृततया तदध्यक्षतया **वाग्देवतायाः** सरस्वत्याः **सांमुख्य**माराधनेन स्वार्थसाधनानुकूलत्व**माधत्ते** करोति । अत्र प्रथमपुरुषाभिधानं 'रामः स्वयं याचते', 'जीवत्यहो रावणः' इत्यादिवत्काल्पनिकभेदमूरीकृत्य । अन्यथा अस्मत्कर्तृत्वेनोत्तमपुरुष एव स्यात् । नच वृत्तिकारकारिकाकारयो[१]र्वास्तवो भेद इति वाच्यम् । 'रसस्वरूपं निरूपयिष्यामः' इति प्रतिज्ञातुर्वृत्तिकारस्य कारिकया रसनिरूपणं तथात्वेऽसंगतं स्यात् ॥ **शरदिन्द्विति** । सा वेदागमादिप्रसिद्धा । सह एन विष्णुना वर्तमाना वा । गिरां देवी सरस्वती मम चेतसि वर्तमाना सती तमोऽज्ञानमपहृत्य विनाश्य अखिलान् सर्वान् वाच्यलक्ष्यतात्पर्यव्यङ्ग्यरूपानर्थान् वस्तूनि संततं यदा यदर्थज्ञानमुपयुक्तं तदैव प्रकाशयतु प्रकटीकरोतु । यद्वा 'संततं' इति 'तमः' इत्यस्य विशेषणम् । निबिडमित्यर्थः । सा कीदृशी । शरदिन्दोरिव सुन्दरी अतिविशदा रुचिर्दीप्तिर्यस्याः सा तथा । शरदिन्दुरपि तमो ध्वान्तं विनाश्य अर्थान् वस्तूनि प्रकाशयतीत्युपमा । वाङ्मयाधिकृतत्वख्यापनाय 'गिरां देवी' इत्यनेन सरस्वत्या उपन्यासः । अथवा देवी दुर्गा मम गिरामर्थान् चेतसि व्युत्पित्सूनां हृदि प्रकाशयतु । सा कीदृशी । शरदिन्दुसुन्दरः शिवस्तत्र रुचिरभिलाषो यस्याः सा तथा । अन्यत्समानम् । एतत्पक्षे 'वाङ्मयाधिकृततया' इति कर्तृविशेषणम् । वाङ्मयाधिकृतो ग्रन्थकृदित्यर्थः । 'अवाग्देवतायाः' इति गोपनीयदेवताया इत्यर्थः । इष्टदेवताया गोपनीयत्वमागमे प्रसिद्धम् । अत्र 'सा' इत्यनेन सरस्वत्याः श्रवणम् । 'चेतसि वर्तमाना' इत्यनेन मननं ध्यानं च लभ्यत इति त्रिविधं च सरस्वत्याराधनमत्र फलितम् । तस्य विघ्नध्वंसद्वारा प्रारिप्सितपरिसमाप्तिः फलम् । स्वतःसिद्धविघ्नविरहस्य प्रारिप्सितपरिसमाप्तिरेव फलम्, न तु विशिष्टम् । यथा—निष्पापस्य ब्रह्मलोकप्राप्तिरेव संध्योपासनस्य फलम्, न तु पापक्षयपूर्वकब्रह्मलोकप्राप्तिः । तदुक्तम्—'संध्यामुपासते ये तु सततं शंसितव्रताः । विधूतपापास्ते यान्ति ब्रह्मलोकमनामयम् ॥' इति । यद्वा । निर्विघ्नेन विघ्नाभावद्वारेत्यर्थः । अभावश्च यथायथमत्यन्ताभावो ध्वंसश्च ग्राह्यः । अत्यन्ताभावपक्षे अन्वयव्यतिरेकानुविधायित्वरूपं जन्यत्वमादाय

१. 'प्रागभावनाशो वा' इति मुद्रितपुस्तकेऽधिकः पाठः.

अस्य ग्रन्थस्य काव्याङ्गतया काव्यफलैरेव फलवत्त्वमिति काव्यफलान्याह—

**चतुर्वर्गफलप्राप्तिः सुखादल्पधियामपि ।**
**काव्यादेव[1] यतस्तेन तत्स्वरूपं निरूप्यते ॥ २ ॥**

व्यापारत्वनिर्वाहः । एतन्मते सर्वत्रैव विशिष्टफलसंभव इति सर्वं समञ्जसम्[1] ॥ प्रवृत्त्यङ्गप्रयोजनवत्त्वं दर्शयति—**अस्येति** । प्रक्रम्यमाणस्येत्यर्थः । **काव्याङ्गतया** काव्यफलसाधनेऽप्रधानकारणतया । **काव्यफलैरि**ति 'धान्येन धनवान्' इतिवदभेदे तृतीया । काव्यफलाभिन्नफलवत्त्वमित्यर्थः । यथा दर्शपौर्णमासाङ्गानां प्रयाजादीनां दर्शपौर्णमासफलेनैव फलवत्त्वं तथास्यापीति भाव्यम् । ननु प्रयाजादीनामङ्गापूर्वजननद्वारा परमापूर्वं प्रत्युपकारः संभवतीति तत्र तथास्तु, प्रकृते तु शास्त्रस्य काव्यगुणदोषादिज्ञापनोपक्षीणत्वेन चतुर्वर्गं प्रत्युपकारासंभवात् कथं तत्साधनत्वमिति चेत् । न । काव्यं हि स्वरूपसन्न कारणम्, किंतु कृतिज्ञप्त्यन्यतरविषयतया तत्रास्योपकारः संभवतीति न कापि विप्रतिपत्तिः । नन्वस्य चतुर्वर्गातिरिक्तकाव्यगुणादिज्ञानरूपफलसत्त्वात्कथमेवकारार्थान्वय इति चेत् । न । 'फलवत्त्वम्' इत्यत्र मतोः[2] प्रशस्तार्थत्वेनोत्कृष्टफलपरत्वात् । एवं च चतुर्वर्गफलसाधनत्वज्ञानेनात्र लोकानां साभिनिवेशप्रवृत्तिर्भविष्यतीति भावः ॥ काव्यफलदर्शनपुरःसरं काव्यस्वरूपनिरूपणं प्रतिजानीते—**चतुर्वर्गेति** । चतुर्वर्गो धर्मार्थकाममोक्षा एव फलम् । **सुखादना-**

1. काव्येति । सकलपुरुषार्थसाधनक्षमस्य काव्यस्य प्रादुर्भावे शक्तिर्व्युत्पत्तिरभ्यासश्च कारणम् । शक्त्यादीनां स्वरूपमाह रुद्रटः—'मनसि सदा सुसमाधिनि विस्फुरणमनेकधाभिधेयस्य । अक्लिष्टानि पदानि च विभान्ति यस्यामसौ शक्तिः ॥ प्रतिभेत्यपरैरुदिता सहजोत्पाद्या च सा द्विधा भवति । पुंसा सह जातत्वादनयोस्तु ज्यायसी सहजा ॥ स्वस्यासौ संस्कारे परमपरं मृगयते यतो हेतुम् । उत्पाद्या तु कथंचित् व्युत्पत्त्या जन्यते परया ॥ छन्दोव्याकरणकलालोकस्थितिपदपदार्थविज्ञानात् । युक्तायुक्तविवेको व्युत्पत्तिरियं समासेन ॥ विस्तरतस्तु किमन्यत्तत इह वाच्यं न वाचकं लोके । न भवति यत्काव्याङ्गं सर्वज्ञत्वं ततोऽन्येषा ॥ अधिगतसकलज्ञेयः सुकवेः सुजनस्य संनिधौ नियतम् । नक्तंदिनमभ्यस्येदभियुक्तः शक्तिमान्काव्यम् ॥' इति । अयमेवाशयः 'शक्तिर्निपुणता—' इति श्लोकेन निबद्धो राजानकमम्मटैः ॥

2. 'भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः ॥' इति तदर्थसंग्रहः । गोमान्, कुष्ठी, रूपवान्, क्षीरिणो वृक्षाः, उदरिणी कन्या, दण्डी, स्वस्तिमान्, इति क्रमेणोदाहरणानि ॥

१. 'तस्य विघ्नाभावद्वारा प्रारिप्सितपरिसमाप्तिः फलम् । अभावश्चात्र ध्वंसः प्रागभावश्च विवक्षणीयो योग्यत्वात् । अत्यन्ताभावस्य ध्वंसप्रागभावाभ्यां सह विरोधेन विघ्नात्यन्ताभावस्य जन्तुमात्रेऽसंभवात् सदातनसंसर्गाभावरूपस्य तस्य व्यापारत्वाभावाच्च । न च प्रागभावस्य जन्यत्वाभावात्कथं व्यापारत्वमङ्गीकृतमिति वाच्यम् । कार्यनाश्यस्य तस्य कालान्तरसंबन्धस्येष्टसाधनत्वेन व्यापारत्वाङ्गीकारात् कालान्तरसंबन्धस्य जन्यत्वस्य संभवात् । अन्यथा विघ्नरूपकार्येण तत्प्रागभावस्य नाशे इष्टसमाप्तिर्न स्यात् ॥' इति मुद्रितेऽधिकः पाठः-

चतुर्वर्गफलप्राप्तिर्हि काव्यतो 'रामादिवत्प्रवर्तितव्यं न रावणादिवत्' इत्यादिकृत्याकृत्यप्रवृत्तिनिवृत्त्युपदेशद्वारेण सुप्रतीतैव।

उक्तं च (भामहेन)

'धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च।

करोति कीर्तिं प्रीतिं च साधुकाव्यनिषेवणम्॥' इति।

किंच। काव्याद्धर्मप्राप्तिर्भगवन्नारायणचरणारविन्दस्तवादिना। 'एकः शब्दः सुप्रयुक्तः सम्यग्ज्ञातः[2] स्वर्गे लोके कामधुग्भवति' इत्यादिवेदवाक्येभ्यश्च सुप्रसिद्धैव। अर्थप्राप्तिश्च[3] प्रत्यक्षसिद्धा। कामप्राप्तिश्चार्थ-

---

यासात्। **अल्पधियां** सुकुमारमतीनाम्। अपिना परिणतबुद्धीनां च। एवकारेण वेदशास्त्रव्यवच्छेदः। 'यतः' इति 'काव्यात्' इत्यस्य विशेषणम्। एवं च प्राचीनसंमतं नीरसकाव्यं चतुर्वर्गासाधनत्वान्न निरूपणीयमिति फलितम्। **तेनायासं** विना चतुर्वर्गसाधनत्वेन। तस्य काव्यस्य, **स्वरूपमिति** स्वमसाधारणं रूपमितरव्यावर्तको धर्मः। लक्षणमित्यर्थः। **निरूप्यते** ज्ञाप्यते॥ काव्यस्य चतुर्वर्गसाधनत्वमुपपादयति—**चतुर्वर्गफलप्राप्तिर्हीति**। **रामादिवत्**। रामादिनेव चतुर्वर्गकामेन पित्राज्ञापरिपालनादौ प्रवर्तितव्यम्। **न रावणादिवदिति**। रावणादिनेव परदारहरणादौ न प्रवर्तितव्यमित्यर्थः। **कृत्यं** विहितं कर्म, **अकृत्यं** निषिद्धं कर्म, तयोः **प्रवृत्तिनिवृत्ती** यत्नविशेषौ तयोरुपदेशस्तज्जनकं ज्ञानं स एव **द्वारं** व्यापारस्तेन। तथाहि—काव्याद्विहितकर्मणि कर्तव्यताज्ञानं ततस्तत्र प्रवृत्तिस्ततस्तदनुष्ठानं ततो धर्मस्तस्मादर्थकामौ। 'धर्मादर्थश्च कामश्च' इति स्मरणात्। विहितकर्मफलत्यागान्निषिद्धाननुष्ठानाच्च मोक्षः। 'युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम्' इति स्मरणात्। 'व्यापारेण व्यापारिणो नान्यथासिद्धिः' इति न्यायेन काव्यस्य धर्मादिजनकत्वमिति भावः॥ अत्र प्राचीनानां संवादमाह—**उक्तं चेति**। धर्मार्थकाममोक्षेषु तदुपायेषु वैचक्षण्यं विशिष्टज्ञानं कलासु नृत्यगीतादिचतुःषष्टिप्रकारासु। साधुकाव्यस्य निषेवणं करणं ज्ञानं च॥ ननु काव्यं कर्तव्यत्वाकर्तव्यत्वज्ञानद्वारा कृत्याकृत्यप्रवृत्तिनिवृत्ती प्रति कारणमास्तां धर्मादिं प्रति त्वन्यथासिद्धमेव, इत्यत आह—**किंचेति**। 'काव्यात्' इति प्राप्त्यन्तपदचतुष्टयेऽन्वेति। **स्तवो** गुणज्ञापनम्। आदिना विष्णुजन्मादिज्ञापनं तद्द्वारेत्यर्थः॥ एवं च काव्यान्तरमफलमत आह—**एक इति**। एकोऽपीत्यर्थः। सुप्रयुक्तो रसवत्तया रचितः सम्यक् ताद्रूप्येण ज्ञातः। अत्र वाकारो बोध्यः। **इत्यादि(वेद)वाक्येभ्यः** इत्यादिश्रुत्यादिभ्यः। सत्काव्यकृतिज्ञप्त्योरन्यतरस्य धर्मसाधनत्वं श्रौतमिति भावः॥ **प्रत्यक्षसिद्धेति**। धनिस्तवादिना कवीनां धनप्राप्तिर्लोके प्रसिद्धैवेत्यर्थः। **कामप्राप्तिश्चेति**। काम्यते, कामो विषयभोगः। 'धर्मादर्थस्ततः कामः कामात्सुखसमुन्नतिः' इति स्मर-

---

१. 'चतु—' इत्यादिः 'सुप्रतीतैव' इत्यन्तः पाठो ग-पुस्तके नास्ति. २. 'सुज्ञातः' ग. ३. 'अर्थप्राप्तिः' क-ख-ग.

द्वारैव[1] । मोक्षप्राप्तिश्चैतज्जन्यधर्मफलाननुसंधानात्, मोक्षोपयोगिवाक्ये व्युत्पत्त्याधायकत्वाच्च । चतुर्वर्गप्राप्तिर्हि वेदशास्त्रेभ्यो नीरसतया दुःखादेव परिणतबुद्धीनामेव जायते । परमानन्दसंदोहजनकतया सुखादेव सुकुमारबुद्धीनामपि पुनः काव्यादेव ।

ननु तर्हि परिणतबुद्धिभिः सत्सु वेदशास्त्रेषु [2]किमिति काव्ये यत्नः करणीय इत्यपि न वक्तव्यम् । कटुकौषधोपशमनीयस्य रोगस्य सितशर्करोपशमनीयत्वे कस्य वा रोगिणः सितशर्कराप्रवृत्तिः साधीयसी न स्यात् ।

किंच । काव्यस्योपादेयत्वमग्निपुराणेऽप्युक्तम्—

'नरत्वं दुर्लभं लोके विद्या तत्र सुदुर्लभा ।
कवित्वं दुर्लभं तत्र शक्तिस्तत्र सुदुर्लभा ॥'

---

णात् । **एतज्जन्येति** । काव्यजन्येत्यर्थः । धर्मफलस्याननुसंधानादेव तदधीनोत्पत्तिकयोरर्थकामयोरुत्पत्तिसंभावनैव नास्तीति तयोरनुपादानम् । यद्वा । धर्मप्रधानं फलं धर्मफलं तेनार्थकामयोरपि संग्रहः । अननुसंधानात् अपारमार्थिकत्वेन साध्यत्वानिर्धारणात्, मोक्षोपयोगिवाक्यमुपनिषदादिस्तत्र व्युत्पत्त्याधायकत्वात् दृढतरज्ञानजनकत्वात् ॥ ननु काव्यादुपनिषदादिव्युत्पत्तिस्ततस्तदर्थानुष्ठानं ततो मोक्षप्राप्तिरित्यन्यथासिद्धितादवस्थ्यमेवेति चेत् । सत्यम् । उपनिषदादिज्ञानादपि मोक्षप्राप्तिरित्यभिप्रायेणास्योत्थापनात्, 'काव्यादेव' इत्येवकारव्यवच्छेद्यं दर्शयति—**चतुर्वर्गेति** । वेदा ऋग्यजुःसामाथर्वाख्याः । शास्त्राणि मीमांसादीनि । **दुःखादेवेति** सुखव्यवच्छेदः । परिणतबुद्धीनां वेदादिभ्यो धर्मादिप्राप्तिः सुखाच्च भवति । सुकुमारमतीनां तु दुःखादपि न भवतीति भावः । **परमानन्दसंदोहो** रसास्वादसुखपरम्परा । अपिना परिणतबुद्धिसमुच्चयः । तथा च रसास्वादार्थमपि प्रवर्तमानस्य कृत्याकृत्योपदेशपर्यवसन्नं सत् काव्यं चतुर्वर्गमपि जनयतीति भावः ॥ ननु चतुर्वर्गार्थं प्रेक्षावन्तो वेदशास्त्राण्यनादृत्य कथमनाप्तवाक्ये काव्ये प्रवर्तन्तामित्यभिप्रायेणाशङ्कते—**नन्विति** । तर्हि काव्यस्य चतुर्वर्गसाधनत्वस्वीकारेऽपि । **यत्नश्चतुर्वर्गार्थमुद्यमः** । काव्यात्तावद्रसास्वादो दुःखं विना धर्मादिप्राप्तिश्च भवति । वेदादिभ्यस्तु दुःखादेव धर्मादिप्राप्तिरेवेति वेदाद्यपेक्षया काव्ये समादर इति समाधानं लौकिकदृष्टान्तेनाह—**कटुकौषधेति** । कटुकेति तिक्तकषायादीनामप्युपलक्षणम् । **सितशर्करा** अतिशुभ्रगुडविकारविशेषः । तथा च काव्यस्यानाप्तवाक्यत्वेऽपि स्मृतिसदाचारवद्वेदानुमापकत्वेन प्रामाण्यमिति भावः ॥ काव्यस्य युक्तिसिद्धमुपादेयत्वमुपपाद्य वाचनिकं तदुपपादयति—**किंचेति** । तत्र नरजन्मनि **शक्तिः** काव्य-

---

१. 'द्वारेणैव' क. २. 'काव्येषु किमिति प्रयत्नः' घ.

'त्रिवर्गसाधनं नाट्यम्' इति च । विष्णुपुराणेऽपि[1]—

'काव्यालापाश्च ये केचिद्गीतकान्यखिलानि च ।

शब्दमूर्तिधरस्यैते विष्णोरंशा महात्मनः ॥' इति ।

तेन[2] हेतुना तस्य काव्यस्य स्वरूपं निरूप्यते । एतेनाभिधेयं च प्रदर्शितम् । तत्किंस्वरूपं तावत्[3]काव्यमित्यपेक्षायां कश्चिदाह[4]—'तददोषौ शब्दार्थौ

---

कृतिज्ञस्यन्यतरजनकः संस्कारविशेषः ॥ त्रिवर्गो धर्मार्थकामाः । नाट्यमभिनयप्रधानं नाटकादि ॥ काव्यालापा इति । रसव्यञ्जकाः शब्दार्था इत्यर्थः ॥ कारिकास्थं 'तेन—' इत्यादि व्याख्यायते—तेनेत्यादि । एतेन 'चतुर्वर्गफलप्राप्ति–' इत्यादिश्लोकेन । अभिधेयं चेति । चकारेण प्रयोजनसंबन्धयोर्लाभः । संबन्धश्चात्र प्रयोजनाभिधेययोः कार्यकारणभावरूपः ॥ कश्चिदिति[2] । काव्यप्रकाशधृतकारिकाकार इत्यर्थः । तदिति । काव्यमित्यर्थः । शब्दार्थाविति । विनिगमनाविरहेण उपस्थापकत्वसंबन्धेनार्थविशिष्टः शब्दः । उपस्थाप्यत्वसंबन्धेन शब्दविशिष्टश्चार्थः काव्यमित्यर्थः । अत्र[5] शब्दार्थयोर्विशेषणविशेष्यभावे व्यञ्जकत्वाव्यञ्जकत्वाभ्यां वैचित्र्यविशेषरूपालंकारप्रयोजकत्वाप्रयोजकत्वाभ्यां प्रधानाप्रधानभावो नियामकः । न च यत्रोभयोर्व्यञ्जकत्वं वैचित्र्यविशेषाधायकत्वं वा तत्र का गतिरिति वाच्यम् । बाहुल्येन व्यञ्जकत्वेन चमत्कारातिशयाधायकत्वेन वा तत्र व्यवहारोपपत्तेः । नच तथापि यत्र व्यञ्जकयोर्वैचित्र्यविशेषप्रयोजकयोर्वा तुल्यत्वं तत्र व्यवहारानुपपत्ति-

---

1. स्वरूपमिति । वस्तुतो मन्त्रस्येव काव्यस्य तद्विदां व्यवहारमन्तरेण किमपि निर्दुष्टं लक्षणं नास्ति । ततः सुन्दोपसुन्दन्यायेन सर्वाणि लक्षणानि खण्डितानि भवन्ति । ग्रन्थकारैरपि महत्या आरभट्या यल्लक्षणं स्थिरीकृतं तदपि लक्ष्यासंग्राहकत्वेन परैः खण्डितमेव । तदेतद् यथावसरं निरीक्षणीयम् । एवं यदधिकलक्ष्यसंग्राहकं तदेव लक्षणं व्यवहार्यम् । तादृक् शब्दार्थावेव । उक्तं चाचार्यरुद्रटेन 'ननु शब्दार्थौ काव्यं–' इत्यादि । तत्र शब्दार्थयोः परिष्कारका गुणालंकारादयो द्रष्टव्याः । एतदादि पर्यालोच्यैव 'कविकर्म काव्यमाहुस्तच्छब्दार्थौ वगाहते स्पष्टम् । तावपि लक्ष्याभिमतावित्युक्तः शास्त्रसद्भावः ॥' इति निबद्धम् । इह आत्मत्वव्यपदेशोऽर्थभागस्यैव वास्तविकः, सारभूतत्वात् । अन्यस्य तु औपचारिक इत्यपि बोद्धव्यम् ॥

2. काव्यप्रकाशेति । वृत्तिकार एव कारिकाकारः । तथाहि—'माला तु पूर्ववत्' इति काव्यप्रकाशकारिकायां 'पूर्ववत्' इति कथनेन वृत्तिकारकारिकाकारयोरेकत्वमेव वृत्तिमात्रप्रदर्शितमालोपमायाः 'पूर्ववत्' इति दृष्टान्ततयोपन्यासः संगच्छते । 'मालोपमा वृत्तौ लक्षिता कारिकायां तु सा दृष्टान्तीकृतेति वृत्तिकृत्कारिकाकृतोरैक्यं स्वयमेव राजानकमम्मटैः सूचितम् ॥' इति सुधासागरे भीमसेनदीक्षिता अपि वदन्ति ॥

---

१. 'च' क-ख; 'अपि' इति घ-पुस्तके नास्ति. २. 'तेन—' इत्यादिः 'पुनः क्वापि; इति' इत्यन्तः पाठो ग-पुस्तके नास्ति. ३. 'तावत्' ग-पुस्तके नास्ति. ४. 'आह' क-ख-घ-पुस्तकेषु नास्ति. ५. 'अत्र शब्दार्थयोः—' इत्यादिः 'विशेष्यत्वोपगमात्' इत्यन्तः पाठः पुस्तकान्तरे नास्ति.

सगुणावनलंकृती पुनः क्वापि' इति । एतच्चिन्त्यम् । तथाहि—यदि दोषरहितस्यैव काव्यत्वं तदा—

> 'न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः
> सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावणः ।
> धिग्धिक्छक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा
> स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः ॥' इति ।

अस्य श्लोकस्य विधेयाविमर्श[1]दोषदुष्टतया काव्यत्वं न स्यात् ।

---

रीति वाच्यम् । प्रथमोपस्थितिविषयत्वेन शब्दस्यैव प्राधान्याद् विशेष्यत्वोपगमात् । 'काव्यत्वं शब्दार्थोभयपर्याप्तम्' इति कश्चित् । तन्न । तथा सति शब्दमात्रस्य प्रत्यक्षे 'काव्यं शृणोमि' इति प्रतीतिसाक्षिकं काव्यत्वप्रत्यक्षं न स्यात् । व्यासज्यवृत्तिधर्मस्य लौकिकप्रत्यक्षे यावदाश्रयप्रत्यक्षस्य कारणत्वात् । **सगुणौ** माधुर्यौजःप्रसादगुणविशिष्टौ । **अनलंकृती इति** । ईषदर्थे नञ् । अस्फुटालंकाराविस्यर्थः । **क्वापीति** । प्रायेण स्फुटालंकारसद्भावे काव्यत्वम्, क्वचित्स्फुटालंकारविरहेऽपि । एतेन सर्वत्रैवालंकारसद्भावः सूचितः । अलंकाराश्च यमकोपमादयः । **चिन्त्यमिति** । दूष्यमित्यर्थः । दोषमुपपादयति—**तथाहीति** । **काव्यत्वमिति** । अङ्गीकरोषि इति शेषः । क्वचित् 'काव्यत्वाङ्गीकारः' इत्येव पाठः ॥ **न्यक्कार इति** । श्रीरामे राक्षसान्नाशयति सति रावणस्य स्वकीयभर्त्सनमिदम् । मम यदरयोऽयमेव न्यक्कारः । विनाशितप्रभूतारेररिसत्त्वस्यैवानादरातिशयप्रतिपादनाय न्यक्कारत्वेनारोपणम् तत्रापि तेषु सत्स्वपि, असौ राम एकस्तापसः, तपस्विभक्षकस्य ममारिरयमपि न्यक्कारः । द्वेषातिशयाद्रामस्यादःपदेनैव निर्देशः, न तु नाम्ना । सोऽपि तथाविधोऽपि अत्रैव लङ्कायामेव, न तु दूरे, राक्षसकुलं निहन्ति, न तु लुक्कायितः क्वापि तिष्ठति । द्वित्रराक्षसहनने कदाचित्क्षमः स्यात्तन्न, कुलं समूहम् । **प्रबोधितवता** प्रबुद्धेन । 'बुधिर् बोधने' इत्यस्य भौवादिकस्य रूपम् । न तु 'बुध अवगमने' इत्यस्य दैवादिकस्य । तस्यानिदत्वात् । यद्वा । प्रबोधितं प्रबोधनं तद्वता । जागरितेनेत्यर्थः । एतादृशपराभवेऽपि रावणो जीवतीत्याश्चर्यम् । अत्यन्तशत्रुपराभवकारित्वसूचनाय रावण इत्यनेनात्मन उत्कीर्तनम् । **ग्रामटिका** क्षुद्रग्रामः तस्या विलुण्ठनेन वृथोच्छूनैः व्यर्थमुद्रिक्तविक्रमैः ॥ अत्र विधेयस्य न्यक्कारस्य रचनावैपरीत्येन गुणीभूतत्वमिति, 'स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः' इत्यत्र वृथात्वं विधेयं तच्च समासे गुणीभा-

---

1. **विधेयेति** । विधेयाविमर्शः, अयमेवाविमृष्टविधेयांश इति च कथ्यते । प्रकृते अयंपदस्योद्देश्यतया विवक्षितस्य विधेयता, न्यक्कारपदस्य विधेयतया विवक्षितस्योद्देश्यता

---

१. 'काव्यत्वाङ्गीकारः' क-ख-ग-घ. २. 'इति' क-ख-घ. पुस्तकेषु नास्ति. ३. 'संनिकर्षस्य' इति मुद्रिते. ४. 'न तु नाम्ना' इति पुस्तकान्तरे नास्ति. ५. 'वृथात्वस्य समासे गुणीभावो विधेयाविमर्शः' इति मुद्रिते. ६. 'स्वर्गग्राम–' इत्यादिः 'विधेयाविमर्शः' इत्यन्तः पाठो मुद्रितपुस्तके नास्ति.

प्रत्युत ध्वनि(स)त्त्वेनो[1]त्तमकाव्यतास्याङ्गीकृता । तस्मादव्याप्तिर्लक्षण-दोषः । ननु कश्चिदेवांशोऽत्र दुष्टो न पुनः सर्व एवेति चेत्, तर्हि यत्रांशे दोषः सोऽकाव्यत्वप्रयोजकः यत्र ध्वनिः स उत्तमकाव्यत्वप्रयो-

---

वादनुवाद्यप्रतीतिकृदिति च द्विरूपो विधेयाविमर्शः । अत्रेष्टापत्तौ दोषमाह—**प्रत्युतेति** । अयं निपातसमुदायो विपरीतार्थकः । **ध्वनिसत्त्वेन** ईर्ष्या-जन्यस्वावमाननरूपनिर्वेदाख्यभावध्वनिसंभवेन । **अस्य** 'न्यक्कारः–' इत्यादिवाक्य-समुदायस्य । **अङ्गीकृतेति** । 'इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद्ध्वनिर्बुधैः कथितः' इति वदता स्वयमेव स्वीकृतेत्यर्थः । **तस्मादुक्तदोषसत्त्वेऽपि** काव्यत्व-स्वीकाराल्लक्षणदोषः दोषाभावघटितनिरुक्तकाव्यलक्षणदोषः । ननु विधेयाविमर्श-दोषस्यात्रदांशिकस्तेन सर्वं काव्यं न दुष्टं निर्दोषस्यैव गुणालंकारसद्भावे काव्यत्वमित्य-भिप्रायेणाशङ्कते—**नन्विति** । अत्र 'न्यक्कारः–' इत्यादिवाक्ये सर्वोऽपीति समु-दायोऽपीत्यर्थः । **यत्र ध्वनिरिति** । 'अरयः' इति बहुवचने 'अत्रैव' इति सर्वं-

---

च दोषमुद्घोषयति । तथा चोक्तं व्यक्तिविवेककारैः—'अनुवाद्यमनुक्त्वैव न विधेयमुदीर-येत् । न ह्यलब्धास्पदं किंचित्कुत्रचित्प्रतितिष्ठति ॥ विधेयोद्देश्यभावोऽयं रूप्यरूपकतात्मकः । नच तत्र विधेयोक्तिरुद्देश्यात्पूर्वमिष्यते ॥' इति न्यायेनोद्देश्यविधेययोः पौर्वापर्यस्य निय-म्रितत्वात् । अत एव 'पर्वतो वह्निमान्' इत्येवाभिधीयते, न तु विपर्यासेन । तथा उच्छून-त्वमुद्दिश्य विधीयमानं वृथात्वं समासे गुणीकृतम् । एवं च 'न्यक्कारः', 'अयं' इत्येतयोः पदयोर्विपर्ययो वाक्यदोषः । '–वृथोच्छूनैः' इत्यत्र समासगतत्वेन पददोषो नतु वाक्यदोषः ॥

1. अङ्गीकृतेति । ध्वन्यालोके आनन्दवर्धनाचार्यैरिति शेषः । तथाहि—'सुप्तिङ्-वचनसंबन्धैस्तथा कारकशक्तिभिः । कृत्तद्धितसमासैश्च द्योत्योऽलक्ष्यक्रमः क्वचित् ॥' इति ध्वनिकारिका "अलक्ष्यक्रमो ध्वनेरात्मा रसादिभिः सुब्विशेषैस्तिङ्विशेषैर्वचन-विशेषैः संबन्धविशेषैः कारकशक्तिभिः कृद्विशेषैस्तद्धितविशेषैः समासैश्चेति चशब्दान्नि-पातोपसर्गकालादिभिः प्रयुक्तैरभिव्यज्यमानो दृश्यते । यथा—'न्यक्कारः—' इति । अत्र हि श्लोके भूयसा सर्वेषामप्येषां स्फुटमेव व्यञ्जकत्वं दृश्यते । तत्र 'मे यदरयः' इत्यनेन सुप्संबन्धवचनानामभिव्यञ्जकत्वम् । 'तत्राप्यसौ तापसः' इत्यत्र तद्धितनि-पातयोः । 'सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावणः' इत्यत्र तिङ्कारकशक्ती-नाम् । 'धिग्धिक्छक्रजितं–' इत्यादौ श्लोकार्धे कृत्तद्धितसमासोपसर्गाणाम् । एवंविधस्य व्यञ्जकभूयस्त्वे च घटमाने काव्यस्य सर्वातिशायिनी बन्धच्छाया समुन्मीलति । यत्र हि व्यङ्ग्यावभासिनः पदस्यैकस्यैव तावदाविर्भावस्तत्रापि काव्ये कापि बन्धच्छाया, किमुत यत्र तेषां बहूनां समवायः । यथात्रान्तरोदितश्लोके । अत्र हि रावण इत्य-स्मिन्पदेऽर्थान्तरसंक्रमितवाच्येन ध्वनिप्रभेदेनालंकृतेऽपि पुनरनन्तरोक्तानां व्यञ्जकप्रकारा-णामुद्भासनम् ।" इत्यालोकः ॥

---

१. 'निपातनमेतद्विपरीतार्थम् । ध्वनिसत्त्वे वक्ष्यमाणपदांशगतासंलक्ष्यक्रमव्यङ्ग्यरूपध्वनिसत्त्वे' इति पुस्तकान्तरे. २. 'लक्षणस्य निरुक्तकाव्यलक्षणस्य दोष इतरेतरभेदानुमानेऽसाधकत्वप्रयोजक' इति मुद्रिते. ३. 'अरयः' इति–इत्यादिः 'ध्वनिर्वेदितव्यः' इत्यन्तः पाठः मुद्रिते नास्ति.

जक इत्यंशाभ्यामुभयत आकृष्यमाणमिदं काव्यमकाव्यं वा किमपि न स्यात् । न[1] च कंचिदेवांशं काव्यस्य दूषयन्तः श्रुतिदुष्टादयो दोषाः, किं[2] तर्हि सर्वमेव काव्यम् । तथाहि—काव्यात्मभूतस्य रसस्यानपकर्षकत्वे

---

नाम्नि 'निहन्ति' इति तिङि 'अहो' इत्यव्यये 'ग्रामटिका' इति करूपतद्धिते 'विलुण्ठन' इत्युपसर्गे 'भुजैः' इति बहुवचने च यथायथं ध्वनिर्वेदितव्यः । यद्यपि निरुक्तध्वनेः समुदायवाक्यार्थव्यङ्ग्यत्वेनांशिकत्वं न संभवति, तथापि ध्वनिप्रकरणे वक्ष्यमाणानां तत्परिपोषकाणां पदांशध्वनीनामांशिकत्वाभिप्रायेणेदम् । नन्वयमेव न्यक्कार इति न्यक्कारस्य विधेयत्वं विवक्षितं तच्च शब्दरचनावैपरीत्येन गुणीभूतं रचना च पदद्वयस्यापि विपरीतेति वाक्यदोष इति वक्ष्यमाणानुसरणेनाविमर्शविधेयान्तरस्य वाक्यदोषस्यात्र सत्त्वाद्यत्रांशे दोष इत्यसंगतमिति चेत् । न । वाक्यसमुदायस्यास्य एकवाक्यस्य दुष्टत्वेऽपि निर्दोषवाक्यान्तरसंभवात् । **अंशाभ्यां** दुष्टादुष्टभागाभ्या**मुभयतः** काव्यत्वाकाव्यत्वाभ्या**माकृष्य**माणं व्यावर्त्यमानमिदं 'न्यक्कारः–' इत्यादिवाक्यं **किमपि** एकतरत् । अत्रापदा ईर्ष्यया वा उद्दीपितं 'जीवत्यहो रावणः–' इत्यादिना व्यज्यमानेन स्वानौजस्यरूपदैन्येनानुभावेन संवर्तितं स्वावमाननं निर्वेदाख्यभावरूपोऽसंलक्ष्यक्रमव्यङ्ग्यो ध्वनिः । वक्ष्यमाणाः पदांशव्यङ्ग्यास्तस्यैव परिपोषका इत्यवधेयम् । न[3]न्वदोषावित्यनेनांशिकदोषातिरिक्तदोषाभाववन्ताविति विवक्षणीयमित्यत आह—**न चेति** । श्रु[4]तिकट्वादय इत्यादिपदाद्विधेयाविमर्शादेः परिग्रहः । यद्येवं तर्हि किं दूषयन्तो दोषाः स्युरत्राह—**सर्वमिति** । परम्परया रसदूषकत्वेनैव तेषां सर्वदूषकत्वमव्याहतमेवेत्यभिप्रायः । श्रुतिकट्वादीनां परम्परया रसदूषकत्वमङ्गीकारयन्नांशिकत्वाभावमुपपादयति—**तथाहीति** । अन-

---

1. न चेत्यादि । यदि सर्वत्र दोषः काव्यस्य सर्वमेवांशं दूषयन्नकाव्यत्वमेवोत्पादयेत्तर्हि 'तुरङ्गकान्तामुखहव्यवाहज्वालेव' इत्यत्र वडवाग्निज्वालारूपस्यार्थस्य विप्रकृष्टतया भानात्क्लिष्टाख्यार्थदोषापत्तिः । एवं चात्र काव्यत्वं न स्यात् । परं समुद्रान्तर्लीनायां वडवानलज्वालायां कदाचित्संभाव्यमानस्य मध्योल्लसनस्य पुरि दर्शनाभेदाध्यवसायेनास्या ज्वालात्वोत्प्रेक्षणात्को नामास्य काव्यत्वं निवारयितुमीष्टे ॥

---

१. 'दूषयन्ति' ग. २. 'अपि तु' ग. ३. 'काव्यत्वव्यवस्थापनव्यग्रधीराह—' इति मुद्रितपाठः. ४. 'श्रुतिकट्वादय इति' इति पुस्तकान्तरे नास्ति. ५. 'सर्वदूषकत्वेनैव तेषां दोषत्वमित्यभिप्रायः । अपसिद्धान्तविलसितमिदमनादृत्य सोल्लुण्ठनं पृच्छति–किं तर्हीति । तदा किमुपपन्नमित्यर्थः । उत्तरमाह–सर्वमिति । न्यक्कार इत्यादिवाक्यं निर्दोषत्वात्सर्वमेव काव्यं वृत्तं नत्वेकदेश इति । एतन्मतं दूषयति–तथाहीति । तथा सतीत्यर्थः । यद्वा वादिनो मतं दूषयितुं तद्भावार्थं विवृणोति–किं तर्हीति । किमिति प्रश्ने । तर्हि दुःश्रवत्वादीनां प्रादेशिकत्वेन दोषत्वानङ्गीकारे सर्वं काव्यं दूषयन्तः श्रुतिकट्वादयो दोषा इत्यर्थः । 'अप्रतिषिद्धं परवचनं संमतम्' इति न्यायेनास्मिन्नर्थे वादिनः संमतिमुन्नीय तन्मतं दूषयति–तथाहीति । काव्यात्मभूतस्येति । तेषां श्रुतिकट्वादीनाम् । नाङ्गीक्रियते 'भवता' इति शेषः । रसव्यञ्जकशब्दार्थसमुदायस्य काव्यत्वमवश्यं वाच्यं श्रुतिकट्वादीनां शब्दमात्रदूषकत्वेन रसव्यञ्जकशब्दार्थसमुदायादूषकत्वमित्यभिप्रायः ।' इति व्याख्यान्तरायमाणः पाठो मुद्रितपुस्तके पुस्तकान्तरे च.

तेषां दोषत्वमपि नाङ्गीक्रियते । अन्यथा नित्यदोषानित्यदोषत्वव्यवस्थापि न स्यात् । यदुक्तं ध्वनिकृता—

'श्रुतिदुष्टादयो दोषा अनित्या ये च दर्शिताः ।
ध्वन्यात्मन्येव शृङ्गारे ते हेया इत्युदाहृताः ॥' इति ।

किंच । एवं काव्यं प्रविरलविषयं निर्विषयं वा स्यात्, सर्वथा निर्दोषस्यैकान्तमसंभवात् ।

---

पकर्षकत्वे अनपकर्षकत्वाङ्गीकारे । **तेषां** श्रुतिकट्वादीनाम् । **नाङ्गीक्रियते** । 'युष्माभिः' इति शेषः । 'रसापकर्षका दोषाः–' इति दोषसामान्यलक्षणायोगादिति भावः । अत्रेष्टापत्तौ दोषमाह—**अन्यथेति** । विपरीतमताङ्गीकारे इत्यर्थः । अत्रेष्टापत्तौ प्राचीनमतविरोधं दर्शयति—**यदुक्तमिति** । **अनित्या इति** । तेषां क्वचिद्दोषत्वात् क्वचिद्गुणत्वाच्चानित्यदोषत्वं तच्च दोषपरिच्छेदे व्यक्तीभविष्यति । ध्वनिर्व्यञ्जकः शब्दो व्यज्यमानो वार्थं आत्मा शरीरं यस्य तस्मिन् शृङ्गारे एव ते हेया वर्जनीया इत्यन्वयः । एवं च श्रुतिकट्वादीनां शृङ्गारमात्रे व्यङ्ग्ये दोषत्वं न तु कोपादिमिश्रिते शृङ्गारे । तत्र दुःश्रवत्वादेर्गुणत्वादिति । नैनु सदोषवाक्यानां ध्वनिसत्त्वेऽपि काव्यत्वं नाङ्गीकरणीयमिति कथमुक्ताव्याप्त्यवसर इत्यत आह—**किंचेति** । एँवं सदोषवाक्यानां ध्वनिसत्त्वेऽपि काव्यत्वानङ्गीकारे भवदुक्त-

---

1. नाङ्गीक्रियत इति । क्वचिद्रसे भासमानेऽपि दोषत्वमङ्गीक्रियत एव । यथा भगवद्भर्तृहरिसंकलितवैराग्यशतकस्य 'अहौ वा हारे वा कुसुमशयने वा दृषदि वा—' इति श्लोके मिथ्यात्वेन परिभाव्यमानं जगदालम्बनम्, तपोवनादिकमुद्दीपनम्, सर्पहाराद्योः समदर्शनमनुभावः, मतिधृतिहर्षा व्यभिचारिभावः, निर्वेदः स्थायिभावः, एवं शान्तरसनिष्पत्तौ सत्यामपि 'क्वचित्पुण्यारण्ये' इति यदभिहितं तद्विकल्पप्रतिपादकमभेदवासनाविरुद्धमनुचितमवभासते । धारारूढसर्वसाम्यविगलितभेदाभिमानग्रन्थेर्हि सर्वत्र सर्वं शिवमयं पश्यतस्तपोवने नगरावस्करकूटे च विमलात्मलाभतृप्ततया समानदृशः क्वचित् पुण्यारण्यादिवचनमनुचितोच्चारणमेव । उक्तं च—'अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम् । प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत्परा ॥' इति ॥

2. श्रुतीति । श्रुतिदुष्टाः । यथा—अधाक्षीत्, अताप्सीत्, अजघर्त् । अर्थदुष्टा वाक्यार्थबलादश्लीलार्थप्रतिपत्तिकारिणः । यथा—'छिद्रान्वेषी महान्स्तब्धो घातायैवोपसर्पति ।' कल्पनादुष्टा द्वयोः पदयोः कल्पना । यथा—'ववुरिन्दीवरश्रेणिवान्धवाः–' इत्यादौ । 'शृङ्गार' इत्युचितरसोपलक्षणार्थम् । वीरशान्ताद्भुतादावपि तेषां 'वर्जनात्' इति लोचनकाराः ॥

---

१. 'उक्तं हि' ग. २. 'दुःश्रवत्वादीनाम्' इति मुद्रितपाठः. ३. 'नन्वदोषावित्यनेन दोषरहितावेव शब्दार्थौ लक्ष्याविलयत आह'—इति पुस्तकान्तरे पाठः. ४. 'एवं काव्यलक्षणेऽदोषत्वविशेषणसत्त्वे काव्यत्वं प्रविरलविषयं स्वल्पविषयम्' इति पुस्तकान्तरे पाठः.

नन्वीषदर्थे नञः प्रयोग इति चेत्तर्हि 'ईषद्दोषौ शब्दार्थौ काव्यम्' इत्युक्ते निर्दोषयोः काव्यत्वं न स्यात् । सति संभवे 'ईषद्दोषौ' इति चेत्, एतदपि काव्यलक्षणे न [1]वाच्यम्, रत्नादिलक्षणे कीटानुवेधादिपरिहारवत् । नहि कीटानुवेधादयो रत्नस्य रत्नत्वं व्याहन्तुमीशाः, किंतूपादेयतारतम्यमेव कर्तुम् । [2]तद्वदत्र श्रुतिदुष्टादयोऽपि काव्यस्य । उक्तं च—

---

काव्यलक्षणं **प्रविरलविषयं** स्वल्पलक्ष्यम् । अत्रेष्टापत्तावाह—**निर्विषयमिति** । [3]निर्लक्ष्यमित्यर्थः । **एकान्तमिति** । अत्यन्तमित्यर्थः । [4]काव्यमात्रे यस्य कस्यापि दोषस्य सद्भावादिति भावः । ननु यदि सर्वत्रैव दोषः संभवति तदा ईषद्दोषौ शब्दार्थौ काव्यमिति विवक्षणीयमित्यभिप्रायेण [5]शङ्कते—**नन्वीषदर्थे नञ इति** । 'अदोषावित्यत्र' इत्यादौ पूरणीयम् । यदि निपुणतरकविना निर्दोषं काव्यं रचयितुं शक्यते तदा तत्रातिव्याप्तिं दर्शयंस्तद्दूषयति—**तर्हीति** । नञ ईषदर्थत्वस्वीकारे इत्यर्थः । **सति संभवे इति** । दोषस्येत्यादि । एवं च सदोषाणां मध्ये ईषद्दोषावेव शब्दार्थौ काव्यमित्यर्थकरणे [6]बलवद्दोषरहितत्वं फलितम् । [7]तद्दूषयति—**एतदपीति** । बलवद्दोषरहितत्वमपीत्यर्थः । रत्नादीत्यादिपदेन सुवर्णादिग्रहणम् । कीटानुवेधादीत्यादिपदेन मलिनत्वादिपरिग्रहः । परिहारो रहितत्वम् । दृष्टान्तं विवृण्वन्प्रकृतमुपपादयति—**नहीति** । **रत्नस्य** रत्नादे **रत्नत्वं** रत्नादित्वं **व्याहन्तुं** व्यावर्तयितुम् । स्वव्यापकाभावप्रतियोगीकर्तुमिति यावत् । **ईशाः** समर्थाः । **उपादेयतार-**

---

1. नन्वित्यादि । आहोपुरुषिकामात्रमिदम् । दोषाभावसत्तायां तु काव्यता निर्बाधैवेति सदोषेऽतिप्रसक्तिवारणाय 'अदोषौ' इत्यभिहितम् । तत्र दोषात्यन्ताभावस्य दुरुपपादत्वात्काव्यत्वोपमर्दका ये प्रबलतरा दोषास्तद्रहितौ शब्दार्थौ काव्यमित्यर्थोऽल्पार्थकनञ्स्वारस्याल्लभ्यते । एवं च क्वचिदनित्यदोषसत्त्वेऽपि काव्यत्वमव्याहतमेवेत्यर्थांरसिद्धम् । अत एव 'निःशेषच्युतचन्दनं स्तनतटं–' इत्यादौ विधेयाविमर्शदोषसत्त्वेऽपि ध्वनिकाव्यता जागरूकैव । नहीषद्दोषावित्यनेन निर्दोषयोः काव्यत्वं व्यवच्छिद्यते सदोषयोर्वा लभ्यत इति केनापि सचेतसावधारयितुं पार्यते । निर्दोषयोः स्वतः काव्यत्वे सदोषयोर्लक्षणघटकासंभवत्वे कुत्रचिदीषद्दोषयोरेव तथात्वेन क्रोडीकरणात् । 'तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता । अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः ॥' इति नञर्थसंग्राहिका हरिकारिका । अब्राह्मणः, अपापम्, अनश्वः, अनुदरा कन्या, अपशवो वा अन्ये गोऽश्वेभ्यः, अधर्मः, इति तदुदाहरणानि । ब्राह्मणसदृशः, पापाभावः, अश्वभिन्नः, अल्पोदरा, गवाश्वेतरपशवोऽप्रशस्ताः, धर्मविरुद्धः, इति क्रमेणार्थाः ॥

---

१. 'न वाच्यम्' 'काव्यलक्षणं कीटानुवेधपरिहारवत' क. २. 'तथात्र' ख. ३. 'निर्लक्ष्यमित्यर्थः' इति क्वचिन्नास्ति. ४. 'काव्य–' इत्यादिः 'भावः' इत्यन्तः पाठो मुद्रितपुस्तके नास्ति. ५. 'आह' इति मुद्रितपाठः. ६. 'बलवद्दोषरहिताविल्यर्थः संपद्यते' इति मुद्रितपाठः. ७. 'एतत्' इति मुद्रितपाठः.

'कीटानुविद्धरत्नादिसाधारण्येन काव्यता ।
दुष्टेष्वपि मता [1]यत्र रसाद्यनुगमः स्फुटः ॥' इति ।

किंच । शब्दार्थयोः [2]सगुणत्वविशेषणमनुपपन्नम् । गुणानां रसै-

तम्यमुत्कृष्टाद्वैलक्षण्यम् । अपकर्षमिति यावत् । 'कर्तुम्' इति 'ईशाः' इत्यनेनान्वितम् । अत्रापि काव्ये वर्तमाना अपि काव्यस्य काव्यत्वं व्याहन्तुं नेशाः, किंतूपादेयतारतम्यमेव कर्तुमित्यनेनान्वयः । **साधारण्येन** सामान्येन । [3]ननु 'कन्ये कामयमानं मां न त्वं कामयसे कथम्' इत्यादेरपि काव्यत्वं स्यादित्यत आह—**यत्रेति**। **रसाद्यनुगमो** रसाद्युपलम्भः **स्फुटः** बलवद्दोषजन्यवैरस्यातिशयानभिभूतः । तथा च उक्तस्थले ग्राम्यत्वादिरूपबलवद्दोषजन्यवैरस्यातिशयग्रस्तत्वाद्रसोपलम्भस्य न काव्यत्वमिति भावः । 'अन्यत्र' इति पाठे अदुष्टेष्वित्यर्थः । **स्फुट इति**। दुष्टेषु यथा दोषोपलब्धिजन्यदुःखसंवलितस्तथा नेत्यर्थः । तथा चोक्ताव्याप्तितादवस्थ्यमेवात्र दोष इति भावः । केचित्तु "अदोषौ इति च्युतसंस्कृत्यभवन्मतयोगक्लिष्टत्वादयो ये शाब्दबोधविघटका दोषास्तत्सामान्याभाववन्तावित्यर्थः । एते रसबोधप्रतिबन्धकाः । दोषान्तरं तु काव्यापकर्षकम्" इत्याहुः । तन्न । [4]व्यतिरेकध्वनेरुदाहरणे 'धन्यासि या कथयसि प्रियसंगमेऽपि विश्रब्धचाटुकशतानि रतान्तरेषु। नीवीं प्रति प्रणिहिते तु करे प्रियेण सख्यः शपामि यदि किंचिदपि स्मरामि ॥' इत्यत्र '[3]शपामि' इति च्युतसंस्कृतिदोषसत्त्वात्, 'निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः' इत्यादावञ्जनस्यात्यन्तासत्त्वबोधाभिप्रायेण प्रयुक्तस्य 'दूरं' इत्यस्य समासे गुणीभूतेन नञर्थेन सहान्वयेनाभवन्मतयोगत्वदोषसत्त्वाच्चाव्याप्तेः ।[4] नन्वदोषाविति काव्यप्रशंसार्थमुक्तं न तु तल्लक्षणघटकमिति कथमुक्ताव्याप्त्यवसर इत्यतो दोषान्तरमाह—**किंचेति । तेनैव**

1. **सगुणत्वमिति** । अत्रेदमाकूतम्—निर्गुणेऽतिव्याप्तिवारणाय सगुणावित्युक्तम्। गुणानां रसैकनिष्ठत्वेऽपि परम्परया तदभिव्यञ्जकशब्दार्थनिष्ठत्वमिति भावः । अत एवाष्टमोल्लासे 'गुणवृत्त्या पुनस्तेषां वृत्तिः शब्दार्थयोर्मता' इत्यभिहितम् । तथा सत्येव मधुरः शब्दः मधुरोऽर्थं इत्यादिव्यवहारः संगच्छते ॥

2. काव्यप्रकाशे चतुर्थोल्लासे ॥

3. 'शप उपालम्भे' इति वार्तिकेनात्मनेपदं प्राप्नोति ॥

१. 'अन्यत्र' ख. २. 'इति' ग-पुस्तके नास्ति. ३. 'ननु कन्ये' इत्यादिः 'अदुष्टेष्वित्यर्थः' इत्यन्तः पाठः पुस्तकान्तरे नोपलभ्यते. ४. अध्याहार्यक्रियान्वयेन तदुपपत्तावप्यभिमतान्वयाभावेन तद्दोपतादवस्थ्यात्। काव्यप्रकाशकारेणैवानयोरुत्तमकाव्यत्वस्वीकारात्। 'अदृष्टे दर्शनोत्कण्ठा दृष्टे विच्छेदभीरुता। नादृष्टेन न दृष्टेन भवता लभ्यते सुखम् ॥' इत्यस्फुटाख्यगुणीभूतव्यङ्ग्योदाहरणे पूर्वार्धे भवच्छब्दार्थान्वयासंभवरूपाभवन्मतयोगसत्त्वाच्चाव्याप्तेः । 'नादृष्टे च न दृष्टे च भवति प्राप्यते सुखम्' इति पाठो युक्तः । इति मुद्रितपुस्तकेऽधिकः पाठः

कधर्मत्वस्य[1] 'ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः' इत्यादिना तेनैव प्रतिपादितत्वात् । रसाभिव्यञ्जकत्वेनोपचारत उपपद्यत इति चेत्, तथाप्ययुक्तम् । तथाहि—तयोः काव्यस्वरूपेणाभिमतयोः शब्दार्थयो रसोऽस्ति, न वा । नास्ति चेत्, गुणवत्त्वमपि नास्ति । गुणानां तदन्वयव्यतिरेकानुविधायित्वात् । अस्ति चेत्, कथं नोक्तं रस-

---

'तददोषौ—' इति लक्षणकृतैव । **रसाभिव्यञ्जकत्वेन** स्वाश्रयरसाभिव्यञ्जकत्वेन । **उपचारतः** परम्परासंवन्धेन । [2]केचित्तु "इदं च ग्रन्थकृतारोपवीजानवधानादेवोक्तम् । तथाहि—परंपरासंवन्धघटकस्य मध्यभूतसंवन्धिनो वहिरिन्द्रियप्रत्यक्षे सत्येव नैवमारोपः, यत्र तु परम्पराघटकमध्यभूतसंवन्धी न वहिरिन्द्रियप्रत्यक्षस्तत्र त्वेवमारोपो दृश्यत एव । यथा—'शीतो वायुः, उष्णं जलम्, सुगन्धिर्वायुः' इत्यत्र परम्परासंवन्धघटकानां मध्यभूतजलाग्निपुष्पावयवानां सूक्ष्मत्वेनाप्रत्यक्षत्वात्तादृशारोपः । प्रकृते तु वहिरिन्द्रियप्रत्यक्षस्य रसादेः परम्परासंवन्धघटकत्वान्न संभवत्येव गुणत्वारोपः शब्दार्थयोरिति । अत एवोच्चैःशब्दत्ववत्तारत्ववदाकाशमिति नारोपः । तत्र परम्परासंवन्धघटकस्य शब्दस्य वहिरिन्द्रियप्रत्यक्षत्वात् । न चैवं 'ज्ञानत्ववानात्मा' इत्यारोपापत्तिः, तत्र परम्पराघटकस्य मध्यभूतस्य ज्ञानस्य वहिरिन्द्रियाप्रत्यक्षत्वादिति वाच्यम् । यदि च तादृशारोपो नास्ति तदा कारणान्तराभावस्यैव तत्र कल्पनीयत्वात् । अत एवोदयनाचार्येणोक्तम्—"आरोपे सति निमित्तानुसरणं नतु निमित्तमस्तीत्यारोपः । यत्तु जपाकुसुमस्य वहिरिन्द्रियप्रत्यक्षत्वेऽपि लोहितः स्फटिक इत्यारोपस्तत्र जपाकुसुमं नेदृशपरम्पराघटकं जपाकुसुमस्य स्फटिकावृत्तित्वात् । किंतु जपाकुसुमस्य स्वच्छद्रव्यसान्निध्यमेव तद्रहितं पृथगेवारोपनिमित्तमिति सुधीभिरवधेयम्" इत्याहुः । तन्न । स्थूलजलसंयोगेन शीतो वायुः, अर्कोपलसंयोगेन उष्णं जलमित्यादौ स्थूलजलार्कोपलसंयोगघटितयोः परस्परयोर्मध्यपदार्थयोः स्थूलजलार्कोपलयोर्वहिरिन्द्रियप्रत्यक्षत्वेऽपि विशिष्टधीनियामकत्वेन संवन्धत्वाङ्गीकारात् । चिदानन्दचमत्कारमयस्य रसस्य वहिरिन्द्रियप्रत्यक्षाविषयत्वेन तद्घटितपरम्परायाः संवन्धत्वाङ्गीकारे बाधाभावाच्च । वस्तुतस्तु यत्र परम्परया विशिष्टधीनियामकत्वं तत्रैव तस्याः संवन्धत्वं कल्प्यते । यत्र तु विशिष्टधीनियामकत्वं तत्र तु संवन्धत्वं न कल्प्यत एव । तेन 'ज्ञानत्ववानात्मा' इत्यादौ स्वसमवायिसमवायस्य न संवन्धत्वमिति" । **रसोऽस्तीति** । रसोऽवश्यमस्तीत्यर्थः । **गुणवत्त्वमपि नास्तीति** । तथा च [3]भवदुक्ते 'शब्दचित्रं वाच्यचित्रमव्यङ्ग्यं त्ववरं स्मृतम्' इति तृतीयकाव्यप्रकारेऽव्याप्तिः । नन्वत्रालंकारसत्त्वेनैव काव्यत्वमिति चेत्तर्हि 'सालंकारौ' इत्येव वक्तुं युक्तं किमव्याप्तिघटकेन 'सगुणौ' इत्यनेनेति भावः । **तदन्वयेति** । रसान्वयेत्यर्थः ।

---

१. 'रसैकधर्मत्वात्' ख. २. 'केचित्तु—' इत्यादिः 'स्वसमवायिसमवायस्य न संवन्धत्वमिति' इत्यन्तः पाठः पुस्तकान्तरे न दृश्यते. ३. 'यत्र रसो नास्ति तत्राव्याप्तिरिति भावः' इत्येव मुद्रितपाठः 'भवदुक्ते—' इत्यादि 'भावः' इत्यन्तः पाठस्तु तत्र टिप्पणीभूतो दृश्यते.

वन्ताविति विशेषणम् । गुणवत्त्वान्यथानुपपत्त्यैतल्लभ्यत इति चेत्, तर्हि सरसावित्येव वक्तुं युक्तम्, न सगुणाविति । नहि प्राणिमन्तो देशा इति वक्तव्ये शौर्यादिमन्तो देशा इति केनाप्युच्यते । ननु 'शब्दार्थौ सगुणौ' इत्यनेन गुणाभिव्यञ्जकौ शब्दार्थौ काव्ये प्रयोज्यावित्यभिप्राय इति चेत् । न । गुणाभिव्यञ्जकशब्दार्थवत्त्वस्य काव्ये उत्कर्षमात्राधायकत्वम्, न तु स्वरूपाधायकत्वम् । उक्तं हि—'काव्यस्य शब्दार्थौ शरीरम्, रसादिश्चात्मा, गुणाः शौर्यादिवत्[1], दोषाः काणत्वादिवत्[2], रीतयोऽवयवसंस्थानविशेषवत्, अलंकाराः कटककुण्डलादिवत्' इति । एतेन 'अनलंकृती पुनः क्वापि' इति यदुक्तम्, तदपि परास्तम् । अस्यार्थः[3]—सर्वत्र सालंकारौ क्वचित्त्वस्फुटालंकारावपि शब्दार्थौ काव्यमिति । तत्र सालंकारशब्दार्थयोरपि काव्ये उत्कर्षाधायकत्वात् ।

---

रसे सति गुणस्य रसाभावे सति गुणाभावस्यावश्यं सत्त्वादित्यर्थः । शब्दार्थचित्रयोः काव्यत्वास्वीकारे त्वाह—**अस्ति चेदिति** । **कथमिति** । ननु रसगुणयोः समनियतत्वादेकतरोक्तौ प्रकृतनिर्वाहो भवतीति को दोष इति चेत् । न । माधुर्यादित्रितयसाधारणस्य गुणत्वस्यैकस्याभावादननुगमस्य संभवात् । 'रसवन्तौ' इत्युक्ते तु भावादिसाधारणस्याखण्डस्यास्वादविषयताविशेषस्य रसत्वस्वीकारान्नाननुगम इति भावः । ननु गुणपदेन लक्षणया रसोपस्थितिरित्यभिप्रायेणाह—**गुणवत्त्वेति** । एतच्च शक्यसंबन्धज्ञापनाय । **एतल्लभ्यते** 'रसवन्तौ' इति विशेषणं लभ्यते । रूढिप्रयोजनाभावाल्लक्षणात्र न संभवतीत्यभिप्रायेण दूषयति—**तर्हीति** । ननु दृष्टान्ते रूढिप्रयोजनाभावाल्लक्षणात्र न संभवतु । प्रकृते तु काव्ये गुणाभिव्यञ्जकशब्दार्थप्रयोगोपदेश एव प्रयोजनमस्तीति कथं लक्षणाया असंभव इत्यभिप्रायेण शङ्कते—**नन्विति** । न तु स्वरूपाधायकत्वं; तद्व्यतिरेकेणापि काव्यत्वसंभवादिति शेषः । तदेवोपपादयति—**उक्तं हीति** । 'शब्दार्थौ' इति सामान्यत एवोक्तं न तु गुणाभिव्यञ्जकशब्दार्थाविति । 'रसादिः' इत्यादिपदेन रसाभासभावतदाभासभावशान्तिभावोदयभावसंधिभावशबलत्वादीनां ग्रहणम् । **गुणा** वक्ष्यमाणा माधुर्यौजःप्रसादाः । **दोषाः** श्रुतिदुष्टापुष्टत्वादयः । **रीतयो** वैदर्भीगौडीपाञ्चालीलाट्यः । **अलंकारा** अनुप्रासोपमादयः । एतेन वक्ष्यमाणहेतुना यथाश्रुते दूषणं न संभवतीति तदर्थं परिष्करोति—**अस्यार्थ इति** । **तत्र** भवदुक्तकाव्यलक्षणे सप्तम्यर्थो घटकत्वं भवदुक्तकाव्यलक्षणघटकयोः **सालंकारशब्दार्थयोः उत्कर्षाधायकत्वात्** उत्कर्षमात्रा-

---

१. 'शौर्यादय इव' घ. २. 'काणत्वखञ्जत्वादिवत्' क. ३. 'अस्य ह्यर्थः' क ख.

एतेन 'वक्रोक्तिः काव्यजीवितम्' इति वक्रोक्तिजीवितकारोक्तमपि[1] परास्तम् । वक्रोक्तेरलंकाररूपत्वात् । यच्च[2] क्वचिदस्फुटालंकारत्वे[3] उदाहृतम्—

य: कौमारहरः स एव हि वरस्ता एव चैत्रक्षपा-
स्ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः ।
सा चैवास्मि तथापि तत्र सुरतव्यापारलीलाविधौ
रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते ॥ इति ।

धायकत्वात्, न स्वरूपाधायकत्वादित्यर्थः । **एतेन** उक्तहेतुना । वक्रा[4] विचित्रा उक्तिर्वक्रोक्तिः । वैचित्र्यमलंकार इति सामान्यलक्षणमित्यभिप्रायः ॥ **यः कौमारहर इति** । रेवातीरे वेतसीतले कृतक्रीडायास्तत्क्रीडास्थानं प्रत्युत्सुकतावर्णनमिदम् । विवाहेन कौमारं अनूढात्वं हरत्यपनयतीति कौमारहरः वरोऽभिमतः । एतेन श्रीमतः सुरतचतुरस्य पत्युः सत्त्वं प्रदिपादितम् । तदुक्तम्—'श्रीमान्सुरतदक्षश्च योषितां संमतः पुमान्' इति । एकार्थयोः 'एव-हि' शब्दयोरुपादानमुपपतेरत्यन्तासंभवित्वसूचनाय । एतेनोपपत्यसंनिधानस्य स्वोत्कण्ठाकारणत्वं वारितम् । अत्रापि तत्तद्रतिकारणमस्तीत्याह—**ता एवेति** । यासु तत्र क्रीडनं कृतं तत्सजातीया एवेत्यर्थः । मालती वासन्तिकी जातिः । प्रशस्तमूढं गमनं येषां ते प्रौढाः । 'अनुकूलो वहन्वायुः—'इत्यादौ 'वह' धातोर्गमनार्थता प्रसिद्धा । वायुगमनस्य प्राशस्त्यमत्र मान्द्यम् । प्रौढवायोः स्मरोद्दीपकत्वाभावाद्यथाश्रुतार्थत्यागः । अथवा यथा—'महापण्डितः सत्कविः' इत्यादौ महत्त्वसत्त्वादिकं पाण्डित्यकवित्वादावन्वेति, तथात्र प्रौढत्वं सौरभेऽन्वेति, तच्चोत्कटत्वम् । यद्वा "प्रौढाः" इति सखीनां संबोधनम् । सुरतचतुरा इति तदर्थः । कदम्बानिलाः धूलीकदम्बवायवः । चैत्रे तस्यैव संभवात् । केचित्तु—"कदम्बानिलाः कदम्बवनानिलाः, वनानिलानां प्रौढत्वे वनबहिर्भूतानां मान्द्योपलम्भादुद्दीपकत्वेनाह—'प्रौढाः' इति व्याचक्रुः," तन्न । तथात्वे कदम्बपर्यन्तानुधावनस्य निष्प्रयोजनकत्वात् 'अरण्यानिलाः' इत्यनेनैव तदर्थलाभात् । न च मालतीसंबन्धेनैव अनिलानां सौगन्ध्यलाभात्कदम्बसंबन्धदर्शनं व्यर्थमिति वाच्यम्, विलक्षणसौगन्ध्यलाभाय तस्य सार्थकत्वात् । यथा—'रमणीकमनीयकपोलतले परिपीतपटीररसैरलसः । अयमञ्चति पञ्चशरानुचरो नवनीपवनीधुवनः पवनः ॥' नवेति नवपुष्पितेत्यर्थः । अत्र चन्दनसंबन्धेन सौगन्ध्यलाभेऽपि विलक्षणसौगन्ध्यलाभाय कदम्बसंबन्धदर्शनम् । **सा चैव** तदवस्थैव । **तथापि** तादृशसुरतसामग्रीसत्त्वेऽपि । **सुरतव्यापारलीलाविधौ** सुरतव्यापारलीलाविधाननिमित्तम् ॥

१. 'कारमतं' ख. २. 'यत्तु.' ३. 'अपि' इत्यधिकः पाठः ख-पुस्तके. ४. 'वक्रा–' इत्यादि:—'अभिप्रायः' इत्यन्तः पाठः पुस्तकान्तरे नास्ति.

एतच्चिन्त्यम् । अत्र हि[1] विभावनाविशेषोक्तिमूलस्य संदेहसंकरालंकारस्य स्फुटत्वम् ।

---

विभावनाविशेषोक्तिमूलस्य विभावनाविशेषोक्तिनिरूपितस्य । संदेहेन संदेहविषयत्वेन संकरो मेलकः । उत्कण्ठायाः पत्याद्यभावरूपकारणं विना उत्कण्ठारू-

---

1. एतदिति । मालतीकदम्बयोः संसर्गाभावान्मालती वासन्तिकलतेत्यर्थे प्रमाणाभावाद्भ्रमोक्तिरियं चित्रासंबन्धिक्षपाग्रहणेन संभवत्संबन्धा भवितुमर्हति । 'कौमारहर' इत्यत्र 'कौमारापूर्ववचने' इति सूत्रमपि द्रष्टव्यम् । अथेदं विचार्यते—इह 'हरो वरः–' इत्याद्यनुप्रासस्य स्फुटस्यापि 'सरः खरः–' इत्येवमादिवत् प्रकृतशृङ्गाररसप्रतिकूलवर्णघटितत्वेन नालंकारता । विशेषोक्तिविभावने विद्यमाने अपि न स्फुटे । कथमिति चेत्, इत्थम्—विशेषोक्तिस्तावत्कारणसत्त्वेऽपि कार्याभावकथनम् । अत्र चानुत्कण्ठाकारणं वरोपकरणयोरुपभुक्तता । तत्सत्त्वे यद्यप्यनुत्कण्ठाभाव उत्कण्ठारूपो निर्दिष्ट एव, तथापि नानुत्कण्ठाभावत्वेन, किंतूत्कण्ठात्वेनैव । तस्मादस्फुटत्वमस्याः । यदि चेतोऽनुत्कण्ठितं नेत्यभिधीयेत तदा स्फुटत्वं भवेत् । एवं कारणाभावेऽपि कार्योत्पत्तिकथनं विभावना । तत्र चोत्कण्ठाकारणं वरोपकरणयोरतत्ता । तदभावश्च यद्यप्युक्त एव तथापि नातत्ताविरहत्वेन, किंतु तत्तारूपेणैव । अभावाभावस्य तत्त्वात् । अतोऽस्या अस्फुटत्वमेव । न च स एवेत्येवकारेणातत्ताभावप्रतीतेरतत्ताभावत्वेन प्रतीतौ कथमस्फुटत्वमिति वाच्यम् । विशेषणसंगतैवकारेण विशेष्ये विशेषणायोगस्य व्यवच्छेदो हि प्रत्याय्यते, न तु विशेषणाभावाभाव एवाहत्य । पर्यवसानं तु तत्रेत्यस्फुटत्वमेव । एवं विशेष्यसंगतेनाप्येवकारेण विशेष्यभिन्ने विशेषणाभाव एव नाहत्य प्रत्याय्यते, किंतु विशेषणयोगाभाव इति द्रष्टव्यम् । अत एव 'शङ्खः पाण्डुर एव' इत्यादौ 'नापाण्डुरः', 'पार्थ एव धनुर्धरः' इत्यादौ च 'नान्यो धनुर्धरः' इत्यादिः कदाचित्स्फुटत्वार्थं प्रयुज्यते । आचार्यदण्ड्यप्याह—'त्वन्मुखं त्वन्मुखेनैव तुल्यं नान्येन केनचित्' इति । अन्यथा पुनरुक्तिस्तत्र स्यादिति । न चात्र लक्षणशरीरे नञा प्रतिपाद्यस्य व्यङ्ग्यत्वं संभवति नवैकत्रांशेऽवस्थानापत्त्या लक्षणं प्रणीयते, ततो नहि तात्पर्यगत्यापि कारणकार्यसत्त्वासत्त्वाधिगमनमशाब्दत्वादुपपद्यत इति । एवमनयोरस्फुटत्वे च संदेहरूपसंकरोऽप्यनयोरस्फुट इति विभावनीयम् । न चासीति क्रियाया विभक्तिविपरिणामेन सर्वत्र वरादावन्वयेन क्रियादीपकमेव स्फुटमिति वाच्यम् । असीत्यहमर्थकाव्ययत्वात् । क्रियापदत्वेऽपि न दीपकत्वम् । तदन्वयिनां सर्वेषामेव प्राकरणिकत्वात् । दीपकस्य तु प्राकरणिकाप्राकरणिकविषयत्वात्, विभक्तिविपरिणामकल्पनाया एवास्फुटात्मकत्वाच्च । एवकारस्याभेदपरत्वेनेतरनिषेधपरत्वायोगाच्च न परिसंख्या । वरादीनां गुणक्रियायौगपद्याभावान्न समुच्चयः । वरादीनामुपमानोपमेयभावाभावान्न तुल्ययोगिता । सदृशदर्शनाप्रयोज्यत्वाच्च 'स एव हि–' इत्यादेः प्रत्यभिज्ञाशरीरत्वाच्च न स्मरणालंकारः । यतः सुरभयोऽतः प्रौढाः स्वकार्यसमर्था इति काव्यलिङ्गमप्यस्फुटम्, अशाब्दत्वात् । शृङ्गाररूपरसस्य स्फुटत्वाद्रसवदलंकारः स्फुट इति चेत् । न । रसस्यात्र प्राधान्यात् । अप्राधान्य एव तस्यालंकारत्वोपगमात् । एतेन 'अनलंकृती पुनः क्वापि' इति यदुक्तम्, तदपि निर्बाधम् ॥

---

1. 'हि' इति पाठः क-ग-पुस्तकयोर्नास्ति.

एतेन—

'अदोषं गुणवत्काव्यमलंकारैरलंकृतम् ।
रसान्वितं कविः कुर्वन्कीर्तिं प्रीतिं च विन्दति ॥'

इत्यादीनामपि काव्यलक्षणत्वमपास्तम् । यत्तु ध्वनिकारेणोक्तम्—[1]'काव्यस्यात्मा ध्वनिः—' इति तत्किं वस्त्वलंकाररसादिलक्षणस्त्रिरूपो ध्वनिः काव्यस्यात्मा । उत रसादिरूपमात्रो वा । नाद्यः[2] । प्रहे-

---

पकार्यकथनमितीयं विभावना, किंवा उत्कण्ठाभावस्य कारणसत्त्वे तस्याः कथनमिति विशेषोक्तिरिति संदेहात् संदेहसंकरालंकारोऽयम् । विभावनायां कारणविरुद्धसद्भाव-मुखेन कारणाभावः । विशेषोक्तौ कार्यविरुद्धसद्भावमुखेनैव कार्याभावः प्रतीयते, न त्वभावबोधकनञेति तयोरस्फुटत्वम् । तदुभयकोटिकत्वेन संदेहस्य सुतरामस्फुटत्व-मिति चेत् 'सुरतव्यापारलीलाविधौ रेवारोधसि वेतसीतरुतले' इत्यत्र रेफानुप्रा-सस्य स्फुटत्वं प्रतीहि । 'रणौ लघू' इत्यनेन तस्य माधुर्यव्यञ्जकत्वमुपपादितम् । तेन च रसोपकारकतया तस्यालंकारत्वमव्याहतमेव । 'लघू' इत्यस्य असंयुक्तावित्यर्थ इति व्याख्यातव्यम् । केचित्तु—"रेवातीरे वेतसीतले कृतसंकेताया नायिकाया गृहे स्वयं परमर्शोऽयम्—यः कौमार इति, स एव हि वरः स वर एव विलक्षणर-तिसमर्थ एव । एवं च रसस्य प्रधानत्वान्नालंकारत्वमिति काव्यप्रकाशोक्तौ रसस्य रसाभासस्येत्यर्थः रतेरुपपतिगोचरत्वेन रसाभासस्यैव संभवात्" इत्याहुः । तन्न । व्यञ्जकाभावादुपपतेरत्रालाभात् । वक्तृवैशिष्ट्यमेवात्र व्यञ्जकमिति चेत् । न । वक्तु-स्तादृशवैशिष्ट्ये मानाभावात् । प्रत्युत 'स एव हि वरः' इत्यनेनैवोपपतिरतेरत्यन्ता-संभवित्वमुक्तम् । **एतेनोक्तदोषसमूहेन । अदोषमित्यादि ।** निर्दोषस्य सगुणालं-कारस्य सरसस्य काव्यस्य प्रशंसापरमिति भावः । **यत्त्विति । त्रिरूपः** त्रिप्रकारः ।

---

1 काव्येति । 'काव्यस्यात्मा ध्वनिरिति बुधैर्यः समाम्नातपूर्वस्तस्याभावं जगदुरपरे भाक्तमाहुस्तमन्ये । केचिद्वाचां स्थितमविषये तत्त्वमूचुस्तदीयं तेन ब्रूमः सहृदयमनःप्रीतये तत्स्वरूपम् ॥' इति ध्वनिकारिका । अन्ये तं ध्वनिसंज्ञितं काव्यात्मानं गुणवृत्तिरित्याहुः । शेषं नातितिरोहितम् ॥

---

१. ग-पुस्तके तु पाठक्रम एवं दृश्यते—'एतेन' 'वक्रोक्तिः—' इत्यादिः '—रूपत्वात्' इत्यन्तः पाठो नास्ति ततः 'एतेन अदोषं—' इत्यारभ्य '—अपास्तम्' इत्यन्तः पाठो दृश्यते. ततः 'यत्तु—' इत्यारभ्य '—संदेहसंकरालंकारस्य स्फुटत्वम्' इत्यन्तः पाठो वर्तते. पश्चात् 'अत्र यज्जयन्तेनोक्तं विभावनाविशे-षोक्त्योः परिपूर्णात्मलक्षणाभावान्न तन्मूलः संदेहसंकर इति । न हि निश्शेषकारणभावे कार्योत्पत्तौ विभावनायाः पूर्णत्वम्, किंतु प्रसिद्धकतिपयकारणनिषेधेऽपि विभावनायाः पूर्णता स्यात् । नापि निःशे-षकारणसामग्र्यां कार्यानुत्पत्तौ विशेषोक्तेः पूर्णत्वम्, अपि तु प्रसिद्धकतिपयकारणसामग्र्यां कार्यानुत्प-त्तिकथनमात्रेणापि पूर्णता । अन्यथा विभावनाविशेषोक्ती उच्छिद्येताम् । इतश्च उक्तप्रकारेणापि विचि-त्रोक्तिनिर्वाहादुक्तवैचित्र्यस्यैवालंकारभूमित्वादतः परिपूर्णयोरेव तयोः साधकबाधकप्रमाणाभावात्तन्मूलः स्फुटः संदेहसंकर इति ।' इत्यधिकः पाठो लभ्यते. अन्यत्समानम्. २. 'तत्र नाद्यः' इति मुद्रितपाठः.

लिकादावतिव्याप्तेः । द्वितीयश्चेदोमिति ब्रूमः । ननु यदि [1]रसादिरूपमात्रो ध्वनिः काव्यस्यात्मा, तदा—

अत्ता एत्थ णिमज्जइ एत्थ अहं दिअसअं पलोएहि ।
मा पहिअ रत्तिअन्धिअ सेज्जाए मह [1]णिमज्जहिसि ॥

इत्यादौ वस्तुमात्रस्य व्यङ्ग्यत्वे कथं काव्यव्यवहार इति चेत् न[3] । अत्रापि रसाभासवत्तैवेति ब्रूमः । अन्यथा 'देवदत्तो ग्रामं [4]याति' इति वाक्ये तद्भृत्यस्य तदनुसरणरूपव्यङ्ग्यावगतेरपि काव्यत्वं स्यात् । अस्त्विति चेत् । न । रसवत एव काव्यत्वाङ्गीकारात् । [2]काव्यस्य प्रयो-

**प्रहेलिकादाविति** । 'तरुण्यालिङ्गितः कण्ठे नितम्बस्थलमाश्रितः । गुरूणां संनिधानेऽपि कः कूजति मुहुर्मुहुः ॥' इत्यादावित्यर्थः । अत्र [3]किंचिदूनजलकलशरूपं वस्तु व्यङ्ग्यम् । ओमिति स्वीकरोमि ॥ **अत्ता इत्यादि** । 'श्वश्रूरत्र निमज्जति अत्राहं दिवसकं प्रलोकय । मा पथिक रात्र्यन्ध शय्यायां मम निमङ्क्ष्यसि (शय्यायामावयोर्माङ्क्षीः) ॥' इति संस्कृतम् । रात्र्यन्धकत्वेन कथितात्मानं पथिकं प्रति स्वयं दूत्या उक्तिरियम् । अत्ता श्वश्रूः । निमज्जति निमग्ना मृतप्राया तिष्ठति ॥ **वस्तुमात्रस्य** स्वशय्यामात्रप्रवेशरूपवस्तुन एव रतेरुपपतिविषयत्वादत्र शृङ्गाराभासः । [4]वस्तुतस्तु रसाद्यसंकीर्णवस्त्वलंकारध्वनेः काव्यप्रकारमध्ये निर्वचनस्योन्मत्तप्रलपितत्वप्रसङ्गभयेनास्वाद्यव्यङ्ग्यमात्रस्य काव्यात्मत्वमवश्यं वाच्यम् । एवं च प्रकृते व्यङ्ग्यवस्तुरचनास्वाद्यतया तेनापि काव्यव्यवहारो भवितुमर्हति, आस्वाद्यत्वं चाह्लादसंवलितप्रतीतिविषयः । **अन्यथा** वस्तुमात्रस्य व्यङ्ग्यत्वेऽपि काव्यत्वस्वीकारे ।

1. 'महँण मज्जहिसि' इति ध्वन्यालोकलोचने पाठः । महँण इति निपातोऽनेकार्थवृत्तिरत्रावयोरित्यर्थे नतु ममेति । सर्वं हि विशेषवचनमेव शङ्काकारि भवेदिति प्रच्छन्नाभ्युपगमो न स्यात्.

2. काव्यस्येति । वस्तुतश्चमत्कारसारं हि कविकर्म, तच्च निसर्गतः शब्दार्थनिबन्धनम्, तत्र शब्दभित्तिकया अर्थस्य प्रतीयमानत्वाच्च तदात्मकत्वरूपणम् । विनेयानामपि वस्त्वलंकाररसादिचमत्कारास्वादनद्वारेणैव हितोपदेशेषून्मुखीकरणम् । एवं चास्वाद्यत्वमहिम्ना वस्त्वलंकाररसादिप्रधानानां काव्यत्वमव्याहतम् । 'रस एवात्र जीवितम्' इत्यत्रेत्यादौ तु रसपदार्थश्चमत्कारपर्यायो यौगिकोऽस्ति, नतु रसाद्यष्टकशरीरमात्रविश्रान्तो योगरूढ एव नियत इति । अत इदमप्याम्नायते—'तत्र निर्दोषशब्दार्थगुणवत्त्वे सति स्फुटम् ।

१. 'रसादिमात्ररूप एव' इति मुद्रितपाठः. २. 'न' ख-ग-पुस्तकयोर्नास्ति. ३. 'गच्छति' क. ४. मुद्रितपुस्तके तु 'वस्तुतस्तु–' इत्यादेः–'संवलितप्रतीतिविषयः' इत्यन्तस्य पाठस्य स्थाने 'वस्त्वलंकारध्वन्योः काव्यात्मभावेऽपि काव्यप्रभेदकथनप्रकरणे तयोरुपादानं रसादेरुत्कर्षकत्वेन काव्यभेदकत्वादित्यवधेयम्' इति दृश्यते.

जनं हि रसास्वादसुखपिण्डदानद्वारा[1] वेदशास्त्रविमुखानां सुकुमारमतीनां राजपुत्रादीनां विनेयानां 'रामादिवत्प्रवर्तितव्यं न रावणादिवत्' इत्यादिकृत्याकृत्यप्रवृत्तिनिवृत्त्युपदेश इति चिरंतनैरप्युक्तत्वात्। तथा[3] चाग्नेयपुराणेऽप्युक्तम्—'वाग्वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितम्' इति। व्यक्तिविवेककारेणाप्युक्तम्—"काव्यस्यात्मनि सङ्गिनि, रसादिरूपे न कस्यचिद्विमतिः" इति। ध्वनिकारेणाप्युक्तम्[1]—'नहि कवेरिति-

---

नीरसस्य काव्यत्वास्वीकारे हेतुमाह—**काव्यस्य प्रयोजनं हीति**। 'रसास्वादसुखपिण्डदानद्वारा' इति पाठे पिण्डं समूहः। रसास्वादसुखसंतानद्वारेत्यर्थः। मुखेति पवर्गपञ्चमादिपाठे मुखपिण्डं लोभद्रव्यम्। **विनेयानां** कृत्याकृत्यज्ञापनीयानाम्। तथा च शब्दप्रधानेषु वेदेषु अर्थप्रधानेषु पुराणेतिहासादिषु चायासबहुलेषु विमुखानां सुकुमारमतीनां हि गुणीभूतशब्दार्थेषु रसास्वादप्रधानेषु प्रथमं तावद्रसास्वादसुखोद्देशेन प्रवृत्तिस्ततः काव्यार्थानां कृत्याकृत्यप्रवृत्तिनिवृत्त्युपदेशपरतावधारणमिति भावः। तदुक्तम्—'स्वादुकाव्यरसोन्मिश्रवाक्यार्थमुपभुञ्जते। प्रथमालीढमधवः पिबन्ति कटु भेषजम्॥' इति। वाक्यार्थं काव्यस्य परमतात्पर्यार्थमुपभुञ्जते आस्वादयन्ति। **वाग्वैदग्ध्येति**। वाचो वैदग्ध्यं वैचित्र्यं प्रधानं यत्र तस्मिन्। एवकारेण अलंकारादिव्यवच्छेदः। अत्र काव्ये। जीवितं जीवनाधायकम्। **सङ्गिनि**

---

गद्यादिबन्धरूपत्वं काव्यसामान्यलक्षणम्॥ दोषे सति गुणैः किंवा किं वालंकरणैरपि। अतो निर्दोषषाड्गुण्यमेवात्राद्रियतां बुधैः॥ धर्मा रसा लक्षणानि रीत्यलंकृतिवृत्तयः। रसिकाह्लादका ह्येते काव्ये सन्ति च षड्गुणाः॥ अलंकारा गुणेष्वेव ग्रथ्यन्ते प्रायशो भुवि। गुणेभ्योऽतः पृथक्त्वेन प्रगल्भानां न तद्ग्रहः॥ अलंकारेष्वपि गुणा यद्यप्यन्तर्भवन्ति हि। तथाप्याधारतायोगान्मुख्यास्तेऽतः सुधीप्रियाः॥ अलंकारविहीनोऽपि सुदृक् सौभाग्यकृद्गुणः। गुणहीनमलंकारसहस्रमपि किं तथा॥ स्फीतदृष्टिष्वलंकारा गुणेभ्यः पृथगप्यलम्। दृश्यन्ते तत्तु बाहुल्यात्तेषां तेषां च सौक्ष्म्यतः॥ अलंकारा यदाप्येवमन्तर्भूता गुणेष्वमी। रसलक्षणमाधुर्यवृत्तिरीति तदा न किम्॥' इति। किं च। पद्यरसेन नीरसपदेष्विव प्रबन्धरसेन नीरसपद्येषु रससंचारकल्पनापि वृत्त्यारूढा मुक्तकप्रबन्धेषु व्यभिचारिणीति दिक्॥

3. वीणाख्यं वस्तु॥

1. उक्तमिति। ध्वन्यालोकस्य तृतीयोद्योते 'विभावभावानुभाव—'इत्यादिकारिकाणां व्याख्यानावसरे॥

---

१. 'मुख' घ. २. 'द्वारेण' क-ख-ग-घ. ३. 'अप्युक्तम्' क-ख-पुस्तकयोर्नास्ति. ग-पुस्तके तु 'तथाचा—' इत्यादिः '—इति' इत्यन्तः पाठो नास्ति.

वृत्तमात्रनिर्वाहेणात्म[1]पदलाभः, इतिहासादेरेव तत्सिद्धेः' इत्यादि। ननु तर्हि प्रबन्धान्तर्वर्तिनां केषांचिन्नीरसानां प[2]द्यानां काव्यत्वं न स्यादिति चेत्। न। रसवत्पद्यान्तर्गतनीरसपदानामि[3]व पद्यरसेन, प्रबन्धरसेनैव तेषां रसवत्ताङ्गीकारात्। यत्तु नीरसेष्वपि गुणाभिव्यञ्जकवर्णसद्भावाद्दोषाभावादलंकारसद्भावाच्च काव्यव्यवहारः स रसादिमत्काव्यबन्धसाम्याद्गौण एव। य[4]च्चु **वामनेनोक्तम्**—'रीतिरात्मा काव्यस्य' इति तन्न। रीतेः संघटनाविशेषत्वात्। संघटनायाश्चावयवसंस्थान[5]रूपत्वात्, आत्मनश्च तद्भिन्नत्वात्। यच्च **ध्वनिकारेणोक्तम्**—

> '[1]अर्थः सहृदयश्लाघ्यः काव्यात्मा यो व्यवस्थितः।
> वाच्यप्रतीयमानाख्यौ तस्य भेदावुभौ स्मृतौ॥' इति।

---

अवश्यं स्थायिनि। **विमतिरस्वरसः**। **इतिवृत्तं** नीरसवाक्यप्रबन्धः। **आत्मपदलाभः** स्ववाचककाव्यशब्दप्राप्तिः। कविसंबन्धिप्रबन्धत्वेनैव काव्यशब्दप्रयोगो नास्तीति भावः। **इतिहासादेर्भारतादेः**। आदिना रामायणरघुवंशादिपरिग्रहः। **तत्सिद्धेः** काव्यपदप्राप्तिसिद्धेः। वीरादिरसप्रधानानां भारतादीनां सुतरां काव्यसंज्ञालाभ इति भावः। **तर्हि** रसवत एव काव्यत्वस्वीकारे। पद्यानामिति गद्यानामुपलक्षणम्। 'गद्यं पद्यं च मिश्रं च तत्त्रिधैव व्यवस्थितम्' इत्यनेन गद्यस्यापि काव्यत्वस्वीकारात्। **तेषां** नीरसपद्यानां व्यञ्जकप्रतिपाद्यप्रतिपादकसंबन्धेन रसवत्त्वमिति भावः। 'यत्' इत्यव्ययं 'यः' इत्यर्थे। **नीरसेषु** 'चन्द्रे शरन्निशोत्तंसे कुन्दस्तबकविभ्रमे। इन्द्रनीलनिभं लक्ष्म संदधात्यलिनः श्रियम्॥' इत्यादिषु। **संघटना**विशेषत्वाद्गुणाभिव्यञ्जकशब्दविन्यासरूपत्वात्। ननु रीतेः संघटनाविशेषरूपत्वेऽपि काव्यात्मत्वस्वीकारे को दोष इत्यत आह—**संघटनायाश्चेति**। काव्यशरीरस्य वाक्यस्यावयवाः पदानि तेषां संस्थानं समुचितस्थाने निवेशस्तद्रूपत्वादित्यर्थः। **तद्भिन्नत्वाद**वयवसंस्थानभिन्नत्वात्। **सहृदयश्लाघ्यः** सहृदयानां हृदयंगमः। **प्रतीयमानो** व्यङ्ग्यः।

---

1. **अर्थ इति**। शब्दार्थशरीरं तावत्काव्यम्। तत्र शरीरग्रहणादेव केनचिदात्मना तदनुप्राणकेन भाव्यमेव। तत्र शब्दस्तावच्छरीरभाव एव संनिविशते। सर्वजनसंवेद्यधर्मत्वात्स्थूलकृशादिवत्। अर्थः पुनः सकलजनसंवेद्यो न भवति। न ह्यर्थमात्रेण काव्यव्यपदेशः। लौकिकवैदिकवाक्येषु तदभावात्। तदाह—सहृदयश्लाघ्य इति। स एक एवार्थो द्विशाखतया विवेकिभिर्विभागबुद्ध्याभियुज्यते। तथाहि—तुल्येऽर्थरूपत्वे किमिति कस्मैचित्सहृदयः श्लाघते। तद्भवितव्यं केनचिद्विशेषेण। यो

---

१. 'पद' क-ख-ग-पुस्तकेषु नास्ति. 'निर्वहणेन किंचित्प्रयोजनम्। इतिहासादेव तत्सिद्धेः' इति ध्वन्यालोकस्थः पाठः. २. 'पद्यानां' क-पुस्तके नास्ति. ३. 'इव' ग पुस्तके नास्ति. ४. 'यच्च' ग. ५. 'विशेष' इत्यधिकः क-पुस्तके.

अत्र वाच्यात्मत्वं 'काव्यस्यात्मा ध्वनिः—' इति स्ववचनविरोधादेवापास्तम् ।

तत्किंपुनः काव्यमित्युच्यते—

**वाक्यं रसात्मकं काव्यम्—**

रसस्वरूपं निरूपयिष्यामः । रस एवात्मा [1]साररूपतया जीवनाधा-

---

**तदिति** । उक्तलक्षणस्य दूषितत्वादित्यर्थः । **किमिति** । किंस्वरूपमित्यर्थः । **वाक्यमिति** । रसात्मकं वाक्यं काव्यमित्यन्वयः । ननु को रस इत्यत आह—**रसस्वरूपमिति** । विवृणोति—**रस एवेति** । एवकारेण ध्वनिकाराद्युक्तस्य वाच्यार्थस्य वस्त्वलंकारमात्रव्यङ्ग्यस्य च व्यवच्छेदः । **साररूपतया** आनन्दसान्द्रत्वेन श्रेष्ठस्व-

---

विशेषः स प्रतीयमानभागो विवेकिभिर्विशेषहेतुत्वादात्मेति व्यवस्थाप्यते । वाच्यसंकलनाविमोहितहृदयैस्तु तत्पृथग्भावो विप्रतिपद्यते । चार्वाकैरिवात्मपृथग्भावः । अत एवार्थ इत्येकतयोपक्रम्य सहृदयश्लाघ्य इति विशेषणद्वारा हेतुमभिधायापोद्धारदृशा तस्य द्वौ भेदावंशावित्युक्तम् । ननु द्वावप्यात्मानौ काव्यस्येत्याचार्याभिनवगुप्तपादाः । एतेन न कश्चन स्ववचनविरोधोऽपि ॥

2. शान्तादीत्युचितम् ॥

1. वाक्यमिति । चिन्त्यमेवैतत्, वस्त्वलंकारप्रधानानां काव्यानामकाव्यत्वापत्तेः । न चेष्टापत्तिः, महाकविसंप्रदायस्याकुलीभावप्रसङ्गात् । लक्ष्यानुसारेण हि लक्षणव्यवस्था, नतु वैपरीत्येन । वर्णितानि च महाकविभिर्जलप्रवाहवेगनिपतनोत्पतनभ्रमणानि, कपिबालादिविलसितानि च । न च तत्रापि यथाकथंचित्परम्परया रससपर्शोऽस्त्येवेति वाच्यम् । ईदृशरससपर्शस्य 'गौश्चलति', 'मृगो धावति' इत्यादावतिप्रसक्तत्वेनाप्रयोजकत्वात् रस्यत इति योगस्य तु तदाभासादिमात्र एव स्वीकारात् । एवं च प्रकाशोक्तं काव्यलक्षणमेव ज्यायः । यत्तु रसगङ्गाधरकारैः 'रमणीयार्थप्रतिपादकः शब्दः काव्यम्' इति स्वसूत्रव्याख्याने "काव्यपदप्रवृत्तिनिमित्तं शब्दार्थयोर्व्यासक्तम्, प्रत्येकपर्याप्तं वा । नाद्यः । एको न द्वाविति व्यवहारस्येव श्लोकवाक्यं न काव्यमिति व्यवहारापत्तेः । न द्वितीयः । एकस्मिन्पद्ये काव्यद्वयव्यवहारापत्तेः । तस्माद्वेदशास्त्रपुराणलक्षणस्येव काव्यलक्षणस्यापि शब्दनिष्ठतैवोचिता" इत्युक्तम् । तन्न । आस्वादव्यञ्जकत्वस्योभयत्राप्यविशेषाच्चमत्कारिबोधजनकज्ञानविषयतावच्छेदकधर्मैवस्वरूपस्यानुपहसनीयकाव्यलक्षणस्य प्रकाशादिनिरूपितलक्ष्यतावच्छेदकस्योभयवृत्तित्वाच्च काव्यं पठितम्, काव्यं श्रुतम्, काव्यं बुद्धमित्युभयविधव्यवहारदर्शनाच्च काव्यपदप्रवृत्तिनिमित्तं व्यासज्यवृत्ति । अत एव वेदत्वादेरुभयवृत्तित्वप्रतिपादकं 'तदधीते तद्वेद' इति सूत्रस्थं 'किमर्थमुभावप्यर्थौ निर्दिश्येते । न योऽधीते वेत्त्यप्यसौ । यस्तु वेत्त्यधीतेऽप्यसौ । नेतरयोरावश्यकः समावेशः । भवति ह कश्चित्संपाठं पठति न वेत्ति, तथा कश्चिद्वेत्ति न च संपाठं पठति' इति

---

1 'स्वरूपतया' क-ग.

यको यस्य । तेन विना तस्य काव्यत्वाभावस्य[1] प्रतिपादितत्वात् । 'रस्यते इति रसः' इति व्युत्पत्तियोगाद्भावतदाभासादयो[2]ऽपि[3] गृह्यन्ते[4]। तत्र रसो यथा—

---

भावतया । जीवनाधायक उपादेयताप्रयोजकः । तेन रसेन । तस्य वाक्यस्य । प्रतिपादितत्वादिति । 'देवदत्तो ग्रामं याति' इत्यादिग्रन्थेनेति बोध्यम् । ननु शृङ्गारादिभेदेन नवप्रकारो रसस्तदभावात् 'यस्यालीयत—' इत्यादिवाक्यानां कथं काव्यत्वमत आह—रस्यत इति । आस्वाद्यत इत्यर्थः । भावादीनामप्यास्वादविषयत्वमव्याहतमेव । विषयत्वमप्यखण्डमतिरिक्तं बोध्यम् । तेन नाननुगम इति भावः । ( अत्र[5]—'न्यक्कारो ह्ययमेव—' इत्यादौ विधेयाविमर्शदोषदुष्टतया उद्देश्यविधेयभावबोधकानुपूर्वीविरहेणाकाङ्क्षाविरहाद्वाक्यत्वस्यैवाभावः । काव्यज्ञानं विना रसपदार्थस्य दुर्निरूप्यत्वादन्योन्याश्रयः, 'रसघटकविभावादीनां काव्यघटितत्वात्' । इति दूषणद्वयं कश्चित्पण्डितंमन्य उपन्यस्यति, तदतीव मन्दम् । आनुपूर्वीविशेषरूपाया आकाङ्क्षाया विरहेऽपि श्रोतृजिज्ञासारूपायास्तस्या विद्यमानत्वाद्वाक्यत्वाक्षतेः । तादृशाकाङ्क्षाया एव वाक्यघटकत्वेन ग्रन्थकृतैवाङ्गीकारात् । यद्वा । संकीर्णत्वगर्भितत्वदोषदुष्टयोः पदसमुदाययोरासत्तिकल्पनेन वाक्यत्वं कल्प्यते अन्यथा काव्यदोषत्वमेव न स्यात् । तथात्रापि कल्पितानुपूर्वीयोगादस्य वाक्यत्वाङ्गीकारादखण्डास्वादविशेषविषयत्वरूपस्य भावादिसाधारणस्य रसत्वस्य ग्रन्थकृतैव निरुक्तत्वाच्च । अखण्डास्वादविशेषत्वं चानन्दसंवलितज्ञानविषयत्वमेवात्र भावादिसाधारणं वाच्यम् । न च 'ब्राह्मण, पुत्रस्ते जातः' इत्यादिवाक्ये आनन्दसंवलितज्ञानजनकेऽतिव्याप्तिस्तद्वारणाय काव्यजन्यत्वं विशेषणमुपादेयं, तथा सति अन्योन्याश्रयदोष इति वाच्यम् । अत्र हि शाब्दबोधानन्तरमेवानन्दो जायते । तयोः पौर्वापर्यक्रमस्थितोऽपि काललाघवादुत्पलपत्रशतव्यतिभेदनवत्स न गृह्यते । काव्ये तु शाब्दबोधानन्तरमलौकिकास्वादनाख्यव्यापारादिबलादेकमेवानन्दसंवलितमलौकिकं ज्ञानम् । तदेवास्माभी रस-

---

महाभाष्यं संगच्छते । लक्षणयान्यतरस्मिन्नपि तत्त्वात् 'एको न द्वौ' इतिवन्न तदापत्तिः । केचित्तु—कविकर्म काव्यमिति समाख्यानुरोधाच्छब्द एव काव्यत्वम्, न त्वर्थे । तस्य तत्कृतिसाध्यत्वाभावात् । तस्मात्पदसंदर्भविशेषः काव्यमिति लक्षणं स्वीकुर्वते । तन्न रमणीयम् । तथाहि—आस्वादोद्बोधकत्वमेव काव्यत्वप्रयोजकम्, तच्च शब्देऽर्थे चाविशिष्टम् । तत्रापि रसोद्बोधकत्वाङ्गीकारात् । अर्थेऽपि दृश्यकाव्ये इव काव्यत्वम् । कविकर्मत्वव्यवहारस्तु तत्प्रकाश्यत्वाद्भाक्तः । शब्दनित्यत्ववादिमते तु शब्दरूपेऽपि काव्ये कविकर्मत्वव्यवहारो भाक्तः । अत एव 'शब्दददुरं करोति' इति पाणिनिसूत्रं संगच्छते । अन्यथा नित्यत्वसिद्धान्तो व्याकुप्येतेतिदिक् ॥

1. अत्रेत्यादिकोष्ठकान्तर्वर्ती पाठः प्रक्षिप्त इति प्रतिभाति ॥

---

१. 'काव्यत्वानङ्गीकारात्' घ. २. 'भावतदाभासाः' ग. ३. 'अपि' क-ख-पुस्तयोर्नास्ति. ४. 'उच्यन्ते' ग. ५. 'अत्र—' इत्यादि, '—सर्वमवदातम्' इत्यन्तो ग्रन्थः, पुस्तकान्तरे नोपलभ्यते.

[1]शून्यं वासगृहं विलोक्य शयनादुत्थाय किंचिच्छनै-
निंद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम्।
विश्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं
लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता ॥

अत्र हि[1] संभोगशृङ्गाराख्यो[2] रसः।

भावो यथा महापात्रराघवानन्दसांधिविग्रहिकाणाम्—

यस्यालीयत शल्कसीम्नि जलधिः पृष्ठे जगन्मण्डलं,
दंष्ट्रायां धरणी, नखे दितिसुताधीशः, पदे रोदसी।
क्रोधे क्षत्रगणः, शरे दशमुखः, पाणौ प्रलम्बासुरो,
ध्याने विश्वम्, [2]असावधार्मिककुलं, कस्मैचिदस्मै नमः ॥

अत्र भगवद्विषया रतिर्भावः।

---

पदेनोच्यत इति। आनन्दसंवलितत्वमिह तादात्म्यसंबन्धेनानन्दविशिष्टत्वम्, न तु जनकतासंबन्धेन। विजातीययोर्ज्ञानानन्दयोस्तादात्म्याङ्गीकारोऽलौकिके न दोष इति सर्वमवदातम्)। **तदाभासेति**। रसाभासभावाभासेत्यर्थः। आदिना भावशान्त्यादीनां ग्रहणम् ॥ **शून्यमिति**। सख्यादिहीनमित्यर्थः। शयनाच्छय्यायाः किंचिदुत्थानं प्रियजागरणे झटिति संवरणार्थम्। उत्थाने शनैस्त्वं जागरणहेतुशब्दानुत्पत्तये निद्राव्याजं छलनिद्रां सुचिरनिर्वर्णनं च निद्रानिश्चयाय। तेन विश्रब्धं विश्वस्तं यथा स्यात्तथा परिचुम्ब्य। गण्डस्थलीमिति पत्युरित्यनुषज्यते। लज्जानम्रमुखी सतीत्यर्थः। केचित्तु—"लज्जत इति लज्जा क्रिया। तत्रैवालोकनानन्तर्यस्यान्वयः" इत्याहुः। तन्न। कृत्प्रत्ययानामभिधाननियम्यतया लज्जापदस्य लज्जाश्रयबोधे सामर्थ्याभावात्। स्थितादिपदाध्याहारेणैव एककर्तृकत्वमवधेयम्। बाला नववधूः। चिरचुम्बनं चाधिकर्णपरिशोधनार्थम्। वीरादिरसानामुदाहरणान्यग्रे दास्यति ॥ **यस्येति**। 'अलीयत' इति च दशसु वाक्येष्वन्वेति। शल्को मत्स्यत्वक्

---

1. अत्र पतिरालम्बनविभावः शून्यवासगृहादि उद्दीपनविभावः। पत्युर्मुखनिर्वर्णनादि अनुभावः, लज्जाहासव्यङ्ग्यहर्षादि व्यभिचारिभावः, रतिः स्थायिभावः तज्जैः रसनिष्पत्तिः। अत्र रतेरुभयालम्बनत्वेऽपि नायकविषयिण्या नायिकानिष्ठायास्तस्या उद्रेको विशिष्य चर्वणाविषय इति सहृदयाः। एतत्पद्यममरुशतकस्य। विशेषजिज्ञासुभिस्तट्टीका विलोकनीया। एवमाद्युदाहरणश्लोकानामकारादिवर्णानुक्रमेण सूची ग्रन्थान्ते संश्लेषिता, यदाधारेण यतमानानां जिज्ञासापूर्तिः सुशका। किमत्र पठनपाठनानुपयुक्तेन लेखकलिलेनेति ॥

2. **असाविति**। असौ कृपाणे ॥

---

१. 'हि' क-ख-ग-पुस्तकेषु नास्ति. २. 'आख्यो रसः' ग-पुस्तके नास्ति.

रसाभासो यथा—

मधु द्विरेफः कुसुमैकपात्रे पपौ प्रियां स्वामनुवर्तमानः ।
शृङ्गेण च स्पर्शनिमीलिताक्षीं मृगीमकण्डूयत कृष्णसारः ॥

अत्र संभोगशृङ्गारस्य तिर्यग्विषयत्वाद्रसाभासः । एवमन्यत् ।

दोषाः पुनः काव्ये किंस्वरूपा इत्युच्यन्ते[1]—

**दोषास्तस्यापकर्षकाः ।**

श्रुतिदुष्टापुष्टार्थत्वादयः[2] काणत्वखञ्जत्वादय इव, शब्दार्थद्वारेण देहद्वारेणेव, व्यभिचारिभावादेः स्वशब्दवाच्यत्वादयो मूर्खत्वादय इव, साक्षात्काव्यस्यात्मभूतं रसमपकर्षयन्तः काव्यस्यापकर्षका इत्युच्यन्ते । एषां विशेषोदाहरणानि वक्ष्यामः ।

गुणाः[3] किंस्वरूपा इत्युच्यन्ते—

**उत्कर्षहेतवः प्रोक्ता गुणालंकाररीतयः ॥ ३ ॥**

गुणाः शौर्यादिवत्, अलंकाराः कटककुण्डलादिवत्, रीतयोऽवयवसंस्थानविशेषवत्, देहद्वारेणेव शब्दार्थद्वारेण तस्यैव[4] काव्यस्यात्मभूतं

---

तस्य सीम्नि एकदेशे । दितिसुताधीशो हिरण्यकशिपुः । रोदसी द्यावापृथिव्यौ । अत्रालीयातामिति वचनविपरिणामः । कस्मैचिदनिर्वचनीयमहिम्ने । अत्र दशभिर्वाक्यैर्दशावतारा दर्शिताः । ते यथा—'मत्स्यः कूर्मो वराहश्च नरसिंहोऽथ वामनः । रामो रामश्च रामश्च बौद्धः कर्की[1] च ते दश ॥' **अनुवर्तमानः** सेवमानः ॥ अन्यद्भावाभासादि । ननु दोषादीनां काव्यलक्षणाघटकत्वान्निराकाङ्क्षतया तन्निरूपणमसंगतमित्यत आकाङ्क्षामुत्थापयति—**दोषाः पुनरिति** । तस्य काव्यस्य । **गुणा इति** । गुणानां शब्दार्थोत्कर्षद्वारा यथा रसोत्कर्षकत्वं तथा गुणपरिच्छेदे दर्शयिष्यते । शौर्यादीनामौपचारिकदेहधर्मत्वाभिप्रायेणायं दृष्टान्तः । ननु निरलंकारकाव्यापेक्षयालंकाराणामिव निर्गुणकाव्यापेक्षया गुणानां काव्योत्कर्षकत्वं नोपपद्यते । निर्गुणत्वस्य नीरसत्वसमनियततया नीरसस्य काव्यत्वानङ्गीकारेणैव निर्गुणस्य

---

1 कर्कीति । 'कल्की' इति पाठः सर्वत्रैवोपलभ्यते । परंतु कर्को धवलघोटकोऽस्यास्तीति व्युत्पत्तिस्वारस्यात् 'कर्की' इत्येव पाठः साधीयान् । भगवतो घोटकवाहनत्वात् । कर्किकुलोत्पन्नत्वाद्वा कर्की । 'सितः कर्कः' इत्यमरः । 'उत्पत्स्यतेऽर्कसंकाशः शिशुः कर्किकुले द्विजः' इति दशावतारचरितम् ॥

---

१. 'दोषाः'—इत्यादिः 'इत्युच्यन्ते' इत्यन्तः पाठो ग-पुस्तके नास्ति. २. 'अपुष्ट' क-पुस्तके नास्ति. ३. 'गुणाः—' इत्युपोद्घातो ग-पुस्तके न दृश्यते. ४. 'तस्यैव' ग-घ.

रसमुत्कर्षयन्तः काव्यस्योत्कर्षका इत्युच्यन्ते । इह यद्यपि गुणानां रसधर्मत्वं तथापि गुणशब्दोऽत्र गुणाभिव्यञ्जकशब्दार्थयोरुपचर्यते । अतश्च 'गुणाभिव्यञ्जकाः शब्दा रसस्योत्कर्षकाः' इत्युक्तं भवतीति प्रागेवोक्तम्[1] । एषामपि विशेषोदाहरणानि वक्ष्यामः ॥

इति श्रीमन्नारायणचरणारविन्दमधुव्रत[2]साहित्या[3]र्णवकर्णधारध्वनिप्रस्थापनपरमाचार्य-
कविसूक्तिरत्नाकराष्टादशभाषा[4]वारविलासिनीभुजंगसांधिविग्रहिकमाहापात्र-
श्रीविश्वनाथकविराजकृतौ साहित्यदर्पणे काव्यस्वरूप-
निरूपणो नाम प्रथमः परिच्छेदः[5] ।
अत्र मूलकारिकाः=३ । उदाहरणश्लोकाः=६ ।

---

काव्यत्वानङ्गीकारादित्यभिप्रायेण शङ्कते—**इह यद्यपीति** । इह नवीनालंकारिकसंप्रदायमते । **रसधर्मत्वमिति** । काव्ये गुणानामव्यभिचारित्वज्ञापनाय प्रसादगुणप्रकरणे प्राचीनैरुक्तम्—यथा 'स च सर्वरसव्यापी काव्यजीवातुरिष्यते' इति । **तथापीति** । अत्रानन्तरोक्तकारिकायाम् । शब्दानां गुणाभिव्यञ्जकत्वं गुणपरिच्छेदे व्यक्तीभविष्यति । अर्थानां तूद्धतानुद्धततया ओजोमाधुर्यव्यञ्जकत्वं, झटिति प्रतिपाद्यत्वेन प्रसादव्यञ्जकत्वमवगन्तव्यम् । **उपचर्यते** लक्षणया प्रयुज्यते । **अतश्च** गुणशब्दौपचारिकत्वस्वीकाराच्च । **शब्दाः** शब्दार्थाः । एवं च गुणाभिव्यञ्जकशब्दार्थहीनमपि व्यङ्ग्यं संभवति तदपेक्षया गुणाभिव्यञ्जकशब्दार्थयोः काव्योत्कर्षकत्वमुपपन्नमिति भावः । ननु गुणाभिव्यञ्जकपदविन्यासस्य रीतित्वेन निरूपणीयतया रीतेरेतेनैव संग्रहे पृथक्तदुपादानमनर्थकमिति । तदेतच्चिन्त्यम् ॥

इति श्रीरामचरणतर्कवागीशभट्टाचार्यविरचितायां साहित्यदर्पणविवृतौ
प्रथमः प्रकाशः ।

---

१. 'एव' क. २. 'मधुकर' क. ३. 'साहित्यविद्या' क. ४. 'वार' क-ख-पुस्तकयोर्नास्ति.
५. 'उल्लासः' ग.



द्वितीयः परिच्छेदः।

वाक्यस्वरूपमाह—

**वाक्यं स्याद्योग्यताकाङ्क्षासत्तियुक्तः पदोच्चयः।**

योग्यता पदार्थानां परस्परसंबन्धे बाधाभावः। पदोच्चयस्यैतदभा-

---

उपोद्घातसंगत्या वाक्यं निरूपयति—**वाक्यमिति**। प्रकृतसिद्ध्यनुकूलचिन्ताविषयत्वमुपोद्घातः। काव्यलक्षणं चात्र प्रकृतम्। योग्यतामाह—**पदार्थानामिति**। परस्परसंबन्धे परस्परान्वयबोधे। हेतुविशेषः। 'न तत्र करुणा हेतुः' इतिवत् षष्ठ्यर्थे सप्तमी। बाधो विपरीतबुद्धिः। तथा चान्वयबोधे हेतुभूतबाधाभावो योग्यतेत्यर्थः। प्रत्यक्षादिकारणीभूतबाधाभाववारणाय भूतान्तं विशेषणम्। 'पयसा सिञ्चति' इत्यादौ श्रोतुः सेकः पयःकरणकत्वाभाववानित्यादिविपरीतबुद्धेरभावः। सा चात्र प्रमारूपा ग्राह्या। अन्यथा तादृशभ्रमभाजि श्रोतरि सति 'पयसा सिञ्चति' इति वाक्यं न स्यात्। ननु तादृशप्रमाया अप्रसिद्ध्या तद्विरहस्याप्रसिद्धिरिति निरुक्तयोग्यता शशविषाणवदलीकेति चेत्तर्ह्येवं व्याख्येयम्—**परस्परसंबन्धे इति**। [1]सप्तम्यर्थो निरूपकत्वम्। परस्परसंबन्धनिरूपकाणां पदार्थानामित्यर्थः। तात्पर्यविषयीभूतपरस्परसंबन्धे सतीत्यर्थः। **बाधाभावः** सद्भावः। एवं च तात्पर्यविषयीभूतसंबन्धेन [2]तन्निरूपकाणां पदार्थानामेकतरस्मिन्नपरपदार्थसद्भावो योग्यतेति फलितम्। पाकादौ विद्यमानस्य वह्निकरणकत्वस्य सेकादौ येन केनचित्परम्परासंबन्धेन सद्भावे 'वह्निना सिञ्चति' इत्यादेर्वाक्यत्वप्रसक्तौ तद्वारणाय तात्पर्यविषयीभूतेति संबन्धविशेषणम्। अस्ति च 'पयसा सिञ्चति' इत्यादौ पयःकरणकत्वस्य स्वरूपसंबन्धेन सेके सद्भावः। योग्यताया व्यावृत्तिमाह—**पदोच्चयस्येति**। एतदभावे

---

1. वाक्यमिति। आकाङ्क्षायोग्यतासत्तिमतां पदानां समूहो वाक्यमिति। तत्रासत्तिर्मन्दबुद्धेरविलम्बेन शाब्दबोधे कारणम्। अमन्दबुद्धेस्त्वासत्त्यभावेऽपि पदार्थोपस्थितावाकाङ्क्षादितोऽविलम्बेनैव बोधो भवतीति न शाब्दबोधे तस्याः कारणत्वमिति मञ्जूषायां प्रतिपादितम्। दैनकर्यामपि—नचोक्ताया आसत्तेः श्लोकेऽभावादविशेषदर्शनेव पदाव्यवधानभ्रमस्यापि तत्राभावाच्छाब्दबोधो न स्यादिति वाच्यम्, श्लोकादौ योजनावाक्यादेवान्वयबोधोपगमात् इत्याद्यभिहितम्। तात्पर्यमपि शाब्दबोधे कारणम्। तच्च एतत्पदं वाक्यं वा एतदर्थबोधायोच्चार्यत इति प्रयोक्तुरिच्छारूपम्। तात्पर्यनियामकं तु प्रकरणादिकमेव। अतो भोजनावसरे सैन्धवपदेन लवणस्य युद्धावसरेऽश्वस्य च प्रत्ययः। प्रकरणादेः शक्तिनियामकत्वे शक्त्यैव निर्वाहे किं तात्पर्येणेति न वाच्यम्, अस्माच्छब्दादर्थद्वयविशेष्यको बोधो जायतेऽर्थद्वयशक्तिसत्त्वात्, तात्पर्यं तु क्वेति न ज्ञायत इत्यनुभवविरोधात्। अत एव पय आनयेत्यादेशे प्रकरणमजानतो दुग्धं जलं

---

१. 'सप्तम्यर्थः—' इत्यादिः 'पदार्थानामित्यर्थः' इत्यन्तः पाठः पुस्तकान्तरे नास्ति। २. 'तन्निरूपकाणां' पुस्तकान्तरे नास्ति।

वेऽपि वाक्यत्वे 'वह्निना सिञ्चति' इत्याद्यपि वाक्यं स्यात् । आकाङ्क्षा प्रतीतिपर्यवसानविरहः । स[2] च श्रोतुर्जिज्ञासारूपः । निराकाङ्क्षस्य वाक्यत्वे 'गौरश्वः पुरुषो हस्ती' इत्यादीनामपि वाक्यत्वं स्यात् ।

---

निरुक्तयोग्यताविरहे । **वह्निनेत्यादि** । अत्र कारणस्य कार्यनिरूपितत्वनियमात्कार्य-व्यतिरेकेणानुपपत्त्या सेकरूपे कार्ये भवत्येवाकाङ्क्षेति ध्येयम् । आकाङ्क्षामाह— **आकाङ्क्षेति** । प्रतीतेः पदार्थोपस्थितेः पर्यवसानमन्वयबोधजनकत्वेनेच्छाविरहः, तस्य विरहः । अभाव इत्यर्थः । नन्वेवमाकाङ्क्षापदस्याभावबोधकत्वे लक्षणापत्तिरित्यत आह—**स चेति** । प्रतीतिपर्यवसानविरहश्चेत्यर्थः । अभावाभावः प्रतियोगिस्वरूप एव, न त्वतिरिक्तः कल्प्यत इति भावः । अस्ति च 'पयसा सिञ्चति' इत्यादौ पयसेति पदार्थस्य सिञ्चतीति पदार्थेनान्वयबोधजनने श्रोतुरिच्छा । प्रतीतिपर्यवसानं च क्वचित्स्वाभाविकं क्वचिज्जनितान्वयबोधत्वेन । तत्राद्यमाह—**गौरिति** । अ[3]त्र गवा-दिप्रथमान्तपदोपस्थापितानां पदार्थानामभेदातिरिक्तसंबन्धेनान्वयबोधोऽव्युत्पन्न इति भवति पदार्थोपस्थितेरन्वयबोधजनने श्रोतुरिच्छाविर[4]हः । अ[5]त्राभेदातिरिक्तसंबन्धेन बाधसत्त्वेऽपि सत्त्वादिसंबन्धेन बाधविरहरूपयोग्यतास्तीति ध्येयम् । द्वितीयं यथा—

---

वेति प्रश्न उपपद्यत इति । एकतिङ्वाक्यमिति तु शाब्दिकाः । एकतिङन्तार्थमुख्यविशेष्यक-बोधजनकपदसमूह इति तदर्थः । तेन पचति भवति, पश्य मृगो धावति, ब्रूहि ब्रूहि देव दत्त इत्यादौ क्रियापदस्यानेकत्वेऽपि नैकवाक्यत्वहानिः । तार्किकाः पुनः सुबन्तसमूहः, तिङन्तसमूहः, सुप्तिङन्तसमूह इति विभागमाहुः । तत्र प्रथमः—त्रयः कालाः । इह वर्तमानत्वासंभवेन सन्तीत्यादेः दुर्ज्ञानत्वेन ज्ञायन्त इत्यादेश्चाध्याहारासंभवमामनन्ति । द्वितीयः—पचति भवति । तृतीयः—चैत्रः पचति । मीमांसकास्तु विधिर्निषेध इति द्विविधं लिङादिपदघटितं वाक्यमाहुः । तत्र विधिः—स्वर्गकामो यजेत । निषेधः—न कलञ्जं भक्ष-येत् । इति दिक् । वाक्यबोधस्त्वेवम्—पूर्वं तावच्छब्दश्रवणादनन्तरं श्रोतुरात्मनि समुप-स्थीयते तत्तदर्थैः । समुदीयते च योग्यतादिवशेन तेषां परस्परं विशिष्टान्वयबोधेन । उपस्थितिश्च स्मृतिरेव । स्मृतिर्लोके समनुभूतपदार्थस्योद्बोधकसहकृतसंस्कारेण जायते । तत्रान्योद्बोधकस्यानुपलम्भाच्छब्दश्रवणस्यैव तत्संस्कारोद्बोधे कारणत्वमङ्गीक्रियते । एक-संबन्धिज्ञानस्यापरसंबन्धिस्मारकताया अन्यत्र दर्शनाच्छब्दार्थयोरपि परस्परं संबन्धित्व-मवसीयते । अवसीयते च तस्यैव संस्कारोद्बोधकत्वम् । तथा च यदि शब्दानां पदार्थैः सह संबन्धो न स्यात्तर्हि ततोऽर्थस्मृतिर्न जायेत । स्मर्यन्ते चार्थाः शब्दैः । अतएव वाक्यपदीये—'सति प्रत्ययहेतुत्वे संबन्ध उपपद्यते । शब्दस्यार्थैर्यतोऽतस्तत्संबन्धोऽ-स्तीति गम्यते ॥' इति प्रत्ययहेतुत्वान्यथानुपपत्त्यैव तयोः संबन्धसद्भावानुमितिः स च संबन्धो वृत्तिरूप इति ॥

---

१. 'इत्यपि' ख-ग-घ. २. 'स च' ग-पुस्तके नास्ति. ३. 'अत्र—' इत्यादिः 'भवति' इत्यन्तः पाठः पुस्तकान्तरे त्रुटित इति प्रतिभाति. ४. 'स्वाभाविक एव' इत्यधिकं पुस्तकान्तरे. ५. 'अत्रा-भेद—' इत्यारभ्य '—ध्येयम्' इति पर्यन्तः पाठो नास्ति पुस्तकान्तरे.

आसत्तिर्बुद्ध्यविच्छेदः। बुद्धिविच्छेदेऽपि वाक्यत्वे इदानीमुच्चारितस्य[1] देवदत्तशब्दस्य[2] दिनान्तरोच्चारितेन[3] गच्छतीति पदेन संगतिः स्यात्। [4]अत्राकाङ्क्षायोग्यतयोरात्मार्थधर्मत्वेऽपि पदोच्चयधर्मत्वमुपचारात्[1]।

**वाक्योच्चयो महावाक्यम्—**

[5]**योग्यताकाङ्क्षासत्तियुक्त इत्येव।**

---

'विमलं जलं, नद्याः कच्छे महिषश्चरति' इत्यत्र नद्या इति पदार्थोपस्थितेर्जलमिति, पदार्थेनान्वयबोधे सति सिद्धे 'इच्छाविरहात्' इति न्यायेन 'कच्छे' इत्यनेन श्रोतुरन्वयबोधे इच्छाविरहः। यदि पुनरुभयान्वयेच्छया प्रयुज्यते तदा 'नद्याः' इत्यस्य काकाक्षिगोलकन्यायादनुषङ्गाद्वा 'कच्छे' इत्यनेन संबन्धाद्गृहीतवक्तृतात्पर्यस्य श्रोतुरुभयान्वयबोधेच्छा संभवतीति ध्येयम्। आसत्तिमाह—**आसत्तिरिति**। बुद्धेः पदार्थोपस्थितेरविच्छेदोऽव्यवधानम्। [6]अव्यवहितपदार्थोपस्थितिरिति तात्पर्यार्थः। व्यवधानं च कालबाहुल्येन प्रकृतानुपयोगिपदार्थोपस्थित्या च संभवति। तत्राद्यमाह—**बुद्धीति**। वाक्यत्वे वाक्यत्वस्वीकारे। दिनान्तरेत्यत्यन्तव्यवधानदर्शनाय। प्रहरादिव्यवधानेनाप्यनासत्त्वं बोध्यम्। **संगतिर्वाक्यव्यवहारोपयोगिमेलकः**। द्वितीयं यथा—'गिरिर्भुक्तमग्निमान्देवदत्तेन' इत्यत्र गिरिरग्निमान्, भुक्तं देवदत्तेनेति वाक्यार्थबोधद्वयं प्रकृतम्। तत्र प्रथमानुयोगिन्या भुक्तमिति पदार्थोपस्थित्या, द्वितीयानुयोगिन्या अग्निमानिति पदार्थोपस्थित्या व्यवधानम्। [7]प्रकृतोपयोगिपदार्थोपस्थित्या व्यवधाने त्वासत्तिरस्त्येव। तेन 'अश्वेन ग्रामं गच्छति' इत्यादौ ग्रामपदार्थोपस्थितिव्यवधानेऽपि अश्वपदस्य गच्छतीत्यनेनासत्तिरव्याहतैव। स्वार्थबोधसमाप्तत्वमपि पदोच्चयविशेषणं बोध्यम्। तेन 'शून्यं वासगृहं—'इत्यादिभागस्य न वाक्यत्वम्। योग्यताकाङ्क्षयोः पदोच्चयधर्मत्वमुपपादयति—**आकाङ्क्षेति**। आकाङ्क्षाया इच्छारूपत्वाद्विपरीतबुद्ध्यभावरूपयोग्यतायाश्चात्मनिष्ठतयान्वयबोधहेतुत्वादात्मवृत्तित्वमेव[8]। **उपचारा**त्स्वजन्यजनकत्वरूपपरम्परासंबन्धात्। एकपदार्थीयापरपदार्थसद्भावरूपयोग्यतायास्तु पदार्थधर्मत्वेऽपि स्वाश्रयोपस्थापकत्वसंबन्धेन पदोच्चयधर्मत्वमेवावगन्तव्यम्। निरुक्तासत्तेरप्यात्मधर्मत्वात् तत्राप्येषैव रीतिरनुसर्तव्या। यदि पुनः समभिहारविशेष आकाङ्क्षा, अव्यवधानोच्चरितत्वमासत्तिः, तदानयोः साक्षादेव पदोच्चयधर्मत्वमित्यास्तां विस्तरः। महावाक्यमाह—**वाक्योच्चय इति**। योग्यताद्यभावे महावाक्यत्वस्वीकारे 'चक्षुषा

---

1. उपेति। उपचारो लक्षणा। तात्पर्यानुपपत्तिश्चोपचारे बीजम्॥

---

१. 'चैत्र' ग. २. 'पदस्य' ख. ३. 'उच्चारितेन' घ. ४. 'तत्र' क. ५. 'योग्यता—' इति फक्किका ग-पुस्तके नास्ति; घ. पुस्तके तु 'वाक्योच्चयः—' इत्यस्य प्राग्दृश्यते. ६. 'अव्यवहितपदार्थोपस्थितिरिति तात्पर्यार्थः' इति पुस्तकान्तरे नास्ति. ७. 'प्रकृतोप—' इत्यादिः '—अव्याहतैव' इत्यन्तः पाठः पुस्तकान्तरे न दृश्यते. ८. 'आत्मवृत्तित्वमेव। एकपदार्थे—परपदार्थसद्भावरूपयोग्यताया अर्थधर्मत्वमेव। उपचारात्स्वजन्यजनकत्वरूपपरम्परासंबन्धात्स्वाश्रयोपस्थापकत्वाच्च पदोच्चयधर्मत्वमवगन्तव्यम्' इत्युपलभ्यते पाठभेदः पुस्तकान्तरे.

**इत्थं वाक्यं द्विधा मतम् ॥ १ ॥**

इत्थमिति [1]वाक्यत्वेन महावाक्यत्वेन च । उक्तं च तन्त्रवार्तिके—

'[2]स्वार्थबोधेसमाप्तानामङ्गाङ्गित्वव्यपेक्षया ।
वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते ॥' इति ।

तत्र वाक्यं यथा—'शून्यं वासगृहं–'इत्यादि (२३ पृ.) । महावाक्यं यथा—रामायणमहाभारतरघुवंशादि ।

पदोच्चयो वाक्यमित्युक्तम् । तत्र किं पदलक्षणमित्यत आह—

**[1]वर्णाः पदं प्रयोगार्हानन्वितेकार्थबोधकाः ।**

---

गृह्यतां, गगनं वर्तते' इत्येतयोः 'भिक्षुरुपवसति, गृही भुङ्क्ते' इत्येतयोर्भिन्नदिनोच्चारितयोः 'चक्षुषा गृह्यतां, घटो वर्तते' इत्येतयोरपि महावाक्यत्वं स्यात् । अत्र प्राचां संवादमाह—**स्वार्थेति** । स्वार्थबोधेन समाप्तानां निराकाङ्क्षाणां पुनरङ्गाङ्गित्वव्यपेक्षया गुणप्रधानभावेनाकाङ्क्षया संहत्य एकार्थप्रतिपादकत्वेन मिलित्वा वाक्यानामेकवाक्यत्वं जायत इत्यर्थः । वाक्यार्थानां गुणप्रधानभावेन वैशिष्ट्यादेकत्वं तत्प्रतिपादकत्वेन वाक्यानामेकवाक्यत्वमिति भावः । पदनिरूपणे प्रसङ्गसंगतिमुपपादयति—**पदोच्चय इति** । वाक्यनिरूपणे स्मृतस्य पदस्यानुपेक्षणीयत्वमिह प्रसङ्ग इति भावः । **वर्णाः** स्वरव्यञ्जनरूपाः । प्रयोगार्हाश्च

---

1. वर्णा इति । वर्णोत्पत्तिस्तावदेवमुपवर्ण्यते—चेतनेन ज्ञातार्थविवक्षया तद्बोधकशब्दनिष्पादनाय प्रेरितमन्तःकरणं मूलाधारस्थितमनलं चालयति, तच्चालितोऽनलस्तत्स्थलवर्तिवायुचालनाय प्रभवति, तच्चालितेन वायुना तत्रैव सूक्ष्मरूपेणोत्पादितः शब्दः परावागित्यभिधीयते । ततो नाभिदेशपर्यन्तचलितेन तेन तद्देशसंयोगादुत्पादितः शब्दः पश्यन्तीति व्यवह्रियते । एतद्द्वयस्य सूक्ष्मसूक्ष्मतरतयेश्वरयोगिमात्रगम्यता, नासदीयश्रुतिगोचरता । ततस्तेनैव हृदयदेशं परिसरता हृदयसंयोगेन निष्पादितः शब्दो मध्यमेत्युच्यते । सा च स्वकर्णपिधानेन ध्वन्यात्मकतया सूक्ष्मरूपेण कदाचिदस्माकमपि समधिगम्या । ततो मुखपर्यन्तमाक्रामता तेन कण्ठदेशमासाद्य मूर्धानमाहत्य तत्प्रतिघातेन परावृत्य च मुखविवरे कण्ठादिकेष्वष्टसु स्थानेषु स्वाभिघातेनोत्पादितः शब्दो वैखरीति कथ्यते । अत्र वर्णानां क्रमवतामाशुतरविनाशित्वेनैकदानेकवर्णानुभवासंभवात् पूर्वपूर्ववर्णाननुभूयान्त्यवर्णश्रवणकाले पूर्ववर्णानुभवजनितसंस्कारसहकृतेनान्त्यवर्णसंबद्धेन पदव्युत्पादनसमयग्रहणागृहीतेन श्रोत्रेणैकदैव सदसदनेकवर्णावगाहिनी पदप्रतीतिर्जन्यते, सहकारिसामर्थ्यात् प्रत्यभिज्ञावत् । प्रत्यभिज्ञाप्रत्यक्षे हि अतीतापि पूर्वावस्था स्फुरत्येवेति । 'सुप्तिङन्तं पदम्' इति तत्रभवान् पाणिनिः । 'ते विभक्त्यन्ताः पदम् । २।२।६०।' इति भगवान् गौतमः । न्यायनये द्विविधं पदम् । मुख्यं गौणं चेति । यत् शक्तिवृत्त्या यमर्थमुत्थाप-

---

1. 'वाक्यत्वमहावाक्यत्वेन'. 2. 'स्वार्थबोधे' क.

यथा—घटः। प्रयोगार्हेति प्रातिपदिकस्य व्यवच्छेदः। अनन्वितेति वाक्यमहावाक्ययोः। एकेति साकाङ्क्षानेकपदवाक्यानाम्। अर्थबोधका इति कचटतपेत्यादीनाम्। वर्णा इति बहुवचनमविवक्षितम्।

---

ते अनन्वितैकार्थबोधकाश्चेति विग्रहः। सुबाख्यातान्यतरान्तत्वेन क्वचित्तद्धितान्तत्वेन प्रयोगार्हत्वम्। प्रातिपदिकस्य विभक्तिरहितनाम्नः केवलस्य तस्याप्रयोगित्वात्। एतदुपलक्षणं धातोरित्यपि बोध्यम्। तस्यापि केवलस्याप्रयोगित्वात्। वाक्यमहावाक्ययोर्व्यवच्छेद इत्यनेनान्वयः। एवमग्रेऽपि। तयोरन्वितार्थबोधकत्वात्। साकाङ्क्षेति[2]। आकाङ्क्षामात्रविशिष्टानामयोग्यानामनासन्नानां चानेकपदानामनेकवाक्यानां चेत्यर्थः। एषामन्वितार्थबोधकत्वेन पदत्वप्रसक्तौ तद्वारणाय एकेतीति भावः। नन्वेकवर्णद्विवर्णपदयोरव्याप्तिर्वर्णबहुत्वाभावादत आह—वर्णा इतीति। ननु प्रकृत्यर्थान्वितस्वार्थबोधकत्वं प्रत्ययानामिति नियमात् कथं घटमित्यादिपदानामन्वितार्थबोधकत्वम्[3]। न च शक्तिमत्पदमिति मतानुसारेण 'घट' इत्येकं पदम् 'अम्' इत्यपरं पदम्, अनयोः प्रत्येकपदार्थोपस्थापकत्वेन अनन्वितार्थबोधकत्वमक्षतमिति वाच्यम्। तथा सति घटमित्यादेः पदसमुदायस्य वाक्यत्वं स्यात्। न चेष्टापत्तिः। एवं सति 'शून्यं वासगृहं'–(२३ पृ.) इत्यादि यद्वाक्योदाहरणं दत्तं तदसंगतं स्यात्। तस्य तथाविधवाक्यस्य महावाक्यतयैवोदाहर्तुमुचितत्वात्। न च प्रत्ययार्थातिरिक्तानन्वितार्थबोधकत्वं विवक्षणीयमिति वाच्यम्। तथाप्यभेदसंबन्धेन नीलाद्यन्वितोत्पलादिबोधकेषु 'नीलोत्पलम्' इत्यादिषु मुख्यार्थान्वितार्थबोधकेषु लाक्षणिकश्वेतादिपदेषु चाव्याप्तेरनुद्धारात् समस्तस्य पदत्वास्वीकारे 'क्षीरोदजावसतिजन्मभुवः प्रसन्नाः' इत्यादिपदगतक्लिष्टत्वोदाहरणमसंगतं स्यात्। न चेतरपदार्थनिरपेक्षं यत्तद्भिन्नमनन्वितमिह विवक्षणीयमिति वाच्यम्। तथात्वे ग्रामं गत्वेत्यादिसमुदायस्य त्वमितिकर्तृपदसापेक्षान्वितबोधकस्य पदत्वापत्तेः। एवमेकेति न संगच्छते, 'घटौ' 'घटाः' इत्यादिद्विवचनान्तबहुवचनान्तपदेष्वनेकार्थबोधकेष्वव्याप्तेः। न च एकेत्येकजातीयेत्यर्थ इति वाच्यम्। 'धवखदिरपलाशाः' इत्यादौ युगपच्चन्द्रसूर्योपस्थापके 'पुष्पवन्तौ' इति पदे चाव्याप्तितादवस्थ्यात्। अपि च। पदघटकानां

---

यति तत् तस्मिन्नर्थे मुख्यम्। यथा गोघटादिव्यक्त्युत्थापकं गोघटादिपदम्। मुख्यमपि चतुर्विधम्। यौगिकं रूढं योगरूढं यौगिकरूढं चेति। तत्र प्रथमं पाचकादिपदम्। द्वितीयं गोमण्डपादिपदम्। तृतीयं पङ्कजादिपदम्। चतुर्थमुद्भिदादिपदम्। यत् लक्षणावृत्त्या यमर्थमुत्थापयति तत् तस्मिन्नर्थे गौणम्। यथा गङ्गायां घोष इत्यत्र लक्षणावृत्त्या तीरोपस्थापकं गङ्गापदम्। इदमेव लाक्षणिकमिति। अधिकमग्रे॥

---

१. "विशिष्टवाक्यार्थस्य विशेषणविशेष्यानतिरिक्तत्वेनैकत्वमित्यभिप्रायेणेदं लक्षणम्। 'अन्वितैकार्थबोधकाः' इत्यनेनैव वाक्यवारणे सिद्धे 'अनन्वित–' इत्युपादानं व्यर्थं स्यात्" इति मुद्रितेऽधिकम्. २. साकाङ्क्षाणामन्वयबोधाजनकानामनेकेषां पदानां वाक्यानां च समुदायस्य व्यवच्छेद इत्यर्थः। तथा चायोग्यानामनाकाङ्क्षाणामनासन्नानां च समुदायस्यान्वितार्थबोधकत्वेऽपि न पदत्वमिति भावः. इति मुद्रितः पाठः. ३. 'घटीयं कर्मत्वमित्याद्यन्वितार्थबोधकस्य घटमित्यादेः कथं पदत्वम्' इति मुद्रितेऽधिकः पाठः.

**अर्थो वाच्यश्च लक्ष्यश्च व्यङ्ग्यश्चेति त्रिधा मतः ॥ २ ॥**

एषां[1] स्वरूपमाह—

**वाच्योऽर्थोऽभिधया बोध्यो लक्ष्यो लक्षणया मतः ।**
**व्यङ्ग्यो व्यञ्जनया ताः स्युस्तिस्रः शब्दस्य शक्तयः ॥ ३ ॥**

ता अभिधाद्याः ।

**तत्र संकेतितार्थस्य बोधनादग्रिमाभिधा ।**

उत्तमवृद्धेन मध्यमवृद्धमुद्दिश्य 'गामानय' इत्युक्ते तं गवानयनप्रवृत्तमुपलभ्य बालोऽस्य वाक्यस्य 'सास्नादिमत्पिण्डानयनमर्थः' इति

---

यावतां वर्णानामनन्वितैकार्थबोधकत्वमुत केषांचिद्वा । तत्र, नाद्यः । 'सुन्दरस्य देवदत्तस्य धनम्' इत्यादौ विशेषणविभक्तेरनर्थकत्वात् 'सुन्दरस्य' इत्यादिपदेऽव्याप्तेः । नापि द्वितीयः । 'वह्निना सिञ्चति' इत्यादौ सर्वेषामनन्वितैकार्थबोधकत्वाभावेऽपि प्रत्येकं तथात्वसद्भावादतिव्याप्तेः[2] । एवं च पदलक्षणमेवं[3] वाच्यम्—'असमासाङ्गसुप्तिङ्तल्लोपयुक्प्रकृतिः पदम्' । युगन्तेन केवलप्रकृतेः । असमासाङ्गेत्यनेन[4] 'पितुः स्वसा, जहिजोडः' इत्यादौ पूर्वावयवस्य । 'राजदन्तः' इत्यादौ उभयोरपि । 'प्रकृतिः' इत्यनेन वाक्यमहावाक्ययोर्व्यवच्छेदः । समासावयवस्य पदत्वाङ्गीकारे 'नीलोत्पलम्' इत्यादिपदस्य वाक्यत्वं स्यात् । योग्यतालक्षणघटकपदार्थानाह—**अर्थ इति** । पदप्रतिपाद्य इत्यर्थः । एषां वाच्यादीनाम् । **अभिधया बोध्य इति** । अभिधाजन्यबोधविषय इत्यर्थः । अर्थबोधे शब्दस्य वृत्तीनां च कारणत्वमिह विषयविषयिणोरभेदोपचाराद्बोध्यम् । वास्तवकारणं तु शब्दतद्वृत्तिज्ञानमेव । शब्दस्य प्रकृतेः प्रत्ययस्य च शक्तयोऽर्थबोधे सहकारिण्यो वृत्तयः । अभिधादिशक्तिमाह—**तत्रेति** । अभिधादिषु मध्य इत्यर्थः । **संकेतितार्थस्येति** । संकेतितग्रहविषयार्थस्येति तु नार्थः, संकेतस्याभिधाया अभिन्नत्वेनात्माश्रयापत्तेः । किंतु कोशव्याकरणादिप्रसिद्धस्य मुख्यार्थस्येत्यर्थः । मुख्यत्वं च लक्ष्यव्यङ्ग्यापेक्षया प्रथमोपस्थितिविषयत्वम् । **बोधनात्** स्वज्ञानेन शाब्दबोधजननात् । संकेतग्रहोपायान्वृद्धव्यवहारादीनाह—**उत्तमेति** । वृद्धेन संकेतग्रहवता । प्रयोजकप्रयोज्यभावसंपादनाय उत्तमत्वमध्यमत्वाभ्यां वृद्धयोरुपन्यासः । तं मध्यमवृद्धं गवानयनप्रवृत्तं गवानयनगोचरयत्नवन्तमुपलभ्य गवानयनक्रियया अनुमाय बालः [5]संकेतग्रहाभाववान् **अस्य** 'गामानय' इत्यस्य प्रथमं शक्तिग्रहात्पूर्वं प्रतिपद्यते इति । अनुमितेन यत्नेन

---

1. सास्नेति । सास्ना गलकम्बलः, आदिपदेन लाङ्गूलककुदखुरादि गृह्यते.

---

१. 'तत्र' इत्यधिकं ग-घ-पुस्तकयोः. २. 'यद्वा' 'द्वौ घटौ' इति समुदायस्य संभेदेनान्यतरवैयर्थ्यमिति न्यायाद् 'द्वौ' इति भागस्यानर्थकत्वेऽपि 'घटौ' इति 'भागस्यानन्वितैकार्थबोधकत्वात्तत्रातिव्याप्तेः' इति मुद्रितपुस्तकेऽधिकः पाठः. ३. 'पदलक्षणमेवं वाच्यम्' इति पुस्तकान्तरे नास्ति. ४. 'अनेन' इति पुस्तकान्तरे नास्ति. ५. 'संकेताग्रहवान्' इति पुस्तकान्तरे.

प्रथमं प्रतिपद्यते, अनन्तरं च 'गां बधान' 'अश्वमानय' इत्यादावावापो- द्वापाभ्यां गोशब्दस्य 'सास्नादिमानर्थः' आनयनपदस्य च 'आहरणमर्थः' इति संकेतमवधारयति। क्वचिच्च प्रसिद्धपदसमभिहारात्, यथा— 'इह प्रभिन्नकमलोदरे मधूनि मधुकरः पिबति' इत्यत्र। क्वचिदाप्तोप-

---

मध्यमवृद्धस्य गवानयनगोचरं ज्ञानमनुमिनोति, तद्गोचरप्रवृत्तिं प्रति तद्गोचरज्ञानस्य हेतुत्वात्, ततस्तस्य ज्ञानस्य को हेतुरित्याकाङ्क्षायामुपस्थितत्वात् 'गामानय' इति वाक्यस्यैव तादृशज्ञानहेतुतां कल्पयतीति भावः। **अश्वमानयेत्यादाविति।** उक्ते इति शेषः। **आवापोद्वापाभ्यामिति।** आवापोद्वापाभ्यामन्वयव्यतिरे- काभ्यां 'गां बधान' इत्यत्र गोपदसत्त्वे सास्नादिमत्पदार्थबोधः। आनयनपदव्यति- रेकेणाहरणपदार्थबोधाभावः। 'अश्वमानय' इत्यत्र गोपदव्यतिरेकेण सास्नादिमत्प- दार्थबोधाभावः। आनयपदसत्त्वे आहरणपदार्थबोधः, इत्येवंरूपान्वयव्यतिरेकौ। **संकेत**मभिधानामशक्तिम्। सा चातिरिक्तैव न त्वस्माच्छब्दादयमर्थो बोद्धव्य इती- श्वरेच्छा। ईश्वरं दूषयतां पामरादीनामपि शाब्दबोधोदयादतिप्रसङ्गाच्च। अत एवा- धुनिकसंकेतितानां चैत्रादिपदानामपि संकेतः संगच्छते। न चाशौचव्यपगमे पिता नामधेयं कुर्यादिति सामान्यतश्चैत्रादिपदानामपीश्वरसंकेतितत्वमिति वाच्यम्। तत्र तथागतिसंभवेऽपि यादृच्छिकसंकेतितडित्थादिपदानां संकेतासंगतिप्रसङ्गात्। त- स्याश्च पदार्थे वैशिष्ट्यं नाम संबन्धः कल्प्यते 'अयं घटपदाभिधेयः' इत्यादिप्रती- तिबलादिति सांप्रदायिकाः। **क्वचिदिति।** [3]प्रसिद्धस्य गृहीतसंकेतस्य पदस्य सम- भिहारात् साहचर्यात्। समीपोच्चारितत्वादित्यर्थः। प्रेक्षावद्भिः प्रायेण योग्यपदा- र्थोपस्थापकं पदं समीपे प्रयुज्यत इत्यादिसंबन्धतः प्रसिद्धपदार्थान्वययोग्यपदार्थ- विशेषोक्तिग्रहो भवतीति भावः। एवं च शक्यार्थे योग्यतासत्त्वेऽपि वक्तृतात्पर्यवि- शेषस्यात्र हेतुत्वकल्पनात्तत्र न शक्तिग्रहः। संकेतमवधारयतीत्यनुषङ्गः। एवम- ग्रेऽपि। **प्रभिन्नेति।** प्रफुल्लेत्यर्थः। '[4]अत्र कमले मधुकरो मधु पिबति' इति पदा- नामन्वययोग्यतार्थकत्वज्ञानेन मधुकरपदस्य भ्रमर एव शक्तिग्रहः। मक्षिकादौ तादृशयोग्यतासत्त्वेऽपि वक्तृतात्पर्यविशेषज्ञानाभावान्न शक्तिग्रहः। कमलाभ्य- न्तरे भ्रमर एव मधु पिबतीति जानता जनेन कमलपदसमभिहारान्मधुकरपदस्य भ्रमरे संकेतो गृह्यते। **आप्तो**पदेशात् प्रामाणिकवचनात्। एतदुपलक्षणम्। व्या- करणादयोऽपि शक्तिग्रहोपाया द्रष्टव्याः। तदुक्तम्—'शक्तिग्रहं व्याकरणोपमान- कोषाप्तवाक्याद्व्यवहारतश्च। वाक्यस्य शेषाद्विवृतेर्वदन्ति सांनिध्यतः सिद्धपदस्य वृद्धाः॥' इति। दाक्ष्यादिशब्दानां दक्षापत्येषु शक्तिग्रहो व्याकरणात्। गोसदृश- पिण्डदर्शनाद् गोसदृशो गवयपदवाच्य इत्यतिदेशवाक्यस्मरणे अयं गवयपदवाच्य इत्युपमानात्। 'विनायको विघ्नराजद्वैमातुरगणाधिपाः' इत्यादौ कोषात्। आप्तवा-

---

१. 'अर्थ' इति क-ग. पुस्तकयोः. २. 'इह' ग-पुस्तके नास्ति. ३. 'प्रसिद्धस्य—' इत्यादिः '—न शक्तिग्रहः' इत्यन्तो ग्रन्थः पुस्तकान्तरे न दृश्यते. ४. 'अत्र कमले—' इत्यादिः 'ज्ञानाभावान्न शक्तिग्रहः' इत्यन्तः पाठो बहुत्र नोपलभ्यते.

देशात्, यथा—'अयमश्वशब्दवाच्यः' इत्यत्र । तं च संकेतितमर्थं बोधयन्ती शब्दस्य शक्त्यन्तरानन्तरिता शक्तिरभिधा नाम ।[1]

**संकेतो गृह्यते जातौ गुणद्रव्यक्रियासु च ॥ ४ ॥**

---

क्यादित्र(द्व)यमुदाहृतं स्वयमेव ग्रन्थकृता । वाक्यशेषाच्छक्तिग्रहो यथा—'यवमयश्चरुर्भवति । वाराही चोपानत् । वैतसे कटे प्राजापत्यं धिनोति ।' इत्यत्र यववराहवेतसशब्दाः किं म्लेच्छप्रयोगात् कङ्गुवायसजम्बूनां वाचकाः, उत आर्यप्रयोगाद् दीर्घशूकसूकरवञ्जुलानामिति विप्रतिपत्तौ 'वसन्ते सर्वसस्यानां जायते पत्रशातनम् । मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिनः ॥', 'वराहं गावोऽनुधावन्ति', 'अप्सु जो वेतसः' इति वाक्यशेषरूपवेदविरोधिनी म्लेच्छप्रतीतिः स्मृतिरिव वेदविरुद्धा हेया । इत्यार्यप्रयोगादेव दीर्घशूकादौ शक्तिग्रह इति । 'शक्तिः कवित्वबीजरूपः संस्कारविशेषः' इत्यादौ विवृतेः । आनन्त्यव्यभिचारदोषप्रसङ्गशङ्कया व्यक्तिशक्तिवादमपहायोपाधिशक्तिवादमाह—[2]**संकेत इति । द्रव्यं** संज्ञाविषयः । संज्ञा च द्विविधा—

---

1. अभिधेति । सेयमभिधा त्रिविधा—केवलसमुदायशक्तिः, केवलावयवशक्तिः, समुदायावयवशक्तिसंकरश्चेति । आद्याया डित्थादिरुदाहरणम्, तत्रावयवशक्तेरभावात् । द्वितीयायास्तु पाचकपाठकादिः, तत्र धातुप्रत्ययशक्तिबोध्ययोरर्थयोरन्वयेनोल्लसितात्पाककर्तृरूपादर्थादृतेऽर्थान्तरस्यानवभासेन समुदायशक्तेरभावात् । तृतीयायाः पङ्कजादिः । इह धातुपदप्रत्ययरूपावयवशक्तिवेद्यानां पङ्कजननकर्तृणामाकाङ्क्षादिवशादन्वये प्रकाशमानात्पङ्कजनिकर्तृरूपादर्थादतिरिक्तस्य पद्मत्वविशिष्टस्य प्रत्ययेन तदर्थसमुदायशक्तेरपि कल्पनादुभयोः संकरः । एता एव विधा रूढि–योग–योगरूढिशब्दैर्व्यपदिश्यन्ते । अश्वगन्धाश्वकर्णमण्डपनिशान्तकुवलयादिपदेषु का शक्तिरिति । अत्र केचित्–'अश्वगन्धारसं पिबेत्' इत्यादिषु विषयविशेषे केवलसमुदायशक्तिः । 'अश्वगन्धा वाजिशाला' इत्यादिषु तु केवलयोगशक्तिः । समुदायावयवशक्त्योरुभयोरेकशब्दाश्रयत्वे कथं केवलत्वविशेषितयोराद्यद्वितीयभेदयोरिति तु न शङ्क्यम् । समुदायावयवशक्तिवेद्ययोरर्थयोरन्वयेन तादृशशक्त्योः केवलस्य साम्राज्यात् । इदमेव हि केवलत्वमिह विवक्षितं यदन्वयायोग्यार्थबोधकत्वम् । संकरस्त्वन्वययोग्यार्थबोधकयोरेवेति न तस्यात्र प्रसक्तिः–इत्याहुः । अन्ये तु—अश्वकर्णादिशब्देषु नाभिधायाः प्रथमद्वितीययोर्विधयोः प्रसक्तिः । कैवल्यविरहात् । परंतु संकरस्य द्वौ भेदौ—योगरूढिर्यौगिकरूढिश्च । तत्राद्यस्योदाहरणं पङ्कजादिशब्दाः । द्वितीयस्य त्वश्वकर्णादयः–इत्याहुः । 'चतुर्थ एवायमभिधाया भेदः' इत्यप्यन्ये । 'अखण्डा एव हि शब्दाः । तत्र समासेषु पदानां कृत्तद्धिततिङन्तेषु च प्रत्ययानां विभागः काल्पनिक एवेति कुत्रास्ति योगशक्तिः, विशिष्टस्य विशिष्टार्थे रूढेरेवाभ्युपगमा'दित्यपि वदन्ति ॥

2. संकेत इति । अत्रायं निष्कर्षः—यद्यपि सकलप्रयोजनसंपादकतया व्यक्तिरेव संकेतसह्या तथाप्यानन्त्याद्व्यभिचाराच्च न तत्र संकेतो युक्तः । तथाहि—किं सर्वासु गोव्यक्तिषु संकेतग्रहः, आहोस्वित् कस्यांचिदेकव्यक्तौ । नाद्यः । अनन्तानां गोव्यक्तीनां युगपदुपस्थानासंभवात् । नान्त्यः । यस्यां गोव्यक्तौ संकेतग्रहस्तदतिरिक्ताया गोशब्देन

जातिर्गोपिण्डादिषु गोत्वादिका । गुणो विशेषाधानहेतुः सिद्धो

चिरंतनी, आधुनिकी च । तत्राद्या हरिहरादिः । द्वितीया डित्थडवित्थादिः । जात्यादिपदार्थमाह—**जातिरिति** । गोपिण्डादिषु गोव्यक्त्यादिषु । **सिद्धो** नित्यः । एत-

भानासंभवात् । अपि च व्यक्तिशक्तिवादे—'गौः शुक्लवर्णवांश्चलनक्रियावान् डित्थनामा' इत्यभिप्रायेण 'गौः, शुक्लः, चलः, डित्थः' इति प्रयोगे गवादिभिश्चतुर्भिरपि शब्दैरेका सैव गोव्यक्तिरुच्यत इति पदार्थभेदो न स्यात् । तत्र व्यक्तेरेव पदार्थत्वात्, तस्याश्च प्रकृते एकत्वात् । तथा च विषयविभागाभावे गवादिशब्दार्थानां घटः कलश इत्यादीनामिवैकार्थवाचकत्वेन सहप्रयोगो न स्यात् । उपाधिशक्तिवादे तु—जातिगुणक्रियासंज्ञानां प्रवृत्तिनिमित्तभेदेन गवादिशब्दानां पर्यायत्वाभावाद् भवति सहप्रयोग इति । तत्र जातिर्गोत्वादिः संस्थानविशेषाभिव्यङ्ग्या प्रत्यक्षसिद्धा गवादिपदानामभिधेया । अनुमानसिद्धा च घ्राणत्वरसनत्वादिर्घ्राणरसनादिपदानाम् । अयं जातिरूपः शब्दः प्राणप्रद इत्यभिधीयते । प्राणनं प्राणो व्यवहारयोग्यता । तं ददाति संपादयतीति प्राणप्रदस्तन्निर्वाहक इत्यर्थः । सर्वगोवृत्तिर्जातिरिति यावत् । 'प्राणप्रदत्वं च यावद्वस्तुस्थितिसंबन्धित्वम्' इति नरसिंहादयः । तदुक्तं वाक्यपदीये—'गौः स्वरूपेण न गौर्नाप्यगौः, गोत्वाभिसंबन्धाद्गौः' इति । अस्यार्थः—गौ गोपदोद्देश्यः सास्नादिमान्धर्मी स्वरूपेण जातिरहितव्यक्तित्वमात्रेणेत्यर्थं इति व्याख्यातारः । अज्ञातगोत्वकेन धर्मिस्वरूपमात्रेणेत्यर्थ इत्यन्ये । न गौः । न गोव्यवहारनिर्वाहकः । नाप्यगौः । नापि गोभिन्न इति व्यवहारस्य निर्वाहकः । तथा सति दूरादनभिव्यक्तसंस्थानतया गोत्वाग्रहदशायां गवि गौरिति गोभिन्न इति वा व्यवहारः स्यात् । स्वरूपस्याविशेषाद्घटे गौरिति गवि चागौरिति वा व्यवहारः स्यादिति भावः । 'अगौः' इत्यत्र 'गोरतद्धितलुकि' इति टच्प्रत्ययो न भवति 'नञस्तत्पुरुषात्' इति निषेधात् । गोत्वाभिसंबन्धाद्गोत्ववत्तया ज्ञानाद्गौर्गोशब्दव्यवहार्य इति । एवं च यावद्गोव्यवहारं तत्र गोपिण्डे गोत्वस्य सत्त्वात्प्राणप्रदत्वमिति भावः । एवं च नित्यमेकमनेकानुगतं सामान्यं जातिरिति तल्लक्षणं बोध्यम् । गुणः शुक्लादिः शुक्लादिपदानामभिधेयः । शुक्लादिना हि लब्धसत्ताकं गवादिकं वस्तु व्यावर्त्यत इति तात्पर्यम् । अत्रेदं तत्त्वम्—उत्पन्नस्य द्रव्यस्य गुणेन पश्चाद् योग इति । एवं चोत्पन्नस्य द्रव्यस्य क्षणमेकं निर्गुणत्वम् । जातियुक्तस्यैव द्रव्यस्योत्पत्तिः । 'जन्मना जायते जातिः' इत्युक्तेः । एवं जातिगुणयोर्महान्भेद इति बहवः । प्रदीपकृतस्तु—'यद्यपि शुक्लत्वादेर्नित्यत्वाभ्युपगमे गोत्वादिना समकालमेव संबन्धित्वम्, तथापि तस्य संबन्धः कदाचिदपैत्यपि, न तु गोत्वादेरिति विशेषः' इत्याहुः । कदाचित्पाकाद्यवस्थायाम् । आदिपदेन रञ्जनावस्थाया ग्रहणम् । पाकेन रञ्जनेन च वर्णान्तरसंपादन इति तदर्थः । एवं च 'सत्त्वे निविशतेऽपैति पृथग्जातिषु दृश्यते । आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः ॥' इति गुणलक्षणं बोध्यम् । अयमर्थः—द्रव्यमाश्रयते, तत एव च द्रव्यान्निवर्तते, भिन्नजातीयेषु द्रव्येषु दृश्यते यः स गुणः । एतेन जातेर्गुणत्वं वारितम् । सा हि द्रव्ये निविशमाना द्रव्यं न कदाचिज्जहाति । नच भिन्नजातीयानि द्रव्याण्यभिनिविशते । यद्यपि गवाश्वादिषु प्राणित्वमस्ति, तथापि प्राणित्वेन तेषामेकजातीयत्वमेव । ननु क्रियायाः पूर्वोक्तलक्षणयोगाद्गुणत्वं प्राप्नोति, सापि हि द्रव्ये निवि-

वस्तुधर्मः। शुक्लादयो हि गवादिकं सजातीयेभ्यः कृष्णगवादिभ्यो

---

न्मते गुणानामपि नित्यत्वम्। आविर्भावतिरोभावावेव उत्पत्तिविनाशप्रतीतिविषयौ। वस्तुधर्मो द्रव्यमात्रवृत्तिः। विशेषाधानहेतुत्वमुपपादयति—शुक्लादयो हीति।

---

शते, कदाचिद् द्रव्यान्निवर्तते निष्क्रियं हि द्रव्यं कदाचिद् भवति, कदाचित्सक्रियम्, भिन्नजातीयानि च द्रव्याण्याश्रयतीत्याह—आधेय इति। उत्पाद्य इत्यर्थः। यथा घटादेः पाकजो रूपादिः। अक्रियाजोऽनुत्पाद्यः। यथा—आकाशादेर्महत्त्वादिः। क्रिया तूत्पाद्यैव न नित्येति, तस्या द्वैविध्याभावाद्गुणत्वाभावः। नन्वेवं द्रव्यस्यापि गुणत्वं प्राप्नोति, अवयविद्रव्यमवयवद्रव्येषु निविशते, असमवायिकारणसंयोगनिवृत्तौ च विनाशात्ततोऽपैति, भिन्नजातीयेषु च हस्तपादादिषु दृश्यते, द्विविधं तन्नित्यानित्यभेदेन निरवयवस्य द्रव्यस्यात्मपरमाण्वादेर्नित्यत्वादवयविद्रव्यस्यानित्यत्वादित्यत आह—असत्त्वप्रकृतिरिति। अद्रव्यस्वभाव इत्यर्थः। 'पृथग्जातिषु' इत्यत्र व्यासः। समासे 'जात्यन्ताच्छ बन्धुनि' इति छः स्यात्। तत्र व्यक्तिषु जात्याधारेषु दृश्यमानो जातिषु दृश्यत इत्युच्यत इति 'वोतो गुणवचनात्' इति सूत्रे भाष्यकैयटयोः स्पष्टम्। क्रिया च भावना उत्पादयितुर्व्यापाररूपा साध्यत्वेनाभिधीयमानेति ज्ञेयम्। तदुक्तम्—'व्यापारो भावना सैवोत्पादना सैव च क्रिया' इति, 'यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते। आश्रितक्रमरूपत्वात्सा क्रियेत्यभिधीयते॥' इति च। यावदिति। सर्वमित्यर्थः। सिद्धमसिद्धं वेति। सिद्धं वर्तमानध्वंसप्रतियोगि। तद्भिन्नमसिद्धम्। तच्च वर्तमानं भविष्यच्चेति द्विविधम्। तेन 'अपचत्' 'पक्ष्यति' 'पचति' इत्यादौ सर्वत्र साध्यत्वेनासत्त्वरूपत्वेनाभिधीयमाना क्रियेति क्रियाशब्दस्य रूढिर्दर्शिता। यौगिकत्वमप्याह—आश्रितेति। आश्रितक्रमं रूपं यस्यास्तत्त्वात्। पूर्वापरीभूतावयवकत्वादित्यर्थः। तदीयावयवानामधिश्रयणाद्यधःश्रयणपर्यन्तानां क्रमेणोत्पत्तेः। क्रियापदेन तत्समुदायोऽभिधीयते। यत्र च क्रमिको व्यापारोऽस्ति तत्र रूढिरादरणीयेति पौर्वापर्यारोपणे वा सर्वत्र फलस्य स्वजनकव्यापारगतपौर्वापर्यारोपाद्यौगिकत्वम्। किंच क्रमिकावयवानामेकदासत्त्वेऽपि यत्किंचिदवयवसत्त्वकाले वर्तमानत्वव्यवहारः। अवयवावयविनोरभेदारोपात्। भूतभविष्यत्त्वव्यवहारस्तु सर्वेषामवयवानां भूतभविष्यत्त्वयोरेव। न तु यत्किंचित्क्रियाभूतत्वादौ। उक्तं च—'गुणभूतैरवयवैः समूहः क्रमजन्मनाम्। बुद्ध्या प्रकल्पिताभेदः क्रियेति व्यपदिश्यते॥' इति। अस्यार्थः—क्रमिकतत्तद्व्यापारं प्रति गुणभूतैर्गुणभावेन भासमानैरवयवैरुपलक्षितः एकत्वबुद्ध्या प्रकल्पितोऽभेदो यस्मिंस्तद्रूपः क्रमजन्मनां व्यापाराणां समूहः क्रियेति। अत्र क्षणनश्वराणां व्यापाराणां मेलनाभावेन बुद्ध्येत्युक्तम्। तथा च—बुद्धिजन्यसंस्कारद्वारा तेषां मेलनसंभव इति भावः। अत एव भाष्ये—'क्रिया हि नामेयमत्यन्तापरिदृष्टा पूर्वापरीभूतावयवा न शक्यते पिण्डीभूता निदर्शयितुम्' इति। व्यापारसमुदायात्मिकायाः क्रियाया दर्शनायोग्यत्वोक्त्या तदवयवानां तद्विषयत्वं व्यतिरेकमुखेन दर्शितम्। तस्याश्चाभिन्नैकबुद्धिविषयतयैकत्वव्यवहार इत्यपि बोध्यम्। अथ च शुक्लादीनां चलादीनां च प्रतिव्यक्तिभेददर्शनादानन्त्यव्यभिचाराभ्यां व्यक्तिशक्तिवाददोषाभ्यामिहापि कलुषीकरणमिति चेत्, तेषां लाघवात्प्रत्यभिज्ञाबलाच्चैकताया अभ्युपगमात्।

व्यावर्तयन्ति । द्रव्यशब्दा एकव्यक्तिवाचिनो हरिहरडित्थडवित्थादयः । क्रियाः साध्यरूपा वस्तुधर्माः पाकादयः । एषु हि अधिश्रयणावश्रयणान्तादिपूर्वापरीभूतो व्यापारकलापः पाकादिशब्दवाच्यः । एष्वेव हि व्यक्तेरुपाधिषु संकेतो गृह्यते । न व्यक्तौ । आनन्त्यव्यभिचारदोषापातात् ।

---

साध्यरूपा जन्यस्वभावाः । एषु साध्यरूपवस्तुधर्मेषु । **अधिश्रयणेति** । अधिश्रयणादीत्यर्थः । अधिश्रयणं चुह्र्यां स्थाल्या आरोपणम् आदिराद्यवयवो यस्य । अवश्रयणं चुह्र्याः स्थाल्या अवरोपणम् अन्तोऽन्तावयवो यस्य, तयोः कर्मधारयः । आदिशब्देन गृहनिर्गमादिग्रामान्तरप्रवेशान्तप्रभृतीनां ग्रहणम् । पाकादीत्यादिना गमनादिग्रहणम् । **एष्वेव हीति** । जात्यादिषु चतुर्षु मध्ये ये व्यक्तेरुपाधयो धर्माः जातिगुणक्रियास्वरूपास्तेष्वेवेत्यर्थः । संज्ञाशब्दानां तु व्यक्तावेव संकेतग्रहः । द्रव्यस्य व्यक्तिव्यतिरिक्तत्वाभावेनोपाधित्वाभावान्नानात्वाभावेनोक्तदोषद्वयाभावाच्च । अत एवोक्तम्—'द्रव्यशब्दा एकव्यक्तिवाचिनः' इति । केचित्तु "संज्ञाशब्दानां संज्ञायामेव संकेतग्रहः, उपस्थाप्योपस्थापकभावेनाविनाभावाद् व्यक्तेराक्षेपः" इत्याहुः । तन्न । संज्ञायाः शब्दानतिरिक्तत्वेन तस्यचोच्चारणभेदेन भिन्नतया निरुक्तदोषद्वयप्रसङ्गात् । एवं च डित्थत्वादिकं व्यक्तिस्वरूपमेव न तु पदार्थान्तरमित्यवधेयम् । **आनन्त्येति** । नानाव्यक्तिषु नानाशक्तिकल्पनागौरवमित्यभिप्रायः । ईश्वरेच्छापक्षे तद्विषयत्वस्य नानात्वकल्पनमेव गौरवमित्यवगन्तव्यम् । ननु नानन्तव्यक्तिषु शक्तिग्रहः, किंतु दृष्टव्यक्तावेवेति कुतो गौरवमित्यत आह—**व्यभिचारेति** ।

---

तदुक्तम्—'गुणक्रियायदृच्छानां वस्तुत एकरूपाणामाश्रयभेदाद्भेद इव लक्ष्यते' इति । तथा च भेदप्रतीतिर्भ्रम एवेति भावः । इदमुपलक्षणम् । उत्पत्तिविनाशप्रतीतिरपि तथैव । वर्णनित्यतावादे गकाराद्युत्पत्तिविनाशप्रतीतेर्भ्रमत्वस्य स्वीकारात् । याद्दच्छिकस्तु वक्त्रा स्वेच्छया डित्थादिशब्दानां प्रवृत्तिनिमित्तत्वे संनिवेशितो धर्मः स च 'परम्परया व्यक्तिगतश्चरमवर्णाभिव्यङ्ग्योऽखण्डः स्फोटः' इत्येके । 'आनुपूर्व्यव्यवच्छिन्नो वर्णसमुदायः' इत्यपरे 'केवला व्यक्तिरेव' इतीतरे । तत्राद्यमतद्वये विशेषणज्ञानाद्विशिष्टप्रत्ययः । तृतीयमते च निर्विकल्पात्मकः प्रत्ययः । तदित्थं चतुष्टयी शब्दानां प्रवृत्तिरिति दर्शनं व्यवस्थितम् । सर्वेषां शब्दानां जातिरेवार्थः । गुणक्रियाशब्दानां गुणक्रियागतायाः यदृच्छाशब्दानां च बालवृद्धशुकाद्युदीरिततत्तच्छब्दवृत्तेस्तत्तत्समयभेदभिन्नार्थवृत्तेर्वा जातेरेवाभिधेयतासंभवात् । इति जातिशक्तिदर्शनमिति संक्षेपः । अत्र—'बोद्धव्योऽस्मात्पदादर्थोऽयमित्याकारिकेशितुः । इच्छापि संकेताख्यात्र शक्तिरित्याहुरौहिकाः ॥ अर्थप्रतीतिजनने स्वतः सामर्थ्यलक्षणम् । शब्देनार्थस्य संबन्धं शक्तिं मीमांसका जगुः ॥ तत्र लाक्षणिके शब्देऽपीश्वरेच्छास्त्यतोऽखिला । उच्छिद्येल्लक्षणातोऽत्र मीमांसकमतं मतम् ॥ सा जातियुक्तव्यक्तौ स्याज्जातिमात्रे तथा क्रमात् । मतद्वये तथाप्यन्त्या युक्ता लाघवतोऽभिधा ॥ किंच कार्यान्विते शक्तिमाहुः प्राभाकरा न तत् । युक्तं गौरवतः किंतु लाघवात् साऽन्वितेकगा ॥' इति संग्रहश्लोकाः ॥

अथ लक्षणा—

**मुख्यार्थबाधे तद्युक्तो ययान्योऽर्थः प्रतीयते ।**
**रूढेः प्रयोजनाद्वासौ लक्षणा शक्तिरर्पिता ॥ ५ ॥**

---

संकेतग्रहकालादृष्टव्यक्तावपि वोध्यस्य कार्यस्य सत्त्वाद् व्यक्तिसंकेतग्रहरूपकारणस्य सिद्धत्वाद् व्यभिचार इति भावः । ननु गुणक्रियाणां प्रतिव्यक्तिभिन्नत्वेन आनन्त्यव्यभिचाराभ्यां कथं संकेतग्रह इति चेत् । न । तन्मते गुणादीनामपि जातिवदेकत्वमेव । भेदप्रतीतिस्तु आश्रयभेदादौपचारिकी । एतदसहमाना अन्ये जातावेव शक्तिरिति वदन्ति । यथा **काव्यप्रकाशे**—'संकेतितश्चतुर्भेदो जात्यादिर्जातिरेव वा' इति । एतन्मते गवादौ गोत्वादिरिव, शुक्लादौ शुक्लत्वादिः, पाकादौ पाकत्वादिः, डित्थादौ डित्थत्वादिरस्ति । डित्थादीनां प्रकृत्यवस्थाकालभिन्नत्वेन भिन्नत्वाङ्गीकारात्तद्वृत्तिडित्थत्वादिजातिस्वीकारः । एवं शुक्लत्वादिजात्याश्रयस्य शुक्लादिगुणस्यैवाक्षेपः । पटादिपरत्वे तु लक्षणैवेति मन्तव्यम् । ननूपाधौ संकेतग्रहाङ्गीकारे 'विशेष्यं नाभिधा गच्छेत्क्षीणशक्तिर्विशेषणे' इति न्यायाद् 'गामानय' इत्यादौ गोपदादिना कथं गवादेर्ग्रह इति चेत् । न । गवादेराक्षेपेण लाभात् । तदुक्तम्—'व्यक्त्यविनाभावात्तु जात्या व्यक्तिराक्षिप्यते' । यथा—'क्रियते' इत्यादौ कर्ता । 'कुरु' इत्यादौ कर्मेति । आक्षेपो नानुमानम् । व्याप्त्यादिज्ञानव्यतिरेकेणापि व्यक्तेरनुभवात्, किंतु स्मरणमेव गोत्वादिप्रकारकगवादिस्मरणाभावेन गोत्वादिविशिष्टशाब्दबोधानुपपत्तेः । अत एवोक्तम्—'जातिशक्तं पदं व्यक्तिमेवानुभावयति स्मारयति च' इति । जातिशक्तमुपाधिशक्तमित्यर्थः ॥ **अथ लक्षणेति** । अभिधानिरूपणानन्तरं लक्षणा निरूप्यत इत्यर्थः । **मुख्यार्थस्या**भिधेयार्थस्य । **बाधे** अन्वयानुपपत्तिग्रहे । अत्र 'मुख्यार्थसंबन्धग्रहे' इत्यपि बोध्यम् । तेन विना लक्षणाया अग्राहकत्वात् । उक्तं च—'संबन्धानुपपत्तिभ्यां शब्दलक्षणा' इति । **तद्युक्त इति** । मुख्यार्थसंबन्धीत्यर्थः । मुख्यार्थसंबन्धिनि लक्षणा नास्तीति सूचनायैतत् । **अन्यो** मुख्यार्थतावच्छेदकातिरिक्तधर्मावच्छिन्नः । मुख्यार्थभिन्न इत्यर्थस्तु न मनोरमः । प्रयोजनाभावात् । स्वार्थस्यापि वोधिका-

---

1. **मुख्येति** । यद्यपि 'काकेभ्यो दधि रक्ष्यताम्' 'छत्रिणो यान्ति' इत्यादौ न मुख्यार्थबाधस्तथापि तात्पर्यार्थविषयीभूतवाक्यार्थबोधाभावोऽत्राभिप्रेतः । आद्ये उपघातकत्वेनैव मुख्यार्थस्यान्वयो न तु काकत्वेन, अन्त्ये एकसार्थप्रवृत्तत्वेनैव मुख्यार्थस्यान्वयो न तु छत्रित्वेनेति नाव्याप्तिः । यत्र काकमात्रे तात्पर्यं न तत्र लक्षणा । एतेन तात्पर्यानुपपत्तिरेव लक्षणाबीजं नत्वन्वयानुपपत्तिरिति सूचितम् । यद्यपि 'यष्टीः प्रवेशय' 'गङ्गायां घोषः' इत्यादावुभयापेक्षादर्शनाद्विनिगमनाविरहस्तथापि 'गङ्गायां घोषः' इत्यत्र तात्पर्याभावे कुतो गङ्गापदेऽपि स्वार्थसंबन्धिनौकादौ न लक्षणा, तावताप्यन्वयानुपपत्तिशान्तेः । अतस्तात्पर्यानुपपत्तिरेव लक्षणाबीजमित्यवधेयम् । घोषपदस्य मीनादौ लक्षणा किं न स्यादिति तु न युक्तम् । न विधौ परः शब्दार्थ इति लक्षणायाः कर्तुमशक्यत्वादिति दिक् ॥

---

१. 'निरूप्यते' इत्यधिकं ग-पुस्तके.

'कलिङ्गः साहसिकः' इत्यादौ कलिङ्गादिशब्दो देशविशेषादिरूपे स्वार्थेऽसंभवन्यया शब्दशक्त्या स्वसंयुक्तान्पुरुषादीन्प्रत्याययति, यया च 'गङ्गायां घोषः' इत्यादौ गङ्गादिशब्दो जलमयादिरूपार्थवाचकत्वात्प्रकृतेऽसंभवन्स्वस्य सामीप्यादिसंबन्धसंबन्धिनं तटादिं बोधयति, सा शब्दस्यार्पिता स्वाभाविकेतरा ईश्वरानुद्भाविता वा शक्तिर्लक्षणा नाम। पूर्वत्र हेतू रूढिः प्रसिद्धिरेव। उत्तरत्र 'गङ्गातटे घोषः' इति प्रतिपाद-

यामुपादानलक्षणायां 'रामोऽस्मि सर्वं सहे' इति वक्ष्यमाणायां स्वार्थस्यैव दुःखसहिष्णुत्वेन बोधिकायां रामशब्दलक्षणायामव्याप्त्याधायकत्वाच्च। अत एव 'कदली कदली—' इत्याद्यर्थान्तरसंक्रमितवाच्यलक्षणामूलध्वनेरुदाहरणमपि संगच्छते। अत्र द्वितीयकदल्यादिपदानां पौनरुक्त्या कदलीत्वादिना अन्वयमलभमानानां शीतत्वादिना कदल्यादिरूपमुख्यार्थस्यैव बोधकत्वेन लक्षणास्वीकारात्। एवं 'पण्डितकवयः कपयो ह्यन्ये कवयस्तु केवलं कपयः' अत्र द्वितीयकविपदस्य काव्यजन्यलाभपूजाख्यात्यादिभागित्वेन कवेरेवोपस्थापनेऽपि लक्षणा। एवं च सामान्यशब्दस्य विशेषपरत्वेऽपि लक्षणा संभवति। शक्यतावच्छेदकघटितविशिष्टधर्मस्यापि शक्यतावच्छेदकातिरिक्तत्वस्वीकारात्। यथा 'त्वामस्मि वच्मि'- इत्यादौ। रूढिः प्रसिद्धिः। सा च भूरिप्रयोगरूपा, तस्या ज्ञानात्। अवाचकशब्दप्रयोगः सप्रयोजनक इति सामान्यतः **प्रयोजन**ज्ञानाद्वा। प्रयोजनस्य विशेषज्ञानं तु लक्षणाजन्यबोधानन्तरमेव भवतीति तस्य हेतुत्वमुपपन्नम्। 'प्रयोजनादित्युद्देश्ये पञ्चमी' इत्यन्ये। अत्र प्रागुक्तयोर्दण्डचक्रादिन्यायेन मिलितयोरेव कारणत्वम्। चरमयोस्तु तृणारणिमणिन्यायेन प्रत्येकमेवेति विशेषज्ञापनाय भिन्नविभक्त्या व्यवधानेन च तेषां निर्देशः। वक्तृतात्पर्यं हि लक्षणा। तच्चास्माच्छब्दान्मुख्यार्थसंबन्धी बोद्धव्य इति वक्तुरिच्छाविषयत्वम्। निरुक्तहेतवस्तु तस्या एव बोधकाः। एवं च निरुक्तहेतुत्रयजन्यज्ञानविषयीभूतलक्षणया मुख्यार्थसंबन्धी प्रत्याय्यत इति भावः। मुख्यार्थसंबन्धबोधिनी या व्यञ्जना तत्रैतादृशज्ञानविषयत्वाभावान्नातिव्याप्तिः। रूढिहेतुकायाः प्रयोजनहेतुकायाश्च लक्षणायाः प्रसिद्धलक्षणयोर्लक्षणं संगमयन्कारिकां विवृणोति—**कलिङ्ग इति**। साहसं चेतनधर्मः। तस्याचेतने देशविशेषेऽनुपपत्तिं दर्शयति—**कलिङ्गादिशब्द इति**। देशविशेषे स्वार्थे वर्तमानः कलिङ्गादिशब्दोऽसंभवन्साहसिक्याद्यन्वययोग्यमर्थमभिधया बोधयितुमशक्नुवन्नित्यर्थः। **स्वसंयुक्तान्**स्वार्थसंबद्धान्। प्रकृते घोषवासाद्यन्वययोग्येऽसंभवन्नभिधया वर्तितुमशक्नुवन्। केचिदभिधां स्वाभाविकं शब्दव्यापारं वदन्ति। तन्नये लक्षणायां वैलक्षण्यमाह—**स्वाभाविकेतरेति**। अन्ये त्वीश्वरेच्छाविषयत्वरूपमाहुः। तन्नये त्वाह—**ईश्वरेति**। अनुद्भाविता अनुत्थापिता। इदानींतनवक्तृभिरुत्थापितेति यावत्। पूर्वत्र कलिङ्ग इत्यादौ। उत्तरत्र गङ्गायामित्यादौ। **गङ्गातट**

१. 'इत्यत्र' क.

नालभ्यस्य शीतत्वपावनत्वातिशयस्य बोधनरूपं प्रयोजनम् । हेतुं विनापि यस्य कस्यचित्संबन्धिनो लक्षणेऽतिप्रसङ्गः स्यात्, इत्युक्तम्—'रूढेः प्रयोजनाद्वापि' इति ।

केचित्तु 'कर्मणि कुशलः' इति रूढावुदाहरन्ति । तेषामयमभिप्रायः—कुशाँल्लातीति व्युत्पत्तिलभ्यः कुशग्राहिरूपो मुख्योऽर्थः प्रकृतेऽसंभवन्विवेचकत्वादिसाधर्म्यसंबन्धसंबन्धिनं दक्षरूपमर्थं बोधयति । तदन्ये

---

इति । प्रतिपादयतीति प्रतिपादनं वाक्यम्, तदलभ्यस्य । मुख्यशब्दघटितवाक्येनाप्रतिपाद्यस्येत्यर्थः । तीरस्य विप्रकृष्टांशगतशीतत्वाद्यपेक्षया संनिकृष्टांशगतशीतत्वादेराधिक्यमत्रातिशयः । एवं च 'अतिशीतेऽतिपावने तीरे घोषः' इति व्यञ्जनाजन्यबोधो लाक्षणिकशब्दप्रयोगस्य प्रयोजनमिति भावः । 'काश्चिन्नैव त्वशक्तितः' इति लक्षणाया निषेध उक्तः । अशक्तितो रूढिप्रयोजनविरहात् । यथा—'कमले चरणाघातं मुखं सुमुखि तेऽकरोत्' । अत्र निर्जितत्वं लक्ष्यते । एषा नेयार्थलक्षणा दोषतया वक्ष्यते । सा च कविप्रयोगानर्हत्वात् प्रकृतलक्षणस्य लक्ष्या न भवतीति तत्रातिव्याप्तिवारणाय चरमहेतुद्वयं न्यस्तम् । तदेव दर्शयति—**हेतुमिति** । रूढिप्रयोजनयोरन्यतरमित्यर्थः । **संबन्धिनो** मुख्यार्थसंबन्धिनः । **लक्षणे** लक्षणायाम् । उदाहरन्ति 'काव्यप्रकाशकारादयः' इति शेषः । **लाति** गृह्णाति । **व्युत्पत्तिः** प्रकृतिप्रत्ययविभागकल्पना, तल्लभ्यस्तत्प्रतिपाद्यः । **प्रकृते** लौकिककर्मान्वयेऽ**संभवन्**योग्यतामलभमानः । पदार्थस्यान्वयानुपपत्तिप्रतिसंधानद्वारा लक्षणायामुपयोगित्वमित्यभिप्रायेणेदम् । **अन्य इति** । स्वपक्षाभिप्रायेण दक्षरूप-

---

1. तदन्य इति । नातिरुचिरमेतत् । असति बाधकेऽवयवशक्तेः रूढिशक्त्या नियन्त्रणायोगेन कुशलपदस्य कुशग्राहिणि शक्तत्वमव्याहतमेव । किंच प्रयोगप्रवाहस्यैव प्रवृत्तिनिमित्तत्वस्वीकारे यौगिकव्यवहारस्य मूलच्छेदो दुर्वारः । तथा चाह्लादनार्थकाच्चदिधातोरौणादिके रकि निष्पन्नस्य चन्द्रपदस्य शशिनि योगशक्त्या नियन्त्रितस्याप्यन्यथा प्रवृत्तिनिमित्तत्वे तत्पदादेव स्वर्णकर्पूरकाम्पिल्लमेचकपदार्थानां भाने खण्डाखण्डशक्त्योः को भेदः । अत एव अश्वगन्धादिपदमौषधिविशेषबोधे रूढम् । अश्वसंबन्धवत्तया वाजिशालाबोधे यौगिकमिदं यौगिकरूढमित्युच्यते । 'रूढिर्योगापहारिणी' इति प्रकरणाद्यभावे बोध्यम् । यत्र मण्डपपदादिभ्यो मण्डपानकर्त्रादे रूढ्यर्थमण्डपादिगुणवत्त्वेन बोधस्तत्र प्रथमप्रतीतरूढिविषयमुख्यार्थात्यागेन योगाद् रूढिपूर्वकलक्षणाया बलवत्त्वेन लक्षणयैव बोधः' इति मञ्जूषायां व्यवस्थापितम् । एतेन कुशलपदे दक्षत्वरूपाखण्डोपाधिमात्रं समर्थयतां विवृतिकृतामप्युक्तिर्न पेशला । अपि च । व्युत्पत्तिपक्षाव्युत्पत्तिपक्षसाधारणं हि शब्दानां प्रवृत्तिनिमित्तम् । तदपि 'शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च । वाक्यस्य शेषाद्विवृतेर्वदन्ति सांनिध्यतः सिद्धपदस्य वृद्धाः ॥' इति शक्तिग्राहकशास्त्रानुसृतम् । तत्र च प्रयोगप्रवाहशरीरा रूढिः । सा च व्यवहारजीवातुर्यथायथं प्राप्तप्रसरा महाभाष्यकारादिनिरूपितशब्दचतुष्टयीपक्षे शाकटायनादिसंमतत्रयीपक्षे च समानैव ।

न मन्यन्ते । कुशग्राहिरूपार्थस्य व्युत्पत्तिलभ्यत्वेऽपि दक्षरूपस्यैव मुख्यार्थत्वात् । अन्यद्धि शब्दानां व्युत्पत्तिनिमित्तमन्यच्च प्रवृत्तिनिमित्तम् । व्युत्पत्तिलभ्यस्य मुख्यार्थत्वे 'गौः शेते' इत्यत्रापि लक्षणा स्यात् । 'गमेर्डोः' ( उणादि—२।६७ ) इति[1] गमधातोर्डोप्रत्ययेन व्युत्पादितस्य गोशब्दस्य शयनकाले प्रयोगात् ॥

---

स्यैवेत्येवकारेण कुशग्राहिव्यवच्छेदः । अत्र हेतुमाह—**अन्यद्धीति** । व्युत्पत्तिलभ्यार्थप्रतीतौ प्रकारीभूतो धर्मो व्युत्पत्तिनिमित्तम्, यथा गोशब्दस्य गमनकर्तृत्वम् । संकेतग्रहे प्रकारीभूतो धर्मः प्रवृत्तिनिमित्तम्, यथा गोत्वजातिः । शब्दानां व्युत्पत्तिनिमित्तमेव प्रवृत्तिनिमित्तमिति तु न नियमः । पाचकादिशब्दस्य द्वयोरैक्यसत्त्वेऽपि गवादिशब्दस्य व्यभिचारात् । प्रकृते तु कुशग्राहित्वरूपव्युत्पत्तिनिमित्तस्यानेकपदार्थघटितत्वेन गुरुत्वात्तदुपेक्ष्य लघुना दक्षत्वरूपाखण्डोपाधिनैव कुशलशब्दस्य संकेतग्रहः । ननु रूढिवद्व्युत्पत्तिरपि पदार्थोपस्थापिकेति रूढिविषयस्येव व्युत्पत्तिविषयस्यापि मुख्यत्वमास्ताम्, इति चेत् । न । रूढ्या प्रतिरुद्धाया व्युत्पत्तेः पदार्थोपस्थापकत्वाभावात् । तदुक्तं **भट्टपादैः**[2]—'लब्धात्मिका सती रूढिर्भवेद्योगापहारिणी । कल्पनीया तु लभते नात्मानं योगबाधतः ॥' इति । लब्धात्मिका [3]जनितपदार्थोपस्थितिका कोषपरम्पराप्रसिद्धा सत्यनादिसिद्धा योगापहारिणी व्युत्पत्तिलभ्यार्थप्रतीतिप्रतिबन्धिका । कल्पनीया लाघवप्रतिसंधातृभिरिदानींतनैरुद्भावनीया । आत्मानं पदार्थोपस्थितिं न लभते न जनयति । योगबाधतः योगेन बाधनात् । रूढेस्तस्याः पदार्थोपस्थापकत्वस्य च कल्पनामुपेक्ष्य क्लृप्तयोगस्यैव पदार्थोपस्थापकत्वमात्रं कल्प्यत इति भावः । [4]व्युत्पत्तिलभ्यस्य मुख्यत्वस्वीकारे दोषमाह—**व्युत्पत्तिलभ्यस्येति** । मुख्यार्थत्वे मुख्यार्थत्वस्वीकारे **शयनकाले** गमनकर्तृरूपमुख्यार्थबाध इति भावः । यदि पुनरुणादिप्रत्ययानां व्युत्पत्तेः प्रायिकत्वमुपगम्यते

---

ततो गुणेन क्रियया संबन्धेन वा संसर्गशालिनी योगानुग्राहिका व्युत्पत्तिरस्तु । वा 'बाहुलकं प्रकृतेस्तनुदृष्टेः प्रायसमुच्चयनादपि तेषाम् । कार्यसशेषविधेश्च तदुक्तं नैगमरूढिभवं हि सुसाधु ॥ नाम च धातुजमाह निरुक्ते व्याकरणे शकटस्य च तोकम् । यन्न पदार्थविशेषसमुत्थं प्रत्ययतः प्रकृतेश्च तदूह्यम् ॥' इति वर्णानुपूर्व्यनुज्ञानमात्रप्रयोजना रूढानुवादिकास्तु । जातिगुणक्रियाद्रव्यलक्षणेषु शब्देषु खण्डाखण्डोपाधिसाधारण्येनैव मुखमिव मुख्य इति शब्दार्थव्यपदेशः । शुक्लादिशब्दा गुणे मुख्या गुणिनि लाक्षणिकाः, उभयत्र वा मुख्या एवेति तु स्वस्वदर्शनानुसारी वादः । तत्र पूर्वत्र लक्षणा, परत्र 'गुणवचनेभ्यो मतुपो लुगिष्टः' इति वार्तिकं च मानम् । यत्पुनर्व्युत्पत्तिपक्षे 'गौः शेते' इत्यत्र गमनाभावेन लक्षणापत्तिः सा तु 'सिंहः स्वपिति' इत्यादिवत्समाधेया । जातिशब्दत्वानङ्गीकारे तु न च शङ्कासमाधी इत्यलं पलालभक्षणेन ॥

---

१. 'इति' क-पुस्तके नास्ति. २. पुस्तकान्तरे 'भट्टैः' इत्येवास्ति. ३. 'जनित—' इत्यादिः 'परम्पराप्रसिद्धा' इत्यन्तः पाठः पुस्तकान्तरे न दृश्यते. ४. 'व्युत्पत्ति—' इत्यादिः '—भावः' इत्यन्तः पाठः पुस्तकान्तरे नास्ति.

तद्भेदानाह—

**मुख्यार्थस्येतराक्षेपो वाक्यार्थेऽन्वयसिद्धये ।**
**स्यादात्मनोऽप्युपादानादेषोपादानलक्षणा ॥ ६ ॥**

---

तदा 'निषङ्गे सायकाः सन्ति' इत्यत्र लक्षणापत्तेर्दोषो द्रष्टव्यः । 'षो अन्तकर्मणि' इत्यस्माण्ण्वुल्प्रत्ययनिष्पन्नस्य सायकशब्दस्य विनाशाभावकालेऽपि प्रयोगादिति । लक्षणायाः सामान्यलक्षणमुक्त्वा विशेषलक्षणमाह—**मुख्यार्थस्येति** । [1]अत्रापि ययेत्यध्याहार्यम् । तृतीयार्थे षष्ठी । **[2]वाक्यार्थ इति** । सप्तम्यर्थो घटकत्वम् । [3]तथा च मुख्यार्थस्य वाक्यार्थघटकान्वयबोधाय यया वृत्त्या वाक्यार्थे समभिव्याहृतपदार्थे आत्मनोऽविकारादन्यस्याप्यन्वयसिद्धये अन्वयबोधाय मुख्यार्थेन इतरस्य शक्यतावच्छेदकातिरिक्तधर्मावच्छिन्नस्य आक्षेपः प्रत्यायनम् । एषोपादानलक्षणा स्यादित्यर्थः । संज्ञाबीजमाह—**आत्मनोऽपीति** । मुख्यार्थस्यापीत्यर्थः । **उपादानात्** [4]प्रत्यायनात् । [5]मुख्यार्थविषयिणी प्रतीतिरुपादानम्, तद्धेतुर्लक्षणा उपादानलक्षणा । यद्वा, उपादीयते स्वार्थो गृह्यतेऽनेनेत्युपादानम्, तन्नाम्नी लक्षणा उपादानलक्षणा । '[6]उपादानं लक्षणं च' इति काव्यप्रकाशे नाम व्यक्तम् । अत्र

---

१. 'अत्रापि ययेत्यध्याहार्यम्' इति पुस्तकान्तरे नास्ति. २. 'वाक्यार्थ इति' इति पुस्तकान्तरे नास्ति. ३. पुस्तकान्तरे 'तथा च–' इत्यादिः '—एषोपादानलक्षणा स्यादित्यर्थः' इत्यन्तः पाठो न दृश्यते, किंतु तत्र 'वाक्यार्थघटकस्यान्वयोपपत्तये मुख्यार्थेन इतरस्य मुख्यार्थसंबन्धिन आक्षेपो झटित्युपस्थितिर्यया सा उपादानलक्षणेत्यर्थः । अत्र मुख्यार्थस्योपयोगित्वं स्वबाधसंबन्धज्ञानाभ्यामेव' इति पाठभिदोपलभ्यते. ४. 'अपरित्यागात्' इति पुस्तकान्तरे. ५. 'मुख्यार्थ–' इत्यादिः '—यद्वा' इत्यन्तः पाठः पुंस्तकान्तरे नास्ति. ६. एकस्मिन्पुस्तके "उपादानं लक्षणं चेत्युक्ता शुद्धैव सा द्विधा' इति काव्यप्रकाशे तन्नाम । अत्र वाक्यार्थ इत्यनेन तात्पर्यविशेषो वाक्यार्थो ग्राह्यः, अन्यथेदमनर्थकम्, तेन 'छत्रिणो यान्ति' इत्यत्र 'छत्रिगमनकर्तृत्वरूपवाक्यार्थस्य घटकोभयान्वयबोधाय मुख्यार्थस्याक्षेपो युज्यते । 'कदली कदली–' इत्यादावुपादानलक्षणासंग्रहाय शक्यतावच्छेदकातिरिक्तेति । अत्र क्वचिन्मुख्यार्थ एव धर्मान्तरेण प्रतीयते । यथा—'कदली कदली–' इत्यादौ । अत्र द्वितीयकदलीपदं शैत्यरूपधर्मान्तरेण कदलीमेव बोधयति । क्वचिन्मुख्यार्थस्तद्भिन्नश्च धर्मान्तरेण प्रतीयते । यथा—'काकेभ्यो रक्ष्यतामन्नम्' इत्यत्र काकपदेनान्नोपघातकत्वेन काककुक्करमार्जारा लक्ष्यन्ते । अत्र प्रयोजनाभावाद्रूढिः । 'छत्रिणो यान्ति' इत्यादौ छत्रिसार्थवाहित्वेन छत्रिणस्तद्भिन्नाश्च प्रतीयन्ते । छत्रिणां बाहुल्यमप्यत्र प्रयोजनम् । क्वचिन्मुख्यार्थविशिष्टः प्रतीयते । यथा—'श्वेतो धावति' 'कुन्ताः प्रविशन्ति' इति । ननु 'काकेभ्यो रक्ष्यतामन्नम्' इत्यादावन्वयानुपपत्तिरेव नास्ति कथं लक्षणेति चेत् । न । तात्पर्यविषयस्यान्वयस्य काकत्वरूपशक्यतावच्छेदकेनानिर्वाहः स्फुटः । एवमन्यत्रापि । अनयोर्हीति । एतत्सिद्धये स्वस्य प्रकारतयान्वयसिद्धये । आक्षिप्यन्ते स्वसंपर्किपदैः प्रत्याय्यन्ते । मुख्यार्थस्योपयोगित्वान्वयानुपपत्तिज्ञानेन स्वसंबन्धित्वज्ञानेन च संभवति । अत्रेदमवधेयम्—'श्वेतो धावति' इत्यादावितराक्षेपेऽपि श्वेतस्य गुणतया क्रियावैशिष्ट्यरूपकर्तृत्वस्यापि बाध इति । तस्योपलक्षणरूपप्रकारतयैव बोधः । 'यष्टयः प्रविशन्ति' इत्यादौ यष्टीनां क्रियासंभवाद्विशेषणतया बोधः । कृत्रिमत्वरूपकर्तृत्वपक्षे तूभयत्रैव तद्बाधाद् द्वयोरेवोपलक्षणत्वेन प्रकारत्वमिति प्रयोजनीभूतज्ञानविषयः । एवमन्यत्रापि । अस्याः संज्ञान्तरमाह—'इयमेवेति । अजहदत्यजत् स्वार्थो याम् । 'गां बध्नीयात्' इत्यादौ नोपादानलक्षणोदाहर्तव्या । रूढिप्रयोजनाभावात् । किंत्वाक्षेपादेव व्यक्तेस्तत्र लाभः । न चात्र प्रयोगप्राचुर्यरूपा रूढिरस्तीति वाच्यम् । लक्ष्यार्थविनिर्मोकेण शक्यार्थे प्रयोगार्हस्य शब्दस्य लक्ष्यार्थे प्रयोगप्राचुर्यं रूढिरिति विवक्षणात् । अन्यथा 'जात्या व्यक्तिराक्षिप्यते' इति प्राचीनप्रवादविलयः स्यात् ॥" इति पाठो दृश्यते.

रूढावुपादानलक्षणा यथा—'श्वेतो धावति' । प्रयोजने यथा—

---

लक्ष्यार्थः । क्वचिन्मुख्यार्थ एव । क्वचिन्मुख्यार्थविशिष्टो मुख्यार्थभिन्न एव । क्वचिन्मुख्यार्थस्तद्भिन्नश्चेत्युभयम् । आद्यो यथा—'कदली कदली–' इत्यादि । द्वितीयो यथा—'कुन्ताः प्रविशन्ति' इति । तृतीयो यथा—'एते राजकुमारा गच्छन्ति' इति । अभिधाजन्यमुख्यार्थोपस्थितेरन्वयानुपपत्तिग्रहाद्युपक्षीणत्वेन तदुपस्थितये पुनर्लक्षणापेक्षेत्यवगन्तव्यम् । ननु 'छत्रिणो यान्ति' इत्यादावुपादानलक्षणायामन्वयानुपपत्तिग्रहविरहात्कथं सामान्यलक्षणगमनम् । न चात्र लक्षणैव नास्ति, किंतु 'देवदत्तो याति' इत्यादिवाक्ये तद्भृत्यानुसरणमिव वक्त्रादिवैशिष्ट्यसचिवया व्यञ्जनयैव छत्रिभिन्नगमनादि प्रतीयत इति वाच्यम् । तथा सति राजकुमारेषु तत्सदृशेषु च गच्छत्सु 'राजकुमारा गच्छन्ति' इति गौणोपादानलक्षणोदाहरणमसंगतं स्यात् । उदीच्यबोधेऽनुभवसिद्धं मुख्यार्थविषयत्वं च न स्यात् । अत्र केचित्—"मुख्यार्थबाधश्च तात्पर्यविषयस्यान्वयस्य मुख्यतावच्छेदकरूपेण निर्वाहे एव । 'गङ्गायां घोषः' इत्यादौ तात्पर्यविषयस्य तीरादौ घोषान्वयस्य मुख्यतावच्छेदकप्रवाहत्वादिना 'छत्रिणो यान्ति' इत्यादौ तात्पर्यविषयस्य छत्र्यच्छत्रिणां गमनाद्यन्वयस्य मुख्यतावच्छेदकच्छत्रित्वादिना चानिर्वाहात्" इत्याहुः । तन्न । तात्पर्यस्य प्रथममुपस्थापकाभावेनानुपस्थितौ तद्घटितान्वयानुपपत्तेरप्यनुपस्थितेः । न च प्रकरणादिना तदुपस्थितिः, कथमनुपस्थिते तीरादौ मुख्यार्थसंबन्धग्रह इति वाच्यम् । तथा सत्यसमन्वयानुपपत्तिप्रतिसंधानादिना, वक्तृतात्पर्यलक्षणायाः प्रकरणादिनैवोपस्थितिसंभवात् । नन्वन्वयव्यतिरेकाभ्यामन्वयानुपपत्तिग्रहादेरपि कारणत्वमवगम्यते, प्रकरणादिना विशिष्य ज्ञातायामनेकार्थशब्दाभिधायामतिव्याप्तिवारणाय तस्योपादानं सार्थकमिति चेदन्वयानुपपत्तिरेवास्ताम्, किमपरेण मुख्यार्थसंबन्धग्रहमन्तरेण । यस्यकस्यचिदुपस्थापिकायां नेयार्थलक्षणायामतिव्याप्तिवारणाय तदिति चेत्तदेवास्तु । किमाद्येन । तेनैव नानार्थशब्दाभिधावारणसंभवात् । एवं च 'छत्रिणो यान्ति' इत्यादौ व्यभिचाराद् व्यावृत्त्यभावाच्च अन्वयानुपपत्तिज्ञानमनुपादेयमेव तस्य लक्षणाविशेषज्ञापकम् । लक्षणासामान्यज्ञापकं तु मुख्यार्थसंबन्धज्ञानमेव । अत एवोक्तम्—'अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते । लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता ॥' इति । अभिधेयस्याविनाभूतमविनाभावः संबन्धमात्रं तस्मात्तद्ग्रहात् प्रतीतिर्यस्या वृत्तेः सा लक्षणोच्यत इत्यर्थः । अन्यच्च—'शक्यादशक्योपस्थितिर्लक्षणा' इति । शक्यात् शक्यसंबन्धज्ञानात् । उपस्थीयतेऽनयेत्युपस्थितिः । शक्यसंबन्धज्ञानज्ञाता शक्यतावच्छेदकभिन्नधर्मावच्छिन्नोपस्थितेरुपायो लक्षणेत्यर्थः । अनयोर्यथाश्रुतार्थस्तु न सम्यक् । वक्तृतात्पर्यविशेषरूपाया लक्षणायाः स्वकार्योपस्थितिरूपत्वाभावात् । एवं 'छत्रिणो यान्ति' इत्यादावेकसार्थवाहित्वरूपशक्यसंबन्धज्ञानादेव ज्ञातया लक्षणया छत्रिसार्थवाहित्वेन छत्र्यच्छत्रिण उपस्थाप्यन्ते । नत्वत्रान्वयानुपपत्तिप्रतिसंधानापेक्षापीति । उक्तोदाहरणयोर्लक्षणं

'कुन्ताः प्रविशन्ति' । अनयोर्हि श्वेतादिभिः कुन्तादिभिश्चाचेतनतया केवलैर्धावनप्रवेशनक्रिययोः कर्तृतयान्वयमलभमानैरेतत्सिद्धये आत्मसंबन्धिनोऽश्वादयः पुरुषादयश्चाक्षिप्यन्ते । पूर्वत्र प्रयोजनाभावाद्रूढिः । उत्तरत्र तु कुन्तादीनामतिगहनत्वं प्रयोजनम् । अत्र च मुख्यार्थस्यात्मनोऽप्युपादानम् । लक्षणलक्षणायां तु परस्यैवोपलक्षणमित्यनयोर्भेदः । इयमेवाजहत्स्वार्थेत्युच्यते ॥

**अर्पणं स्वस्य वाक्यार्थे परस्यान्वयसिद्धये ।**
**उपलक्षणहेतुत्वादेषा लक्षणलक्षणा ॥ ७ ॥**

---

योजयति—**अनयोर्हीति** । **एतत्सिद्धये** धावनप्रवेशनकर्तृत्वान्वयबोधाय । **आत्मसंबन्धिन इति** । यथायथं समवायिनः स्वसंयोगिनश्चेत्यर्थः । **आक्षिप्यन्ते** प्रत्याय्यन्ते । प्रयोजनं प्रयोजनीभूतज्ञानविषयः । एवमन्यत्रापि । अस्याः संज्ञान्तरमाह—**इयमेवेति** । अजहद[1]त्यजन्स्वार्थो मुख्यार्थो यामिति विग्रहः । अत्र 'श्वेतो धावति' इत्युदाहरणं चिन्त्यम् । धावनानुकूलकृतिरूपस्य धावनकर्तृत्वस्याश्वसंबन्धेनापि श्वेतगुणेऽन्वयासंभवात् । न च 'कुन्ताः प्रविशन्ति' इत्यादौ यथा कुन्तस्याचेतनस्यापि पुरुषसंबन्धेन प्रवेशकर्तृत्वमुपचर्यते तथात्राप्यचेतनस्य धावनकर्तृत्वमौपचारिकमिति वाच्यम् । कुन्तस्य पुरुषसंबन्धोत्पन्नक्रियासंबन्धेनैव कर्तृत्वोपचारात् । प्रकृते तु श्वेतगुणस्याश्वसंबन्धेनापि क्रियासंबन्धासंभवात् । तस्माल्लक्षणलक्षणाया एतदुदाहरणम् । एवं च 'श्वेतः शोभते' 'श्वेतं पश्यति' इत्याद्येतदुदाहरणं बोध्यम् । अत्र श्वेतगुणविशिष्टाश्वस्य शोभादर्शनयोरन्वयस्तात्पर्यविषयः । यत्र शक्यस्योपाधेर्व्यक्तिव्यतिरिक्तप्रयोगरूपा रूढिरस्ति तत्र लक्षणयैवाविनाभूताया अपि व्यक्तेरुपस्थितिः न त्वाक्षेपेण । गवादिपदानां तु तादृशरूढेः प्रयोजनस्य चाभावाल्लक्षणाया असंभवादाक्षेपेणैव व्यक्तेरुपस्थापकत्वमित्यभिप्रायेणेदमुदाहरणमुपन्यस्तम् । 'गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति' इति विशिष्टशक्तिवादिनां मते लक्षणात्र नास्तीत्यवधेयम् । लक्षणलक्षणामाह—**अर्पणमिति** । अत्रापि ययेत्यनुषज्यते, समभिव्याहृतपदार्थे मुख्यार्थभिन्नस्यैवान्वयबोधाय यया वृत्त्या शब्देनैवात्मनोऽर्पणं मुख्यार्थभिन्नबोधेनोपयोगीकरणम् । एषा लक्षणलक्षणा स्यादिति संबन्धः । संज्ञाबीजमाह—**उपलक्षणहेतुत्वादिति** । वाक्यार्थान्वयिनो मुख्यार्थस्येतरव्यावृत्तिबोध उपलक्षणम् । 'कलिङ्गः साहसिकः' इत्यादौ वाक्यार्थे साहसादावन्वयिनो मुख्यार्थस्य देशविशेषादेः पञ्चालप्रभृतेर्व्यावृत्तिबोधो लक्षणयैव जायते'

---

1. अजहदिति । ज्ञानेन्द्रसरस्वतीचरणास्तु—'जहत्स्वं पदं यं स जहत्स्वः, सोऽर्थो यस्यामिति बहुव्रीहिगर्भो बहुव्रीहिः' इत्याहुः । स्वशब्दस्य सर्वनामत्वात्पूर्वनिपाते प्राप्ते भाष्यप्रयोगाद्राजदन्तादित्वाद्वा न पूर्वनिपातः ॥

रूढिप्रयोजनयोर्लक्षणलक्षणा यथा—'कलिङ्गः साहसिकः', 'गङ्गायां घोषः' इति च । अनयोर्हि पुरुषतटयोर्वाक्यार्थेऽन्वयसिद्धये कलिङ्गगङ्गाशब्दावात्मानमर्पयतः ।

यथा वा—

'उपकृतं बहु तत्र किमुच्यते सुजनता प्रथिता भवता परम् ।
विदधदीदृशमेव सदा सखे सुखितमास्स्व ततः शरदां शतम् ॥'

अत्रापकारादीनां वाक्यार्थेऽन्वयसिद्धये उपकृतादयः शब्दा आत्मानमर्पयन्ति । अपकारिणं प्रत्युपकारादिप्रतिपादनान्मुख्यार्थबाधो वैपरीत्यलक्षणः संबन्धः फलमपकारातिशयः । इयमेव जहत्स्वार्थेत्युच्यते ॥

**आरोपाध्यवसानाभ्यां प्रत्येकं ता अपि द्विधा ।**

---

इत्यन्ये । तन्न । 'उपदिशति कामिनीनां–' इत्यादौ मुख्यार्थस्येतरव्यावृत्तिबोधाभावेनाव्याप्त्यापत्तेः । एवं च वाक्यार्थान्वयिमुख्यार्थामिश्रितमुख्यार्थान्यपदार्थोपस्थितिरूपलक्षणमिहावगन्तव्यम् । 'उपदिशति–' इत्यादौ शिक्षावचनरूपोपदेशेनामिश्रित एवाविष्कारः प्रतीयते । 'कलिङ्गः साहसिकः' इत्यत्र तु देशविशेषरूपमुख्यार्थस्य मिश्रितस्य पुरुषस्य प्रतीतिरस्ति । किंतु तस्य वाक्यार्थान्वयित्वासंभवेन विशिष्टमुख्यार्थामिश्रणं संभवत्येव । 'कुन्ताः प्रविशन्ति' इत्यादावुपादानवारणाय मिश्रितान्तं विशेषणम् । 'कलिङ्गः साहसिकः' इत्यादिसंग्रहाय वाक्यार्थान्वयीति मुख्यार्थविशेषणम् । लक्ष्यते[1] उपलक्ष्यतेऽनेने(त्युप)लक्षणम् । तन्नाम्ना लक्षणा(उप)लक्षणलक्षणा । पूर्वत्रात्मनोऽप्युपादानादित्युपादानपदम्, अत्रोपलक्षणहेतुत्वादित्युपलक्षणपदं च भावसाधनमवगन्तव्यम् । क्रमेणोदाहरति—**रूढिप्रयोजनयोरिति** । अर्पयतः यथायथं पुरुषतटबोधेनोपयोगीकुरुतः ॥ **उपकृतमिति** । यत्र भवता बहूपकृतं तत्र किमुच्यत इत्यर्थः । 'तत्र'[2] इत्येव कुत्रचित्पुस्तके पाठः । परमुत्कृष्टं यथा स्यात्तथा सुजनता प्रथिता प्रकटीकृता । यद्वा 'परम्' इति मान्तमव्ययमेवकारार्थकम् । सुजनता प्रथितैवेत्यर्थः । सुखितं यथा स्यात्तथा आस्स्व तिष्ठ । ततो बहूपकरणसुजनताप्रथनाभ्यां शरदां वत्सराणां शतमिति, अविच्छेदे द्वितीया ॥ **अत्रापकारादीनामिति**[3] । आदिपदादसुजनतासुखितयोर्ग्रहणम् । **उपकृतादय इति** । आदिपदात्सुजनतासुखितयोर्ग्रहणम् । संज्ञान्तरमाह—**इयमेवेति** । लक्षणलक्षणैवेत्यर्थः । जहत्त्यजन् स्वार्थो यामिति विग्रहः । पुनरपि लक्षणाया द्वैविध्यमाह—**आरोपाध्यवसानाभ्यामिति** । अत्र विशेषणे तृतीया[4] । तेन सारोपाः साध्य-

---

१. 'लक्ष्यते' इति पुस्तकान्तरे नास्ति. २. पुस्तकपञ्चके 'तत्र' इत्येव पाठः प्राप्यते. ३. 'अनुपकारादीनां' इति टीकास्थः पाठः ४. पुस्तकान्तरे "जनकतासंबन्धेन आरोपाध्यवसानाभ्यां विशिष्टेत्यर्थः । लक्षणाजन्यबोधोत्तरं हि वाक्यस्य समानाधिकरणपदघटितत्वरूपवैशिष्ट्यसचिवयाभ्यां व्यञ्जनया

ता[1]: पूर्वोक्ताश्चतुर्भेदलक्षणाः ।

**विषयस्यानिगीर्णस्यान्यतादात्म्यप्रतीतिकृत् ॥ ८ ॥**
**सारोपा[1] स्यान्निगीर्णस्य मता साध्यवसानिका ।**

विषयिणा[2] अनिगीर्णस्य विषयस्य तेनैव सह तादात्म्यप्रतीतिकृत्सा-

---

वसानाश्चेति । 'अश्वः श्वेतः' इत्यादौ निराकाङ्क्षपदद्वयेन धारावाहिकभेदप्रतीतिरेव जायते नतु लक्षणाजन्यप्रतीतिरिति । तत्प्रतिबन्धकः पदयोः समानविभक्तिकत्वबलेन शक्यलक्षणयोरभेदारोपः कल्पनीय इति भावः । ननु भेदप्रतीत्यनन्तरमभेदारोप आहार्य एव संभवति, तस्य प्रतिबन्धकत्वं केनापि नाङ्गीक्रियत इति चेत् । न । लाक्षणिकबोधानुरोधेन शुक्लगुणविशिष्टबोधाभिप्रायबोधसहकृतस्याहार्यस्याप्यभेदारोपस्य प्रतिबन्धकत्वकल्पनात् । न च सहकार्येव प्रतिबन्धकोऽस्तु, किमाहार्यस्य प्रतिबन्धकत्वकल्पनेनेति वाच्यम् । ग्राह्याभावानवगाहित्वेन तस्य प्रतिबन्धकत्वकल्पनाया अन्याय्यत्वात् । वस्तुतस्तु आहार्यत्वस्य तत्प्रतिबन्धकत्वस्य च कल्पनामपेक्ष्यावश्याङ्गीकरणीयस्य सहकारिण एव प्रतिबन्धकत्वकल्पने लाघवमस्ति, तथापि प्राचीनमतानुसारादेवं व्याख्यातमिति । प्रतीयमानेन लक्ष्यार्थेन शक्यार्थस्याहार्यभेदप्रतीतिरध्यवसानम् । लक्षणाजन्यपदार्थोपस्थितेः प्राक्काले तादृशारोपाध्यवसानयोः सत्त्वाल्लक्षणायास्तद्वैशिष्ट्यमवगन्तव्यं फलपरिचेयम् । तयोः स्वरूपमाह— **विषयस्येति** । निरुक्तारोपविशेष्यस्येत्यर्थः । **अनिगीर्णस्य** प्रयुक्तशब्दप्रतिपादितस्य । **अन्यतादात्म्यप्रतीतिकृत्** स्वजन्यपदार्थोपस्थितिद्वारा शक्यतावच्छेदकातिरिक्तधर्मावच्छिन्नस्याभेदप्रतीतिकृद्या लक्षणा सा सारोपा स्यादित्यर्थः । 'अश्वः श्वेतो

---

1. सारोपेति । आरोपेण सह वर्तत इति सारोपा । विषयविषयिणोर्भेदेनोपन्यासोऽत्रारोपार्थः । विषयनिगरणेन विषयिणोऽभेदप्रतिपत्तिरध्यवसानम्, तेन सह वर्तत इति साध्यवसाना । विषयनिष्ठासाधारणधर्मैप्रतिपत्तिसहकृतान्यस्यान्यतादात्म्यप्रतीतिः सारोपा । विषयनिष्ठासाधारणधर्मप्रतीत्यसहकृतान्यस्यान्यतादात्म्यप्रतीतिः साध्यवसाना । एवं च लक्ष्यवाचकपदसत्त्वासत्त्वमात्रेणारोपाध्यवसानव्यवहार इति बोध्यम् ॥

---

शक्यलक्ष्ययोराहार्याभेदप्रतीतिरूपारोपाध्यवसाने जन्येते । केचित्तु 'पदयोः समानविभक्तिकत्वबलेन लक्षणाजन्यबोधात्प्रागेव शक्यलक्ष्ययोरभेदारोपो भवति' इत्याहुः । तन्न । रूपकालंकारवदाहार्याभेदप्रतीतिरूपशाब्दबोधजनने वाक्यस्य निराकाङ्क्षतया पुनर्लक्षणया वाक्यार्थजनकत्वासंभवात् । अत एव काव्यप्रकाशकारेण 'गौर्वाहीकः' इत्यत्राहार्याभेदप्रतीतिर्लक्षणा प्रयोजनत्वेनाङ्गीकृता । गौणीमूलकस्याभेदारोपस्य रूपकत्वमङ्गीकृतं च आरोपाध्यवसानयोर्विशेषग्रहणार्थं निरुक्तलक्षणयोः स्वरूपमाह—विषयस्येति । विषयस्य लक्षणाजन्यबोधविशेष्यस्यानिगीर्णस्य उच्चरितशब्दप्रतिपादितस्य अन्यतादात्म्यप्रतीतिकृत् शक्यार्थाभेदप्रतीतिजनिका लक्षणाजन्यवाक्यार्थबोधानन्तरं जायमानस्य तादृशाभेदारोपस्य लक्षणाजन्यत्वाङ्गीकारात् ।" इति पाठो दृश्यते.

१. 'ताः पूर्वोक्ताश्चतुर्भेदलक्षणाः' इति ग-पुस्तके नास्ति. २. 'विषयिणा' इत्यारभ्य 'बीजम्' इत्यन्तं क-ख-घ-पुस्तकेषु नास्ति.

रोपा । इयमेव रूपकालंकारस्य वीजम् । रूढावुपादानलक्षणा सारोपा यथा—'अश्वः श्वेतो धावति' । अत्र हि श्वेतगुणवानश्वोऽनिगीर्णस्वरूपः स्वसमवेतगुणतादात्म्येन प्रतीयते । प्रयोजने यथा—'एते[1] कुन्ताः प्रविशन्ति' । अत्र सर्वनाम्ना कुन्तधारिपुरुषनिर्देशात्सारोपत्वम् । रूढौ लक्षणलक्षणा सारोपा यथा—'कलिङ्गः पुरुषो युध्यते' । अत्र पुरुषकलिङ्गशब्दयोराधाराधेयभावः संबन्धः । प्रयोजने यथा—'आयुर्घृतम्' । अत्रायुष्कारणमपि घृतं कार्यकारणभावसंबन्धसंबन्ध्यायुस्तादात्म्येन[2] प्रतीयते । अन्यवैलक्षण्येनाव्यभिचारेणायुष्करत्वं[3] प्रयोजनम्[4] ।

यथा[5] वा—राजकीये पुरुषे गच्छति 'राजासौ गच्छति' इति । अत्र स्वस्वामिभावलक्षणः संबन्धः । यथा वा—अग्रमात्रेऽवयवभागे[2][6][7]

धावति' इत्यत्रापि 'धावति' इत्यत्र 'शोभते' इति द्रष्टव्यम् । अन्यथोपादानलक्षणा न स्यादिति प्रागेव दर्शितम् (४३पृ.) अत्र निरुक्तारोपसत्त्वमुपपादयति—**अत्र हीति** । 'लक्षणाजन्यपदार्थोपस्थितेः प्राक्काले' इति शेषः । अनिगीर्णस्वरूपः प्रयुक्तशब्देन प्रतिपाद्यः । **एते कुन्ता इति** । विषयस्य सामान्यवाचिना सर्वनाम्ना निर्देशेऽपि विशेषरूपेणानुपस्थितौ साध्यवसाना लक्षणैवेति **काव्यप्रकाशकारमतम्** । तद्भूतलमिति प्रतीतिसत्त्वे 'घटाभाववद्भूतलम्' इति प्रतीत्यनुदयात्सर्वनाम्नोऽपि विशेषरूपेणोपस्थापकत्वं कल्प्यत इत्यभिप्रायेण पूर्वमतमनङ्गीकृत्य तत्रापि सारोपा लक्षणेति दर्शयति—**अत्र सर्वनाम्नेति** । **आयुर्घृतमिति** । अत्र शक्यसंबन्धारोपं च दर्शयति—**आयुष्कारणमपीति** । अन्यवैलक्षण्येनाव्यभिचारेणेत्यत्र वाकारो बोध्यः । लक्षणावीजं विविधं शक्यसंबन्धं दर्शयन्बहून्युदाहरणान्याह—**राजकीय इति** । अत्र राजकर्मातिशयपरिच्छदातिशयौ राजवदलङ्घ्यशासनत्वं वा प्रयोजनम् । **अवयवभागे** इत्यत्र भागशब्दः स्वरूपार्थः । अत्र प्रयोजनाभावाद्रूढिरेव । हस्त-

1. एत इति । 'इदमस्तु संनिकृष्टं समीपतरवर्ति चैतदोरूपम् । अदसस्तु विप्रकृष्टं तदिति परोक्षे विजानीयात् ॥' इति, कवयस्तु भूतभविष्यविशेषवन्नेममपि नियममेकान्ततः श्रद्धते । तत एव 'पूर्व एवाभवत्' 'अभूदभूमिः' 'बभूव रक्षः' इति 'असुं पुरः पश्यसि' 'अमूं किल त्वं' इति चैवमादयो: रघुवंशशिशुपालवधप्रयोगाः ।

2. अग्रेति । अग्रहस्त इत्यत्राग्रमात्रेऽवयवस्वरूपे हस्तशब्दो लाक्षणिकः । हस्तावय-

१. 'लक्षणलक्षणा सारोपा' इत्यधिकं ख-पुस्तके. २. 'कार्यकारणसंबन्धादायुस्तादात्म्येन' क; कार्यकारणसंबन्धेन तदात्मनोपचरितम्' ग. ३. 'अव्यभिचारेण' इति ग-पुस्तके नास्ति. ४. 'आयुरेवेदम्' इत्यत्र 'साध्यवसानायां व्यभिचारेणायुष्करत्वं प्रयोजनम्' इत्यधिकं ग-पुस्तके. ५. 'यथा च' क-ग; ख-पुस्तके तु 'यथा' इत्येव. ६. 'बाहुमात्रे' ख. ७. 'अवयवे' ग. 'हस्तावयवे भागे' घ; क-पुस्तके तु 'अग्रमात्रे' इत्येव दृश्यते.

'हस्तोऽयम्' । अत्रावयवावयविभावलक्षणसंबन्धः । 'ब्राह्मणोऽपि तक्षासौ' । अत्र तात्कर्म्यलक्षणः । इन्द्रार्थासु स्थूणासु 'अमी इन्द्राः' । अत्र तादर्थ्यलक्षणः संबन्धः । एवमन्यत्रापि । निगीर्णस्य पुनर्विषयस्यान्यतादात्म्यप्रतीतिकृत्साध्यवसाना । अस्याश्चतुर्षु भेदेषु पूर्वोदाहरणान्येवं[2] ॥

---

वत्कार्यकारित्वं प्रयोजनमित्यन्ये । ब्राह्मणोऽपीत्यपिकारात्क्षत्रियादिपरिग्रहः । तक्षा जातिविशेषः । समस्ततक्षकर्मणि नैपुण्यमत्र प्रयोजनम् । **इन्द्रार्थास्विति** । इन्द्रपूजार्थं कल्पितास्वित्यर्थः । स्थूणासु स्तम्भेषु । इन्द्रवत्पूज्यमानत्वमत्र प्रयोजनम् । एतदुदाहरणचतुष्टयमपि सारोपाया एव । '–निगीर्णस्य मता साध्यवसानिका' इति कारिकाच्छलं(दलं) व्याकरोति—**निगीर्णस्येति** । शब्दं विनैवाक्षेपा-

---

वेन हस्तव्यापारं संपादयतीति पराक्रमातिशयः प्रयोजनं व्यङ्ग्यम् । कर्मधारयाभिप्रायेणैतत् । हस्तस्याग्रमिति षष्ठीसमासे तु 'पीता कार्पटिकैर्गङ्गा' इत्युदाहार्यम् । इह गङ्गाशब्दो गङ्गावयवे लाक्षणिक इति ध्येयम् । अवयवपुञ्ज एवावयवीति मतेऽवयवान्तरव्युदासाय मात्रम् ॥

1. एवमिति । अत्रेयं लक्षणादिक्—'तात्स्थ्यात्तथैव ताद्धर्म्यात्तत्सामीप्यात्तथैव च । तत्साहचर्यात्तादर्थ्याज्ज्ञेया वै लक्षणा बुधैः ॥' शय्या हसति, सिंहो माणवकः, वटे गावः, शास्त्राणि प्रवेशय, पार्थिवार्था मृत्पिण्डका पार्थिव इति तदुदाहृतयः । गौतमोऽप्याह—'सहचरणस्थानतादर्थ्यवृत्तमानधारणसामीप्ययोगसाधनाधिपत्येभ्यो ब्राह्मणत्रालकटराजसक्तुचन्दनगङ्गाशकटान्नपुरुषेष्वतद्भावेऽपि तदुपचारः २।२।६४ ॥' इति । तस्य भावस्तद्धर्मः[1] । तदभावेऽपि तदुपचारः । तच्छब्दव्यवहार इत्यर्थः । स च तद्धर्मारोपेणारोपनिमित्तानि च सहचरणादीनि । यष्टीः प्रवेशय । मञ्चाः क्रोशन्ति । वीरणेष्वास्ते । अयं राजा यमः । प्रस्थः सक्तुः । चन्दनं तुला । गङ्गायां घोषः । कृष्णः शकटः । अन्नं प्राणाः । अयं कुलस्य राजा । इत्युदाहरणानि क्रमेण । यष्टित्वारोपो ब्राह्मणे, साहचर्यात् । मञ्चत्वारोपो बालेषु तात्स्थ्यात् । कटेषु वीरणत्वारोपः, तादर्थ्यात् । राज्ञि यमत्वारोपः, वृत्तात् । सक्तौ प्रस्थत्वारोपः, तन्मानकत्वात् । चन्दने तुलात्वारोपः, तद्धार्यत्वात् । गङ्गायां तीरधर्माधारत्वारोपः, तत्सामीप्यात् । शकटे तद्धर्मकृष्णत्वारोपः, कृष्णगुणयोगात् । अन्नेषु प्राणत्वारोपः, प्राणसाधनत्वात् । पुरुषे राजत्वारोपः, कुलाधिपत्यात् इति तद्व्याख्यातारः । अत्र साहचर्यं नाम यष्ट्या नित्यसंबन्धः । तत्संबन्धात्तु 'यष्टिकावान्' इत्येव स्यात् । न तु 'यष्टिका' इति । 'यष्टिकावान्' इति तु मुख्य एव । तस्मादुपचारबीजमन्यद्वक्तव्यम् । उच्यते—यष्टिकायां तावदयं यष्टिकाशब्दो यष्टिकात्वजातिनिमित्तकस्तत्र संयुक्तसमवेतां जातिं ब्राह्मणे समवायेनाध्यारोप्य ब्राह्मणं यष्टिकेत्याहेति न्यायवार्तिककाराः । 'गौर्वाहीकः' इत्यादावपि साधारणधर्मजडत्वादिरूपेण निमित्तेन वाहीकस्यारोपितगोत्वेन बोधः । ततो व्यञ्जनया मुख्यगवाभेदप्रतीतिः प्रयोजनम् ॥

---

1. 'भाव' इति ख-पुस्तके नास्ति. 2. 'तदेवमष्टप्रकारा लक्षणा' ग.

**साहश्येतरसंबन्धाः शुद्धास्ताः सकला अपि ॥ ९ ॥**
**साहश्यात्तु मता गौण्यस्[1]तेन षोडश भेदिताः ।**

ताः पूर्वोक्ता अष्टभेदा लक्षणाः । साहश्येतरसंबन्धाः कार्यकारणभावादयः । अत्र[1] शुद्धानां पूर्वोदाहरणान्येवे[2] । रूढावुपादानलक्षणा सारोपा गौणी यथा—'एतानि तैलानि हेमन्ते सुखानि' । अत्र तैलशब्दस्तिलभवस्नेहरूपं मुख्यार्थमुपादायैव सार्षपादिषु स्नेहेषु वर्तते[3] ।

---

दिनाप्रतीयमानस्य विषयस्य निरुक्ताध्यवसानविशेष्यस्य । पूर्वोदाहरणान्येवेति । श्वेतो धावति । कुन्ताः प्रविशन्ति । कलिङ्गः साहसिकः । गङ्गायां घोषः प्रतिवसतीति । एतानीत्यर्थः । एष्वश्वादीनां विशेष्याणां शब्दं विनैव प्रतीयमानत्वाद् 'गङ्गायाम्' इत्यादौ तीरं विशेष्यम् । तच्च शब्दं विनैव प्रतीयते । पुनरपि लक्षणाया द्वैविध्यमाह—**साहश्येतरेति** । साहश्यादितरे संबन्धा हेतवो यस्या इति समासः । 'साहश्यात्संबन्धात्' इति शेषः । साहश्यसंबन्धहेतुका लक्षणा गौण्य इत्यर्थः । तेन निरुक्तद्वैविध्येन पूर्वोदाहरणान्येवेति । 'अश्वः श्वेतो धावति' इत्यादीन्येवेत्यर्थः । **एतानीति** । हेमन्ते हि तैलाद्यभावादत्यन्तं दुःखमुत्पद्यते । तन्निराकरणेन तैलानामत्युपकारित्वमिति सूचनाय 'हेमन्ते' इत्युक्तम् । **उपादायैव** अपरित्यज्यैव । **सार्षपादि स्नेहेषु वर्तत** इति घृतादिविलक्षणद्रवत्वरूपैकधर्मसंबन्धेन सर्षपादिस्नेहान्प्रतिपादयतीत्यर्थः । 'छत्रिणो यान्ति' इतिवत्तिलस्नेहस्यापि

---

1. गौण्य इति । गुणेभ्य आगता गौण्य इति विग्रहः । 'तत आगतः' इत्यण् 'टिड्ढा—' इति ङीप् ॥

---

१. 'तत्र' ग. २. ग-पुस्तके तु 'एव' इत्यस्याग्रे 'साहश्येतर—' इत्यादिः फक्किका वर्तते; तदग्रे "आदिग्रहणादिन्द्रार्था स्थूणा इन्द्रः तादर्थ्यलक्षणात् । क्वचित्स्वस्वामिभावात् 'राजकीयः पुरुषो राजा' इति क्वचित्तात्कर्म्यात् 'अतक्षा तक्षा' इति । क्वचिदवयवावयविभावात् 'अग्रमात्रेऽवयवे हस्तोऽयम्' इति । क्वचित्साहचर्यात् 'छत्रिणो यान्ति' इति । एवमन्यान्यप्युदाहरणान्यूह्यानि । एकशतं षष्ठ्यर्था इति वचनात् । साहश्यसंबन्धात्तु ता एवाष्टधा लक्षणा गौण्यो भवन्ति ।" इति पाठान्तरं वर्तते. ३. 'नेयं प्रयोजनवती । नालिकेरादिस्नेहव्यावृत्त्या सर्षपस्नेहादिजातीय एव प्रसिद्ध्या नियमितत्वात् ।' इति ग-पुस्तकेऽधिकः पाठः. ४. 'इति' पुस्तकान्तरे नास्ति. ५. कुत्रचित् "एषु यथायथमेतदादिपदमध्याहार्यम् । एतेन लक्षणात्वावच्छेदेन सारोपात्वसाध्यवसानात्वान्यतरधर्मयोगित्वं ग्रन्थकृतां संमतम् । वस्तुतस्तु 'त्वामस्मि वच्मि विदुषां समवायोऽत्र तिष्ठति' इत्यादौ 'उपदिशति कामिनीनां' इत्यादौ चाध्याहारेणापि समानविभक्तिकपदासंभवात् 'कदली कदली करभः करभः' इत्यादौ 'रामोऽस्मि सर्वं सहे' इत्यादौ च शक्यलक्ष्ययोर्भेदाभावान्निरुक्तारोपाध्यवसानासंभवात्ताहशनियमस्य व्यभिचारः । अत एव काव्यप्रकाशकारेण 'सारोपान्या तु यत्रोक्तौ विषयी विषयस्तथा । विषय्यन्तःकृतेन्यस्मिन्सा स्यात्साध्यवसानिका ॥' इति लक्षणं कृतम् । अन्योपादानत्वनिरुक्तप्रकारद्वयातिरिक्तप्रकारावच्छिन्ना लक्षणात्वान्यतरव्याप्यलक्षणाविभाजकधर्मान्तरावच्छिन्नेत्यर्थः । एतेन लक्षणाविशेषस्यैव सारोपात्वसाध्यवसानात्वान्यतरधर्मयोगित्वं प्रतीयते । न तु यावतीनां लक्षणानाम् । एवं च 'गङ्गायां घोषः' इत्यादाविदमादिपदाध्याहारं विनापि लक्षणा संगच्छते ।" इत्यधिकं दृश्यते.

प्रयोजने यथा—राजकुमारेषु तत्सदृशेषु च गच्छत्सु 'एते राजकुमारा गच्छन्ति'। रूढावुपादानलक्षणा साध्यवसाना गौणी यथा—'तैलानि हेमन्ते सुखानि' । प्रयोजने यथा—'राजकुमारा गच्छन्ति'। रूढौ लक्षणलक्षणा सारोपा गौणी यथा—'राजा गौडेन्द्रं कण्टकं शोधयति'। प्रयोजने यथा—'गौर्वाहीकः'[1] रूढौ लक्षणलक्षणा साध्यवसाना गौणी यथा—'राजा कण्टकं शोधयति'। प्रयोजने यथा—'गौर्जल्पति'।

अत्र केचिदाहुः—गोसहचारिणो गुणा जाड्यमान्द्यादयो लक्ष्यन्ते। ते च गोशब्दस्य वाहीकार्थाभिधाने निमित्तीभवन्ति । तदयुक्तम्।

---

सुखजननेऽन्वयोऽस्तीति भाव्यम् । नन्वेवं कथमत्र मुख्यार्थबाध इति चेत्, सर्षपादिस्नेहानां तिलभवत्वाभावात् । सामानाधिकरण्येनान्वयानुपपत्तेरेवात्र मुख्यार्थबाधत्वाङ्गीकारात् । न चैतत्पदार्थैकदेशस्य तिलस्नेहस्य तिलभवत्वसंभवात्कथमन्वयानुपपत्तिरिति वाच्यम् । तादृशान्वयस्याव्युत्पन्नत्वेनानङ्गीकारात् । नहि पिकहरिणविहंगमभुजंगा इत्यन्वयः केनाप्यप्रमत्तेनाङ्गीक्रियते । एवं च 'तैलानि सुखानि' इत्यत्र प्रतीयमानेनैतत्पदार्थेन तैलपदार्थस्यान्वयानुपपत्तिरेव मुख्यार्थबाधः । न चैवं 'गङ्गायां घोषः' इत्यादौ सर्वत्रैव तादृशमुख्यार्थबाधसंभवे किमिति ग्रन्थकारैर्मुख्यार्थबाधान्तरं दर्शितमिति वाच्यम्। विस्पष्टस्य मुख्यार्थबाधस्य प्रतिसंधानेनैवोपपत्तौ श्लिष्टस्य तस्य प्रतिसंधानानुसंधानस्यान्याय्यत्वात् । **एते राजकुमारा इति** । अत्र विलक्षणपरिच्छेदकत्वरूपैकधर्मलक्षणसादृश्यसंबन्धेन राजकुमारास्तत्सदृशाश्च प्रतीयन्ते । सदृशानामपि राजकुमारवदादरणीयत्वं प्रयोजनम्। **राजा गौडेन्द्रमिति**। शोधयति दमनेन निर्वैरं करोति । तीक्ष्णाग्रवृक्षाङ्गविशेषः कण्टकपदस्य मुख्यार्थः । तस्य शोधनासंभवाद्दुःखदत्वेन तत्सदृशे शत्रौ लक्षणा। 'क्षुद्रशत्रौ च कण्टकः' इत्यादिकोषस्तु निरूढलक्षणाया एव ग्राहकः, न त्वभिधाया इति भाव्यम् । **गौर्वाहीक इति** । वाहीको हलवाहकः । **गौर्जल्पतीति**। जल्पनं व्यक्तवचनम् । तच्च गोर्न संभवतीत्यन्वयानुपपत्तिः। 'गौर्वाहीकः' इत्यत्र शाब्दबोधप्रकारं दर्शयन्परमतं निराकरोति—**अत्र केचिदाहुरिति** । गोसहचारिणो गोवृत्तयो गोत्वसमानाधिकरणा वा, जाड्यमज्ञत्वं मान्द्यं विदग्धकर्माक्षमत्वम्, आदिना दुःखसहिष्णुत्वादिपरिग्रहः । **वाहीकार्थाभिधाने** वाहीकरूपस्यार्थस्याभिधया बोधने **निमित्तीभवन्ति** प्रवृत्तिनिमित्ततामुपयान्ति । ननु गोत्वे गृहीता

---

1. वाहीक इति। वाहीको नाम देशविशेषः । तत्रत्यः पुरुषो वाहीकः। केचित्तु बहिर्भवो बाहीक इति व्युत्पत्त्या सदाचारबहिर्भूत इत्यर्थः। 'बहिषष्टिलोपो यञ्च,' 'ईकक्च' इति वार्तिकाभ्यां टिलोपे ईककि च कृते बवयोरभेदाद् वाहीक इति रूपम् इत्याहुः ॥

---

१. 'तूपादानलक्षणा सारोपा गौणी' इति ग-पुस्तकेऽधिकम्. २. अत्र 'सौन्दर्याद्यतिशयः प्रयोजनम्' इत्यधिकं ग पुस्तके.

गोशब्दस्यागृहीतसंकेतं वाहीकार्थमभिधातुमशक्यत्वाद् गोशब्दार्थमात्रबोधनाच्च । अभिधाया विरतत्वाद् विरतायाश्च पुनरुत्थानाभावात् ।

अन्ये च पुनर्गोशब्देन वाहीकार्थो नाभिधीयते । किंतु स्वार्थसहचारिगुणसाजात्येन वाहीकार्थगता गुणा एव लक्ष्यन्ते । तदप्यन्ये न मन्यन्ते । तथाहि—अत्र गोशब्दाद्वाहीकार्थः प्रतीयते, न वा । आद्ये गोशब्दादेव वा । लक्षिताद्वा गुणाद् । अविनाभावाद्वा । तत्र, न

---

शक्तिर्व्यक्तिमिव तत्सदृशमपि बोधयत्वित्यत आह—**गोशब्दार्थमात्रबोधनाच्चेति** । **विरतत्वात्** प्रतीतियोग्यताविरहेण नष्टप्रायत्वात् । सकृदुच्चरितशब्दस्याभिधया सकृदर्थबोधकत्वनियमादित्यभिप्रायः । नन्वस्य नियमस्य श्लेषादौ व्यभिचारदर्शनात्फलवत्त्वेन पुनरपि प्रतीतियोग्यता कल्पनीयेत्यत आह—**विरताया इति** । **उत्थानाभावात्** प्रतीतिजननोन्मुखीभावविरहात् । श्लेषादौ धर्मान्तरे गृहीतं शक्त्यन्तरमर्थान्तरं बोधयतु । प्रकृते तु गोत्वे गृहीता शक्तिर्गोत्वाश्रयं बोधयित्वा यदि तत्सदृशमपि बोधयेत्तदाभिधयैव लक्ष्यार्थबोधसंभवेन लक्षणैव नाङ्गीक्रियेतेति भावः । **स्वार्थेति** । स्वार्थो गोत्वम् । तत्समानाधिकरणेत्यर्थः । **गुणसाजात्येनेति** । लक्ष्यगतगुणानां शक्यार्थसहचरितत्वासंभव इति भावः । **आद्ये** प्रतीतिपक्षे । **न प्रथमः**, न गोशब्दजन्यप्रत्ययपक्षः । **असंकेतित**त्वाद् गोशब्दसंकेतविषयत्वाभावात् । **न तृतीयः**, नाविनाभावजन्यप्रत्ययपक्षः । **शाब्देऽन्वयेऽसंभवात्** शाब्दबोधविषयत्वासंभवात् । अत्र हेतुमाह—**शाब्दीति** । एतच्च शब्दाध्याहारवादिनां मतमाश्रित्योक्तम् । अर्थाध्याहारवादिनां मीमांसकानां मते त्वविनाभावलभ्यस्याप्यर्थस्य शाब्दबोधविषयत्वाङ्गीकारान्नैतद्दूषणम् । अन्यथोपाधिशक्तिवादिनां मते व्यक्तेः शाब्दबोधविषयत्वं न स्यात् । न च लक्षणयैव तत्र व्यक्तिरुपस्थितिरिति वाच्यम् । रूढिप्रयोजनाभावात्तत्र लक्षणाया असंभवात् । न च गवादिपदानां व्यक्तौ रूढिरस्तीति वाच्यम् । लक्ष्यार्थव्यतिरिक्तशक्यार्थप्रयोगशालिनः शब्दस्य लक्ष्यार्थप्रयोगरूपाया रूढेर्लक्षणाहेतुत्वाङ्गीकारात् । गवादिपदानां तु व्यक्तिसहकृत एव गोत्वादौ प्रयोगः । लक्ष्यार्थे प्रयोगमात्रस्यैव लक्षणाहेतुत्वाङ्गीकारे उपाधिशक्तिवादमते सर्वत्रैव लक्षणया व्यक्तिबोधसंभवात् । 'ऐन्द्या ऋचा गार्हपत्यमुपतिष्ठते' इत्यादौ द्वितीयान्तपदरूपायाः श्रुतेर्लिङ्गापेक्षया झटित्यर्थोपस्थापकत्वरूपबलवत्त्वम् 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यम-

---

1. शब्देति । भाट्टमीमांसकानाम् ॥
2. अर्थेति । प्राभाकराणाम् ॥

---

१. 'असामर्थ्यात्' ग. २. 'गो–' इत्यारभ्य 'पुनरुत्थानाभावात्' इत्यन्तः. पाठो ग-पुस्तके न दृश्यते ३. '–गुणाः साजात्येन वाहीकगता एव लक्ष्यन्ते' क. ४. 'एतदप्यन्ये' क. ५. 'आद्येऽपि' ख-ग.

प्रथमः । वाहीकार्थस्यासंकेतितत्वात् । न द्वितीयः । गोगवयचन्द्रमुखादिशब्दद्वन्द्वानामवयवप्रसादादिसाम्येऽप्यन्योन्यस्यान्यतमशब्दार्थानभिधायकत्वात् । न तृतीयः । अविनाभावलभ्यस्यार्थस्य शाब्देऽन्वये प्रवेशासंभवात् । शाब्दी ह्याकाङ्क्षा शब्देनैव पूर्यते । न[1] द्वितीयः । यदि हि गोशब्दाद्वाहीकार्थो न प्रतीयेत, तदास्य वाहीकशब्दस्य च सामानाधिकरण्यम[1]संगतं स्यात् ।

तस्मादत्र गोशब्दो मुख्यया वृत्त्या वाहीकशब्देन सहान्वयमलभमानोऽज्ञत्वादिसाधर्म्यसंबन्धाद्वाहीकार्थं लक्षयति । वाहीकस्याज्ञत्वाद्यतिशयबोधनं प्रयोजनम् । इयं[2] च[3] गुणयोगाद्गौणीत्युच्यते । पूर्वा[4] तूपचारामिश्रणाच्छुद्धा । उपचारो हि नामात्यन्तं विशकलितयोः शब्दयोः सादृश्यातिशयमहिम्ना भेदप्रतीतिस्थग[5]नमात्रम् । यथा—

थंविप्रकर्षात्' इति जैमिनिसूत्रोक्तं न स्यात् । आक्षेपापेक्षया लक्षणाया मुख्यार्थबाधादिप्रतिसंधानसापेक्षत्वेन विलम्ब्यार्थोपस्थापकत्वात् समवाये विरोधेऽर्थविप्रकर्षाद्विलम्ब्यार्थोपस्थापकत्वात् । 'श्रुतिर्द्वितीया क्षमता च लिङ्गं वाक्यं पदान्येव तु संहतानि । सा प्रक्रियायाः कथमित्यपेक्षास्थानं क्रमो योगबलं समाख्या ॥' इति कारिकया सूत्रार्थव्याख्या । **न द्वितीयः**, न प्रतीतिरित्यभावपक्षः । **अस्य** गोशब्दस्य, वाहीकशब्दस्येत्यनन्तरं चकारो बोध्यः । **सामानाधिकरण्य**मेकार्थप्रतिपादकत्वम् । स्वमतमाह—**तस्मादत्रेति** । तस्मादुपदर्शितमतद्वये दोषसंभवात् । **अन्वयमिति** । अभेदसंबन्धेनेत्यादि । **अज्ञत्वादीति** । व्यक्तिभेदेऽपि गुणक्रिययोरैक्यमित्यभिप्रायेणेदं निर्वचनम् । अन्यथा शक्यलक्ष्ययोरेकधर्मत्वरूपसंबन्धो न संभवति । **प्रयोजनमिति** । अत्राहार्याभेदप्रतीतिः प्रयोजनमिति **काव्य**प्रकाशकारः । **इयं चेति** । गुणस्य साधारणधर्मस्य योगात् स्वविषयकज्ञानजनकत्वसंबन्धात् । तदुक्तम्—'लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता' इति । लक्ष्यमाणस्य गुणैः साधारणधर्मैर्योगादुपदर्शितसंबन्धाद्वृत्तेर्लक्षणायाः । **पूर्वा** सादृश्यातिरिक्तसंबन्धनिबन्धना । शक्यलक्ष्ययोरभेदारोपमेव केचिदुपचारमाहुः । तथा सति 'शुक्लः पटः' इत्यादावपि सारोपाया उपचारमिश्रणाच्छुद्धत्वं न स्यादित्यतः प्रकारान्तरेणोपचारबीजं निर्वक्ति—**अत्यन्तमिति** । व्युत्पत्तिवैचित्र्यात्समासैकदेशे भेदप्रतीतावभेदसंबन्धेनान्वेति । **विशकलित**योर्निराकाङ्क्षयोः **सादृश्यातिशयमहिम्ना** सादृश्यातिशयबोधाभिप्रायबोधेन भेदामिश्रितसाधर्म्यमेव सादृश्यातिशयः । भेदप्रतीतेरात्यन्तिकत्वं च शक्यलक्ष्ययोः संबन्धानवगाहितया, यथा शुक्लः पट इत्यत्र

1. नेति । प्रतीयते, नवेति पूर्वग्रन्थेनोद्भाविता द्वितीयकोटिरेतेन दूष्यते ।

1. 'असमञ्जसं स्यात्' ग. 2. 'इत्थं' क. 3. 'हि' ग. 4. 'च' क. 5. 'सरण' घ.

'अग्निर्माणवकयोः' । शुक्लपटयोस्तु नात्यन्तं भेदप्रतीतिः । तस्मादेवमादिषु शुद्धैव लक्षणा ।

**व्यङ्ग्यस्य गूढागूढत्वाद्द्विधा स्युः फललक्षणाः ॥ १० ॥**

प्रयोजने या अष्टभेदा लक्षणा दर्शितास्ताः प्रयोजनरूपव्यङ्ग्यस्य गूढागूढतया प्रत्येकं द्विधा भूत्वा षोडश भेदाः[1] । तत्र गूढः; वाक्यार्थभावनापरिपक्वबुद्धिविभवमात्रवेद्यः । यथा—'उपकृतं बहु तत्र–'

---

शुक्लगुणवान्पटः शुक्लगुणाद्भिन्न इति शक्यलक्ष्ययोः समवायो भासते, न तथा अग्निर्माणवक इत्यत्र लक्षणाजन्यबोधात्प्राक् शक्यलक्ष्ययोः सादृश्यसंबन्धो भासते। किंतु सादृश्यबोधाभिप्रायबोधानन्तरमेवात्यन्तिकभेदप्रतीतिः संभवति । तस्याश्च सादृश्यातिशयबोधाभिप्रायबोधसहकृतेनाभेदारोपेण स्थगनमनुत्पत्तिरेवोपचारः । न त्वभेदारोप इत्यर्थः । अत्यन्तपदव्यावृत्तिमाह—**शुक्लपटयोरिति । नात्यन्तं भेदप्रतीतिरिति** । अत्र कृदभिहितभावस्यापि विशेषणस्यात्यन्तमित्यस्य कर्मत्वक्लीबत्वे 'अपृथग्रूपक्रियाविशेषणस्य कर्मत्वं क्लीबत्वं च' इति सूत्रस्थस्यापृथग्रूपेत्यादेर्नञ्युक्तमनित्यमिति न्यायेन व्यभिचारात् । अत्र भेदप्रतीतेः समवायाख्यशब्दशक्यसंबन्धावगाहनान्नात्यन्तिकत्वमित्यभिप्रायः । ननु गौणलक्षणातो रूपकालंकारस्य को भेदः, रूपकालंकारेऽप्यभेदारोपानन्तरं सादृश्यबोधस्यानुभवसिद्धत्वादिति चेद्, रूपकेऽभेदारोपात्प्रागपि सादृश्यप्रतीतिः संभवति । गौणलक्षणायां तु पश्चादेव, सादृश्यप्रतीत्योः कारणवैलक्षण्यादपि वैलक्षण्यं संभवति । 'आरोप्यमाणस्य प्राङ्निर्देशे हि गौणलक्षणाप्रयोगवाक्यम्, पश्चान्निर्देशे रूपकप्रयोगवाक्यमिति नियमः' इति केचित् । 'गौडेन्द्रं कण्टकं शोधयति' इति गौणलक्षणोदाहरणं 'राजति व्योमकासारे राजहंसः सुधाकरः' इति रूपकोदाहरणं ददतो ग्रन्थकृतस्तन्नाभिमतमिति मन्तव्यम् । प्रयोजनलक्षणाया द्वैविध्यमाह—**व्यङ्ग्यस्येति** । बुद्धेर्विभवः सूक्ष्मविषयगामित्वेनातिशयः । **उपकृतमिति** । अत्र वक्तृतात्पर्यरूपाया लक्षणायाः

---

१. 'प्रत्येकं गूढव्यङ्ग्यतयाऽगूढव्यङ्ग्यतया च द्वैविध्यात्षोडशभेदाः' ग. २. "मुखं विकसितस्मितं वशितवक्रिमप्रेक्षितं समुच्छलितविभ्रमा गतिरपास्तसंस्था मतिः । उरो मुकुलितस्तनं जघनमंसबन्धोद्धुरं बतेन्दुवदनातनौ तरुणिमोद्गमो मोदते ॥' मुखं विकसितस्मितमित्यादि । बतेत्याश्चर्ये । इन्दुवदनातनौ चन्द्रमुखीशरीरे तरुणिमोद्गमस्तारुण्यप्रादुर्भावो मोदते । वृद्धिं यातीत्यर्थः । तमेव मोदनप्रकारमाह—मुखमित्यादिना । विकसितस्मितमिति । विकसितं च तत्स्मितं चेति विकसितस्मितम् । विकासित्वं हि कुसुमधर्मः । स च स्मितेऽनुपपन्नः । यस्तु विकसति स सच्छायो भवतीति विकसितशब्दो बाधितविकासमुख्यार्थः सन्सच्छायत्वसादृश्यात्स्मितं लक्षयन्हृद्यत्वसुरभित्वादिप्रयोजनसहत्वं व्यनक्ति । वशितवक्रिमेति । वशित आयत्तीकृतो वक्रिमा येन तद्वशितवक्रिम । अत्र वशीकरणं चेतनधर्मः । स च वक्रिमणि अनुपपन्नः । यो हि यस्य वशो भवति स तस्यायत्तो भवति । वशितशब्दो बाधितमुख्यार्थं आयत्तत्वादिसादृश्याद्वक्रिमाणं लक्षयंस्तदनुसरणत्वादिप्रयोजनं व्यञ्जयति । समुच्छलितविभ्रमा गतिरिति । समुच्छलिता उद्गता विभ्रमा यस्यां सा समुच्छलितविभ्रमा । अत्र समुच्छलनं जलादेर्धर्मः । स च विभ्रमेऽनुपपन्नः । यस्तु समुच्छलति स उत्कल्लोलो भवतीति समुच्छलन-

इति । अगूढः, [1]अतिस्फुटतया सर्वजनसंवेद्यः । यथा—

'श्रीपरिचयाज्जडा अपि भवन्त्यभिज्ञा विदग्धचरितानाम् ।
उपदिशति कामिनीनां यौवनमद एव ललितानि ॥'

अत्र 'उपदिशति' इत्यनेन 'आविष्करोति' इति लक्ष्यते । [2]आविष्कारातिशयश्चाभिधेयवत्स्फुटं प्रतीय[3]ते ।

**[4]धर्मिधर्मगतत्वेन फलस्यैता अपि द्विधा ।**

एता अनन्तरोक्ताः षोडशभेदा[5] लक्षणाः फलस्य धर्मिगतत्वेन धर्मगतत्वेन च प्रत्येकं द्वि[6]धा भूत्वा द्वात्रिंशद्भेदाः ।

दिङ्मा[7]त्रं यथा—

---

सूक्ष्ममतिमात्रवेद्यत्वेन तन्मूलकव्यञ्जनाजन्यबोधविषयो गूढ इति भावः । **उपदिशतीति** । 'श्रीपरिचयाज्जडा अपि भवन्त्यभिज्ञा विदग्धचरितानाम्' इति पूर्वार्धस्य । एतदर्थे दृष्टान्तः 'उपदिशति-' इति । **ललितानि** हेलालीलादीनि । **आविष्करोति** प्रकाशयति । परप्रवर्तकवाक्यरूपस्योपदेशस्य चेतनधर्मतया यौवनमदे वाधाविष्कारे लक्षणा । स्फुटत्वं सर्वजनवेद्यत्वादिति भावः । पुनरपि तस्या

---

शब्दो वाधितसमुच्छलनमुख्यार्थ उत्कल्लोलादिसादृश्याद्विभ्रमं लक्षयन्प्रौढप्रौढतरं सर्वजनाभिलषणीयत्वादिति प्रयोजनं प्रत्याययति । अपास्तसंस्थेति । अपास्ता मुक्ता संस्था मर्यादा यया सा अपास्तसंस्था । अत्रापासनं चेतनधर्मः । स चामूर्तायां मतावनुपपन्नः । यो हि येनापास्यते स तस्य न भवतीति वाधितस्वार्थोऽपास्तशब्दः स्वपरिवृत्तिसादृश्यात्संस्थानं लक्षयन्पुनरस्वीकारादिकं प्रयोजनं व्यञ्जयति । मुकुलितस्तनमिति । मुकुलितौ किंचिदुद्भिन्नौ स्तनौ यस्य तन्मुकुलितस्तनम् । अत्र मुकुलितत्वं कुसुमधर्मः स च स्तनयोरनुपपन्नः । यो हि मुकुलितः स च किंचिदुद्भिन्नो भवतीति मुकुलितशब्दो वाधितकोरकरूपमुख्यार्थोऽभिनवोद्भेदसादृश्यात्स्तनयुग्मं लक्षयन्स्पृहणीयत्वादि प्रयोजनसहस्रं व्यनक्तीति । अंसवन्धोद्धुरमिति । अंसवन्धेन उद्धुरमंसवन्धोद्धुरम् । धुराया उद्धुरीकरणमुद्धुरत्वम् । तच्च चेतनधर्मो जघनेऽनुपपन्नः । यो ह्युद्धुरो भवति स किंचिदुच्चैर्भवतीत्युद्धुरशब्दो वाधितधुरामुख्यार्थः समुन्नतत्वादिसादृश्यादंसवन्धवज्जघनं लक्षयन्मनोहरत्वादिप्रयोजनं प्रत्याययति । इन्दुवदनेति । इन्दुवद्वदनं यस्याः सेन्दुवदना । अत्र वदने इन्दुत्वमनुपपन्नम् । यो हीन्दुसदृशो भवति स पारिमाण्डल्यादियुक्तो भवतीतीन्दुशब्दो वाधितस्वार्थः पारिमाण्डल्यादिसादृश्याद्वदनं लक्षयञ्जगज्जीवनतापोपशान्त्यादि प्रयोजनं व्यञ्जयति । उद्गम इति । उद्गमो ह्यङ्कुरादेर्धर्मः । स च तरुणिमनि अनुपपन्नः । यो ह्युद्गच्छति स च किंचिदुद्भिन्नो भवतीत्युद्गमशब्दो वाधितोदयमुख्यार्थः सन्नभिन्नोद्भेदसादृश्यात्तारुण्यं लक्षयन्सौन्दर्यादिप्रयोजनं व्यनक्ति । मोदत इति । मोदनं चेतनधर्मः । स चोद्गमेऽनुपपन्नः । यो हि मोदते स सप्रसरो भवतीति मोदतेशब्दः ( मोदतिपदं ) बाधितहर्षमुख्यार्थः सन्नुद्गमं लक्षयन्स्पृहणीयत्वादिप्रयोजनं व्यनक्ति । कुशाग्रबुद्धेरेवैतादृशव्यङ्ग्यस्फुरणाद्गूढत्वमित्यर्थः ।" इत्यधिकं ग-पुस्तके. ३. '—क्रियाया विशेपणस्य' इति पुस्तकान्तरे पाठः.

१. 'अगूढस्त्वतिस्पष्टतया' ग. २. 'आविष्कारातिशयश्च प्रयोजनम्' ग. ३. 'अत्रोपदेशशब्देन शिक्षादानप्रकटनाच्छिक्षारूपव्यङ्ग्यस्य वाच्यमानत्वेनाचमत्काररूपत्वादगूढतेत्यर्थः ।' ग. ४. 'किं च' इत्यधिकं ग. पुस्तके. ५. 'भेदाः' इति ख-पुस्तके नास्ति; 'षोडशभेदा अपि' ग. ६. 'द्वैविध्याद्' ग. ७. 'क्रमेणोदाहरणानि' क., 'क्रमेणोदाहरति' ख-घ.

'स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घना
वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः ।
कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे
वैदेही तु कथं भविष्यति हहा हा देवि धीरा भव ॥'

---

द्वैविध्यमाह—**धर्मीति**। धर्मी लक्ष्यः। तद्वृत्तिपदार्थौ धर्मः। **स्निग्धश्यामलेति**। विरहिणः श्रीरामस्योक्तिरियम्। **लिप्तेति**। व्याप्तेत्यर्थः। वेल्लद्बलाकाः संचरद्बकविशेषाः। पयोदसुहृदां मयूराणामानन्दजनिका आनन्दजनिता वा केका ध्वनयः।

---

1. **स्निग्धश्यामलेति**। व्याख्यातोऽप्ययं श्लोकः चमत्कारातिशयलाभाय पुनर्व्याख्यायते—अत्र रामशब्दसंगतिरुक्ता। तथाहि—स्निग्धया सलिलसंबन्धसरसया श्यामलया द्रविडवनितोचितासितवर्णया कान्त्या कालवर्णेन लिप्तमाच्छुरितं वियन्नभो यैः। वेल्लन्त्यो व्याजृम्भमाणास्तथा चलन्त्यः परमागवशात्प्रहर्षवशाच्च बलाकाः सितपक्षिविशेषा येषु तथाभूता घनाः। एवं नभस्तावद्दुरालोकं वर्तते। दिशोऽपि दुःसहाः। यतः सूक्ष्मजलकणोद्गारिणो वाता इति मन्दमन्दत्वमेषामनियतदिग्भागगमनं च बहुवचनेन सूचितम्। तर्हि गुहासु क्वचित्प्रविश्यास्यतामित्यत आह—पयोदो मेघः सुहृत् केकाजनकाह्लादजनकतया मित्रं येषां केकापदसांनिध्यान्मयूराणामानन्देन हर्षेण केकाः शब्दविशेषाः कला अव्यक्तमधुराः। ताश्च दुःसहं पयोदवृत्तान्तं स्मारयन्ति। स्वयं च दुःसहा इति भावः। एवमुद्दीपनविभावोद्बोधितो विप्रलम्भः। परस्पराधिष्ठानत्वाद्रतेः। विभावानां साधारण्यमभिमन्यते एवंप्रभृति। प्रियतमां हृदये निधाय स्ववृत्तमाह—काममिति। दृढमिति सातिशयम्। कठोरहृदय इति। रामशब्दार्थध्वनिविशेषावकाशदानाय कठोरहृदयपदम्। यथा 'तद्गेहं' इत्युक्तेऽपि 'नतभित्ति' इति। अन्यथा रामपदं दशरथकुलोद्भवत्वकौशल्यास्नेहपात्रत्वबाल्यचरितजानकीलाभादिधर्मान्तरपरिणतमर्थं कथं न ध्वनयेदिति। स एवाहं रामः सकलदुःखपात्रत्वेन प्रसिद्धोऽस्मि। अत एव सर्वंमुक्तोद्दीपकातिशयजनितं क्लेशं सहे। उत्तमपुरुषैकवचनमेतत्। भविष्यतीति क्रियासामान्यम्। तेन किं करिष्यतीति। अथ च भवनमेवास्या असंभाव्यमित्युक्तप्रकारेण हृदयनिहितां प्रियां स्मरणशब्दविकल्पपरम्परया प्रत्यक्षीभावितां हृदयस्फोटनोन्मुखीं ससंभ्रममाह—हहाहेति। निपातसमुदायः खेदातिशये। अत्र द्रवद्रव्यसंयोगविशेषस्य लेपनस्यामूर्ते वियति कान्त्या बाधात् अचेतने मेघे चित्तवृत्तिविशेषस्य सौहार्दस्य बाधाच्चोक्तार्थलक्षणा। लेपनसौहार्दयोः सर्वथान्वयासंभवादत्यन्ततिरस्कृतत्वम्, लक्ष्यातिशयौ व्यङ्ग्यौ। तयोस्त्रिरूपसंकराभावात्संसृष्टिः। रामपदेन च सर्वसहत्वानुपयुक्तार्थतया उक्तार्थसंक्रमितवाच्येन पीडासहस्रसंपातेऽपि प्राणधारणादात्मनि न्यक्कारो व्यज्यते। तत्र च घनकेकाचिरस्थायित्वयोर्लिप्तसुहृत्पदव्यङ्ग्ययोरनुग्राहकत्वं व्यक्तम्। एवमेकेन रामपदेन दुःखभाजनत्वलक्षणया राज्यत्यागवनवासजटावल्कलधारणस्त्रीवियोगादिपात्रतया तदतिशयव्यक्तिः। तद्द्वारा च सीतां विनापि जीविष्यामीति शोकावेगनिर्वेदाद्यभिव्यक्तिमुखेन विप्रलम्भपरिपोष इति लक्षणामूलातिशयध्वनिरसध्वन्योः संकर इति सहृदयाः॥

अत्रात्यन्तदुःखसहिष्णुरूपे रामे धर्मिणि लक्ष्ये तस्यैवातिशयः फलम् । 'गङ्गायां घोषः[3]' [4]इत्यत्र [5]तटे शीतत्वपावनत्वरूपधर्मस्यातिशयः फलम् ।

**तदेवं [6]लक्षणाभेदाश्चत्वारिंशन्मता बुधैः ॥ ११ ॥**

रूढावष्टौ फले द्वात्रिंशदिति चत्वारिंशल्लक्षणाभेदाः ।

---

कल मधुराः । हहाशब्दो हाशब्दश्च कष्टवचनः । कष्टातिशयद्योतकत्वान्न पौनरुक्त्यम् । **अत्यन्तेति[7]** । व्यङ्ग्यार्थवैशिष्ट्याभिप्रायेणोक्तं दुःखसहिष्णुरूप इत्यवगन्तव्यम् । **तस्यैव** दुःखसहिष्णोरेव । नन्वत्यन्तदुःखसहिष्णुरित्यत्रात्यन्तत्वं यदि क्रियाविशेषणं तदा धर्मगतत्वमेव । यदि पुरुषविशेषणं तथापि महापण्डित इत्यादौ महत्त्वादिरिव धर्मिणि तात्पर्याभावाद् दुःखासहनाभाव एव पर्यवस्यतीति चेत्, 'उपदिशति' इत्याद्युदाहरणं बोध्यम् । कठोरहृदयत्वस्य सर्वं सहत्वस्य चोपपत्तये राम इत्युक्तम् । अन्यथा रामस्य वक्तृत्वादस्मीत्यनेन तल्लाभात्पौनरुक्त्यं स्यात् । रामत्वेनोपस्थितस्य तदुभयमुपपन्नम् । अतो लक्षणया दुःखसहिष्णुत्वेन मुख्यार्थ एवोपस्थाप्यते । एवं च कठोरहृदयत्वाद्दुःखसहिष्णुत्वं ततः सर्वं सहत्वमुपपन्नम् ॥ पुनरपि

---

१. 'स्निग्धश्यामलेत्यादि' इत्यधिकं ग-पुस्तके. २. 'प्रयोजनम्' ग. ३. 'घोषः' इति ख-पुस्तके नास्ति; 'धर्मगतत्वे गङ्गायां घोष इत्यादि' ग. ४. 'इति' नास्ति क-ख-पुस्तकयोः. ५. तटादिषु लक्ष्येषु शीतत्वपावनत्वादि' घ; 'शीतत्वपावनत्वाद्यतिशयस्य धर्मनिष्ठत्वात्' ग. ६. 'लक्षणा—' इत्यादिकारिकार्धं ग-पुस्तके त्रुटितमिति प्रतिभाति. ७. 'बहुतरदुःखसत्त्वेऽप्यनुद्विग्नचित्तत्वमत्यन्तदुःखसहिष्णुत्वम् । तस्यैव रामस्यैवातिशय उत्कर्षो धीरत्वादिरूपः । अत्र वक्तृत्वादेव रामस्य लाभे पुनरुक्तमिति लक्षणाबीजमत्रावधेयम् । केचित्तु—'तस्य दुःखसहिष्णो रामस्यातिशयो विप्रलम्भरूपः । न चात्र दुःखसहिष्णुत्वस्याप्यतिशयः प्रतीयत एव, तत्कथमिदं धर्मिगतस्योदाहरणमिति वाच्यम्, विवक्षितविवेकेन तस्यापि धर्मगतत्वादेव । तथाहि—दुःखसहिष्णुत्वं दुःखद्वेषाभावः । तस्यातिशयान्तराभावात्सामान्याभावत्वमेवातिशयः, स च नातिरिक्तः । किंत्वभावरूप एव तस्य रामरूपधर्मिगतत्वादेव' इत्याहुः । तन्न । अस्यार्थव्यञ्जनागम्यविप्रलम्भस्य लक्षणामूलव्यञ्जनागम्यत्वाभावाल्लक्षणाप्रयोजनाभावाद् दुःखसहिष्णुत्वातिशयस्य धर्मगतत्वेऽपि विप्रलम्भस्य धर्मिगतत्वेनैव धर्मगतोदाहरणत्वाक्षतेः । 'अत्यन्तदुःखसहिष्णुरूपे' इति वदता ग्रन्थकृता 'दुःखसहिष्णुत्वातिशयपर्यवसितस्यात्यन्तदुःखसहिष्णुत्वस्य लक्ष्यतावच्छेदकत्वाङ्गीकारात्प्रयोजनत्वासंभवान्निरुक्तदुःखसहिष्णुत्वस्य प्राणिमात्रेऽसंभवाच्च कस्यापि कुत्रापि दुःखे सत्त्वात् । न च रामस्येश्वरत्वेन द्वेषसामान्याभावसत्त्वेन दुःखद्वेषसामान्याभावः सिद्ध्यतीति वाच्यम् । ईश्वरस्यापि रामादिशरीरे जन्यसुखादिवत्परदुःखानुभवजन्यदुःखद्वेषस्याप्यङ्गीकारात्तस्यैव हहाशब्देन हाशब्देन च व्यञ्जितत्वात्, अन्यथा तयोरनर्थकत्वापत्तेः । न च दुःखद्वेषाभावो दुःखसहिष्णुत्वम्, तस्य सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वमतिशयः, तस्य लक्ष्यतावच्छेदककुक्षिनिक्षिप्तस्यापि प्रयोजनत्वाङ्गीकारे को दोष इति वाच्यम् । 'प्रयोजनेन सहितं लक्षणीयं न युज्यते' इति वदद्भिरालंकारिकैर्लक्षणाजन्यबोधविषयस्य प्रयोजनत्वाङ्गीकारात् । यद्यप्यत्र लिप्तपदस्य व्याप्तेर्लक्षणा व्याप्तेरतिशयः फलमिति धर्मगतफललक्षणाया उदाहरणमत्रैव संभवति तथापि गङ्गायामिति प्रसिद्धोदाहरणमुपन्यस्तम् ।' इति पाठभेदः कुत्रचिद्दृश्यते.

किं च—

**पदवाक्यगतत्वेन प्रत्येकं ता अपि द्विधा ।**

ता[1] अनन्तरोक्ताश्चत्वारिंशद्भेदाः[2] । तत्र पदगतत्वे यथा[3]—'गङ्गायां घोषः' । वाक्यगतत्वे यथा[4]—'उपकृतं बहु तत्र' इति । [1]एवमशीतिप्रकारा लक्षणा[5] ॥

---

लक्षणाया द्वैविध्यमाह—**पदेति** । [6]नन्वभिधावल्लक्षणायाः [7]पदधर्मत्वेन कथं वाक्यगतत्वमिति चेद्, यत्र वाक्ये वाक्यसमुदाये वा बहुपदेषु लक्षणा तत्रैव तस्या

---

1. एवमिति । झटित्युपस्थितये लक्षणाया अशीतिप्रकाराः संख्यायन्ते—(१) रूढौ सारोपा उपादानलक्षणा—'अश्वः श्वेतो धावति' । (२) प्रयोजने सारोपा उपादानलक्षणा—'एते कुन्ताः प्रविशन्ति' । (३) रूढौ सारोपा लक्षणलक्षणा—'कलिङ्गः पुरुषो युध्यते' । (४) प्रयोजने सारोपा लक्षणलक्षणा—'आयुर्घृतम्' । (५) रूढौ साध्यवसाना उपादानलक्षणा—'श्वेतो धावति' । (६) प्रयोजने साध्यवसाना उपादानलक्षणा—'कुन्ताः प्रविशन्ति' । (७) रूढौ साध्यवसाना लक्षणलक्षणा—'कलिङ्गः साहसिकः' । (८) प्रयोजने साध्यवसाना लक्षणलक्षणा—'गङ्गायां घोषः' । (९) रूढौ गौणी सारोपा उपादानलक्षणा—'एतानि तैलानि हेमन्ते सुखानि' । (१०) प्रयोजने गौणी सारोपा उपादानलक्षणा—'एते राजकुमारा गच्छन्ति' । (११) रूढौ गौणी सारोपा लक्षणलक्षणा—'राजा गौडेन्द्रं कण्टकं शोधयति' । (१२) प्रयोजने गौणी सारोपा लक्षणलक्षणा—'गौर्वाहीकः' । (१३) रूढौ गौणी साध्यवसाना उपादानलक्षणा—'तैलानि हेमन्ते सुखानि' । (१४) प्रयोजने गौणी साध्यवसाना उपादानलक्षणा—'राजकुमारा गच्छन्ति' । (१५) रूढौ गौणी साध्यवसाना लक्षणलक्षणा—'राजा कण्टकं शोधयति' । (१६) प्रयोजने गौणी साध्यवसाना लक्षणलक्षणा—'गौर्जल्पति' । इहाष्टविधा प्रयोजनलक्षणा व्यङ्ग्यस्य गूढागूढत्वेन षोडशविधा भवति । सा च धर्मिधर्मगतभेदेन प्रत्येकं द्विधा भूत्वा द्वात्रिंशद्विधा जायते । एषा चाष्टभी रूढिलक्षणाभिः सह चत्वारिंशत्प्रकारा भवति । ततः पदवाक्यगतत्वेनाशीतिप्रकारेति । काव्यप्रकाशादिषु तु षड्विधैव लक्षणा सा चैवं विभज्यते—पूर्वं शुद्धा, गौणीति द्विविधा लक्षणा । तत्र शुद्धा—उपादानलक्षणा लक्षणलक्षणा चेति द्वेधा । उपादानलक्षणालक्षणलक्षणे अपि, सारोपा साध्यवसाना चेति प्रत्येकं द्वेधा । एवं चतुर्धा शुद्धा । गौणी तु सारोपा साध्यवसाना चेति द्वेधैव । अत्रेदमपि स्मरणीयम्—'आरोप्यारोपविषयौ सारोपायां स्फुटावुभौ । पुनः साध्यवसानायामारोप्यान्तर्गतः परः ॥' इति । सारोपा सादृश्यहेतुका । इयमुपमानोपमेययोः

---

1. 'ताः—' इत्यादि '—भेदाः' इत्यन्तं ग-पुस्तके नास्ति. 2. 'चत्वारिंशद्भेदा' इति ख—घ- पुस्तकयोर्नास्ति. 3. 'यथा' ग-पुस्तके नास्ति. 4. ग-पुस्तके 'यथा' इति नास्ति, तदग्रे "त्वामस्मि वच्मि विदुषां—" इत्यादि इत्युदाहरणं वर्तते. 5. 'इति सर्वमवदातम्' इति ग-पुस्तकेऽधिकः पाठः. 6. 'ननु यद्यपि' इति पुस्तकान्तरे. 7. 'अपि पदधर्मत्वमेवेति कथं वाक्यगतत्वं तस्याः' इति पुस्तकान्तरे.

अथ व्यञ्जना ।

**विरतास्वभिधाद्यासु ययार्थो बोध्यते परः ॥ १२ ॥**
**सा वृत्तिर्व्यञ्जना नाम शब्दस्यार्थादिकस्य च ।**

'शब्दबुद्धिकर्मणां विरम्य व्यापाराभावः' इति नयेनाभिधालक्षणा-

---

वाक्यगतत्वम् उपचारात् ॥ क्रमप्राप्तां व्यञ्जनां निरूपयितुमाह—**अथेति** । वृत्ति-र्व्यापारः । सा च वक्तृतात्पर्यविशेषरूपा । वक्तृतात्पर्यं च 'एतत्पदं वाक्यं वा इम-मर्थं बोधयतु' इति वक्तुरिच्छाविशेषः । शाब्द्या व्यञ्जनायाः पदधर्मत्वम् । आर्थ्यास्तु

---

स्फुटरूपतया रूपकालंकारस्य बीजम् । यथा—इन्दुर्मुखम् । साध्यवसाना उपमानतिरोहितो-पमेया । इयमतिशयोक्त्यलंकारस्य बीजम् । यथा—'कमलमनम्भसि कमले कुवलय-मेतानि कनकलतिकायाम् । सा च सुकुमारसुभगेत्युत्पातपरम्परा केयम् ॥' अथात्र केचन लक्षणार्हाः शब्दा उपमानोपमेययोरारोप्या द्रष्टव्याः । तत्रोपमाने यथा—"इन्दुर्वक्त्रस्य वीप्सासदन, मुपकथा पादयोः पङ्कजाली, पर्यायोऽलिः कबर्यां, ननु तनुमहसां कर्णिका कर्णिकारम् । आभासः कुम्भिकुम्भद्वयमुरसिजयोः, कामकोदण्डदण्डः पाखण्डो भ्रूल-ताया, रतिरभिनयनं, पश्य रूपस्य तस्याः ॥" उपमेये यथा—"व्यापेधो धरणीधरेशितु-रनध्यायः सुधाया विधोरन्तर्धिर्धनदाचलस्य निधनं, दुग्धोदसिन्धोः पिधा । प्रत्याख्या-नममानवद्विपमहादेहद्युते, निह्नवो जाह्नव्यास्तव भूभुजङ्ग यशसां भारो दिशां हारति ॥" अथात्र लक्षणाप्रसङ्गे रूढौ—'शब्दस्य वाचक' इति 'लाक्षणिक' इति च संज्ञाद्वयम् । तथा तस्य अभिधेति लक्षणेति च व्यापारद्वयम् । व्यङ्ग्यप्रयोजनाभावान्न तस्य व्यञ्जकत्वं व्यञ्जनाव्यापारो वा । प्रयोजने तु शब्दस्य वाचको लाक्षणिको व्यञ्जकश्चेति संज्ञात्रयम् । तथैवाभिधादि व्यापारत्रयम् । इत्यादि यथायथमनुसंधेयम् ॥

1. व्यञ्जनेति । 'मुख्यार्थबाधग्रहनिरपेक्षबोधजनको मुख्यार्थसंबद्धासंबद्धसाधारणः प्रसिद्धाप्रसिद्धार्थविषयको वक्त्रादिवैशिष्ट्यज्ञानप्रतिभाद्युद्बुद्धः संस्कारविशेषो व्यञ्जनेति मञ्जूषाकाराः । एतद्वृत्तिप्रतिपाद्योऽर्थो व्यङ्ग्यः । स च वाच्यार्थ इव न नियतः, किंतु वक्तृ-प्रकरणादिवशादनियतः । तथाहि—'गतोऽस्तमर्कः' इति वाक्ये राज्ञः सेनापतीन्प्रति शत्रूणां हठेनामर्दावसर इति, दूतीनामभिसारिकाः प्रति अभिसरणमुपक्रम्यतामिति, सख्या वासकसज्जां प्रति प्राप्तप्रायस्ते प्रेयानिति, कर्मकरस्य सहकर्म कुर्वतः प्रति कर्मकर-णान्निवर्तामहे इति, भृत्यस्य धार्मिकं प्रति सांध्यो विधिरुपक्रम्यतामिति, आप्तस्य कार्यव-शेन बहिर्गच्छतः प्रति दूरं मा गा इति, गृहिणो गोपालकं प्रति धेनवो गृहं प्रवेश्यन्ता-मिति, दिवसेऽतिसंतप्तस्य बन्धून्प्रति संतापोऽधुना न भवतीति, आपणिकानां भृत्यान्प्रति विक्रेयवस्तूनि संह्रियन्तामिति, नायिकागमनप्रस्तावे प्रोषितभर्तृकायास्तत्कथकं प्रति नागतो-ऽद्य प्रेयानिति, एकस्यैव वा वक्तुर्बहून्प्रति तत्प्रकरणवशादेवमादिरनवधिर्व्यङ्ग्योऽर्थः प्रका-शते । वाच्यस्तु सर्वान्प्रत्यविशिष्ट एव ॥

---

१. 'वृत्तिः—' इत्यारभ्य—'स्वार्थं बोधयति' इत्यन्तः पाठः पुस्तकान्तरे नास्ति।

तात्पर्याख्यासु तिसृषु वृत्तिषु स्वं स्वमर्थं बोधयित्वोपक्षीणासु यया-न्योऽर्थो बोध्यते सा शब्दस्यार्थस्य प्रकृतिप्रत्ययादेश्च शक्तिर्व्यञ्जनध्वननगमनप्रत्यायनादिव्यपदेशविषया व्यञ्जना नाम ।

तत्र—

**अभिधालक्षणामूला शब्दस्य व्यञ्जना द्विधा ॥ १३ ॥**

अभिधामूलमाह—

**अनेकार्थस्य शब्दस्य संयोगाद्यैर्नियन्त्रिते ।**
**एकत्रार्थेऽन्यधीहेतुर्व्यञ्जना साभिधाश्रया ॥ १४ ॥**

आदिशब्दाद्विप्रयोगादयः ।

---

वाक्यधर्मत्वम् । एतत्पदं वाक्यं वैतदर्थबोधाभिप्रायकमिति ज्ञानविषय एव सा स्वार्थं बोधयति । तिसृषु वृत्तिष्वन्यो मुख्यलक्ष्यतात्पर्यार्थभिन्नः । अर्थादिकस्येत्यादिपदं विवृणोति—**प्रकृतीति** । आदिपदादुपसर्गादिग्रहणम् ॥ **नियन्त्रिते** 'नियम्य प्रतिपादिते । अन्यस्यार्थान्तरस्य धीहेतुर्बोधोपायः । यत्र तु प्रकरणादिनियमो नास्ति तत्र यावदर्थबोधे वक्तृतात्पर्यं तावन्त एवार्था वाच्याः । यथा—'व्यर्थां द्वयेषामपि मेदिनीभृताम्' इति । अत्र राजपर्वतयोरन्यतरस्य व्यङ्ग्यत्वे 'द्वयेषां' इत्यनन्वितं स्यात् । **अभिधाश्रया** अभिधामूला । प्राकरणिकमर्थं बोधयित्वाभिधायां विरतायामप्राकरणिकबोधे व्यञ्जना अभिधान्तरमपेक्षत इत्यभिधामूलत्वमस्याः । नन्वभिधान्तरस्य संयोगादिना प्रतिरुद्धत्वेन कथं व्यञ्जनाजन्यबोधे सहकारित्वमिति चेत् । न । अभिधायाः स्वातन्त्र्येणार्थान्तरोपस्थापने संयोगादेः प्रतिबन्धकत्वकल्पनात् । नन्वभिधयैवार्थान्तरमुपस्थाप्यतां किं व्यञ्जनया संयोगादेः प्रतिबन्धकत्वस्य च कल्पनेनेति चेत् । न । अप्राकरणिकद्वितीयार्थबोधान्निष्कम्पप्रवृत्त्यभावेन तस्यास्वादविशेषजनकत्वेन च तत्र वैजात्यस्यावश्यं वाच्यत्वेन तस्य च कारणविशेषाधीनसिद्धिकत्वेन व्यञ्जनासिद्धेरभिधया द्वितीयार्थस्य प्रथममुपस्थाने संयोगादेः प्रतिबन्धकत्वकल्पनस्या-

---

1. प्रकृतीति । प्रकृतिर्नाम अर्थावबोधहेतुः प्रत्ययविधानावधिभूतः शब्दविशेषः । सर्वेषामेव प्रत्ययानां प्रकृतिं निमित्तीकृत्यैवोत्पत्तिविधानात् । भाष्येऽप्युक्तम्—'तावेव सुप्तिङौ यौ ततः परौ सैव प्रकृतिराद्या' इति । ( ततः ) विधानावधेः ( यौ परौ तावेव सुप्तिङौ ) या च तयोः ( आद्या ) विधानावधिभूता ( सैव प्रकृतिः ) इति तदर्थः । प्रत्ययस्तु प्रकृतिमवधीकृत्य विधीयमानः स्वार्थबोधकः शब्दविशेषः । अत एवाह भगवान्भर्तृहरिः—'यः शब्दः स्वेतरस्यार्थे स्वार्थस्यान्वयबोधने । यदपेक्षस्तयोः पूर्वा प्रकृतिः प्रत्ययः परः ॥' इति ॥

---

१. 'वृत्ति' घ. २. 'तत्र' घ-पुस्तके नास्ति. ३. 'तत्र' इत्यधिकं घ-पुस्तके. ४. 'आदिशब्दाद्विप्रयोगादयः' इति क-ख-ग-पुस्तकेषु नास्ति.

उक्तं हि—

'संयोगो विप्रयोगश्च साहचर्यं विरोधिता ।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य संनिधिः ॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥' इति ।

---

वश्यकत्वाच्च । **विप्रयोगस्त्यागः** । **साहचर्यं** सहकारित्वेन कार्यकारित्वम् । **विरोधिता** वैरम् । एतच्चतुष्टयं समभिव्याहृतपदार्थान्तरेण सहेति बोध्यम् । **अर्थः** प्रयोजनम् । **लिङ्गं** चिह्नम् । संभवद्विशेषणमिति यावत् । **अन्यस्य** तुल्यविभक्तिकस्य । **सामर्थ्यं** निर्दिष्टजननशक्तिः । **औचिती** प्रकृतोपयोगित्वम् । तच्च यदुपस्थितौ श्रोतुर्जिज्ञासा निवर्तते तत्त्वम् । केचित्तु—'अर्थद्वयेऽन्वयसंभवेऽप्येकार्थ एव तात्पर्यमौचिती' इत्याहुः । तन्न । तात्पर्यविशेषस्य प्रतिबन्धकत्वकल्पने सर्वत्रैव तत्संभवे संयोगादेः प्रतिबन्धकत्वकल्पनानौचित्यात्, एतद्ग्राहकस्य प्रकृतोपयोगित्वस्य प्रथमोपस्थितत्वेन तस्यैव प्रतिबन्धकत्वकल्पनौचित्याच्च । ननु भवन्मतेऽपि औचित्या एव सर्वत्र नियामकत्वमस्तु किमन्येषां तत्कल्पनेनेति चेत् । न । नियन्त्रकान्तरासंनिधान एव तस्या नियन्त्रकत्वकल्पनात् । **देशः** समभिव्याहृतप्रदेशः । **कालः** समभिव्याहृतदिनरात्र्यादिः । **व्यक्तिः** शब्दस्य पुंस्त्वादि लिङ्गम् । **स्वर** उदात्तादिः । अनवच्छेदे अनेकत्वेन प्रतिपत्त्यनियमे विशेषस्यैकतरस्य स्मृतौ पदार्थोपस्थितिरूपायां हेतव इत्यर्थः । एतच्च मीमांसकनये, नैयायिकनये तु—सर्वेषामेव पदार्थानामुपस्थि-

---

1. उक्तमिति । 'वाक्यपदीये हरिणा' इति शेषः । संयोगो नाम नानार्थशब्दशक्यान्तरवृत्तितया अप्रसिद्धत्वे सति तच्छक्यवृत्तितया प्रसिद्धः संबन्धः । विप्रयोगो विश्लेषः । एकस्मिन्कार्ये परस्परापेक्षित्वं साहचर्यम् । विरोधिता प्रसिद्धं वैरम्, सहानवस्थानं च । अर्थः प्रयोजनम्, चतुर्थ्याद्यभिधेयम् । प्रकरणं वक्तृश्रोतृबुद्धिस्थता । लिङ्गं नानार्थपदशक्यान्तरावृत्तिरेकशक्यगतः साक्षाच्छब्दवेद्यो धर्मः । शब्दस्यान्यस्य संनिधिर्नानार्थपदैकार्थमात्रं संसर्ग्यर्थान्तरवाचकपदसमभिहारः । सामर्थ्यं कारणता । औचिती योग्यता । देशो नगरादिः । कालो दिवसादिः । व्यक्तिः पुंनपुंसकस्त्रीलिङ्गानि । स्वर उदात्तादिः । एते संयोगादयः शब्दार्थस्यानवच्छेदे तात्पर्यसंदेहे तदपाकरणद्वारेण विशेषस्मृतिहेतवः । निर्णयहेतव इत्यर्थः । उपस्थितानामनेकेषामेकतरमात्रार्थतात्पर्यनिर्णयद्वारा तन्मात्रार्थविषयकान्वयबोधजनका इति भावः । 'अत्र सामर्थ्यमेवैकं मुख्यं निर्णायकं संयोगादयस्तद्व्यञ्जकप्रपञ्चः । तैः सामर्थ्यस्यैवाभिव्यक्तेः' इत्यपरे । 'सशङ्ख—' इत्यत्र शङ्खचक्रयोः संयोगो भगवन्मात्रनिष्ठतया प्रसिद्धो भगवति हरिशब्दस्याभिधाया नियमेनावस्थापकः । 'अशङ्ख—'इत्यत्र तयोरेव विश्लेषः । 'भीमार्जुनौ' इत्यत्रार्जुने भीमसाहचर्यमर्जुनशब्दस्य पार्थेऽभिधानियामकम् । 'कर्णार्जुनौ' इत्यत्र वध्यघातकभावादर्जुनशब्दस्य पार्थे । सहानवस्थानलक्षणविरोधे तु 'छायातपौ' इत्युदाहार्यम् । अर्थादिष्वत्यन्तानामुदाहरणानि विवृतौ सम्य-

'सशङ्खचक्रो हरिः' इति[1] शङ्ख[2]चक्रयोगेन हरिशब्दो विष्णुमेवाभिधत्ते । 'अशङ्खचक्रो हरिः' इति तद्वियोगेन तमेव । 'भीमार्जुनौ' इति अर्जुनः पार्थः । 'कर्णार्जुनौ' इति कर्णः सूतपुत्रः । 'स्थाणुं वन्दे' इति स्थाणुः शिवः । 'सर्वं जानाति देवः' इति देवो भवान् । 'कुपितो मकरध्वजः' इति मकरध्वजः कामः । 'देवः पुरारिः[3]' इति पुरारिः

---

तिनियन्त्रणवशादेकस्यैवार्थस्य शाब्दोऽनुभव इति । एकत्रैव संयोगादीनां द्वित्राणां संभवे यथास्फूर्ति नियन्त्रकत्वं बोध्यम् । क्रमेण संयोगादीनां नियन्त्रणमुदाहरति— **सशङ्खेति** । तद्वियोगेन शङ्खचक्रविरहेण तमेव विष्णुमेवाभिधत्त इति पूर्वेणान्वयः । शङ्खचक्रवति विष्णौ तद्विरहः कालविशेषे संभवति । पार्थो धनंजयः । **स्थाणुमिति** । अत्र 'भवच्छिदे' इति चरमांशो बोध्यः । अन्यथा भवच्छेदरूपस्य प्रयोजनस्यानुपस्थितौ तस्य नियामकत्वं न स्यात् । 'भवान्' इत्यनेन प्रक्रान्तराजरूपार्थ एव दर्शितः, न तु युष्मत्त्वेन । 'तत्र शक्तिः' इत्यपरे । **कुपित इति** । मकरध्वजपदं कर्मधारयबहुव्रीहिभ्यामनेकार्थकम् । कोपस्य मकराकारध्वजेऽसंभवात्कामस्यैव बोधकम् । केचित्तु—"मकरध्वजपदं कामसमुद्रानेकार्थकम् । कोपस्तु कामस्यैव चिह्नम् । समुद्राधिष्ठातुः कोपसंभवेऽपि विरहिविषयः कोपोऽत्र बोध्यः" इत्याहुः । तन्न । 'संप्राप्तं मकरध्वजेन मथनं-' इत्यादिप्रयोगबलान्मकरध्वजपदस्य समुद्रे शक्तिकल्पनेऽपि तदधिष्ठातृदेवताबोधस्तु लक्षणैवेति तत्र कोपसंभवस्याकिंचित्करत्वात्कोपविशेषप्रतिसंधानस्य मकरध्वजपदार्थविशेषप्रतिसंधानाधीनतया तस्य प्रथममनुपस्थितौ नियन्त्रकत्वायोगाच्च । **देवः पुरारिरिति** । "'पुरं देहेऽपि दृश्यते' इति **हारावली**दर्शनात्पुरशब्दस्य देहवाचकत्वम् 'पुरस्यारिः' इति व्युत्पत्त्या पुरारिपदं योगादिवाचकमपीत्यनेकार्थकं तुल्यविभक्तिकस्य देवपदस्य सांनिध्याद्देवपदं शिवमात्रबोधकम्" इत्याहुः । तन्न । 'पुरारिः शिवः' इति ग्रन्थविरोधाद् राजादेर्व्यावर्तकत्वेन सुरमात्रबोधकमित्यस्यैव वक्तुं युक्तत्वाच्च देवपदस्य शिवत्वेन शक्त्यभा-

---

वव्याख्यातानि । स्वरस्य नियामकत्वे तु 'इन्द्रशत्रुर्वर्धस्व' इत्युदाहार्यम् । अत्र इन्द्रः शत्रुः शातयिता हिंसको यस्येति बहुव्रीहौ 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' इत्यनेन पूर्वपदप्रकृतिस्वरे 'अनुदात्तं पदमेकवर्जम्' इत्यनेन शेषनिघाते आद्युदात्तत्वम् । तेन चेन्द्रस्य शातनकर्तृत्वं बोध्यते । इन्द्रस्य शत्रुरिति षष्ठीतत्पुरुषे 'समासस्य' इति सूत्रेणान्तोदात्तत्वम् । तेन चेन्द्रस्य शातनकर्मतयावगमः । इन्द्रशत्रुत्वस्य विधेयत्वान्न संबोधनविभक्तिः । एवं 'स्थूलपृषतीमाग्निवारुणीमनड्वाहीमालभेत' इत्यत्रापि तत्पुरुषबहुव्रीह्यर्थनिर्णय इति महाभाष्यपस्पशादौ स्पष्टम् । आदिना सत्वषत्वनत्वणत्वादिग्रहः । 'सुसिक्तम्' इत्यादौ पूजार्थः सुः कर्मप्रवचनीयः । 'सुषिक्तम्' इत्यत्रोपसर्गोऽन्यार्थः । 'प्रनायके' प्रगतनायकदेशबोधः । 'प्रणायके' प्रणयनक्रियाकर्ता । णत्वात् । इति मञ्जूषादौ स्पष्टम् ॥

---

१. 'इत्यत्र' ख. २. 'शङ्ख-'इत्यादि 'हरिः' इत्यन्तं ग-पुस्तके नास्ति. ३. 'पुराराति:' ग.

शिवः । 'मधुना मत्तः पिकः' इति मधुर्वसन्तः । 'पातु वो दयितामुखम्' इति मुखं सांमुख्यम् । 'विभाति गगने चन्द्रः' इति चन्द्रः शशी । 'निशि चित्रभानुः' इति चित्रभानुर्वह्निः । 'भाति रथाङ्गम्' इति नपुंसकव्यक्त्या रथाङ्गं चक्रम् । स्वरस्तु वेद एव विशेषप्रतीतिकृन्न काव्य इति तस्य विषयो नोदाहृतः ।

इदं च केऽप्यसहमाना आहुः—'स्वरोऽपि काकादिरूपः काव्ये विशेषप्रतीतिकृदेव । उदात्तादिरूपोऽपि मुनेः पाठोक्तदिशा शृङ्गारादिरसविशेषप्रतीतिकृदेव' इति । एतद्विषये उदाहरणमुचितमेव इति । तन्न । तथाहि—स्वराः काकादयः उदात्तादयो वा व्यङ्ग्यरूपमेव विशेषं प्रत्याययन्ति, न खलु प्रकृतोक्तमनेकार्थशब्दस्यैकार्थनियन्त्रणरूपं विशेषम् । किंच । यदि यत्र क्वचिदनेकार्थशब्दानां प्रकरणादिनियमाभावादनियन्त्रितयोरप्यर्थयोरनुरूपस्वरवशेनैकत्र नियमनं वाच्यं, तदा तथाविधस्थले श्लेषानङ्गीकारप्रसङ्गः । न च तथा । अत एवाहुः श्लेषनिरूपणप्रस्तावे—'काव्यमार्गे स्वरो न गण्यते' इति च नयः ।

---

वात्सामान्यशब्दविशेषपरत्वाङ्गीकारेऽपि पौनरुक्त्यापातात् । मधुपदं दैत्यविशेषाद्यनेकार्थकम् । कोकिलमादने वसन्तस्यैव सामर्थ्यम् । **पातु व इति** । मुखपदमाननाद्यनेकार्थकम् । प्रापणे सांमुख्यस्यैवौचितीति । 'पातु वः' इति क्वचित्पाठः । प्रियासुरतप्रातिकूल्यजनितखेदं नायकं प्रति सख्या उक्तिरियम् । प्रियाया मुखं सांमुख्यं सुरतानुकूलत्वं वो युष्मान्पातु । प्रातिकूल्यजनितखेदाद्रक्षत्वित्यर्थः । अत्र सांमुख्यस्यैव प्रकृतोपयोगित्वम्, नत्वाननादेः । चन्द्रपदं कर्पूराद्यनेकार्थकम् । चित्रभानुपदं वह्निसूर्याद्यनेकार्थकम् । **रथाङ्गमिति** । चक्रवाकपरत्वे पुंस्त्वं स्यात् । **वेद इति** । इन्द्रशत्रुरित्यादौ बहुव्रीहितत्पुरुषयोः स्वरभेदो वेद एव विशेषप्रतीतिकृत् । न तु काव्यादावित्यर्थः । **मुनेः पाठोक्तदिशेति** । भरतेन मुनिना शृङ्गारादौ स्वरविशेष उक्तस्तदनुसारेणेत्यर्थः । यथा—'हास्यशृङ्गारयोः स्वरितोदात्तम्, वीररौद्राद्भुतेषूदात्तस्वरितम्, करुणबीभत्सभयानकेष्वनुदात्तस्वरितमुत्पादयेत्' इति । उच्च उदात्तः । नीचोऽनुदात्तः । समाहृतः स्वरितः । स च मध्यम एव । आदौ स्वरितः पश्चादुदात्तः स्वरितोदात्तः । एवमन्यत्रापि । **न च तथेति** । स्वरभेदसत्त्वेऽपि महाकविभिः

---

1. काव्यप्रकाशकाराः ।

---

१. 'त्वां' क. २. 'भाति' क. ३. 'मित्रो भातीति सूर्यः' ग. ४. 'इत्थं' क. ५. 'इति—' इत्यादिफक्किका ग-पुस्तके नास्ति. ६. विषये नोदाहृतम्' ख. ७. 'इह' क. ८. 'पाठगुणोक्तिदिशा' क. ९. 'एकार्थनियन्त्रण—' क-ख. १०. सांप्रतमयमेव पाठः सर्वत्रोपलभ्यते. ११. 'प्रियायाः' इति पुस्तकान्तरे. १२. 'नायकं' इति नास्ति कुत्रचित्.

इत्यलमुपजीव्यानां [1]मान्यानां व्याख्यानेषु कटाक्षनिक्षेपेण । आदिशब्दात् 'एतावन्मात्रस्तनी' इत्यादौ हस्तादिचेष्टादिभिः स्तनादीनां कमलकोरकाद्याकारत्वम् ।

एवमेकस्मिन्नर्थेऽभिधया नियन्त्रिते या शब्दार्थस्यान्यार्थबुद्धिहेतुः शक्तिः साभिधामूला व्यञ्जना ।

यथा [2]मम तातपादानां महापात्रचतुर्दशभाषाविलासिनीभुजंगमहाकवीश्वरश्रीचन्द्रशेखरसांधिविग्रहिकाणाम्—

'दुर्गालङ्घितविग्रहो मनसिजं संमीलयंस्तेजसा
प्रोद्यद्राजकलो गृहीतगरिमा विष्वग्वृतो भोगिभिः ।

---

श्लेषाङ्गीकारात् । श्लेषानङ्गीकारो न कर्तव्य इत्यर्थः ॥ दुर्गेति । दुर्गैः परिखादिभिरल

---

1. एतावदिति । एषा प्राकृतगाथा, अत्र तु तच्छायांश एवोपन्यस्तः । तथाहि—'एद्दहमेत्तत्थणिआ एद्दहमेत्तेहिँ अच्छिवत्तेहिँ । एद्दहमेत्तावत्था एद्दहमेत्तेहिँ दिअएहिँ ॥' 'एतावन्मात्रस्तनिका एतावन्मात्राभ्यामक्षिपत्राभ्याम् । एतावन्मात्रावस्था एतावन्मात्रैर्दिवसैः ॥' इति संस्कृतम् । सौन्दर्यातिशयशालिन्या नयनगोचरमगताया गुणश्रवणमात्रजनितानुरागेण नायकेनावस्थायां पृष्टायां दूत्या इयमुक्तिः । 'चिरप्रवासिनि नायके नायिकावस्थां बोधयन्त्याः कस्याश्चिदुक्तिरियम्' इत्यन्ये । एतावत्परिमाणं ययोस्तौ एतावन्मात्रौ आमलकादिपरिमाणौ स्तनौ यस्याः सा । एतावत्परिमाणं ययोस्ते एतावन्मात्रे विवक्षितकमलदलादिपरिमाणे, ताभ्याम् अक्षिपत्राभ्यां लोचनदलाभ्याम्, उपलक्षितेत्यर्थः । उपलक्षणे तृतीया । एतावद् विवक्षितं परिमाणं उच्चत्वादि यस्याः सा, तथाभूतावस्था स्वरूपं यस्याः सा । एतावद् बुद्धिस्थं परिमाणं संख्या येषां तथाविधैर्दिवसैर्लक्षणया संवत्सरैरुपलक्षिता । परिच्छिन्नेति यावत् । वर्षकथनस्यैव प्रायशो लोकव्यवहारसिद्धत्वात् । अत्र मुकुलाकारहस्ताभिनयेन स्तनपरिमाणविशेषे, पद्मदलाकृतिना तेन नेत्रपरिमाणविशेषे, उच्चतापुष्टिप्रदर्शकेन तद्विशेषे, अङ्गुल्यङ्कधारणादिरूपेण च दिवससंख्याविशेषे बुद्धिस्थमात्रपदशक्त्या एतावच्छब्दा नियमितशक्तय इति ॥

2. एवमित्यादि । अत्रेदमवधेयम्—यत्रोभयोरर्थयोस्तात्पर्यं स श्लेषः, यत्र त्वेकस्मिन्नर्थे तात्पर्यम्, सामग्रीमहिम्ना तु द्वितीयार्थप्रतीतिः सा व्यञ्जनेति । अत एव रसगङ्गाधरेऽप्युक्तम्—'श्लेषे द्वयोरर्थयोर्वाच्यत्वम्, एककालत्वं च । इह त्वेकस्य वाच्यत्वम्, अपरस्य व्यङ्ग्यत्वम्, भिन्नकालत्वं च' इति । आनन्दवर्धनाचार्योऽप्याह—'यत्र शब्दशक्त्या साक्षादलंकारो वाच्यः सन्प्रतिभासते स सर्वः श्लेषविषयः । यत्र तु शब्दशक्त्या सामर्थ्याक्षिप्तं वाच्यव्यतिरिक्तं व्यङ्ग्यमेवालंकारान्तरं प्रकाशते स ध्वनेर्विषयः' इति ॥

---

१. 'मान्यानां' इति ग-पुस्तके नास्ति. २. ग-पुस्तके 'मम' इत्यादि नास्ति. क-ख-पुस्तकयोश्च 'विलासिनीभुजंग' इति नास्ति.

नक्षत्रेशकृतेक्षणो गिरिगुरौ गाढां रुचिं धारय-
न्गामाक्रम्य विभूतिभूषिततनू राजत्युमावल्लभः ॥'

अत्र प्रकरणेनाभिधेये उमावल्लभशब्दस्योमानाममहादेवीवल्लभभानुदेवनृपतिरूपेऽर्थे नियन्त्रिते व्यञ्जनयैव गौरीवल्लभरूपोऽर्थो बोध्यते । एवमन्यत् ।

लक्षणामूलमाह—

**लक्षणोपास्यते यस्य कृते तत्तु प्रयोजनम् ।**
**यया प्रत्याय्यते सा स्याद्व्यञ्जना लक्षणाश्रया ॥ १५ ॥**

'गङ्गायां घोषः' इत्यादौ जलमयाद्यर्थबोधनादभिधायां तटाद्यर्थ-

---

ङ्घितः प्रतिरोद्धुमपारितो विग्रहः संग्रामो यस्य सः । दुर्गं भित्त्वापि रिपुभिः सह विग्रहः क्रियत इति भावः । यद्वा दुर्गैरलङ्घितोऽव्यवहितो विग्रहो यस्य । दुर्गव्यवधानं विनैव युध्यत इत्यर्थः । मनसिजं कामं तेजसा कान्त्या संमीलयन् पराभवन् । प्रोद्यत् प्रकृष्टाभ्युदययुक्तं राजकं राजसमूहं लाति वश्यतया गृह्णाति स तथा । गृहीतगरिमा प्राप्तगौरवः । भोगिभिरुपभोगयुक्तैः पुरुषैर्विष्वक् सर्वतो वृतो व्याप्तः । क्षत्रेशे क्षत्रियश्रेष्ठे कृतेक्षणो दत्तदृष्टिर्न भवतीति । तत्रापि तुच्छबुद्धिरिति भावः । गिरिर्हिमालयो गुरुः श्वशुरो यस्य स शिवः, तत्र रुचिमभिलाषं धारयन् । यद्वा गुरौ गभीरार्थायां गिरि वाचि गाढामुत्कृष्टां रुचिं प्रकाशं धारयन् कुर्वन् । गां पृथ्वीमाक्रम्य पराक्रमेण स्वीकृत्य, विभूत्या धनसंपदा भूषिता तनुर्यस्य स उमावल्लभो राजविशेषो राजति । अयमर्थः प्रथममभिधयैव प्रतिपाद्यते । पश्चादस्य वाक्यस्यानेकार्थपदघटितत्वज्ञानाज्जायमानं वक्तृतात्पर्यज्ञानमभिधान्तरग्रहसहकृतमेवमर्थं बोधयति । दुर्गया पार्वत्या लङ्घितोऽर्धत्वेनाक्रान्तो विग्रहः शरीरं यस्य सः । मनसिजं कामं तेजसा तृतीयनयनोत्थज्योतिषा संमीलयन्नाशयन् । प्रोद्यन्ती राजकला चन्द्रखण्डं यस्य सः । गृहीतगरिमा प्राप्तशरीरगौरवः । भोगिभिः सर्पैः । नक्षत्रेशेन चन्द्रेण कृतमीक्षणं येन सः । गिरिगुरौ हिमालये गां वृषभमाक्रम्य आरुह्य विभूत्या भस्मना भूषितदेहः । उमावल्लभः शिवः । **प्रकरणेनेति** । 'नियन्त्रिते' इत्यग्रेणान्वेति । अभिधेयेऽभिधया प्रतिपाद्ये । 'अभिधया' इति पाठे प्रकरणेन सहाभिधया नियन्त्रिते इत्यर्थः ॥ **लक्षणामूलमिति** । 'व्यञ्जनाम्' इत्यनेन प्रकरणलभ्येनान्वेति । लक्षणा प्रयोजनवती, उपास्यते शब्दशक्तित्वेनाङ्गीक्रियते, यस्य कृते यस्य बोधनिमित्तम् ॥ **अभिधायामिति** । विरतायामित्यग्रेणान्वयः । चकारात्तात्पर्यार्थबोधनात् । तात्पर्या-

---

1. अत्र शिवपक्षे उमावल्लभ इत्यनेन लभ्योऽर्थो दुर्गालङ्घितविग्रह इत्यनेन पुनरुक्तभूतः ॥

---

१. 'कलक्षणः' क. २. '—'नाम्नी महादेवी तद्वल्लभ' घ. ३. 'प्रख्याप्यते' ख. ४. 'विरतायां' इत्यधिकं ग-घ-पुस्तकयोः.

बोधनाच्च लक्षणायां विरतायां यया शीतत्वपावनत्वाद्यतिशयादिर्बोध्यते सा लक्षणामूला व्यञ्जना ।

एवं शाब्दीं व्यञ्जनामुक्त्वार्थीमाह[1]—

वक्तृबोद्धव्यवाक्यानामन्यसंनिधिवाच्ययोः ।
प्रस्तावदेशकालानां काकोश्चेष्टादिकस्य च ॥ १६ ॥
वैशिष्ट्यादन्यमर्थं[2] या बोधयेत्सार्थसंभवा ।

व्यञ्जनेति संबध्यते ।

तत्र वक्तृवाक्यप्रस्तावदेशकालवैशिष्ट्ये यथा मम—

'कालो मधुः कुपित एष च पुष्पधन्वा
धीरा वहन्ति रतिखेदहराः समीराः ।
केलीवनीयमपि वञ्जुलकुञ्जमञ्जु-
र्दूरे पतिः कथय किं करणीयमद्य[3] ॥'

अत्रैतं[4] देशं प्रति शीघ्रं प्रच्छन्नकामुकस्त्वया प्रेष्यतामिति सखीं प्रति कयाचिद्व्यज्यते[5] ।

बोद्धव्यवैशिष्ट्ये यथा—

'निःशेषच्युतचन्दनं[1] स्तनतटं निर्मृष्टरागोऽधरो
नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः ।

ख्यायां वृत्तौ चेति लभ्यते ॥ **वक्त्रिति** । वक्त्रादिचेष्टापर्यन्तानां वैशिष्ट्याद्वैलक्षण्यज्ञानाज्जायमाना या शक्तिरन्यमर्थं बोधयति सा अर्थसंबन्धा व्यञ्जनेत्यर्थः । विवक्षितार्थं यः प्रतिपद्यते स बोद्धव्यः । प्रस्तावः प्रकरणम् । काकुः स्वरविकारः, तस्या वैलक्षण्यं वक्तृशिरश्चालनम् । **वाच्येति** । लक्ष्यव्यङ्ग्योपलक्षणम् ॥ **वञ्जुलोऽशोक**स्तस्य कुञ्जेन तन्मूलस्थलतादिगृहेण मञ्जुर्मनोज्ञः । व्यङ्ग्यार्थमाह—**अत्रेति** । वक्त्र्याः कामुकत्वम्, वाक्यस्योद्दीपनविभावसमूहकामोद्रेकजनकतत्कालपत्यलाभकर्तव्यानिश्चयविषयत्वम्, प्रस्तावस्य सुरतविषयत्वम्, कालदेशयोः कामोद्रेकजनकत्वम् । वैशिष्ट्येऽप्येतदेवोदाहरणम् । वाच्यस्य पत्यसंनिधिकामोद्रेककालीनकर्तव्यप्रश्नस्य स्वरहस्यवेदिवयस्यासमाधानीयत्वं वैशिष्ट्यम् ॥ **निःशेषेति** । नायकमानेतुं प्रेषितां

1. निःशेषेति । एतद्व्याख्या नातिरुच्चिरेति पुनर्व्याख्यायते—नायकानयनाय प्रेषितां

१. 'आर्थीं व्यञ्जनां' घ. २. 'या वैशिष्ट्यादन्यमर्थं' ख. ३. 'अत्र' ग. ४. 'एतं' क-पुस्तके नास्ति. ५. 'द्योत्यते' क-ख-ग. ६. ग-पुस्तके 'भिन्नकण्ठध्वनिः—' इत्यारभ्य '—पद्मनिमीलनादिचेष्टया कयाचिद्द्योत्यते' इत्यन्तोऽग्रिमग्रन्थ इहैव दृश्यते । तथा 'त्रैविध्यादियमर्थानां—' इत्यादिः 'उअ णिचलेत्यादि' इत्यन्तोऽग्रिमग्रन्थस्थः पाठो न दृश्यते. ७. 'तथा' ख.

तदुपभोगेन लुप्तचन्दनादीन्स्नानव्याजेन गोपयन्तीं सखीं प्रति नायिकायाः सोल्लुण्ठनोक्तिरियम् । मच्चेष्टया नायात इति मिथ्यावादिनि, हे दूति, बान्धवजनस्य मम

---

तं संभुज्यागतां दूतीं प्रति स्नानकार्यप्रकाशनमुखेन संभोगं प्रकाशयन्त्या विदग्धोत्तमनायिकाया उक्तिरियम् । अयि मिथ्यावादिनि, मया गत्वा बहुधा प्रसादितोऽपि नायात इति मिथ्याभाषणशीले, बान्धवजनस्य मद्रूपस्य अज्ञातः स्वार्थसाधनतत्परतया अनाकलितोऽगणितः पीडाया वियोगानलसंभूताया आगम आगमनं यया तथाभूते । हे दूति, न तु सखि । प्रतारणकर्तृत्वाद्दूतीपदेन मिथ्याभाषणशीलत्वयोग्यता व्यज्यते । त्वम् इतो मत्सकाशाद् वापीं स्नातुं स्नानार्थं गतासि तस्य बहुधा कृतापराधस्य अत एवाधमस्य परवेदनानभिज्ञतया दुःखप्रयोजककर्मशीलस्य अन्तिकं समीपं न पुनरिति 'गतासि' इत्यनुषज्यते । पुनरेवार्थे । नैव गतासीत्यर्थः । उक्तार्थे साधकमाह—निःशेषेत्यादि । तवेत्यस्य स्तनतटादिभिः सर्वैरन्वयः । यतस्तव स्तनयोस्तटं प्रान्तसमदेशो निःशेषं यथा स्यात्तथा च्युतं स्खलितं चन्दनं यस्मात्तथाभूतम् । न तूरःस्थलम्, नापि संध्यादिरूपनिम्नोन्नतभागोऽपि । वापीगतबहलयुवजनत्रपापारवश्यादंसद्वयं लग्नाग्रस्वस्तिकीकृतभुजलतायुगलेन तटस्यैवोन्नततया मुहुर्मुहुः परामर्शात् । अत एव च्युतमित्युक्तम्, न तु च्यावितं क्षालितं वेति । युवजनसंमर्देन तत्राप्यनवकाशात् । व्यङ्ग्यपक्षे तु—तट एव मर्दनाधिक्यात्संध्यादौ नायककरपरामर्शायोगाच्च तटमेव तथाभूतमिति व्यक्तमेव । एवमधरोऽधरोष्ठो निःशेषं यथा स्यात्तथा मृष्टो न त्वीषन्मृष्टः रागः ताम्बूलरक्तिमा यस्य तथाभूतः । उत्तानत्वेन बहलजलसंबन्धात् । न तूत्तरोष्ठः । न्युब्जतया तत्संबन्धमान्द्यात् । व्यङ्ग्यपक्षे तु—अधरोष्ठ एव कामशास्त्रे चुम्बनविधेः उत्तरोष्ठे चुम्बननिषेधाच्च तत्रैव तत्कृतं तथात्वम् । किंच, नेत्रे लोचने दूरं प्रान्तभागे एव अनञ्जने अञ्जनरहिते । स्नानकाले नयनयोर्मुद्रणान्मध्ये जलसंबन्धाभावात् । व्यङ्ग्यपक्षे तु—प्रान्त एव चुम्बनविधेर्मध्ये तन्निषेधाच्च तत्रैवाञ्जनत्वम् । तथा इयं दृश्यमाना तव तनुः शरीरं तन्वी कृशा । स्नानजन्यशीतवशात् । अत एव पुलकिता पुलका रोमोद्गमाः संजाता यस्यास्तथाभूता । व्यङ्ग्यपक्षे तु—कार्श्यं सुरतश्रमात्, पुलकश्च तत्रानुभूताद्भुतरसस्मरणात्, । एवं विदग्धाया गूढतात्पर्यवाचोयुक्त्या साधारणेष्वेतेषु वाक्यार्थेष्ववगतेषु विदग्धोत्तमनायिकात्वदुःशीलत्वादिरूपवक्तृबोद्धव्यवैशिष्ट्यबलादधमपदार्थो दुःखप्रयोजककर्मशीलत्वरूपः साधारणो वाच्यतादशायां तादृशकर्मान्तरशीलत्वरूपेणावस्थितो व्यञ्जनया दूतीसंभोगरूपतादृशकर्मशीलत्वाकारेण पर्यवस्यति । अत एव झटिति व्यङ्ग्यबोधकत्वादधमपदस्य प्राधान्यम् । वक्तृबोद्धव्यवैशिष्ट्यबलेन विशेषाकारेण पर्यवसाने विलम्बाभावात् । चन्दनच्यवनादीनां तु स्नानकार्यतया निबद्धानां योग्यतया संभोगाङ्गभूताश्लेषचुम्बनादिकार्यताप्रतिसंधाने सति तद्व्यञ्जनद्वारा संभोगगमकत्वमिति विशेषः । अत्र च त्वय्यकृतशायां यद्बान्धवबुध्या विश्वसिमि यच्च तत्रैवंविधे दृढमनुरक्तासि तद्युक्तमेव ममैवंविधविविधवञ्चनाजनितपरितापपात्रत्वमितीर्ष्याहेतुकविप्रलम्भसंचारिनिर्वेदध्वनिः । तदनुगुणश्च दूतीसंभोगः । चन्दनच्यवनादीनां च वाच्यानां व्यङ्ग्यानां च परिरम्भचुम्बनाद्यनुभावानां संभोगोत्कर्षद्वारेणेर्ष्योत्तेजकानां निर्वेदोत्कर्षत्वमिति संक्षेपः ।

मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमे
वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम् ॥'

---

अज्ञातपीडागमे, त्वमितो मत्सकाशात्स्नातुं वापीं गता, न पुनस्तस्याधमस्यान्तिकं गता। यतस्ते स्तनतटं निःशेषच्युतचन्दनम्, अधरश्च निर्मृष्टरागः, नेत्रे दूरमत्यन्तमनञ्जने, तन्वी कृशा तनुः पुलकिता। स्नानकार्यमिदं सर्वमिति बोधयन्त्या आपाततो दुर्विदग्धानभिधया बोधयितुं विदग्धनायिकया तथा प्रयुक्तं पश्चादनुरणनरीत्या 'भम धम्मिअ–' इत्यादाविवात्र तदन्तिकमेव रन्तुं गतासीति व्यञ्जनया प्रतीयते। एतदर्थस्याभिधया बोधने ग्राम्यत्वदोषः स्यादिति केचिदाहुः। एतद्व्याख्यानं प्राचां वाचस्पतिमिश्रप्रभृतीनामसंमतम्। तेषामयमभिप्रायः—'भम धम्मिअ–' इत्यादौ भ्रमणविघ्नकारिणः शुनो विनाशाद्भ्रमणं युक्तमिति प्रथममभिधयान्वयबोधो जायते। तदनन्तरमेव सिंहान्तिके भ्रमणमत्यन्तमयुक्तमिति भ्रमणबाधावतारो भवति। प्रकृते तु पदार्थविशेषानुसंधानचतुराणां झटिति तत्तत्पदार्थविशेषप्रतिसंधानात्प्रथममेव बाधावतारः। तथाहि—तटदेशमेकदेशपरं सभयरतौ सम्यक्पीडनाभावेन स्तनैकदेशस्यैव चन्दनच्यवनम्, स्नाने तु सर्वस्यैव स्तनस्य चन्दनच्यवनं स्यात्। तटपदस्य स्वरूपार्थकत्वे स्तन एव लुप्तचन्दनः, न त्वङ्गान्तरम्। मुखमुत्तानीकृत्य चुम्बनेनाधरस्यैव रागभ्रंशः, न तूत्तरोष्ठस्य। मुखं न्युब्जीकृत्य स्नानेनोभयोरेव रागभ्रंशः स्यात्। इयमिदानींतनी। तदानीमपि तत्प्रसङ्गेन पुलको भवति। स्नानीयपुलकस्य पथि श्रमादिना नाशसंभवात्। अधमस्य प्रागपि ज्ञातनिकृष्टपरिग्रहस्य। एवं च निरुक्तसुरत[१]निर्णयचिह्नत्रयस्य तत्समीपगमनमन्तरेणासंभवाद् विना लक्षणामन्वयबोधो न भवतीति नञ्पदस्य एवकारार्थे लक्षणा। अयोगव्यवच्छेदरूप एवकारार्थे नञर्थस्याभावस्य प्रतियोगित्वं संबन्धः। एवं वापीं स्नातुमित्यत्रापि विपरीतलक्षणया गमनाभाव एव प्रतीयते। तथा च त्वमितो वापीं स्नातुं न गता, तस्याधमस्यान्तिकमेव गतेत्यन्वयबोधः। रन्तुमिति प्रयोजनं व्यञ्जनया प्रतीयते। यत्रान्वयबोधात्प्राग्बाधावतारस्तत्र लक्षणा, यत्र तु पश्चात्तत्र व्यञ्जना। अन्यथा 'उपकृतं–' इत्यादावपि लक्षणा न स्यात्। तदुक्तम्—'क्वचिद्बाध्यतया ख्यातिः क्वचित्ख्यातस्य बाधनम्। पूर्वत्र लक्षणैव स्यादन्यत्र व्यञ्जनैव तु॥' इति। क्वचित् 'उत्तरत्राभिधैव तु' इति चतुर्थचरणे पाठः। अत्र वक्त्रादिवैशिष्ट्याद् व्यङ्ग्यान्तरमपि—दूत्यकर्मणात्यन्तहीनायामपि त्वयि सापराधायां तस्मिन्नप्यधमे मम नासूया किं त्वेवमकृतज्ञायां त्वयि यद्बान्धवबुद्ध्या विश्वसिमि, या च तस्मिन्नेवंविधे [1]हरिद्रारागिणि दुर्विदग्धे मन्दभागिनी दृढमनुरक्तासि, तदेवंविधवञ्चनासहस्रजनितप्रौढपरितापपुटपाकपात्रत्वं मम युक्तमेवेति विप्रलम्भप्रभेदेर्ष्यामानव्यभिचारिनिर्वेदध्वनिरिति। अत्र फलस्य लक्ष्यतद्धर्मान्यतरवृत्तित्वनियमेन

---

1. हरिद्रेति। हरिद्रारागश्चिरं नावतिष्ठते॥

---

१. पुस्तकान्तरे 'निर्णय' इति नास्ति.

अत्र तदन्तिकमेव रन्तुं गतासीति विपरीतलक्षणया लक्ष्यम् । तस्य च रन्तुमिति व्यङ्ग्यं प्रतिपाद्यं दूतीवैशिष्ट्याद्बोध्यते ।

अन्यसंनिधिवैशिष्ट्ये यथा—

'उअ णिच्चल णिप्पन्दा, भिसिणीपत्तम्मि रेहइ बलाआ ।
णिम्मलमरगअभाअणपरिट्ठिआ (दा)सङ्खसुत्ति व्व ॥'

अत्र बलाकाया निःस्पन्दत्वेन विश्वस्तत्वम्, तेनास्य देशस्य

---

रमणस्य तदन्यतरवृत्तित्वाल्लक्षणामूलव्यञ्जनाया असंभवात्प्रतिपाद्यवैशिष्ट्येनैव रमणस्य प्रतीतिरित्यभिप्रायेण ग्रन्थकृदाह—**तदन्तिकमेवेति । विपरीतेति ।** तत्समीपगमनाभावाभावबोधनादिति भावः । निरुक्तसुरतचिह्नत्रयमेव दूतीवैशिष्ट्यम् । केचित्तु—'तदन्तिकं न गतासीत्यस्य वाक्यत्वाल्लक्षणायाश्च शब्दमात्रवृत्तित्वादत्र लक्षणा न संभवति' इत्याहुः । तन्न । उक्तक्रमेण नञ्पद एव लक्षणास्वीकारात् । 'वापीं स्नातुं गतासि तदन्तिकमेव गतासीति योजनया तदन्तिकगमनं वाच्यमेव । तस्यैव रन्तुमिति व्यङ्ग्यम्' इत्यपरे । तदपि न सम्यक् । त्वर्थपुनःशब्देन नञर्थस्य पूर्वान्वयस्य व्यवच्छेदात् । केचित्तु—"स्नानेन चन्दनाधररागयोः क्षालनमेव, न च्युतिनिर्माजने तयोः संभोगघर्षणादेरसंभवात्, अतश्च्युतनिर्मृष्टपदे अपि तद्व्यञ्जके" इत्याहुः । तन्न । तयोः स्नानकार्यत्वानङ्गीकारे स्वमतसिद्धप्राथमिकबोधानुदयप्रसङ्गात् ॥ अन्यसंनिधिवैशिष्ट्ये व्यङ्ग्यार्थव्यञ्जनामाह—**उअ णिच्चलेति ।** 'पश्य निश्चल निःस्पन्दा बिसिनीपत्रे राजते बलाका । निर्मलमरकतभाजनपरिस्थिता शङ्खशुक्तिरिव ॥' इति संस्कृतम् । उअ पश्य । निश्चलेति संबोधनम् । 'संकेतस्थानं चेष्टाशून्यं' इति तदर्थः । 'निश्चला पृथिवी सेव निःस्पन्दा' इति केचित् । 'अतिनिश्चला' इत्यपरे । **शङ्खशुक्तिः** शङ्खकपालम् ॥ अन्यस्य यस्य

---

1. उअ इति । 'उअ इति पश्येत्यर्थे देशीति नरसिंहठक्कुराः, अव्ययमिति नागोजिभट्टाः । बिसिनी कमलिनी तस्याः पत्रे बलाका सितपक्षिविशेषो बकपङ्क्तिर्वा राजते । त्वं पश्येति वाक्यार्थः कर्म । किंभूता । निश्चलनिःस्पन्दा । निश्चला चासौ निःस्पन्दा चेति विशेषणोभयपदः कर्मधारयः । 'पुंवत्कर्मधारय—' इति पुंवद्भावः । चलनं देशान्तरप्रापिका शरीरक्रिया, स्पन्दनं त्ववयवमात्रक्रिया । 'स्पदि किंचिच्चलने' इति धात्वनुसारात् । तेन न पौनरुक्त्यम् । केव राजत इत्याह—निर्मलेत्यादि । निर्मलं स्वच्छं यन्मरकतस्य नीलमणेर्भाजनं पात्रं तत्र परिस्थिता विद्यमाना शङ्खशुक्तिरिव । शङ्खशुक्तिश्च शङ्खघटितं शुक्त्याकारं पात्रम् । अत्राचेतनोपमया लेशतोऽपि शोभाभावस्तेन निर्जनत्वं गम्यते ॥

2. निःस्पन्देति । निःस्पन्दत्वेन वाच्येन विश्वस्तत्वं व्यङ्ग्यमिति शेषः । तेन व्यङ्ग्येन विजनत्वं व्यङ्ग्यमिति शेषः ॥

---

१. 'व्यङ्ग्यं प्रतिपाद्य' घ. २. 'विश्रब्धत्वं' ख. ३. 'अत आह—च्युतनिर्मृष्टपदे अपि इति पुस्तकान्तरे. ४. 'व्यञ्जने' इति पुस्तकान्तरे.

विजनत्वम्, अतः संकेतस्थानमेतदिति कयापि संनिहितं प्रच्छन्नकामुकं प्रत्युच्यते[1]। अत्रैव स्थाननिर्जनत्वरूपं[1] व्यङ्ग्यार्थवैशिष्ट्यं प्रयोजनम्[2]।

'भिन्नकण्ठध्वनिर्धीरैः काकुरित्यभिधीयते' इत्युक्तप्रकारायाः काकोर्भेदा आकरेभ्यो ज्ञातव्याः[2]। एतद्वैशिष्ट्ये यथा—

'गुरुपरतन्त्रतया बत दूरतरं देशमुद्यतो गन्तुम्।
अलिकुलकोकिलललिते नैष्यति सखि सुरभिसमयेऽसौ॥'

अत्र नैष्यति, अपि तर्हि एष्यत्येवेति काका व्यज्यते—

चेष्टावैशिष्ट्ये यथा—

'संकेतकालमनसं[3] विटं ज्ञात्वा विदग्धया।
हसन्नेत्रार्पिताकूतं[3] लीलापद्मं निमीलितम्॥'

अत्र संध्या संकेतकाल इति पद्मनिमीलनादिचेष्टया कयाचिद्द्योत्यते।

---

संनिधिः सामानाधिकरण्यम्, तस्य प्रच्छन्नकामुकनिरूपितत्वं वैशिष्ट्यम्, उच्यते व्यज्यते। **अत्रैव** अस्मिन्नुदाहरण एव निर्जनत्वातिशयो वैशिष्ट्यं प्रयोजनं तृतीयव्यञ्जनायाः कारणम्॥ **भिन्नेति**। शोकहर्षभयादिकृतेत्यर्थः। आकरेभ्य उपजीव्यभरतादिग्रन्थेभ्यः॥ **सुरभिसमये** वसन्तकाले। **अपि तर्हीति**। अपि त्वित्यर्थः॥ **संकेतेति**। विटमुपपतिम्। हसत्प्रफुल्लम्। नेत्राभ्यामर्पितमाकूतमात्माभिप्रायो यत्र तद्यथा स्यात्तथा निमीलितमित्यर्थः। यद्वा, हसदिति नेत्रविशेषणम्। एतदेव पद्मनिमीलनस्य नेत्रार्पिताकूतत्वं वैशिष्ट्यम्। **चेष्टादि**कस्येत्यादिपदाच्चेष्टाविरहादिग्रहः।

---

1. उच्यत इति। व्यञ्जनया प्रतिपाद्यते इत्यर्थः॥

2. काकुरिति। कायत्यर्थान्तरमिति काकुः। यद्वा काकुर्जिह्वेति पस्पशायां भाष्यकारः। तद्व्यापारविशेषसंवाद्यत्वाच्छोकहर्षभयादिभिर्ध्वनेर्विकारः काकुः। तथा चोक्तम्—'वाक्याभिधीयमानेऽर्थे येनान्यः प्रतिपद्यते। भिन्नकण्ठध्वनिर्धीरैः स काकुरिति कथ्यते॥' इति॥

3. संकेतेति। संकेतकाले मनो यस्य। तं जिज्ञासुमित्यर्थः। अत एव हसद्भ्यां नेत्राभ्यामर्पितं सूचितमाकूतं रहस्यं येन। हसदिति भिन्नं प्रफुल्लमित्यर्थकं पद्मविशेषणं वा। शेषं व्यक्तम्। इह नेत्रेङ्गितेन लक्षितो गूढाभिप्रायः कामिन्या निशासूचकेन पद्मनिमीलनेन प्रकाशितः॥

---

१. '–रूपव्यङ्ग्यार्थ–' ख-घ. २. 'प्रयोजकम्' ख-घ.; ग-पुस्तके तु 'अत्रैव–' इति फक्किका नास्ति. ३. 'ईषत्' क.

एवं वक्रादीनां व्यस्तसमस्तानां वैशिष्ट्ये बोद्धव्यम् ।

त्रैविध्यादियमर्थानां प्रत्येकं त्रिविधा मता ॥ १७ ॥

अर्थानां वाच्यलक्ष्यव्यङ्ग्यत्वेन त्रिरूपतया सर्वा अप्यनन्तरोक्ता व्यञ्जनास्त्रिविधाः । तत्र वाच्यार्थस्य व्यञ्जना यथा—'कालो मधुः—' इत्यादि । लक्ष्यार्थस्य यथा—'निःशेषच्युतचन्दनं—' इत्यादि । व्यङ्ग्यार्थस्य यथा—'उअ णिच्चल—' इत्यादि । प्रकृतिप्रत्ययादिव्यञ्जकत्वं तु प्रपञ्चयिष्यते ।

शब्दबोध्यो व्यनक्त्यर्थः शब्दोऽप्यर्थान्तराश्रयः ।
एकस्य व्यञ्जकत्वे तदन्यस्य सहकारिता ॥ १८ ॥

यतः शब्दो व्यञ्जकत्वेऽप्यर्थान्तरमपेक्षते, अर्थोऽपि शब्दम्, तदेकस्य व्यञ्जकत्वेऽन्यस्य सहकारितावश्यमङ्गीकर्तव्या ।

अभिधादित्रयोपाधिवैशिष्ट्यात्त्रिविधो मतः ।
शब्दोऽपि वाचकस्तद्वल्लक्षको व्यञ्जकस्तथा ॥ १९ ॥

---

तद्वैशिष्ट्ये यथा—'नादत्ते भूषणं दत्तं नाहूता चिरमृच्छति । मृगाक्षी न क्षिपत्यक्षि सादरं मयि पश्यति ॥' अत्र चेष्टाविरहेण कोपो व्यज्यते । तस्य च कान्तापराधकालीनत्वं वैशिष्ट्यम् । व्यस्तानां प्रत्येकं समस्तानां द्वित्र्यादिसंकीर्णानाम् ॥ **त्रैविध्यादिति** । इयं व्यञ्जना ॥ **प्रपञ्चयिष्यते** । 'असंलक्ष्यक्रमव्यङ्ग्यध्वन्युदाहरणे' इति शेषः ॥ ननु शाब्द्यां व्यञ्जनायामर्थस्यार्थ्यामपि शब्दस्योपयोगित्वमस्त्येव तत्कीदृशमनयोर्भेदकारणमत आह—**शब्दबोध्य इति** । अर्थान्तराश्रयः अर्थान्तरोपस्थापकः । 'व्यनक्ति' इत्यनुषज्यते । इत्यनुपपत्तिदर्शनानन्तरमुपपत्तिमाह—**एकस्येति** । सहकारिता अप्रधानकारणत्वम् । अप्रधानत्वं च व्यवहितोपकारित्वेन । एवं च यत्र यस्याव्यवहितोपकारित्वेन प्रधानत्वं तत्र तत्संबन्धित्वेनैव तस्यां व्यवहार इति भावः । ननु[2] नाटकादौ वेशाभिनयादेरपि व्यञ्जकत्वसंभवेन व्यञ्जकद्वैविध्यमात्रमुक्तमिति चेत् । न । तत्रापि शब्दोपहितार्थस्यैव व्यञ्जकत्वाङ्गीकारात् । वेशाभिनयादेस्तु चेष्टादिवैशिष्ट्यरूपसहकारित्वोपगमात्तत्र शब्दसत्त्वेऽपि वेशाभिनयदर्शनस्य प्राधान्येनैव दृश्यत्वव्यवहारः । अत एव वक्ष्यति—'श्रवणैः पेयमनेकैर्दृश्यं दीर्घैश्च लोचनैर्बहुभिः । भवदर्थमिव निबद्धं नाट्यं सीतास्वयंवरणम् ॥' इति ॥ अभिधादिव्यापारत्रयं निरूप्य तत्प्रयुक्तं शब्दस्यापि त्रैविध्यमाह—**अभिधेति** । उपाधि-

---

१. 'अत्रार्थानां' ख. २ 'ननु-' इत्यादिः 'सीतास्वयंवरणम् ।' इत्यन्तः पाठः पुस्तकान्तरे न दृश्यते.

अभिधोपाधिको वाचकः । लक्षणोपाधिको लक्षकः । व्यञ्जनोपाधिको व्यञ्जकः ।

किं च—

तात्पर्याख्यां वृत्तिमाहुः पदार्थान्वयबोधने ।
तात्पर्यार्थं तदर्थं च वाक्यं तद्बोधकं परे ॥ २० ॥

अभिधाया [1]एकैकपदार्थबोधनविरमाद्वाक्यार्थरूपस्य [2]पदार्थान्वयस्य

---

व्यापारः । अभिधया लक्षणया वा शब्दैः प्रत्येकमुपस्थापितानां पदार्थानां संसर्गो वाक्याद्भासमानस्तात्पर्याख्यां वृत्तिमपेक्षत इति प्राचीननैयायिकमतमाह—**किं चेति**। मतान्तरसूचनाय 'आहुः' इति । 'परे' इति परेणान्वयः । इयमेवाधुनिकैः संसर्गमर्यादोच्यते । अभिधाया इति लक्षणाया उपलक्षणम् । अभिहितानामभिधया लक्षणया वा पदोपस्थापितानामन्वयबोधवादिनां प्राचीननैयायिकानामित्यर्थः ।

---

1. तात्पर्येति । एतदुक्तं भवति—लाघवात्पदानां पदार्थमात्रे शक्तिः, नत्वन्वयांशेऽपि । गौरवादनन्यलभ्यत्वाच्च । तदंशो हि तात्पर्यार्थो वाच्याद्यर्थविलक्षणशरीर आकाङ्क्षायोग्यतासत्तिवशादपदार्थोऽपि प्रतीयते । न चापदार्थविषयस्यापि शाब्दबोधविषयत्वे कथंचिदुपस्थितस्य गगनादेरपि तद्विषयत्वापत्तिरिति वाच्यम् । अपदार्थविषयस्य शाब्दबोधविषयतायामप्रयोजकत्वात् । इत्यभिहितान्वयवादिनो नैयायिक-भाट्ट-मीमांसकाः । तेषामयमभिप्रायः—'घटं करोति' इत्यादौ घटवृत्तिकर्मत्वानुकूला कृतिरित्यर्थो बोध्यते । तत्र घटपदस्य घटोऽर्थः, अम्प्रत्ययस्य च कर्मता, वृत्तिता तु न कस्यापि, इत्यपदार्थोऽपि वृत्तिता तात्पर्यवशादनयोः संसर्गविधया भासते । अन्विताभिधानवादिनः प्राभाकरास्तु—'अन्वयरूपे वाक्यार्थेऽपि पदानां शक्तिः । व्यवहारेणान्वितस्यैवोपस्थानात्तत्रैव शक्तिग्रहात् । तथाहि—'देवदत्त, गामानय' इत्युत्तमवृद्धप्रयोगात्सास्नादिमतीं व्यक्तिं मध्यमवृद्धे संचारयति, तच्चेष्टया तस्य वाक्यस्य तदर्थबोधकतामनुमाय पश्चात् 'गां नय, अश्वमानय' इति प्रयोगे गवापसरणमश्वाहरणं च दृष्ट्वान्वयव्यतिरेकाभ्यां क्रियापदार्थान्विते कारके कारकपदस्य, कारकपदार्थान्वितायां क्रियायां च क्रियापदस्य शक्तिं बालोऽवधारयति । ततः प्रयोगकाले तस्य प्रथमत एवान्वितबुद्धिर्जायते । न च गौरवेणान्वयांशपरिहारः । प्रथमगृहीतान्वयशक्तेरुपजीव्यत्वेन तदपरित्यागात् । शाब्दबोधे तु आकाङ्क्षादिवशाद्वृत्तितादिविशेषरूपमेव भासत इति नापदार्थो वाक्यार्थः' इति वदन्ति । अत्रारुचिबीजं तु—'अन्वितत्वेन शक्तावपि अन्वयविशेषावगमाय आकाङ्क्षादिकं कारणमवश्यमङ्गीकार्यम् । एवं च विशेषाकारेण अशक्यस्यैव भानमिति तैरप्यवश्यमभ्युपेयम्' इति ॥

---

१. 'पदार्थमात्रबोधविरमात्पदार्थानामन्वयप्रतिपादिका तात्पर्याख्या शक्तिः' ग. २. 'पदानां' क., 'पदार्थानां' ख.

बोधिका तात्पर्यं नाम वृत्तिः । तदर्थश्च[1] तात्पर्यार्थः । तद्बोधकं च वाक्यमित्यभिहितान्वयवादिनां मतम् ॥

इति साहित्यदर्पणे वाक्यस्वरूपनिरूपणो नाम द्वितीयः परिच्छेदः ।

अत्र मूलकारिकाः=२० । पूर्वाभिः सह २३ ।

उदाहरणश्लोकाः=९ । पूर्वैः सह १५ ।

---

अन्विताभिधानवादिनो मीमांसकगुरवस्तु—'क्रियाकारकयोः प्रथमत एवान्वयबोधो जायते, ततः शक्तिग्रहः, पदविशेषसमभिहारात्तु विशेषस्मृतिरिति । किं तात्पर्याख्यवृत्तिस्वीकारेण' इत्याहुः ॥

इति श्रीरामचरणतर्कवागीशभट्टाचार्यविरचितायां साहित्यदर्पणविवृतौ द्वितीयः प्रकाशः ।

---

1. अभिहितेति । अभिहितानां स्वस्ववृत्त्या पदैरुपस्थितानामर्थानामन्वय इति ये वदन्ति तेऽभिहितान्वयवादिन इत्यन्वर्थमभिधानम् ॥

2. अन्वितेति । पदान्यन्वितानि भूत्वानन्तरं विशिष्टमर्थं बोधयन्तीति ये वदन्ति तेऽन्विताभिधानवादिन इत्यन्वर्थं नाम ॥

---

१. 'तदर्थं च तात्पर्यार्थं' घ.



## तृतीयः परिच्छेदः ।

अथ कोऽयं रस इत्युच्यते

**विभावेनानुभावेन व्यक्तः संचारिणा तथा ।**
**रसतामेति रत्यादिः स्थायीभावः सचेतसाम् ॥ १ ॥**

---

काव्यलक्षणरूपैककार्यानुकूलत्वसंगत्या वाक्यनिरूपणानन्तरं रसं निरूपयितुमाह-**अथेति** । वाक्यनिरूपणानन्तरं कोऽयमिति जिज्ञासाविषयो रसो निरूप्यत इत्यर्थः । अयं काव्यलक्षणनिविष्टो रसः । **विभावेनेत्यादि** । **सचेतसामिति** । नायकादिनि-

---

1. **विभावेनेति** । इह स्वस्वप्रतिभोन्मेषेण 'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः' इति नाट्यशास्त्रफक्किकां व्याचक्षाणानामनेके पक्षाः तेषु कतिचन प्रकृतोपयोगित्वाद् व्युत्पत्त्याधायकत्वाद् हृदयंगमत्वाच्च प्रदर्श्यन्ते प्राञ्जलीक्रियन्ते च । तत्र भट्टलोल्लटप्रभृतीनामेष सिद्धान्तः—'स्थायिनां विभावेनोत्पाद्योत्पादकभावरूपादनुभावेन गम्यगमकभावरूपाद्व्यभिचारिणा पोष्यपोषकभावरूपात्संबन्धाद्रसस्य निष्पत्तिरुत्पत्तिरभिव्यक्तिः पुष्टिश्चेत्यर्थः । तथाहि—ललनादिभिरालम्बनविभावैः स्थायी रत्यादिको जनितः उद्यानादिभिरुद्दीपनविभावैरुद्दीपितः, अनुभावैः कटाक्षभुजक्षेपणादिभिः प्रतीतियोग्यः कृतः, व्यभिचारिभिरुत्कण्ठादिभिः परिपोषितो रामादावनुकार्ये नाट्येनाभिनेये रसः । नटे तु तुल्यरूपतानुसंधानवशादारोप्यमाणः सामाजिकानां चमत्कारहेतुः' इति । पिण्डितार्थस्त्वयम्—यथा सर्पाभावेऽपि सर्पतयावलोकिताया रज्जोरपि भयमुत्पद्यते तथा सीतादिविषयानुरागरूपा रामादिरतिरविद्यमानापि नर्तकेऽभिनयनैपुण्येन तस्मिन्स्थितेव प्रतीयमाना सहृदयहृदये चमत्कारमर्पयन्त्येव रसपदवीमधिरोहतीति । अयं क्रमः—'प्रथमं रामादिगतसीतादिविषयकरत्यादिरेव रसः सहृदयैः काव्योपात्तलिङ्गद्वारेणानुमीयते । ततस्तस्य कमनीयविभावाद्यभिनयप्रदर्शननिपुणे रामाद्यनुकारिणि नर्तके सादृश्यज्ञानरूपदोषादारोपः साक्षात्कारात्मको धर्म्यंशे लौकिक आरोप्यांशे त्वलौकिकः 'रामोऽयं सीताविषयकरतिमान्' इत्याकारकश्चमत्कृतिहेतुरिति । न च सादृश्यस्य भेदगर्भत्वाद्बाधे सति कथं रामाद्यारोप इति चेत् । न । भेदस्य नर्तकनैपुण्यदोषेणाग्रहणात् । नेदं हृदयग्राहि । सामाजिकेषु रसनिष्पत्त्यभावे तत्र चमत्कारानुभवविरोधात् । न च तज्ज्ञानमेव चमत्कारहेतुः । लौकिकशृङ्गारादिविलोकनेनापि चमत्कारप्रसङ्गात् । न चानुभावादिविज्ञानबलायात आरोपस्तथा नतु साक्षात्कारमात्रमिति वाच्यम् । [1]चन्दनसुखादौ वैपरीत्यदर्शनात्, अन्यथैवोपपत्त्या तादृशकल्पनायां मानाभावाच्च' इति ॥ श्रीशङ्कुकस्य तु—'स्थायिनो विभावादिभिरनुमाप्यानुमापकभावरूपसंबन्धाद्रसस्य निष्पत्तिरनुमितिरित्यर्थः । तथाहि—नियमविषया धीः सम्यग्बुद्धिः । यथा 'राम एवायम्'

---

1. नहि चन्दनारोपश्चमत्कारहेतुः किंतु वस्तुतश्चन्दनसंबन्ध एव । तथा सुखमपि नारोप्यमाणं तथा, किंतु वस्तुतो विद्यमानमेव ।

'अयमेव रामः' इत्ययोगान्ययोगव्यवच्छेदविषये[1] । अनन्तरावतीर्णबाधा तु मिथ्याबुद्धिः । यथोत्तरकालिके 'न रामोऽयम्' इति बाधे 'रामोऽयम्' इति[2] । विरुद्धोभयकोटिका तु संशयबुद्धिः । यथा 'अयं रामो न वा' इति । सदृशोभयविषया तु सादृश्यबुद्धिः । यथा 'रामसदृशोऽयम्' इति । एताभ्यो लोकप्रसिद्धप्रतीतिभ्यो विलक्षणया चित्रे 'तुरगोऽयम्'[3] इतिवत् 'रामोऽयम्' इति बुद्ध्या प्रथमं पक्षभूतो नटो विषयीक्रियते । ततस्तत्राविद्यमानमपि विभावादित्रयं लिङ्गमवगम्यते । कस्मात् । पूर्वमेव रोमाञ्चाविर्भावने गुरुशिक्षामासाद्य कृतदृढाभ्यासेन नटेन—'[4]सेयं ममाङ्गेषु सुधारसच्छटा सुपूरकर्पूरशलाकिका दृशोः । मनोरथश्रीर्मनसः शरीरिणी प्राणेश्वरी लोचनगोचरं गता ॥' इति । 'दैवादहमद्य तया चपलायतनेत्रया वियुक्तश्च[5] । अविरलविलोलजलदः कालः समुपागतश्चायम् ॥' इत्यादिकाव्यानुसंधानबलादालम्बनोद्दीपनविभावाभिव्यक्तौ तदनुगुणस्य रोमाञ्चादेर्दर्शनीयस्यानुभावस्याविर्भावनेन व्यञ्जनीयस्योत्कण्ठादेर्व्यभिचारिभावस्य तत्कार्यशून्यदृष्टित्वादिप्रकटनेन च प्रकाशनात् । अथ तैः कृत्रिमत्वेनातल्लिङ्गैरपि कृत्रिमत्वेनाज्ञानात्स्थायी रत्यादिरनुमीयते । अनुमानाकारस्तु—'रामोऽयं सीताविषयकरतिमान् सीताद्यालम्बनविभाववर्षर्तुरूपोद्दीपनविभावरोमाञ्चाद्यनुभावौत्सुक्यादिसंचारिभावसंबन्धित्वात् 'यो यदात्मकविभावत्वे सत्यनुभावसंचारिभाववान् स तद्रतिमान्' इति यत्तत्त्वां सामान्यतो व्याप्तिः । 'यो नैवं स नैवम्' इति व्यतिरेकव्याप्तिर्वेति । सैव चानुमितिः सचमत्कारप्रतीतिरूपा चर्वणा । अतस्तया विषयीक्रियमाणः स्थायी रस इत्युच्यते । चर्वणा च सामाजिकानामिति तेष्वेव रस इति व्यवहारः । ननु साक्षात्कार एव सचमत्कारः, नत्वनुमित्यादिरपि । अन्यथा सुखादावनुमीयमानेऽपि रसः स्यात् । न स्यात् । वस्तुसौन्दर्यबलाद्रसनीयत्वेन रत्यादिस्थायिनामितरानुमेयवैलक्षण्यात् । तथापि रत्यादीनां

1. यत्र विशेषणान्वित एवकारस्तत्र विशेष्ये विशेषणस्यासंबन्धरूपमयोगं निषेधति । यथा 'राम एवायम्' इत्यत्र रामस्य विशेषणत्वेन तदन्विते एवकारेण इदमर्थे विशेष्ये रामत्वायोगं निवर्तयन्नस्य रामत्वं नियमयति । यत्र विशेष्यान्वित एवकारस्तत्र विशेष्येतरस्मिन्विशेषणीभूतधर्मसंबन्धं निवारयति । यथा—'अयमेव रामः' इत्यत्र रामभिन्ने रामत्वसंबन्धं निवारयन्नस्मिन्रामत्वं नियमयतीति प्रागपि व्युत्पादितम् ।

2. यथा 'नेदं रजतम्' इत्यौत्तरकालिके बाधे सति शुक्तौ रजतबुद्धिः । बाधाभावे तु न मिथ्यात्वम् । स्वतःप्रामाण्यवाधे यावद्बाधं प्रामाण्यग्रहात् ।

3. यद्यपि चित्रे तुरगबुद्धिरपि मिथ्याबुद्धिरेव तथापि बाधशिरस्कस्यैवात्र भ्रमत्वेन विवक्षणान्न दोषः । इह बाधानवतारः स्फुट एव, अन्यथा तद्रूपेण पक्षत्वमेव न सिद्ध्येत् ।

4. यदनुध्यानवशेन एतावान्कालो यापितः सेयं प्राणेश्वरी मम मनसः सकाशाल्लोचनगोचरं गतेति संबन्धः । पूर्वं मनस्येवासीत् संप्रति बहिर्दृष्टेति भावः । अङ्गेषु सुधारसच्छटा, परीरम्भेण सर्वाङ्गीणसंतापशान्त्या सौहित्यसंपादनात् पीयूषरसवृष्टिः । दृशोर्नेत्रयोः शोभनः पूरो द्रवो यस्य तथाभूतस्य कर्पूरस्य शलाकिका अञ्जनतूलिका । अतिशयितानन्दहेतुत्वात् शरीरिणी मनोरथस्य श्रीः संपत्तिः ।

5. 'अभूवम्' इति शेषः ।

नटेऽसत्त्वाद्भावतारेऽनुमितिरेव कथं स्यादिति चेत् । न । तेषामभावनिश्चयाभावात्स्थायितया संभाव्यमानत्वात् ।' इति । एतन्मतनिष्कर्षस्त्वयम्—यथा कुज्झटिकापातसंकुले देशेऽविद्यमानस्यापि धूमस्याभिमानाद् धूमनियतस्य धूमध्वजस्यानुमानम् । तथा नटेनैव 'ममैवैते विभावाद्याः' इति निपुणं प्रकटीकृतैस्तत्राविद्यमानैरपि विभावादिभिस्तन्नियता रतिरनुमीयमानापि निजसौन्दर्यबलात्सामाजिकानामास्वाद्यमानतया चमत्कृतिमावहन्ती रसतामेतीति रतेरनुमितिरेव रसनिष्पत्तिरिति । नेदमपि हृदयग्राहि। प्रत्यक्षमेव ज्ञानं चमत्कारजनकम्, नानुमित्यादिरिति लोकप्रसिद्धिमवधूयान्यथा कल्पने मानाभावादन्यथैव योजनासंभवात् ॥ भट्टनायकस्य तु—'न तावन्नटगतत्वेनानुमीयते, तदानीं रामाद्यभावेन तद्रत्यादेरप्यभावादसतः सत्त्वेनानुमानाविषयत्वाद्वस्तुतो रामादिविषयिण्या नटगतत्वेनानुमितयापि रत्या सामाजिकेऽसत्या तच्चमत्कारजननासंभवाच्च । न रामादिनायकगतत्वेनोत्पद्यते, विभावादीनां पारमार्थिकत्वाभावात् । न वा सामाजिकगतत्वेनाभिव्यज्यते, सिद्धस्यैव व्यङ्ग्यत्वसंभवाद्रसस्य चासिद्धत्वात् सर्वेषामेवाभिव्यक्तिप्रसङ्गाच्च । तस्माद्विभावादिभिः संयोगाद्भोज्यभोजकभावसंबन्धाद्रसस्य निष्पत्तिर्भुक्तिरिति । न च भोगपक्षेऽपि रसस्यासिद्धत्वाद्भोगासंभव इति वाच्यम् । भोगस्यालौकिकतयाभ्युपगमात् । एवं सत्यप्यन्यनिष्ठो रत्यादिः स्थायी अन्यनिष्ठैरेव विभावादिभिः कथमन्येन भोक्तव्यः अतिप्रसङ्गात्—इति चेत्, उच्यते—शब्दात्मनः काव्यस्य त्रयो व्यापाराः—अभिधायकत्वं वाच्यविषयम्, भावकत्वं रसादिविषयम्, भोजकत्वं सहृदयविषयम्' इति। यच्चाहुः—"अभिधा भावना चैव तद्भोगीकृतिरेव च' इति । तत्राभिधा निरन्तरसान्तरार्थगतत्वेन[1] द्विविधा । तेन लक्ष्यविषयस्यापि संग्रहः । भावकत्वं साधारणीकरणम्। तेन हि व्यापारेण विभावादयः स्थायी च साधारणीक्रियन्ते । साधारणीकरणं चैतदेव यत्सीतादिविशेषाणां कामिनीत्वादिसामान्येनोपस्थितिः स्थाय्यनुभावादीनां च संबन्धिविशेषानवच्छिन्नत्वेन । अन्त्यं व्यापारद्वयं नाट्येऽपि । एवं काव्ये नाट्ये च भावकत्वव्यापारेण साधारणीकृतैर्विभावादिभिर्भोजकत्वव्यापारसाहित्येन तथाकृत एव रत्यादिः स्थायी भुज्यते । भोगश्च सत्त्वगुणोद्रेकात्प्रकाशते च आनन्दस्तत्स्वरूपा अनन्यालम्बना या संवित्तत्स्वरूपो लौकिकसुखानुभावविलक्षणः । सत्त्वरजस्तमोगुणानामुद्रेकेण क्रमात्सुखदुःखमोहाः प्रकाश्यन्ते । उद्रेकश्च स्वेतरावभिभूयावस्थानम्" इति । एष सारांशः—शब्दस्याभिधाव्यापारवत्काव्यनाट्ययोस्तद्विलक्षणं भावकत्वभोजकत्वनामकं व्यापारद्वयमतिरिक्तमस्ति काव्यार्थबोधोत्तरमेव तत्राद्येन भावकत्वव्यापारेण विभावादिरूपसीतादयो रामादिसंबन्धिनी रतिश्च सीतात्वरामत्वसंबन्धांशमपहाय सामान्यतः कामिनीत्वरतित्वादिनैवोपस्थाप्यते । अन्त्येन भोजकत्वव्यापारेण तूक्तरीत्या साधारणीकृतविभावादिसहकृतेन सा रतिः सहृदयैरास्वाद्यत इति रतेरास्वाद एव रसनिष्पत्तिरिति । एतदपि न सम्यक्। लक्षणाप्रयोजनव्यञ्जकतया एकत्राभिधानियन्त्रणेऽपरार्थव्यञ्जकतया वक्तृवैशिष्ट्यादिसहकारेण तत्तदर्थावगमकतया च सिद्धेन व्यञ्जनाव्यापारेणैव गतार्थतया तदतिरिक्तव्यापारद्वयकल्पने

1. निरन्तरार्थो मुख्यः । अन्तरं व्यवधानं तेन सह वर्तत इति सान्तरः मुख्यार्थबाधाद्युपस्थिता व्यवहितोऽर्थः सान्तरार्थः लक्ष्यरूप इत्यर्थः ।

विभावादयो वक्ष्यन्ते । सात्त्विकाश्चानुभावरूपत्वान्न पृथगुक्ताः ।

ष्ठोऽपि रत्यादिर्ज्ञानसंबन्धेन सामाजिकनिष्ठो रसो भवतीत्यभिप्रायः । ननु 'विभावा अनुभावाश्च सात्त्विका व्यभिचारिणः' इत्यादिना सात्त्विकभावानामपि रसघटकत्वमुक्तम्, भवता तत्किं नोच्यत इत्यत आह—**सात्त्विकाश्चेति** । सात्त्विकाः स्तम्भस्वेदादयः । **दध्यादी**त्यादिना प्रपाणकादिपरिग्रहः । रूपान्तरं विभिन्नरूपं परिणतः प्राप्तः । यद्वा रूपान्तरं परिणतं निष्पन्नं यस्य स तथा अभ्याहित इतिवत् क्तान्तस्य

मानाभावात् । न च व्यञ्जनास्थाने तादृशभोग एव कश्चन व्यापारः कल्पनीय इति वाच्यम् । तथापि भावकत्वरूपाधिकव्यापारान्तरकल्पनस्यैवानौचित्यात् ॥ आचार्याभिनवगुप्तपादानां तु—'स्थायिनां विभावादिभिः समं व्यङ्ग्यव्यञ्जकभावरूपात्संबन्धाद्विभावादीनां वा परस्परं संयोगान्मिलनाद्रसस्य निष्पत्तिरभिव्यक्तिः । तथाहि लोके प्रमदादिभिरालम्बनकारणैश्चन्द्रिकादिभिरुद्दीपनकारणैरश्रुपातादिभिः कार्यैश्चिन्तादिभिः सहकारिभिश्च स्थायिनो रत्यादेरनुमितिविषये परिशीलनबलेन झटिति प्रवृत्तिमतां सामाजिकानां वासनारूपतयान्तःस्थितः, काव्ये नाट्ये च गुणालंकारयोगेन कायिकवाचिकसात्त्विकाहार्यरूपेणाभिनयेन च तैरेव कारणत्वादिव्यपदेशपरित्यागेन विभावनानुभावनसंचारणरूपव्यापारवत्तया अलौकिकविभावानुभावसंचारिपदव्यवहार्यैः—ममैवैते, शत्रोरेवैते, नोदासीनस्यैवैते, इति संबन्धिविशेषस्वीकारनियमस्य न ममैवैते, न शत्रोरेवैते, नोदासीनस्यैवैते इति संबन्धिविशेषपरिहारनियमस्य चाज्ञानात्सीतात्वादिविशेषांशमपहाय कामिनीत्वादिना प्रतीतैः अभिव्यक्तो रत्यादिः स्थायी तत्तदात्मनिष्ठोऽपि विभावादिसाधारण्यबलाद्रसानुभवकाले विगलितपरिमितप्रमातृत्वादिनिजधर्मतया प्रादुर्भूतेतरज्ञानशून्यापरिमितभावेन प्रमात्रा—सकलसहृदयसंवादकारिणा प्रमातृविशेषसंबन्धाग्रहरूपेण साधारण्येन स्वाकार इवाभिन्नोऽपि प्रत्यक्षीकृतः, चर्व्यमाणतैकप्राणतया चर्वणनाशे विनष्टो रस इति प्रतीतिगोचरः, विभावादिकालमात्रस्थायित्वेनानित्यचर्वणः, पानकरसन्यायेन चर्व्यमाणः, पुर इव परिस्फुरन्, हृदयमिव प्रविशन्, सर्वाङ्गीणमिवालिङ्गन्, अन्यत्सर्वमिव तिरोदधत्, ब्रह्मास्वादमिवानुभावयन्, 'अलौकिकचमत्कारकारी शृङ्गारादिको रसः' इति । तत्रायं क्रमः—प्रथमं तावत्काव्यपदेभ्यस्तत्तदर्थोपस्थितिः, ततो यथोपस्थितविभावादिगोचरो वाक्यार्थबोधः, ततो गुणालंकाराभिनयादि, ततो रत्यादिवासनावतः सहृदयस्य साधारण्येन विभावादिबोधः, तेन च साधारण्येनैव विभावादिसंवलितरत्यवच्छिन्नचिदानन्दावरणभङ्गात्प्रकाशमानानन्दचिद्विषयो विभावादिसंवलितः स्थायी रत्यादिको रस इति ॥ नव्यानां तु—'काव्ये नाट्ये च कविना नटेन च प्रकाशितेषु विभावादिषु व्यञ्जनाव्यापारेण रामादौ सीतादिरतौ गृहीतायामनन्तरं च सहृदयतोल्लासितस्य भावनाविशेषरूपस्य दोषस्य महिम्ना कल्पितरामत्वावच्छादिते स्वात्मन्यज्ञानावच्छिन्ने शुक्तिकाशकल इव रजतखण्डः समुत्पद्यमानोऽनिर्वचनीयः साक्षिभास्यसीताविषयकरत्यादिरेव रसः' इति । अयं च कार्यो दोषविशेषस्य । नाश्यश्च । तन्नाशस्य स्वोत्तरभाविना लोकोत्तराह्लादेन भेदाग्रहात्सुखपदव्यवहार्यो भवति । स्वपूर्वोपस्थितेन रत्यादिना तदग्रहात्तद्गतित्वेनैकत्वाध्यवसानाद्वा व्यङ्ग्यो वर्णनीयश्चोच्यत इत्यादि रसगङ्गाधरे प्रपञ्चितम् ॥

व्यक्तो दध्यादिन्यायेन रूपान्तरपरिणतो [1]व्यक्तीकृत एव [2]रसः। न तु दीपेन घट इव पूर्वसिद्धो व्यज्यते।

तदुक्तं लो[3]चनकारैः—'[1]रसाः प्रतीयन्त इति (तु) ओदनं पचतीति-वद्व्यवहारः' इति। अत्र [4]च रत्यादिपदोपादानादेव स्थायित्वे प्राप्ते पुनः

परनिपातः। पयो यथाम्लयोगेन रूपान्तरपरिणतं सद्दध्युच्यते। यथा वामिक्षा कर्पूरखण्डमरिचादियोगेन रूपान्तरपरिणता प्रपाणकमुच्यते। तथा रत्यादिः स्थायीभावः काव्योपस्थापितविभावादियोगेन रूपान्तरपरिणतश्चिदानन्दचमत्कारस्वरूपं प्राप्तः। विषयस्यैव ज्ञानत्वेन परिणाम इति **परिणाम**वादिनां मतेनेदम्। ननु चिरविनष्टस्य रत्यादेः कथं रूपान्तरापत्तिरिति चेत्। न। रत्यादिपदेन रत्यादितादात्म्येनाध्यवसिताया सामाजिकवासनाया लक्षणात्। तदुक्तं **प्रकाश**कृता—'सामाजिकानां वासनात्मतया स्थितो रत्यादिर्भावः' इति। **वासना**मनङ्गीकुर्वतां मतमाह—**व्यक्तीकृत इति**। व्यक्तीकृत एव ज्ञानविषयतापन्न एव रत्यादी रसः। एवकारेण वस्तुसत्त्वव्यवच्छेदः। चिरविनष्टस्यापि ज्ञानविषयत्वसंभवादिति भावः। व्यक्तीकृत एवेत्यनन्तरं वाकारो बोध्यः। एतद्व्यक्तीकरोति—**नत्विति**। [5]रूपान्तरपरिणामे सदृष्टान्तप्राचीनसंवादमाह—**तदुक्तमिति**। यथा पाकसंबन्धेन ओदनरूपं प्राप्तस्तण्डुल ओदनत्वेन व्यवह्रियते तथा प्रतीतिसंबन्धेन रसरूपं प्राप्ता सामाजिकवासना रसत्वेन व्यवह्रियत इति भावः। रसस्य प्रागनवस्थाङ्गीकारे प्राचीनसंवादमाह—**तदुक्तमिति**। नन्वोदनं पचतीत्यत्र पाकात्पूर्वमोदनस्यानवस्थाने क्रियानिमित्तत्वाभावेन कर्मत्वं न स्यात्, अत ओदनपदस्य तण्डुललक्षणावश्यमङ्गीकरणीयेत्यसिद्धो दृष्टान्त इति चेदुद्भाव्यते, तदा 'कटं करोति' इति दृष्टान्तो द्रष्टव्यः। 'क्रियानिमित्तं हि कारकम्' इति प्रवादस्य प्रायिकत्वमिति भावः। यद्यपि रत्यादीनां नायकादिनिष्ठतया पूर्वसिद्धत्वमस्त्येव तथापि सामाजिकनिष्ठतया ज्ञानात्पूर्वमिहासत्त्वं विवक्षितम्। यथा तण्डुलानां पाकात्पूर्वमोदनत्वं नास्ति तथा रत्यादीनामपि प्रत्ययात्पूर्व

1. रसा इति। अत्रायं पूर्वापरसंदर्भः—प्रतीतेः स्वपरगतत्वादिविकल्पने सर्वपक्षेषु प्रतीतिरपरिहार्या। रसस्य प्रतीतिर्हि पिशाचवदव्यवहार्या स्यात्। किंतु यथा प्रतीतिमात्रत्वेनाविशिष्टत्वेऽपि प्रात्यक्षिक्यानुमानिक्यागमोत्था प्रतिभानकृता योगिप्रत्यक्षजा च प्रतीतिरुपायवैलक्षण्यादन्यैव, तद्वदियमपि प्रतीतिश्चर्वणास्वादनभोगापरनामधेया भवतु। तन्निदानभूताया हृदयसंवाद्युपकृताया विभावादिसामग्र्या लोकोत्तररूपत्वाद्रसाः प्रतीयन्त इति। ओदनं पचतीतिवद्व्यवहारः प्रतीयमान एव हि रसः। प्रतीतिरेव विशिष्टा रसना। सा च नास्ये लौकिकानुमानप्रतीतेर्विलक्षणतां प्रमुखे उपायतया संदधाना। एवं काव्ये शाब्दप्रतीतेश्च विलक्षणतां प्रमुखतामुपेक्ष्यमाणेति॥

1. 'व्यक्तीकृत एव रसः' ग-पुस्तके नास्ति; 'व्यक्तः' इति ख-पुस्तकेऽधिकम्. 2. 'स एव' क. 3. 'लोचनकारेण' ग. 4. 'च' ग पुस्तके नास्ति. 5. 'रूपान्तर—' इत्यादिः '—विवक्षितम्' इत्यन्तः पाठ एकस्मिन्पुस्तके नास्ति.

स्थायिपदोपादानं रत्यादीनामपि रसान्तरेष्व[1]स्थायित्वप्रतिपादनार्थम् ।
ततश्च हासक्रोधादयः शृङ्गा(रवी)रादौ व्यभिचारिण एव ।

तदुक्तम्—

'रसावस्थः परं भावः स्थायितां प्रतिपद्यते' इति ।

अस्य स्वरूपकथनगर्भ आस्वादनप्रकारः कथ्यते—

**सत्त्वोद्रेकादखण्डस्वप्रकाशानन्दचिन्मयः ।**
**वेद्यान्तरस्पर्शशून्यो ब्रह्मास्वादसहोदरः[1] ॥ २ ॥**
**लोकोत्तरचमत्कारप्राणः कैश्चित्प्रमातृभिः ।**
**स्वाकारवद[2]भिन्नत्वेनायमास्वाद्यते रसः ॥ ३ ॥**

---

रसत्वं नास्तीत्यर्थः । ननु 'रतिर्हासश्च–' इति वक्ष्यमाणकारिकया रत्यादीनां स्थायित्वं प्रतिपादितं तदत्र स्थायिपदं निरर्थकमित्याशङ्क्य समाधत्ते—**अत्रेति** । रसलक्षणे चेत्यर्थः । **रसान्तरेष्विति** । 'व्यभिचारितया' इति शेषः । **रसावस्थ इति** । परमिति मान्तमव्ययमेवकारार्थम् । रसेष्ववश्यमवस्थानात् स्थायी । अनावश्यकत्वे व्यभिचारीत्यर्थः । रत्यादिर्यत्स्वरूपं प्राप्य रसो भवति तद्दर्शयंस्तत्रास्वाद एव प्रमाणमिति तन्निरूपणं प्रक्रमते—**अस्येति** । रसस्येत्यर्थः । **स्वप्रकाशेति** । यथा ज्ञानान्तरं स्वगोचरं घटादिकं प्रकाशयति तथा रस आत्मानमेव प्रकाशयतीत्यर्थः । **चिद्** विभावादिसंवित् । **वेद्यान्तरेति** । विषयान्तरसंपर्केणानवच्छिन्नप्रवाहः । **ब्रह्मास्वादसहोदरः** ब्रह्मसाक्षात्कारसदृशः । लोकप्रधान-

---

1. ब्रह्मेति । ब्रह्मास्वादे ब्रह्ममात्रं प्रकाशते रसे तु विभावादिकमपीति भेदात्सहोदरत्वकथनम् । उक्तं च लोचनकारैः—'परब्रह्मास्वादसब्रह्मचारित्वं वास्तु अस्य रसास्वादस्य' इति ॥

2. स्वाकारवदिति । यथा ज्ञानस्यैवाकारो घटादिस्तस्मादभिन्नोऽपि तद्विषयो बाह्यैरङ्गीक्रियते तथात्रापीत्यर्थः । अत्रेदं तत्त्वम्—स्वयं वेदनं तावदङ्गीकार्यम् । अन्यथा जगदान्ध्यं प्रसज्येत । एवं च स्वव्यतिरिक्तग्राह्यविरहात्तत्तदात्मिका बुद्धिः स्वयमेव स्वात्मरूपप्रकाशिका । प्रकाशवदिति । तदुक्तम्—'नान्योऽनुभाव्यो बुद्ध्यास्ति तस्या नानुभवोऽपरः । ग्राह्यग्राहकवैधुर्यात्स्वयं सैव प्रकाशते ॥' इति ग्राह्यस्य बाह्यविषयजातस्य ग्राहकं स्वयंवेदनापरपर्यायं बुद्धितत्त्वं तयोर्वैधुर्यं नाम ग्राह्यत्वेन ग्राहकत्वेन च रूपेण भेदराहित्यम् । तयोरभेदश्चानुमातव्यः । येन वेदनेन यद्वेद्यते तत्ततो न भिद्यते । यथा ज्ञानेनात्मानः (चक्षुरादीनि पञ्चेन्द्रियाणि) तैश्च नीलादयो वेद्यन्ते । भेदे सति वेदनेन सहार्थस्य संबन्धित्वं न स्यात् । तादात्म्यस्य संबन्धनियमहेतोरभावात् । तस्माद्बुद्धिरेवानादिवासनावशादनेकाकारावभासत इति स्थितम् ।

---

1. 'अवस्थायित्व–' ग.

'रजस्तमोभ्यामस्पृष्टं मनः सत्त्वमिहोच्यते' । इत्युक्तप्रकारो बाह्यमेयविमुखतापादकः कश्चनान्तरो धर्मः सत्त्वम् । तस्योद्रेको रजस्तमसी अभिभूय आविर्भावः । तत्र हेतुस्तथाविधालौकिककाव्यार्थपरिशीलनम् । अखण्ड इत्येक एवायं विभावादिरत्यादि[1]प्रकाश[2]सुखचमत्कारात्मकः । अत्र हेतुं वक्ष्यामः स्वप्रकाशत्वाद्य[3]पि वक्ष्यमाणरीत्या । चिन्मय इति स्वरूपार्थे मयट् । चमत्कारश्चित्तविस्ताररूपो विस्मयापरपर्यायः । तत्प्राणत्वं चास्मद्वृद्धप्रपितामहसहृदयगोष्ठीगरिष्ठकविपण्डितमुख्यश्रीमन्नारायणपादैरुक्तम् । तदाह धर्मदत्तः स्वग्रन्थे—

> 'रसे सारश्चमत्कारः सर्वत्राप्यनुभूयते ।
> तच्चमत्कारसारत्वे सर्वत्राप्यद्भुतो रसः ।
> तस्मादद्भुतमेवाह कृती नारायणो रसम् ॥' इति ।

---

चमत्कारसारः । स्वाकारवदिति । यथा स्वस्माद्भिन्नोऽपि देहोऽहं स्थूल इत्यादिभेदोल्लेखाभावेन प्रतीयते, तथा रसोऽपि ज्ञातृज्ञानभेदोल्लेखाभावेनास्वाद्यत इत्यर्थः । घटादिज्ञाने जाते वेद्मीति यथा ज्ञातृज्ञानभेदः प्रतीयते तथात्र नेति भावः । [4]यद्वा स्वाकारवत्स्वविषयवत् । परिणामवादिभिर्ज्ञानतद्विषययोर्भेदानङ्गीकारादिति भावः । कामलोभादिबीजभूतौ मनोधर्मौ रजस्तमसी, ताभ्यामस्पृष्टं स्वकार्यजननेऽसंस्पृष्टं मनो मनोधर्मः । विवृणोति—[5]इत्युक्त इति । उक्तस्वरूप इत्यर्थः । बाह्यं बहिर्भवम् । लौकिकमिति यावत् । मेयं वस्तु । विमुखता ज्ञानानुकूलव्यापाराभावः । तस्यापादकः प्रयोजकः । ज्ञानानुकूलव्यापारश्चात्र दृङ्मनोयोगः । अभिभूय स्वकार्याक्षमे कृत्वा । आविर्भावः प्रतिबन्धकाभावेन स्वकार्यक्षमत्वेनावस्थानम् । तत्र सत्त्वोद्रेके । अलौकिको यः काव्यार्थो विभावादिः [6]तस्य परिशीलनमत्यन्ताभिनिवेशः । [7]प्रकाशः संवित् । ननु मिलिता विभावादयो रसस्तत्कथमस्याखण्डत्वमत आह—अत्रेति । अखण्डतायामित्यर्थः । हेतुमिति । समूहालम्बनज्ञानतादात्म्यमेव हेतुर्वक्ष्यते । स्वप्रकाशत्वाद्यपीत्यादिना सुखतादात्म्यपरिग्रहः । स्वरूपार्थ इति । न त्वन्नमयो यज्ञ इतिवत्प्राचुर्यार्थे । लोकातीतार्थाकलनेन किमेतदिति ज्ञानधाराजनने चित्तस्य दीर्घप्रायस्त्वं चित्तविस्तारः । दृष्टहेतुभ्योऽसंभवित्वज्ञानेन हेत्वनुसंधाने मनोव्यापारणमेव चित्तविस्तार इत्यपरे । विस्मयो विस्मयशब्दोऽपरपर्यायो वाचकान्तरं यस्य सः । यद्वा अपरपर्यायाऽभिन्नः । तत्प्राणत्वं चमत्कारसारत्वम् । सारः स्थिरांशः । सर्वत्र शृङ्गारादौ । चमत्कारसारत्वे

---

१. 'रत्या प्रकाशगुणश्च' ख. २. 'प्रतीति' ख-ग-पुस्तकयोः. ३. 'अस्य' ग. ४. 'यद्वा' इति नास्ति कुत्रचित्. ५. प्रतीकं नास्ति पुस्तकान्तरे. ६. 'तस्य' इति नास्ति पुस्तकान्तरे. ७. 'प्रकाश' नास्ति कुत्रचित्.

कैश्चिदिति प्राक्तनपुण्यशालिभिः । यदुक्तम्—

'पुण्यवन्तः प्रमिण्वन्ति योगिवद्रससंततिम् ।' इति ।

यद्यपि 'स्वादः काव्यार्थसंभेदादात्मानन्दसमुद्भवः ।' इत्युक्तदिशा रसस्यास्वादानतिरिक्तत्वम्, तथापि 'रसः स्वाद्यते' इति काल्पनिकं भेदमुररीकृत्य कर्मकर्तरि वा प्रयोगः । तदुक्तम्—'रस्यमानतामात्रसारत्वात्प्रकाशशरीरादनन्य एव हि रसः' इति । एवमन्यत्राप्येवंविधस्थलेषूपचारेण प्रयोगो ज्ञेयः ।

नन्वेतावता रसस्याज्ञेयत्वमुक्तं भवति । व्यञ्जनायाश्च ज्ञानविशेषत्वाद् द्वयोरैक्यमापतितम् । ततश्च—

---

चमत्कारस्थायिभावत्वे । तस्मात् सर्वत्राद्भुतरससंभवात् । वस्तुतस्तु रत्याद्यंशस्यानुभूयमानत्वे यथायथं शृङ्गारादिव्यपदेशस्तस्याननुभावेऽद्भुतव्यपदेश इति मन्तव्यम् । **प्राक्तनेति** । ऐहिकपुण्यस्यैतच्छरीरे सुखजननासंभवादिति भावः । **प्रमिण्वन्ति** आस्वादयन्ति । **यद्यपीति** । काव्यार्थसंभेदाद्विभावादिमेलकात् । आत्मा बुद्धिः, आनन्दः सुखम्, तयोः समुद्भवो विषयान्तरतिरोधानेनाविर्भावः । **रसः स्वाद्यते इति** । प्रयोग इति वक्ष्यमाणेनान्वयः । **काल्पनिक**मारोपितमुररीकृत्य अङ्गीकृत्य । रसास्वादयोः कर्मक्रियाभावेनोल्लेखो भेदग्रहणमन्तरेण न संभवतीति भावः । तत्प्रयोगस्य प्रामाण्योपपत्त्यर्थमाह—**कर्मकर्तरि वेति** । रसः स्वयमेवास्वाद्यते । स्वाभिन्नत्वादविषय इत्यभिप्रायः । रसस्यास्वादरूपत्वे प्राचां संवादमाह—**रस्यमानतेति** । रस्यमानता आस्वादः, तन्मात्रस्य । न त्वतिरिक्तस्य । सारत्वात् सामाजिकानामुपादेयत्वात् । **प्रकाशशरीरात्** संवित्स्वरूपात् । ज्ञानरूपतापन्न एव रत्यादिः सामाजिकानामानन्दचमत्कारसंवलनोपादेयत्वाद्रस इति भावः । ननु विभावादिमेलकाज्जायमानानन्दसंवलितमिलितविभावादिसंविद्रस इत्युक्तं भवति, विभावादीनां मेलकश्च विभावादिविशिष्टवैशिष्ट्यावगाह्येकज्ञानविषयत्वमित्यवश्यं वाच्यम्, प्रकारान्तरेण तन्निरूपणस्याशक्यत्वात्, तादृशज्ञानं च विभावादीनां प्रत्येकज्ञानादेव भवति, एवं च तादृशज्ञानानन्तरं रसास्वादः कथं जायतामुपायाभावादित्यभिप्रायेण शङ्कते—**नन्विति** । [3]एतावता रसस्य विभावादिसमुदायप्रकारस्य रसत्वाङ्गीकारेण । **अज्ञेयत्वमिति** । [4]उपायत्वाभावादित्यर्थः । स्वप्रकाशस्य स्वानुत्पत्त्यैवाज्ञेयत्वमिति भावः । ननु व्यञ्जनयैव रसास्वादो जायतामित्यत आह—**[5]व्यञ्जनायाश्चेति** । विभावादिसमुदायसामर्थ्यस्य चेत्यर्थः । **ज्ञानविशेषत्वाद्** विशिष्टवैशिष्ट्यज्ञानरूपत्वात् । **द्वयोर्**व्यङ्ग्यव्यञ्जकयोः । **ततश्च** द्वयोरैक्यापाताच्च ।

---

१. 'स्थानेपु' क-ख. २. 'भवतीति' घ. ३. 'इदानीं स्वादनाख्यव्यापारेण सामाजिकानां स्ववासनासाक्षात्कार एव रस इत्यभिनवगुप्ताचार्यादीनां मतमुपन्यस्यति—नन्वित्यादिना तादात्म्येन गोचरीकृत इत्यन्तेन' इत्यधिकं कुत्रचित्. ४. 'उपायत्वाभावादित्यर्थः' इति नास्ति पुस्तकान्तरे. ५. 'व्यञ्ज-

'स्वज्ञानेनान्यधीहेतुः सिद्धेऽर्थे व्यञ्जको मतः ।
यथा दीपोऽन्यथाभावे को विशेषोऽस्य कारकात् ॥'

इत्युक्तदिशा घटप्रदीपवद् व्यङ्ग्यव्यञ्जकयोः पार्थक्यमेवेति कथं रसस्य व्यङ्ग्यतेति चेत्, सत्यमुक्तम् । अत एवाहुः—'विलक्षण एवायं कृतिज्ञप्तिभेदेभ्यः स्वादनाख्यः कश्चिद्व्यापारः ।' इति । अत एव हि

---

अस्य हेतोः कथं रसस्य व्यङ्ग्यतेत्यत्रान्वयः । द्वयोः पार्थक्य एव व्यङ्ग्यव्यञ्जकभावः संभवतीत्याह—**स्वज्ञानेनेति** । स्वं व्यञ्जकत्वेनाभिमतं तस्य ज्ञानेन अन्यधीहेतुर्व्यङ्ग्यप्रतीतिकरः सिद्धेऽर्थे सतीत्यर्थः । अन्यभावेऽसिद्धार्थज्ञापकत्वे अस्य ज्ञापकस्य कारकाज्जनकात् । जनको हि कार्यमुत्पाद्य प्रकाशयतीति भावः । अभिनवगुप्ताचार्यमतानुसारेण रसास्वादोपायमाह—**अत एवेति** । निरुक्तपूर्वपक्षादेवेत्यर्थः । आहुः । अभिनवगुप्ताचार्यमतानुयायिन इति शेषः । **भट्टलोल्लटाद**यस्तु—रसस्य व्यङ्ग्यत्वमेवाङ्गीकुर्वन्ति । तथाहि—रामादौ व्यञ्जनया प्रतीयमानो रत्यादिज्ञानसंबन्धेन सामाजिकवृत्ती रसः, तच्च ज्ञानं 'रामः सीताविषयकरतिमान्' इत्याकारकमेव । यथा चिरविनष्टस्यापि यागादेः स्वजन्यापूर्वसत्त्वेनैव स्वर्गाद्यव्यवहितपूर्ववृत्तित्वं कल्प्यते, तथा रत्यादेरतीतस्यापि स्वगोचरज्ञानसत्त्वेनैव सामाजिकवृत्तित्वं कल्प्यत इत्यवधेयम् । लाघवानुसंधानपरेण ग्रन्थकृता अस्मिन्नेव मते 'अभिधादिविलक्षणम्–' इत्यादिना स्वरसः प्रकाशयिष्यते । **अयं** रससाक्षात्कारानुकूलः, **कृतिरुत्पादनम्, ज्ञप्तिभेदा** ज्ञानानुकूलव्यापारविशेषा व्यञ्जनादयः, **कश्चित्**सहृदयानुभवसिद्धः । **अत एव** विलक्षणव्यापारस्वीकारादेव । **विलक्षणाः** करणव्यञ्जनादिभिन्नाः । **व्यपदेशा** व्यवहाराः । एवं च यथा संयुक्तसमवायेन सुखादिसाक्षात्कारः, तथा स्वादनाख्यव्यापारेण वक्ष्यमाणस्ववासनासाक्षात्कार इति भावः । यथा भूतलं रजतवदिति ज्ञानं शुक्त्यंशे लौकिकं रजतांशे त्वलौकिकं, तथा रससाक्षात्कारोऽपि वासनांशे लौकिको रत्याद्यंशे उपनीतभानात्मकालौकिक इत्यवधेयम् । ननु वासना तावदिच्छादिवद्गुणविशेष एवास्तु, तथा सति संयुक्तसमवायेनैव तद्ग्रहो भविष्यति किं स्वादनाख्यव्यापारेणेति चेत् । न । तस्या गुणविशेषत्वे प्रमाणाभावात् । न च लाघवमेव तत्र मानमिति वाच्यम् । तत्र सत्तागुणत्वसंबन्धकल्पने गौरवात् । न च तस्या अदृष्टरूपत्वमस्त्विति वाच्यम् । तथात्वे साक्षात्कारानुपपत्तेः । नापि ज्ञाने-

---

नायाश्चेति । व्यञ्जनाजन्यप्रतीतेश्चेत्यर्थः । ज्ञानाविशेषत्वाद् आस्वादविलक्षणज्ञानरूपत्वात् । ननु सामाजिकादृष्टवशाद्विषयसौन्दर्याच्च व्यञ्जनाजन्यप्रतीतेरप्यास्वादरूपत्वमुपपद्यत इत्यत आह—द्वयोरैक्यमापतितम् । ततश्चेति । ततो विभावाद्यास्वादस्य रसत्वाङ्गीकारात् । द्वयोर्व्यङ्ग्यव्यञ्जकयोरैक्यमापतितं चेत्यर्थः । फलीभूतज्ञानकारणीभूतज्ञानविषयविभावाद्यतिरिक्तविषयत्वाभावादित्यर्थः । विषयभेद एव व्यङ्ग्यव्यञ्जकभावः संभवतीति । प्राचीनसंवादेनाह—स्वज्ञानेति' इत्यधिकं पुस्तकान्तरे.

१. 'सत्यमुक्तम्' इति ग-पुस्तके नास्ति. २. 'इति' क-पुस्तके नास्ति. ३. 'ततः' ख-ग. ४. 'स्वं–' इत्यादि '–अर्थः'.इत्यन्तं पुस्तकान्तरे नास्ति.

रसनास्वादनचमत्करणादयो विलक्षणा एव व्यपदेशा इति । अभिधादिविलक्षणव्यापारमात्रप्रसाधनग्रहिलैरस्माभी रसादीनां व्यङ्ग्यत्वमुक्तं भवतीति ।

---

च्छारूपत्वम् । प्राक्तनीनेत्यनेन स्थिरत्वलाभाज्ज्ञानेच्छायास्तृतीयक्षणे नाशात् । नापि संस्काररूपत्वम् । तस्यातीन्द्रियत्वेन प्रत्यक्षासंभवाद्रसस्य स्मृतित्वापत्तेश्च । ननु तथापि 'वासनावानहम्' इति ज्ञानाकारः स्यादिति चेत् । न । प्रथमं हि नाट्यकाव्यदर्शनश्रवणाभ्यां विभावानुभावयोरुपस्थितिः । एवमाक्षेपेण झटित्येव व्यभिचारिस्थायिभावयोरुपस्थितिः क्वचिच्छब्देनापि तयोरुपस्थितिः, सा च दोषतया वक्ष्यते । ततो वक्ष्यमाणसाधारणीकरणाख्यव्या[3]पारबलेन सीतादयो मम रामस्येति विभावादिचतुष्टये प्रत्येकं साधारण्यप्रत्ययः तदनन्तरं व्यञ्जनया रससमानाकारप्रत्ययस्तदनु तत्सहकृतेन स्वादनाख्यव्यापारेण 'रामोऽहं सीताविषयकरतिमान्' इत्याकारकः स्ववासनायां रत्याद्यभेदं स्वस्मिन्नायकाभेदमवगाहमानः साक्षात्कारः संपद्यते । 'भूतलं रजतवत्' इति भ्रमे शुक्तित्वादिकमिव वासनात्वादिकमत्र न भासत इति भावः । 'प्रमाता तदभेदेन स्वात्मानं प्रतिपद्यते' इति 'उत्साहादिसमुद्बोधः साधारण्याभिमानतः' इति च वक्ष्यमाणबलादवसीयते[4] । अस्मिन्मते पदार्थान्तरस्य वासनायाः, स्वादनादिव्यापारस्य च कल्पने गौरवमसहिष्णुराह—**अभिधादीति** । आदिना लक्षणातात्पर्ययोर्ग्रहणम् । अभिधादिविलक्षणव्यापारो व्यञ्जना तन्मात्रप्रसाधने ग्रहिलैः सयत्नैरस्माभिर्नवीनालंकारिकैः । मात्रपदेन स्वादनादिव्यवच्छेदः । **व्यङ्ग्यत्वं** व्यञ्जनाजन्यबोधविषयत्वम् । तच्च रसस्य स्वप्रकाशव्यञ्जनाजन्यविभावादिसंवलितरत्यादिज्ञानरूपत्वाङ्गीकारेण संभवति । तथा च निरुक्तसाक्षात्कारे रत्यादेरुपनायकत्वेन रत्यादिव्यञ्जनं भवद्भिरवश्यमङ्गीकार्यम् । तदेवास्माभी रस उच्यते । किमधिकेन वासनादिनानापदार्थकल्पनेनेति भावः । अत एव वक्ष्यति—'अङ्गीकार्या तुर्या वृत्तिर्बोधे रसादीनाम्' इति । अत एव रसादेरसंलक्ष्यक्रमव्यङ्ग्यत्वमुपपद्यते । व्यञ्जनापक्षे 'द्वयोरैक्यमापतितं—' इत्यादि यद्दूषणमुक्तं तदपि न सम्यक्[5] । व्यञ्जनाया वक्तृतात्पर्यरूपज्ञानत्वेन निरूपितत्वाद्रसस्य च तद्भिन्नभावात् । यद्वा विभावादीनां प्रत्येकं ज्ञानं जनकं विशिष्टज्ञानं जन्यमिति भेदाङ्गीकारात् । न च साक्षात्कारस्यैवास्वादरूपत्वं न तु व्यञ्जनाजन्यबोधस्येति वाच्यम् । व्यङ्ग्यचारुत्वेनैव व्यञ्जनाजन्यबोधस्या-

---

१. 'इति' ग-पुस्तके नास्ति. २. 'आदि' क-पुस्तके नास्ति. ३. 'व्यापारेण' इति पुस्तकान्तरे. ४. 'ननु व्यञ्जनाया रससमानाकारप्रतीत्यङ्गीकारे किं मानमिति चेत् । न । रसोद्बोधे रत्यादिमत्ताभानार्थं तदङ्गीकारात् । न च प्राथमिकरत्यादिमत्ताज्ञानेनैव तद्भानमिति वाच्यम् । साधारणप्रतीत्यनन्तरं तस्य नाशात् । न च विभावादिजीवितावधिरिति काव्यप्रकाशदर्शनेन तस्य क्षणचतुष्टयावस्थायित्वमिति वाच्यम् । तदनुद्भावयतां ग्रन्थकृतां तदङ्गीकारात् । यदि च विनश्यदवस्थमेव विभावादिज्ञानं रसोद्बोधकमित्युच्यते तदा सामाजिकानां नायकाद्यभेदभानार्थं तदङ्गीकार इति मन्तव्यम् । यदि त्वभेदस्य संसर्गविषयाभानङ्गीक्रियते तदा तदङ्गीकारं विनाप्युपपत्तिरिति ध्येयम्' इत्यधिकं कुत्रचित्. ५ 'एतन्मते विभावादिज्ञानसहकृतया व्यञ्जनया रसरूपरत्यादिज्ञानं जन्यत इति व्यङ्ग्यव्यञ्जकयोः पार्थक्यसंभवात्' इत्यधिकं पुस्तकान्तरे.

ननु तर्हि करुणादीनां रसानां दुःखमयत्वाद्रसत्वं ( तदुन्मुखत्वं ) न स्यादित्युच्यते—

[1]करुणादावपि रसे जायते यत्परं सुखम् ।
सचेतसामनुभवः प्रमाणं तत्र केवलम् ॥ ४ ॥

आदिशब्दाद्बीभत्सभयानकादयः । [1]तथाप्यसहृदयानां मुखमुद्रणाय पक्षान्तरमुच्यते—

किंच तेषु यदा दुःखं न कोऽपि स्यात्तदुन्मुखः ।

नहि कश्चित्सचेतन आत्मनो दुःखाय प्रवर्तते । करुणादिषु च सकलस्यापि साभिनिवेशप्रवृत्तिदर्शनात्सुखमयत्वमेव[3] ।

---

प्यास्वादरूपत्वसंभवात् । ननु वासनाया अनङ्गीकारे कथं श्रोत्रियजरन्मीमांसकानां रसाभिव्यक्तिर्न जायत इति चेत् । न । रसास्वादसुखजनकपुण्याभावात् । अत एव 'कैश्चित्प्रमातृभिः' इत्युक्तम् । तर्हि रसस्यानन्दमयत्वस्वीकारे । तदुन्मुखः करु-

---

1. करुणेति । रसगङ्गाधरेऽप्युक्तम्—ननु रतेरस्तु नाम रामादाविव सहृदयेऽपि सुखविशेषजनकता, करुणरसादिषु तु स्थायिनः शोकादेर्दुःखजनकतया प्रसिद्धस्य कथमिव सहृदयाह्लादहेतुत्वम् । प्रत्युत नायक इव सहृदयेऽपि दुःखजननस्यैवौचित्यात् । न च सत्यस्य शोकादेर्दुःखजनकत्वं क्लृप्तम्, न कल्पितस्येति नायकानामेव दुःखम्, न सहृदयस्येति वाच्यम् । रज्जुसर्पादेर्भयकम्पाद्यनुत्पादकतापत्तेः । सहृदये रतेरपि कल्पितत्वेन सुखजनकतानुपपत्तेश्चेति चेत्, सत्यम् । शृङ्गारप्रधानकाव्येभ्य इव करुणप्रधानकाव्येभ्योऽपि यदि केवलाह्लाद एव सहृदयहृदयप्रमाणकस्तदा कार्यानुरोधेन कारणस्य कल्पनीयत्वाल्लोकोत्तरकाव्यव्यापारस्यैवाह्लादप्रयोजकत्वमिव दुःखप्रतिबन्धकत्वमपि कल्पनीयम् । अथ यथाह्लाद इव दुःखमपि प्रमाणसिद्धं तदा प्रतिबन्धकत्वं न कल्पनीयम् । स्वस्वकारणवशाच्चोभयमपि भविष्यति । अथ तत्र कवीनां कर्तुं सहृदयानां च श्रोतुं कथं प्रवृत्तिः । अनिष्टसाधनत्वेन निवृत्तेरुचितत्वात् । इति चेत्, इष्टस्याधिक्यादनिष्टस्य च न्यूनत्वाच्चन्दनद्रवलेपनादाविव प्रवृत्तेरुपपत्तेः । केवलाह्लादवादिनां तु प्रवृत्तिरप्रत्यूहैव । अश्रुपातादयोऽपि तत्तदानन्दानुभवस्वाभाव्यात् । न तु दुःखात् । अत एव भगवद्भक्तानां भगवद्वर्णनाकर्णनादश्रुपातादय उत्पद्यन्ते । नहि तत्र जात्वपि दुःखानुभवोऽस्ति । न च करुणरसादौ स्वात्मनि शोकादिमद्दशरथादितादात्म्यारोपे यथाह्लादस्तदा स्वप्नादौ संनिपातादौ वा स्वात्मनि तदारोपेऽपि स स्यात् । आनुभविकं च तत्र केवलं दुःखम् । इतीहापि तदेव युक्तमिति वाच्यम् । अयं हि लोकोत्तरस्य काव्यव्यापारस्य महिमा, यत्प्रयोज्या अरमणीया अपि शोकादयः पदार्था आह्लादमलौकिकं जनयन्ति । विलक्षणो हि कमनीयः काव्यव्यापारसमुद्भूत आस्वादः प्रमाणान्तरजगदनुभवादिति ॥

---

१. 'त—' इत्यादि '—ते' इत्यन्तं घ-पुस्तके नास्ति. २. 'सचेताः' घ. ३ इति' ग.

अनुपपत्त्यन्तरमाह—

**तथा रामायणादीनां भविता दुःखहेतुता ॥ ५ ॥**

[1]करुणरसस्य दुःखहेतुत्वे करुणरसप्रधानरामायणादिप्रबन्धानामपि दुःखहेतुताप्रसङ्गः स्यात्[2] ।

[3]ननु कथं दुःखकारणेभ्यः सुखोत्पत्तिरित्याह—

**हेतुत्वं शोकहर्षादेर्गतेभ्यो लोकसंश्रयात् ।**
**शोकहर्षादयो लोके जायन्तां नाम लौकिकाः ॥ ६ ॥**
**अलौकिकविभावत्वं प्राप्तेभ्यः काव्यसंश्रयात् ।**
**सुखं संजायते तेभ्यः सर्वेभ्योऽपीति का क्षतिः ॥ ७ ॥**

'ये खलु वनवासादयो लोके दुःखकारणानि' इत्युच्यन्ते त एव हि काव्यनाट्यसमर्पिता अलौकिकविभावनव्यापारवत्तया कारणशब्द-वाच्यतां विहाया[4]लौकिकविभावशब्दवाच्यत्वं भजन्ते । तेभ्यश्च सुरते दन्तघातादिभ्य इव सुखमेवं[5] जायते । [6]अतश्च 'लौकिकशोकहर्षादिका-रणेभ्यो लौकिकशोकहर्षादयो जायन्ते' इति लोक एव प्रतिनियमः । काव्ये पुनः 'सर्वेभ्योऽपि विभावादिभ्यः सुखमेव जायते' इति निय-मान्न कश्चिद्दोषः ।

कथं तर्हि हरिश्चन्द्रादिचरितस्य काव्यनाट्ययोरपि दर्शनश्रवणाभ्या-मश्रुपातादयो जायन्त इत्युच्यते—

**अश्रुपातादयस्तद्वद्द्रुतत्वाच्चेतसो मताः ।**

[9]तर्हि कथं काव्यतः सर्वेषामीदृशी रसाभिव्यक्तिर्न जायत इत्यत आह—

---

णादिरसव्यञ्जककाव्यादिश्रवणादौ प्रवृत्तः । **सचेतनः** सामाजिकः । **अनुपपत्त्य-न्तरम**निष्टापत्त्यन्तरम् । चराचरवस्तुजातं **लोक**स्तस्य **संश्रयात्** स्वभावात् । **काव्यसंश्रयात्** काव्यसंबन्धात् । **सुखं** सुखमेव **सर्वेभ्यो** लौकिकशोकहर्षनिमि-त्तेभ्यः **तर्हि** करुणादीनां सुखमयत्वस्वीकारे । **अश्रुपातादय** इत्यादिना निःश्वा-सादिपरिग्रहः । **द्रुतत्वाद्** हर्षेण गलितप्रायत्वात् । परमते वासनाया रसबोधहेतुत्वे

---

१. 'करुणादि' क. २. 'स्यादित्यर्थः' ग. ३. 'ननु हर्षशोकादिकारणेभ्यो हर्षशोकादय एव जायन्त इति व्याप्तिः, तत्कथं विभावादिभ्यः सुखोत्पत्तिरित्याह' ग. ४. 'अलौकिक' इति नास्ति ग. पुस्तके. ५. 'एव' क-पुस्तके नास्ति. ६. 'अतश्च' इति ग-पुस्तके नास्ति. ७. 'अपि' क. ८. ग. पुस्तके त्वेतस्याः कारिकायाः 'चेतसो द्रवीभावात्सुखेऽप्यश्रुपातादयो भवन्तीत्यर्थः' इति व्याख्या. ९. 'ननु' कथं ग.

**न जायते तदास्वादो विना रत्यादिवासनाम् ॥ ८ ॥**

वासना चेदानींतनी प्राक्तनी च [1]रसास्वादहेतुः । तत्र यद्याद्या न स्यात्[2]तदा श्रोत्रियजरन्मीमांसकादीनामपि स स्यात् । यदि द्वितीया न स्यात्तदा यद्रागिणामपि केषांचिद्रसोद्बोधो न दृश्यते तन्न स्यात् ।

उक्तं च धर्मदत्तेन—

'सवासनानां सभ्यानां रसस्यास्वादनं भवेत् ।
निर्वासनास्तु रङ्गान्तः काष्ठकुड्याश्मसंनिभाः ॥' इति ।

[3]ननु कथं रामादिरत्याद्युद्बोधकारणैः सामाजिकरत्याद्युद्बोध इत्युच्यते—

**व्यापारोऽस्ति विभावादेर्नाम्ना साधारणीकृतिः ।**
**तत्प्रभावेण यस्यासन्पाथोधिप्लवनादयः ॥ ९ ॥**
**प्रमाता तदभेदेन स्वात्मानं प्रतिपद्यते ।**

---

अन्वयव्यतिरेकौ । प्रमाणमाह—**न जायत इति** । तदास्वादो रसास्वादः । रत्यादिवासनां रत्यादितादात्म्येन प्रतीयमानां वासनाम् । मिलितयोरेव तयोः कारणत्वं दर्शयति—**तत्रेति** । श्रोत्रियो वैदिकः । **स** रसास्वादः । **तद्** रत्युद्बोधादर्शनम् । ननु श्रोत्रियादीनां प्राक्तनवासनासत्त्वे किं प्रमाणमिति चेत्, तदभावे प्रमाणासत्त्वेनैव तत्सिद्धेः । न च फलाभाव एव तत्र मानमिति वाच्यम् । इदानींतनवासनाव्यतिरेकस्यैव फलाभावप्रयोजकत्वोपगमेनोपपत्तौ तदभावस्य तत्प्रयोजकत्वकल्पनाया अन्याय्यत्वात् । वस्तुतस्तु इदानींतनवासनायां प्रमाणं नास्ति । नच रागाद्यन्यथानुपपत्तिरेव मानमिति वाच्यम् । तस्या रागादिं प्रत्यजनकत्वादिष्टसाधनताज्ञानादिनैव तत्सिद्धेः । **रङ्गान्तः** नृत्यशालमध्ये । **कुड्यं** भित्तिः । निर्वासनानां काष्ठादिवद्रत्याद्युद्बोधो न जायत इत्यर्थः । रसबोधे साधारण्याभिमानस्य कारणतां व्यवस्थापयितुमाशङ्कते—**ननु कथमिति** । **रागादिरत्याद्युद्बोधकारणैरिति** । सीतादिभिरित्यर्थः । **सामाजिकरत्याद्युद्बोधेः** सामाजिकरत्यादिवासनोद्बोधः । तेषां तं प्रत्यसाधनत्वादित्यर्थः । सामाजिकानां सजातीयरत्यादिसाजात्येनापि नायकाद्यभेदावगाहिरसग्रहोपपत्तौ वक्ष्यमाणसमाधानमकिंचित्करमित्यतो मनुष्यसामाजिकानां सुदुर्जयं प्रति वीरालम्बनोत्साहोद्बोधोऽत्यन्तासंभवीति तमुपपादयितुं वीररसं दर्शयन्समाधत्ते—**व्यापारोऽस्तीति** । स्वाश्रयं साधारणं नायकसामाजिकसंबन्धिनं करोति उभयसंबन्धित्वेन प्रतिपादयतीति साधारणीकृतिः । **तत्प्रभावेण** तज्जन्यसाधारण्याभिमानेन । **यस्य** रामस्य । पाथोधिप्लवनादयः समुद्रनिग्रहादयः । आदिना रावणनिग्रहादिग्रहणम् । **प्रमाता** सामाजिकः । **तदभेदेन** रामाभेदेन । **स्वात्मानं**

---

१. 'रसास्वादहेतुः' इति ग-पुस्तके नास्ति. २. 'तदा' ख-घ-पुस्तकयोर्नास्ति. ३. 'नन्वित्युपोद्घातो' ग-पुस्तके नास्ति.

ननु कथं मनुष्यमात्रस्य समुद्रलङ्घनादावुत्साहोद्बोध इत्युच्यते—

**उत्साहादिसमुद्बोधः साधारण्याभिमानतः ॥ १० ॥**
**नृणामपि समुद्रादिलङ्घनादौ न दुष्यति ।**

रत्यादयोऽपि साधारण्येनैव प्रतीयन्त इत्याह—

**साधारण्येन रत्यादिरपि तद्वत्प्रतीयते ॥ ११ ॥**

रत्यादेरपि स्वात्मगतत्वेन प्रतीतौ सभ्यानां व्रीडातङ्कादिर्भवेत् । परगतत्वेन त्वरस्यतापातः ।

---

स्वम् । 'स्तवोपवासादिभिरप्युदग्रैः स्वरूपमस्यानवलोकयन्तम् । भ्रूभेदभीमाननविम्बमब्धिं विव्याध वाणत्रितयेन रामः ॥' अस्य श्रीरामस्य । अत्र श्रीरामोत्साहस्य समुद्र आलम्बनविभावः । स्वरूपानवलोकनमुद्दीपनविभावः । समुद्रवेधनमनुभावः । भ्रूभेदव्यङ्ग्यः क्रोधो व्यभिचारिभावः । एषु साधारण्याभिमानान्मनुष्यसामाजिकानामपि 'रामोऽहं क्रुद्धः स्वरूपानवलोकनोद्दीपितसमुद्रनिग्रहविषयकोत्साहवान्' इति प्रतिपत्तिरुत्पद्यते । अत्र ज्ञानोपनीतस्य श्रीरामोत्साहस्याभेदेन स्वादनाख्यव्यापारेण स्ववासनैव सामाजिकैरास्वाद्यते । न च 'यस्य हनूमतः पाथोधिप्लवनादयः समुद्रतरणादयः' इति यथाश्रुतमेव सम्यगिति वाच्यम् । तादृशोत्साहस्य वीररसत्वाभावेन प्रकृतानुपयोगित्वात् युद्धदानदयाधर्मोत्साहस्यैव वीररसत्वाङ्गीकारात् । नायकसामाजिकाभेदवोधमुपपाद्य वासनोत्साहाद्यभेदवोधमुपपादयितुमाह—**कथमिति** । मनुष्याणां तादृशोत्साहाद्यसंभवेन साजात्येनाभेदप्रतीतिर्न भवतीति सूचनाय मनुष्यमात्रस्येति । लङ्घनं निग्रहः । **साधारण्याभिमानत इति** । समुद्रलङ्घनोत्साहादिः मम रामादेश्चेति साधारण्यग्रहादित्यर्थः । **न दुष्यति** उपपद्यते । ननु ज्ञानप्रत्यासत्त्या संनिकृष्टस्योत्साहादेः साक्षादेव सामाजिके प्रकारत्वमस्तु किं वासनायाः प्रकारत्वाङ्गीकारेणेति चेत् । न । वासनांशे साक्षात्कारत्वप्रमात्वानुपपत्तेः । लौकिकप्रत्यक्षस्यैव साक्षात्कारत्वाङ्गीकारात् 'पुण्यवन्तः प्रमिण्वन्ति योगिवद्रससंततिम्' इत्यादिप्राचीनव्यवहारेण 'धर्मिणि सर्वमभ्रान्तं प्रकारे तु विपर्ययः' इत्युक्तदिशा रसवोधस्य वासनांशे प्रमात्वमङ्गीक्रियते । एतदभिप्रायेणैव पूर्वकारिकायां प्रमातृपदोपन्यासः । स्थायिभावानां साधारण्यप्रतीतौ प्रतिवन्धकाभावमुपपादयितुमाह—**रत्यादयोऽपीति** । आदिना उत्साहादिपरिग्रहः । **तद्वद्** विभावादिवत् । उपपादयति—**रत्यादेरपीति** । **आत्मगतत्वेन** आत्ममात्रसंवन्धित्वेन । **आतङ्कः** शङ्का । **परगतत्वेन** नायकमात्रसंबन्धित्वेन प्रतीतावित्यन्वयः । **अरस्यतापातो** निरुक्तसाक्षात्कारविषयत्वाभावापत्तिः । एवं च रत्यादिर्ममैवेति नायकस्यैवेति संवन्धविशेषस्वीकाराध्यवसायस्य प्रतिवन्धकस्याभावः सूचितः । एतदुपकरणं नैव ममेति नैव नायकस्येति संवन्धविशेषपरिग्रहाध्यवसायस्याप्यभावो बोध्यः । विभावादौ साधारण्यप्रतीतिं प्रतिवन्धकाभावप्रदर्श-

---

१. 'रत्यादेः—' इत्यारभ्य '—इत्याह' इत्यन्तः पाठः ग-पुस्तके नास्ति। २. 'स्वात्मगतत्वेन' घ.

विभावादयोऽपि [1]प्रथमतः साधारण्येन प्रतीयन्त इत्याह—

**परस्य न परस्येति ममेति न ममेति च।**
**तदास्वादे विभावादेः परिच्छेदो न विद्यते ॥ १२ ॥**

[2]ननु [3]तथापि कथमलौकिकत्वमेतेषां विभावादीनामित्युच्यते—

**विभावनादिव्यापारमलौकिकमुपेयुषाम्।**
**अलौकिकत्वमेतेषां भूषणं न तु दूषणम् ॥ १३ ॥**

[4]आदिशब्दादनुभावनसंचारणे। तत्र विभावनं रत्यादेर्विशेषेणास्वादाङ्कुरणयोग्यतानयनम्। अनुभावनमेवंभूतस्य रत्यादेः समनन्तरमेव रसादिरूपतया भावनम्। संचारणं तथाभूतस्यैव [5]तस्य सम्यक्कारण[6]म्।

---

नेनोपपादयति—**विभावादयोऽपीति**। आदिना अनुभावव्यभिचारिभावयोर्ग्रहणम्। **प्रथमतो** रसबोधात्प्राक्। परस्य नायकस्यैव, न परस्य नैव नायकस्य, ममेति ममैवेति, न ममेति नैव ममेति, तदास्वादे रसास्वादे भाविनि सति परिच्छेदः संबन्धविशेषस्वीकारपरिहाराध्यवसायः। तथा च तादृशाध्यवसायस्य प्रतिबन्धकस्याभावेनोपहितः साधारणीकरणाख्यव्यापारः सामाजिकानां सीतादयो मम रामादेश्चेति साधारणप्रत्ययमव्याहतमेव जनयतीति भावः। लौकिकानामपि विभावादीनामलौकिकत्वसाधनोपायं साधयितुमाशङ्कते—**नन्विति। तथापि** साधारणीकृत्याख्यव्यापारस्वीकारेऽपि। एवं रसोत्पत्त्यनुगुणमेतेषां विभावादीनाम्। नन्वेतेषामलौकिकत्वं रसोत्पत्तेर्विगुणमेव न त्वनुगुणमलौकिकात्फलसिद्धेरदृष्टचरत्वादत आह—**भूषणमिति।** 'अलौकिकरससिद्धेः' इति शेषः। **भूषणमनुगुणम्। दूषणं** विगुणम्। तथा चालौकिकाल्लौकिकफलसिद्धिर्मास्तु, विभावादीनां काव्यनिबन्धनादलौकिकत्वे सति तेभ्योऽलौकिकरसोत्पत्तिः सामाजिकानामनुभवसिद्धैवेति दुरपलप एवालौकिकयोः कार्यकारणभाव इति भावः। रसस्यालौकिकत्वमुपपादयिष्यते। विभावनादिपदव्युत्पत्तिलभ्यमेव विभावनादिस्वरूपमाह—**तत्रेति। विशेषेणेति।** विभावनपदघटितस्य विशब्दस्यार्थः। अतिशयेनेति तदर्थः। **अङ्कुरण**मङ्कुरसदृशीभवनं सूक्ष्मरूपेणाविर्भावः। एवं च रत्यादेः सूक्ष्मास्वादरूपेण य आविर्भावस्तच्छक्तिप्रापणमिति समुदितार्थः। प्राप्त्यर्थचौरादिक'भू'धातुना विभावनपदसिद्धिरवधेया। **एवंभूतस्य** सूक्ष्मास्वादरूपेणाविर्भूतस्य। समनन्तरमिति अनुभावनपदघटितस्यानुशब्दस्यार्थः। **रसादिरूपतया** शृङ्गारादिरूपतया। यद्वा रत्यादेरित्यादिपदेन देवादिविषयरत्यादीनामपि परिग्रहः। रसादीत्यादिपदेन भावादिपरिग्रहः। एतेन भावादीनामपि

---

१. 'प्रथमतः' क-ख-पुस्तकयोर्नास्ति. २. 'नन्वित्युपोद्घातः' ग-पुस्तके नास्ति. ३. 'तथापि' क-पुस्तके नास्ति. ४. 'आदि–' इत्यादिः 'रणे' इत्यन्तः पाठो ग-पुस्तके नास्ति. ५. 'तस्य' ग-पुस्तके नास्ति. ६. 'परिपोषणमित्यर्थः' इत्यधिकं ग-पुस्तके. ७. 'अनुभवं' पुस्तकान्तरे. ८. 'दृष्टचरणत्वात्' पुस्तकान्तरे.

[1]विभावादीनां यथासंख्यं कारणकार्यसहकारित्वे कथं त्रयाणामेवं[2] रसोद्बोधे कारणत्वमित्युच्यते—

[3]कार्यकारणसंचारिरूपा अपि हि लोकतः ।
रसोद्बोधे विभावाद्याः कारणान्येव ते मताः ॥ १४ ॥

[4]ननु तर्हि कथं रसास्वादे तेषामेकः प्रतिभास इत्युच्यते—

---

विभावादिजन्यत्वमुक्तं भवति । **भावनमुत्पादनम्** । सूक्ष्मास्वादरूपेणाविर्भूतस्यापि तस्य रसव्यपदेशो नास्ति, किं त्वनुभावपरिपुष्टस्यैव । नत्वङ्कुरे वृक्ष इति व्यपदेशः, किंतु काण्डपल्लवोद्गम एव । **तथाभूतस्य** रसादिरूपेणोत्पन्नस्य, तस्य रत्यादेः सम्यगर्थं चारणमास्वादनपात्रीकरणम् । व्यभिचारिभावेनात्यन्तपरिपुष्टस्यैव रत्यादेरत्यन्तास्वादनमिति भावः । एवं चास्वादपरिपोषातिपरिपोषजनकत्वेनैवानुभावसंचारिभावयोरास्वादजनकत्वमिति भावः । विभावाः कारणानि । अनुभावाः कार्याः (र्याणि) संचारिणः । सहकारिण इति क्रमः । ननु सहकारिपदं कारणविशेषपरं कथं रत्यादेः कार्यविशेषाणां निर्वेदादिसंचारिभावानां सहकारित्वमुपपद्यते । उच्यते—साधनस्यानुमानवादिमते स्वकारणानुमितौ मनसः सहकारितया लोके तथाव्यपदेशात् । ननु तथापि निर्वेदादीनां रत्यादिकार्यत्वे नानुभावत्वमेव युज्यते कथं संचारित्वमिति चेत् । न । तेषां व्यापारवैलक्षण्येन फलवैलक्षण्यात्, व्यपदेशवैलक्षण्यस्योचितत्वात् । **संचारिरूपाः** सहकारिरूपाः । **लोकतः** लोके कारणान्येव । इति निरुक्तव्यापारत्रयबलाद्रत्यादेरास्वादरूपत्वेनोत्पादनादिति भावः । ननु 'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः' इति **मुनिवचनाद्**विभावादीनां समुदितानामेव कारणत्वं वाच्यम् । तथा सति कारणान्येवेति बहुवचनमनुपपन्नम् । तादृशस्थले एकवचनस्यैव युक्तत्वात्, तृणारणिन्यायेन प्रत्येकं कारणताप्रत्ययप्रसङ्गाच्च । अत एव **काव्यप्रकाशे**—'शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात् । काव्यज्ञशिक्षयाभ्यास इति हेतुस्तदुद्भवे ॥' इत्यत्र 'त्रयः समुदिता हेतुर्न तु हेतवः' इत्युक्तम् । उच्यते—कारणपदस्यैकधर्मावच्छिन्नकार्यतानिरूपितकारणतापरत्वे ह्येकवचनम् । कारणतामात्रपरत्वे तु तादृशस्थलेऽपि बहुवचनं साधु । प्रकृते रत्यादेः कार्यभूतयोरप्यनुभावव्यभिचारिभावयो रसरूपतोत्पत्तौ कारणत्वमिति कारणतामात्रे तात्पर्यम्, न तु तादृशकारणतायाम् । काव्यप्रकाशनिर्वचनस्य तु कार्यकारणभावग्राहकतया कार्यतावच्छेदकेऽपि तात्पर्यमिति । रसं प्रति विभावादीनां व्यञ्जनाजन्यैकज्ञानविषयत्वे सत्येव कारणत्वमुपपादयितुमाह—**ननु तर्हीति** । **तेषां** कारणीभूतविभावादीनाम् । **एकप्रतिभास** एकरसस्वरूपतया परिणामः ।

---

१. 'ननु विभावादीनां प्रत्येकं कारणकार्यसहकारिरूपाणां रसं प्रति कथं कारणत्वमित्युच्यते' ग. २. 'अपि' ख. ३. 'कारणकार्य' ख; 'कारण' घ. ४. नन्वित्यतः प्राक् तदुक्तं ध्वनिकृता—'विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः । आनीयमानः स्वाद्यत्वं स्थायीभावो रसः स्मृतः ॥' इत्यधिकं ग-पुस्तके.

**प्रतीयमानः प्रथमं प्रत्येकं हेतुरुच्यते ।**
**ततः संमिलितः सर्वो विभावादिः सचेतसाम् ॥ १५ ॥**
**प्रपाणकरसन्यायाच्चर्व्यमाणो रसो भवेत् ।**

यथा खण्डमरिचादीनां संमेलनादपूर्व इव कश्चिदास्वादः प्रपाणकरसे संजायते । विभावादिसंमेलनादिहापि तथेत्यर्थः ।

ननु यदि विभावानुभावव्यभिचारिभिर्मिलितैरेव रसस्तत्कथं तेषामेकस्य द्वयोर्वा सद्भावेऽपि स स्यादित्युच्यते—

**सद्भावश्चेद्विभावादेर्द्वयोरेकस्य वा भवेत् ॥ १६ ॥**
**झटित्यन्यसमाक्षेपे तथा दोषो न विद्यते ।**

अन्यसमाक्षेपश्च प्रकरणादिवशात् ।

यथा—

'दीर्घाक्षं शरदिन्दुकान्ति वदनं बाहू नतावंसयोः
संक्षिप्तं निबिडोन्नतस्तनमुरः पार्श्वे प्रमृष्टे इव ।

---

विभिन्नकारणानां विभिन्नकार्यतया परिणामस्यैवौचित्यादिति भावः । विभावादेरतीतस्यापि रसास्वादकारणत्वकथनं तज्ज्ञानाभिप्रायेणेति ध्येयम् । **प्रतीयमानः प्रत्येकमिति ।** प्रत्येकं विभावादौ साधारण्यप्रतीतिरित्यभिप्रायेणेदम् । नत्वन्तरा प्रत्येकं प्रतीत्यनन्तरं कल्पनीयं प्रमाणाभावात् । ततः प्रत्येकप्रत्ययानन्तरं संवलितः व्यञ्जनया विशिष्टवैशिष्ट्यावगाह्येकज्ञानरूपतां प्राप्तः **प्रपाणकरसन्यायात्** प्रपाणकद्रव इव चर्व्यमाणः । स्वाभिन्नाह्लादमयचर्वणविषयः प्रपाणकः । पक्षे विलक्षणरसवत्तयोपलभ्यमानो रसश्चिदात्मकः पदार्थः । उपमानोपमेययोश्चर्व्यमाणत्वमुपपादयति— **यथेति ।** खण्डमरिचादीनामित्यादिपदेनामिक्षाकर्पूरयोर्ग्रहणम् । यथा खण्डादिचतुष्टयमेलकाज्जायमाने प्रपाणकद्रवे माधुर्यादिविलक्षणो विशिष्य निर्देष्टुमशक्य आस्वादो रसाख्यगुणविशेष इव विभावादिचतुष्टयमेलकात्तथा जायमाने शृङ्गारादिरसेऽप्याह्लादः संजायत इत्यन्वयः । 'देवक्यां देवरूपिण्यां विष्णुः सर्वगुहाशयः । आविरासीद्यथा प्राच्यां दिशीन्दुरिव पुष्कलः' इत्यादाविव सप्तम्यन्तप्रथमान्तपदार्थयोरुपमाद्वयमुपस्थापयतोर्यथेवशब्दयोर्न पौनरुक्त्यम् । अत एव रसास्वादपदयोः श्लिष्टत्वादुपमानोपमेयभावः । **स स्यात्** रसः स्यात् । **समाक्षेपे** व्यञ्जनया बोधे सति । **दोषो** रसानुपपत्तिः । **प्रकरणा**दिवशात् प्रस्तावादिवैशिष्ट्यात् । **दीर्घाक्षमिति ।** बाहू

---

१. 'प्रतीयते' ग. २. 'यदि' ग-पुस्तके नास्ति. ३. 'रसः' क-ख. ४. ग-पुस्तके तु 'वियदलिमलिनाम्बुगर्भमेघं मधुकरकोकिलकूजितैर्दिशां श्रीः । धरणिरभिनवाङ्कुराङ्कटङ्का प्रणतिपरे दयिते प्रसीद मुग्धे ॥' आलम्बनोद्दीपनविभावमात्रवर्णनेऽपि प्रसीदेति पदसामर्थ्यात्कटाक्षविक्षेपभुजाक्षेपादीनामनुभावादीनां मुग्धे इत्यतो गर्वामर्षासूयादीनां च व्यभिचारिणामौचित्यादेवाक्षेपः । इत्युदाहरणं वर्तते.

मध्यः पाणिमितो नितम्बि जघनं पादावुदग्राङ्गुली
छन्दो नर्तयितुर्यथैव मनसः सृष्टं तथास्या वपुः ॥'

अत्र मालविकामभिलषतोऽग्निमित्रस्य मालविकारूपविभावमात्रवर्णनेऽपि संचारिणामौत्सुक्यादीनामनुभावानां च नयनविस्फारादीनामौचित्यादेवाक्षेपः । एवमन्याक्षेपेऽप्यूह्यम् ।

अनुकार्यगतो रस इति [1]वदतः प्रत्याह—

**पारिमित्याल्लौकिकत्वात्सान्तरायतया तथा ॥ १७ ॥**
**अनुकार्यस्य रत्यादेस्तद्बोधो न रसो भवेत् ।**

[1]सीतादिदर्शनादि[2]जो रामादिरत्याद्युद्बोधो हि परिमितो लौकिको नाट्यकाव्यदर्शनादेः सान्तरायश्च, [3]तस्मात्कथं रसरूपतामियात् । रसस्यैतद्धर्मत्रितयविलक्षणधर्मकत्वात् ।

---

नताविति स्त्रीणां नतस्कन्धत्वं प्रशस्तमिति भावः । संक्षिप्तमविस्तीर्णं स्त्रीणामविस्तीर्णवक्षस्त्वं गुण इति भावः । प्रमृष्टे लिप्ते । पार्श्वोऽध्वामलक्ष्यत्वादियमुत्प्रेक्षा । छन्दोऽभिप्रायः । मनसो नर्तयितुश्चपलीकर्तुः कामस्य । अस्या मालविकायाः ॥ **औचित्याद्** वाच्यस्य विभावस्य वैशिष्ट्यात् । **एवमिति** । अन्याक्षेपे विभावाक्षेपे । यथा—'परिमृदितमृणालीम्लानमङ्गं प्रवृत्तिः कथमपि परिवारप्रार्थनाभिः क्रियासु । कलयति च हिमांशोर्निष्कलङ्कस्य लक्ष्मीमभिनवकरिदन्तच्छेदकान्तः कपोलः ॥' [4]अत्र विप्रलम्भशृङ्गारस्यानुभावमात्रस्याङ्गसौष्ठवादेः सत्त्वम् । तदालम्बनविभावस्य, तच्चेष्टादेरुद्दीपनविभावस्य, व्यभिचारिभावस्य विषादादेश्चाक्षेपेण लाभः । **अनुकार्यो** नायकः । **पारिमित्या**न्नायकमात्रगतत्वेनाल्पत्वात् । रसस्य तु नानासामाजिकगतत्वेन तदसंभवादिति भावः । **लौकिकत्वादिति** । रसस्यालौकिकत्वमलौकिकविभावादिजन्यत्वाद्वक्ष्यमाणप्रकारेण चावगन्तव्यम् । **सान्तरायतया** नाट्यकाव्यदर्शनश्रवणप्रतिकूलया । **तस्मा**त्पारिमित्यादित्रयसंबन्धात् । पारिमित्यादीनां रसभेदव्याप्यत्वमुपपादयति—**रसस्येति** । एतदिति पारिमित्यादीत्यर्थः । विलक्षणत्वं च तदभा-

---

1 वदत इति । भट्टलोल्लटादीन् ॥

---

१. 'अनुकार्यो रामादिः, तद्गतो रत्यादिना परिमितः, न अलौकिकश्च, कालान्तरभूतत्वात्सान्तरश्च । स कथमपरिमितालौकिकानुभूयमानो रसतां गच्छेत् ।' इति पाठान्तरं ग-पुस्तके. २. 'दितः' ख. ३. 'तत्' ख. ४. 'अत्र संभोगशृङ्गारालम्बनविभावस्य नायकस्य तच्चेष्टादेरुद्दीपनविभावस्य चाक्षेपेण लाभः' इति पुस्तकद्वये पाठान्तरम्.

अनुकर्तृगतत्वं चास्य निरस्यति—

**शिक्षाभ्यासादिमात्रेण राघवादेः सरूपताम् ॥ १८ ॥**
**दर्शयन्नर्तको नैव रसस्यास्वादको भवेत् ।**

किं च ।

**काव्यार्थभावनेनायमपि सभ्यपदास्पदम् ॥ १९ ॥**

यदि पुनर्नटोऽपि काव्यार्थभावनया रामादिस्वरूपतामात्मनो दर्शये- त्तदा सोऽपि सभ्यमध्य एव गण्यते ।

**नायं ज्ञाप्यः स्वसत्तायां प्रतीत्यव्यभिचारतः ।**

यो हि ज्ञाप्यो घटादिः स सन्नपि कदाचिदज्ञातो भवति न ह्ययं तथा प्रतीतिमन्तरेणाभावात् ।

---

वव्याप्यत्वमेव । एवं च यद्धर्माभावव्याप्यो यद्वृत्तिधर्मस्तद्धर्मस्तद्भेदव्याप्य इति नियमः संपद्यते । यथा—पटवृत्तिधर्मः पटत्वं घटत्वरूपधर्माभावव्याप्यो भवति, घटत्वधर्मोऽपि पटभेदव्याप्यो भवति । यथाश्रुतं तु न सम्यक् । तथाहि—यद्धर्मो यद्वृत्तिधर्मभिन्नस्तद्धर्मस्तद्भेदव्याप्य इति नियमो नोपपद्यते । घटत्वं घटवृत्तिधर्मान्तरविलक्षणं न तु घटभेदव्याप्यमिति व्यभिचारात् । यदि तु यद्वृत्तित्वावच्छिन्नप्रतियोगिताको भेदो विवक्ष्यते तदा नायं दोष इत्यवधेयम् । **अनुकर्तृगतत्वं** नटवृत्तित्वम् । **अस्य** रसस्य । गुरुतो ग्रहणं शिक्षा । शिक्षितार्थस्य मुहुरनुष्ठानेन संस्कारातिशयोऽभ्यासः । मात्रपदेन काव्यार्थभावनाव्यवच्छेदः । **अयमपि** नर्तकोऽपि । सभ्यपदास्पदं सभ्यपदवाच्यः । रसस्य स्वप्रकाशत्वं पर्यवसाययितुं ज्ञानान्तरग्राह्यत्वं निरस्यति—**नायमिति** । अयं रसो ज्ञाप्यो जन्यज्ञानविषयः, रसस्य जन्यताभावो निरूपयिष्यते, नातो बाधः । ईश्वरज्ञानविषयत्वस्य केवलान्वयितया साध्याप्रसिद्धिरतो जन्येति । **स्वसत्तायां** स्वावस्थाने । षष्ठ्यर्थे सप्तमी । प्रतीतिं विना स्वावस्थानस्याभावादित्यर्थः । अत्र साध्यसाधनयोः पक्षमात्रवृत्तित्वेनान्वयदृष्टान्ताभावादन्वयव्याप्तिग्रहो न संभवतीति व्यतिरेकव्याप्तिग्रहोपायं व्यतिरेकदृष्टान्तमाह—**यो हीति** । अत्र वीप्सा वेदितव्या । **सन्नपि** अवस्थितोऽपि । **कदाचित्** ज्ञानसामग्र्यभावदशायाम् । तथा च यो यो ज्ञाप्यः स स प्रतीतिं विना कदाचिदवतिष्ठते यथा घटादिरित्यभिप्रायः । अत्र ज्ञानाभावकालीनावस्थानाभाव एव हेतुः पर्यवसन्नः । ज्ञानं चात्र स्वविषयकमीश्वरज्ञानातिरिक्तमवगन्तव्यम् । नातो

---

1 अन्विति । न्यायरीत्या नाट्यशास्त्रफक्किकां योजयतां श्रीशङ्कुकादीनां मते रसस्यानुकर्तृगतत्वम् । इह फक्किकेत्युक्तिस्तु नवीनलेखाभिप्रायेण । केचन प्रकृतं नाट्यशास्त्रोक्तगद्यं सूत्रत्वेन व्यवहरन्ति तन्निरासार्थम् । एतच्छास्त्रं तु पद्यगद्यात्मकम् ॥

**यस्मादेष विभावादिसमूहालम्बनात्मकः ॥ २० ॥**

**तस्मान्न कार्यः—**

यदि रसः कार्यः स्यात्तदा विभावादिज्ञानकारणक एव स्यात् । ततश्च रसप्रतीतिकाले विभावादयो न प्रतीयेरन् । कारणज्ञानतत्कार्यज्ञानादीनां युगपददर्शनात् । नहि चन्दनस्पर्शज्ञानं तज्जन्यसुखज्ञानं चैकदा संभवति । रसस्य च विभावादिसमूहालम्बनात्मकतयैव प्रतीतेर्न विभावादिज्ञानकारणकत्वमित्यभिप्रायः ।

**नो नित्यः पूर्वसंवेदनोज्झितः ।**

---

हेत्वप्रसिद्धिः । ज्ञाप्यत्वाभावस्य साध्यस्य व्यतिरेको ज्ञाप्यत्वमेव निरुक्तहेतुव्यतिरेकश्च ज्ञानाभावकालीनावस्थानं तयोः सहचारग्रहेण साधने साध्यव्याप्तिं ग्राहयित्वा पक्षधर्मत्वं ग्राहयति—**न ह्ययमिति** । अयं रसः । तथा सन्नपि न कदाचिद् ज्ञातः । तत्रापि हेतुमाह—**प्रतीतिमिति** । **अन्तरेण** विना । रसस्य कार्यसुखज्ञानान्तरवैलक्षण्यात्कार्यत्वाभावं साधयति—**यस्मादिति** । एष रसः विभावादिसमूहालम्बनात्मकः यथासंभवविशेषणविशेष्यभावापन्नविभावादिसमूहविषयकः । 'रसः कार्यत्वाभाववान् सुखमयत्वे सति विभावादिसमूहविषयकत्वात्' इत्यनुमानम् । रससमानाकारे व्यञ्जनाजन्यज्ञाने व्यभिचारवारणाय सत्यन्तं हेतुविशेषणम् । बाधोत्सारकं तर्कमाह—**यदीति** । रसप्रादुर्भावप्राक्क्षणे विभावादिज्ञानस्यैव संभवात्तत्कारणकत्वमेवोपपद्यत इत्येवकारेण । ननु कार्यत्ववति घटादौ विभावादिज्ञानकारणकत्वं नास्तीति मूलशैथिल्यमिति चेत् । न । विभावादिविशिष्टवैशिष्ट्यावगाहिज्ञानत्वसमानाधिकरणकार्यत्वस्यापाद्यस्य विवक्षणीयत्वाद् रससमानाकारे व्यञ्जनाजन्यज्ञानादावापाद्यापादकोर्व्याप्तिग्रहः । अत्रेष्टापत्तौ दोषमाह—**ततश्चेति** । रसस्य विभावादिज्ञानकारणकत्वाङ्गीकाराच्चेत्यर्थः । **रसप्रतीतिकाले** रसप्रतीतौ **न प्रतीयेरन्** न विषयाः स्युः । **ज्ञानेति** । ज्ञायमानकारणज्ञायमानतज्जन्यसुखयोर्युगपद्दर्शनात् एकसंविद्विषयत्वादर्शनात् । एतदेव दृष्टान्तेनोपपादयति—**नहीति** । चन्दनस्पर्शतज्जन्यसुखं चैकज्ञानविषयो न भवतीत्यर्थः । आपत्तेरनुगुणं बाधं दर्शयति—**रसस्य चेति** । आनन्दरूपस्य विभावादिसमूहालम्बनात्मकप्रतीतिरूपस्येत्यर्थः । एवं च विभावादिज्ञानकारणकत्वरूपस्यापाद्यस्याभावे सिद्धे तेनैव कार्यत्वरूपविशेष्याभावकृतो निरुक्तापादकस्य विशिष्टाभावः सिध्यतीति भावः । तदुक्तं काव्यप्रकाशटीकाकृता **चण्डीदासेन**—कार्यं सुखं स्वकारणैः सह नैकस्यां संविदवभासमानं दृष्टम् । एतच्च सुखं विभावादिसंवलितं भासते, तस्मान्न कार्यम्' इति । एवं च विभावादिज्ञानस्य रसं प्रति यत्कारणत्वमुक्तं तत्पूर्ववर्तित्वमात्रेणौपचारिकमिति ध्येयम् । रसस्य नित्यत्वाभावमप्युपपादयति—**नो नित्य इति** । एष इत्य-

**असंवेदनकाले हि न भावोऽप्यस्य विद्यते ॥ २१ ॥**

न खलु नित्यवस्तुनोऽसंवेदनकालेऽसंभवः ।

**नापि भविष्यन्साक्षादानन्दमयप्रकाशरूपत्वात् ।**
**कार्यज्ञाप्यविलक्षणभावान्नो वर्तमानोऽपि ॥ २२ ॥**
**विभावादिपरामर्शविषयत्वात्सचेतसाम् ।**
**परानन्दमयत्वेन संवेद्यत्वादपि स्फुटम् ॥ २३ ॥**
**न निर्विकल्पकं ज्ञानं तस्य ग्राहकमिष्यते ।**

---

नुषज्यते । पूर्वसंवेदनं विभावादिज्ञानात् प्राग्ज्ञानं तद्रहित इत्यर्थः । यदि रसो नित्यः स्यात्तदा विभावादिज्ञानात्प्रागपि ज्ञायेतेति बाधोत्सारकस्तर्कः । ननु विभावादिज्ञानं तद्ग्राहकमिति प्राक्काले कथं रसः प्रतीयेतेत्यतो दोषान्तरमाह—**असंवेदनेति** । अस्य रसस्य संवेदनशरीरत्वादसंवेदनकाले सुतरामसंभव इति भावः । साध्यसाधनयोर्व्याप्तिग्राहकं साध्याभावसाधनाभावयोः सहचारं दर्शयति—**न खल्विति** । रसस्य भविष्यत्त्वाभावं साधयति—**नापीति** । एष इत्यनुषज्यते । **साक्षादिति** । साक्षात्कारविषयानन्दबहुलप्रकाशरूपत्वादित्यर्थः । लौकिकप्रत्यक्षे विषयस्य कारणत्वाङ्गीकारेण भविष्यतस्तदसंभवादिति भावः । रसस्य वर्तमानत्वाभावमपि साधयति—**ज्ञाप्येति** । ज्ञाप्यकार्येति प्रामादिकः पाठ आर्याघटकगणभङ्गप्रसङ्गात् । कार्यज्ञाप्येत्येव पाठः सम्यक् । एवं वर्तमान इत्यत्र नशब्दः प्रामादिकः, नोशब्दः सम्यक् । वर्तमानस्य वस्तुनः कार्यज्ञाप्यान्यतरत्वनियमादिति भावः । रसग्रहस्य निर्विकल्पकज्ञानस्वरूपत्वाभावं साधयति—**विभावादीति** । परामर्शोऽत्र विशिष्टवैशिष्ट्यावगाही ग्रहः । तद्विषयत्वात्तन्मात्रविषयत्वात् । **परानन्देति** । परमानन्दत्वप्रकारकसंवेदनविषयत्वादित्यर्थः । **निर्विकल्पकं** संसर्गानवगाहि । भासमानसंसर्गप्रतियोगित्वरूपप्रकारत्वस्यापि संसर्गग्रहमन्तरेणासंभवादिति भावः । **तस्य** रसस्य । **ग्राहकं** विषयतानिरूपकम् । [3]रसग्रहो निर्विकल्पस्वरूप

---

1. नेति । नामरूपजात्यादिशून्यं निर्विकल्पकम् । तद्युक्तं सविकल्पकम्, तत्र रसः केन गृह्यत इत्याशङ्क्य नान्यतरेण गृह्यत इति व्यवस्थापितम् ॥

---

१. आर्येयं मुद्रितपुस्तकेषु पदच्छेदवैलक्षण्येन गद्यरूपतां नीता. २. 'पूर्वेति । संवेदनात्पूर्वं प्राग्वृत्ति पूर्वसंवेदनं धर्मपरनिर्देशात्प्राग्वृत्तित्वमस्त्येव । रसस्य तद्विलक्षणैतद्धर्मयोगित्वान्नित्यत्वाभावः सिध्यतीति भावः । ननु स्वप्राग्वृत्ति यत्संवेदनं तद्रहित इत्यर्थः । रसस्योत्पत्तेः प्रागनुमित्यादिसंभवे स्वप्राग्वृत्तिसंवेदनविषयत्वाभावस्य हेतोः स्वरूपासिद्धेः, नित्यानां प्राक्कालासंभवेन निरुक्तहेतोस्तत्र सद्भावादव्यभिचाराच्च । नापि पूर्वमतीतं यत्संवेदनं तद्विषयत्वाभावो हेतू रससंवेदनस्यापि । अतीतत्वसंभवेनातीतत्वसंवेदनविषयत्वस्य केवलान्वयितया तस्याप्रसिद्धेः । ननु रसस्य नाशोत्तरमप्युपनीतभानादिसंभवात्संवेदनप्राग्वृत्तित्वाभावस्य हेतोः स्वरूपासिद्धत्वमत आह—असंवेदनेति ।' इति पुस्तकान्तरे. ३. 'रस' इत्यादिः '–ध्येयम् ।' इत्यन्तः पाठः पुस्तकान्तरे न दृश्यते.

**तथाभिलापसंसर्गयोग्यत्वविरहान्न सः ॥ २४ ॥**

**सविकल्पकसंवेद्यः—**

सविकल्पकज्ञानसंवेद्यानां हि वचनप्रयोगयोग्यता । न तु रसस्य तथा ।

**साक्षात्कारतया न च ।**

**परोक्षस्तत्प्रकाशो नापरोक्षः शब्दसंभवात् ॥ २५ ॥**

तत्कथय कीदृगस्य तत्त्वमश्रुतादृष्टपूर्वनिरूपणप्रकारस्येत्याह—

**तस्मादलौकिकः सत्यं वेद्यः सहृदयैरयम् ।**

तत्किं पुनः प्रमाणं तस्य सद्भाव इत्याह—

**प्रमाणं चर्वणैवात्र स्वाभिन्ने विदुषां मतम् ॥ २६ ॥**

---

इत्यर्थः । विभावादिनिष्ठप्रकारतायाः परमानन्दत्वनिष्ठप्रकारतायाश्च निरूपकस्य रसग्रहस्य निष्प्रकारात्मकनिर्विकल्पकस्वरूपत्वं न संभवतीति भावः । एतेन स्वमात्रग्राह्यस्य रसस्य निर्विकल्पकज्ञानरूपत्वमपि न सिध्यतीति ध्येयम् । रसग्रहस्य सविकल्पकज्ञानस्वरूपत्वाभावमपि साधयति—**तथेति** । अभिलापो वचनं तस्य संसर्गः प्रयोगः । तद्योग्यत्वाभावादित्यर्थः । **स** रसः सविकल्पकसंवेद्यः संसर्गावगाहिज्ञानविषयः । प्रागुक्तहेतुद्वयासंगतेरस्य सविकल्पकज्ञानविषयत्वमस्त्येव । किंतु सविकल्पकवेद्यान्तरादस्य वैलक्षण्यसाधने तात्पर्यं वेदितव्यम् । स्वप्रकाशकत्वेनापि ज्ञानान्तरग्राह्यात्सविकल्पकादस्य वैलक्षण्यं बोध्यम् । गुरुनये तु—सविकल्पकज्ञानानां स्वेनैव ग्रह इति नैतद्वैलक्षण्यम् । **साक्षात्कारतयेति** । स्वादनाख्यव्यापारस्य मनःसंनिकर्षत्वाङ्गीकारेण तज्जन्यत्वादिति भावः । **परोक्षः** प्रत्यक्षविलक्षणः । **तत्प्रकाशो** रसग्रहो **नापरोक्षः** नापि प्रत्यक्षरूपः । **शब्दसंभवात्** काव्यजन्यविभावादिज्ञानजन्यत्वनियमात् । अनेन प्रत्यक्षान्तरवैलक्षण्यमेव साधितं न तु प्रत्यक्षभिन्नत्वम् । प्रागुक्तविरोधात् । **अस्य रसस्य तत्त्वं** याथार्थ्यम् । **अश्रुतोऽदृष्टपूर्वश्च निरूपणप्रकार** इतरभेदानुमापको धर्मः स्वभावो यस्य तस्येत्यर्थः । **तस्मा**दुपदर्शितलौकिकज्ञानानन्दवैलक्षण्यात् । **सत्यमि**त्येवकारार्थे । अलौकिक एवेत्यर्थः । अन्यत्राश्रवणदर्शनं चालौकिकवस्तुसिद्धौ गुण एव न तु दोष इति भावः । तदुक्तम्—'अलौकिकसिद्धेर्भूषणमेव न तु दूषणम्' इति । **विदुषां चर्वणे**त्यन्वयः । **अत्र** रसे । **स्वाभिन्ने** चर्वणास्वरूपे । तदुक्तम्—'चर्वणैव भगवती स्वसंवित्स्व-

---

1. तथेति । तथेत्यादि सविकल्पकसंवेद्य इत्यनेनान्वेति । आस्वादे ज्ञानान्तरासंभवाद्रसमात्रविषयिण्यां चर्वणायां नामरूपाद्युल्लेखाभावाच्च न सविकल्पकत्वपक्षोऽपि संभवतीति तात्पर्यम् ॥

---

१. 'सविकल्पक—' इत्यादि फक्किका ग-पुस्तके नास्ति.

चर्वणा आस्वादनम् । तच्च 'स्वादः काव्यार्थसंभेदादात्मानन्दसमुद्भवः' इत्युक्तप्रकारम् ।

ननु यदि रसो न कार्यस्तत्कथं महर्षिणा 'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः'[1] इति लक्षणं कृतमित्युच्यते—

**निष्पत्त्या चर्वणस्यास्य निष्पत्तिरुपचारतः ।**

यद्यपि रसाभिन्नतया चर्वणस्यापि न कार्यत्वं तथापि तस्य कादाचित्कतया उपचरितेन कार्यत्वेन कार्यत्वमुपचर्यते ।

**अवाच्यत्वादिकं तस्य वक्ष्ये व्यञ्जनरूपणे ॥ २७ ॥**

[१]तस्य रसस्य । आदिशब्दादलक्ष्यत्वादि ।

[२]ननु यदि मिलिता रत्यादयो रसास्तत्कथमस्य स्वप्रकाशत्वं कथं वाखण्डत्वमित्याह—

**रत्यादिज्ञानतादात्म्यादेव यस्माद्रसो भवेत् ।**
**ततोऽस्य स्वप्रकाशत्वमखण्डत्वं च सिध्यति ॥ २८ ॥**

[३]यदि रत्यादिकं प्रकाशशरीरादतिरिक्तं स्यात्तदैवास्य स्वप्रकाशत्वं न

---

रूपादभिन्ने तस्मिन्प्रमाणम्' इति । **ननु यदीति** । अस्या विप्रतिपत्तेः 'तस्मान्न कार्यः' इत्यनन्तरमेवोत्थापयितुमौचित्येऽपि सिद्धान्तस्य चर्वणाग्रहसाध्यत्वाच्चर्वणानिरूपणानन्तरमेवोत्थापनमुचितमेव । **महर्षिणा** भरतेन । **अस्य** रसस्योपचारतः स्वाश्रयग्राह्यत्वसंबन्धेन । प्रतीयत इति शेषः । **तस्य** चर्वणस्य । **कादाचित्कतया** आविर्भावतिरोभाववशेन कदाचिद्भवतया । अत्राभेदे तृतीया । **उपचरितेन** लक्षणया प्रतीतेन । **कार्यत्वेन** कार्यसादृश्येन हेतुना कार्यत्वं कार्यसादृश्यमुपचर्यते निरुक्तपरम्परासंबन्धेन प्रयुज्यते । **अवाच्यत्वमनभिधेयत्वम्** । **व्यञ्जनानिरूपणे** व्यञ्जनायाः प्रामाण्यनिरूपणे पञ्चमपरिच्छेदे । अलक्ष्यत्वादीत्यादिना तात्पर्यग्राह्यत्वपरिग्रहः । रसस्य स्वप्रकाशत्वमखण्डत्वं चोपपादयति—**ननु यदीति**। स्वप्रकाशत्वं स्वस्वरूपज्ञानविषयत्वं रत्यादीनां तदसंभवादिति भावः । अखण्डत्वमेकरूपत्वं परिणामवादिमते । सिद्धान्तमाह—**रत्यादिरिति** । **अस्य** रसस्य । न तथा प्रकाशशरीरादतिरिक्तत्वम् । ननु रसस्य स्वप्रकाशचिन्मयत्वाङ्गीकारेण तद्ग्राहकस्य चर्वणस्यापि तद्रूपत्वमुपपन्नम् । एवं च 'निष्पत्त्या चर्वणस्यास्य निष्पत्तिरुप-

---

1. विभावेति । फक्किकायां 'विभावादिसंयोगात्' इति पञ्चम्या विभावादीनां हेतुत्वमुक्तम् । तच्च कारकत्वं ज्ञापकत्वं वा स्यादिति शङ्कोद्भावनम् ॥

---

१. 'तस्य-' इत्यादि '-दि' इत्यन्तं ग-पुस्तके नास्ति. २. नन्वित्याद्युपोद्घातः ग-पुस्तके न दृश्यते. ३. 'यदि-' इत्यादिः '-उपेया इति च' इत्यन्तः पाठो ग-पुस्तके नास्ति.

सिध्येत् । न च तथा । तादात्म्याङ्गीकारात् । यदुक्तम्[1]—'यद्यपि रसानन्यतया चर्वणापि न कार्या (र्यम्) तथापि कादाचित्कतया कार्यत्वमुपकल्प्य तदेकात्मन्यनादिवासनापरिणतिरूपे रत्यादिभावेऽपि व्यवहार इति भावः' इति । 'सुखादितादात्म्याङ्गीकारे चास्माकीं सिद्धान्तशय्यामधिशय्य दिव्यं वर्षसहस्रं प्रमोदनिद्रामुपेया' इति च[2] । '[3]अभिन्नोऽपि स प्रमात्रा वासनोपनीतरत्यादितादात्म्येन गोचरीकृतः' इति च । ज्ञानस्य स्वप्रकाशत्वमनङ्गीकुर्वतामुपरि वेदान्तिभिरेव पातनीयो दण्डः । तादात्म्यादेवास्याखण्डत्वम् ।

---

चारतः' इति यदुक्तं तदसंगतमित्यत आह—**यद्यपीति** । उपकल्प्य लक्षणया व्यवहृत्य । तदेकात्मनि चर्वणास्वरूपे । **अनादीति** । सामाजिकानां प्राक्तनी या वासना तस्याः परिणतिरूपे । आविर्भूतज्ञानरूपे रसे इत्यर्थः । एतेन रसस्याकार्यत्वमुपपादितम् । ननु चर्वणातोऽभिन्ने रसे लक्षणया साक्षादेव कार्यत्वं प्रतीयते कथं निरुक्तपरम्परया व्यवहर्तव्यमत आह—**रत्यादीति** । रत्यादिविषयावच्छेद इत्यर्थः । 'विभावादिसंयोगाद्रत्यादी रसो जायते' इत्यत्र रसे साक्षाद्रत्यादौ रसद्वारैव निष्पत्तिः प्रतीयत इति भावः । व्यवहारं निरुक्तपरम्परया प्रयुङ्क्ष्व । ननु परिणामवादिमते रत्यादेर्ज्ञानतादात्म्यं स्वप्रकाशत्वं चोपपद्यतां 'स्वप्रकाशानन्दचिन्मयः' इत्यनेन रसस्यानन्दमयत्वं 'चमत्कारप्राणः' इत्यनेन चमत्कारमयत्वं चोक्तम्, तदसंगतं विजातीयानां चिदानन्दचमत्काराणामेकरूपत्वासंभवादत आह—**सुखादीति** । आदिना चमत्कारपरिग्रहः । आस्माकीमालंकारिकसंप्रदायसंबन्धिनीम् । 'तस्मादलौकिकः सत्यं वेद्यः सहृदयैरयम्' इति सिद्धान्त एव सुखसंपादकत्वेन शय्या तामधिशय्य अधिश्रित्य । **दिव्यमिति** । मनुष्याणां षष्ठ्यधिकत्रिशतसंख्यकवर्षे देवानामेकवत्सरो भवति । एवं वर्षसहस्रं प्रमोद एव नेत्रनिमीलनादिकारित्वेन निद्रा तामुपेयाः प्राप्नुहि । तथा चास्माकं सिद्धान्ताश्रयणेन चिरकालमपि चिन्तया वादिभिर्दोषोद्भावनं कर्तुं न शक्यमिति भावः । रसस्य स्वप्रकाशत्वमुपसंहरति—**अभिन्नोऽपीति** । 'स्वस्मात्' इति शेषः । **स** रसः । प्रमात्रा इति भावप्रधानो निर्देशः । तेन चर्वणारूपप्रमयेत्यर्थः । संपद्यते । वासनायामुपनीतो ज्ञानप्रत्यासत्त्या अभेदेन प्रकारीकृतो यो रत्यादिस्तस्य तादात्म्येन विशिष्टः गोचरीकृतो विषयीकृतः । ननु ज्ञानस्यानुव्यवसायेनैव ग्रहो भवति कथं स्वप्रकाशत्वमिति वदतो नैयायिकानाक्षिपति—**ज्ञानस्येति** । उपरि मते दण्डो दोषः पातनीय उपन्यसनीयः । ज्ञानस्यानुव्यवसायेन तस्यापि ज्ञानान्तरेण ग्रह इत्यनवस्थारूपोऽत्र दोषो वेदितव्यः । रसस्याखण्डत्वेऽपि ज्ञानतादात्म्यमेव हेतुमनुषज्य दर्शयति—**तादात्म्यादेवेति** । ज्ञानतादात्म्यादेवेत्यर्थः । **अस्य** रसस्य । ननु

---

१. 'उक्तं हि' ख. २. 'च' क-पुस्तके नास्ति. ३. 'तदुक्तं मुनिना' इति ग-पुस्तकेऽधिकम्.

रत्यादयो हि प्रथममेकैकशः प्रतीयमानाः सर्वेऽप्येकीभूताः स्फुरन्त एव रसतामापद्यन्ते । तदुक्तम्—

'विभावा अनुभावाश्च सात्त्विका व्यभिचारिणः ।
प्रतीयमानाः प्रथमं खण्डशो यान्त्यखण्डताम् ॥' इति ।

'परमार्थतस्त्वखण्ड एवायं वेदान्तप्रसिद्धब्रह्मतत्त्ववद्वेदितव्यः' इति [२] च ।

[३] अथ के ते विभावानुभावव्यभिचारिण इत्यपेक्षायां विभावमाह—

**रत्याद्युद्बोधका लोके विभावाः काव्यनाट्ययोः ।**

ये हि लोके रामादिगतरतिहासादीनामुद्बोधकारणानि सीतादयस्त एव काव्ये नाट्ये च निवेशिताः सन्तः 'विभाव्यन्ते आस्वादाङ्कुरप्रादुर्भावयोग्याः क्रियन्ते सामाजिकरत्यादिभावा एभिः' इति विभावा उच्यन्ते ।

तदुक्तं भर्तृहरिणा—

'शब्दोपहितरूपांस्तान्बुद्धेर्विषयतां गतान् ।
प्रत्यक्षानिव कंसादीन्साधनत्वेन मन्यते ॥'

---

व्यस्तानां रत्यादिविभावादीनां कथमेकरूपत्वमत आह—**रत्यादयो हीति** । आदिना विभावादिपरिग्रहः । एतच्च शृङ्गाररसे । वीरादौ तूत्साहादयो ज्ञेयाः । **एकीभूता** व्यञ्जनाजन्यैकज्ञानविषयत्वेन एकरूपत्वं प्राप्ताः । **स्फुरन्त**श्चिद्रूपत्वं प्राप्नुवन्तः । सात्त्विकानुभावयोर्गोबलीवर्दन्यायेन पृथगुपादानम् । **खण्डशः** प्रत्येकम् । ननु ज्ञानतादात्म्याङ्गीकारेऽप्यखण्डत्वं न संभवति सुखचमत्काराभ्यामैक्यासंभवादत आह—**परमार्थतस्त्विति** । वस्तुतस्त्वित्यर्थः । अलौकिकस्वभावादिति यावत् । अलौकिकमेव दृष्टान्तमाह—**वेदान्तेति** । ब्रह्ममीमांसा वेदान्तस्तत्र यथा चिदानन्दरूपोऽयं पुरुष इत्यनेन चिदानन्दयोरेकब्रह्मरूपत्वमुपपादितं तथा चिदानन्दचमत्काराणामेकरसरूपत्वमिति भावः । **शब्दोपहितरूपान्** काव्यप्रकाशितस्वरूपान् । **बुद्धे**र्व्यञ्जनाजन्यबोधस्य । **कंसादीनिति** । वीररसाद्यालम्बनविभावाभिप्रायेण । साधनत्वेनेति विशेषणे तृतीया । **मन्यते** सामाजिकः

---

१. 'रत्यादयः—' इत्यादिः 'तदुक्तं' इत्यन्तः पाठो ग-पुस्तके नास्ति. २. इति 'रसनिरूपणम्' इत्यधिकं ग-पुस्तके. ३. 'अथ—' इत्यादिः 'मन्यते' ॥ इति हरिकारिकान्तः पाठो ग-पुस्तके नास्ति, किंतु 'ननु विभावादिभ्यो रस इत्युक्तं के ते विभावाद्या इत्याह—बहवोऽर्था विभाव्यन्ते वागङ्गाभिनयात्मकाः । अनेन यस्मात्तेनायं विभाव इति कीर्तितः ॥' इत्येव पाठोऽस्ति.

तद्भेदावाह—

**आलम्बनोद्दीपनाख्यौ तस्य भेदावुभौ स्मृतौ ।**

स्पष्टम् ।

तत्र—

**आलम्बनं नायकादिस्तमालम्ब्य रसोद्गमात्[1] ॥ २९ ॥**

आदिशब्दान्नायिकाप्रतिनायिकादयः । अत्र यस्य रसस्य यो विभावः स तत्स्वरूपवर्णने वक्ष्यते । तत्र नायकः—

**त्यागी कृती कुलीनः सुश्रीको रूपयौवनोत्साही ।**
**दक्षोऽनुरक्तलोकस्तेजोवैदग्ध्यशीलवान्नेता ॥ ३० ॥**

दक्षः क्षिप्रकारी । शीलं सद्वृत्तम् । एवमादिगुणसंपन्नो[2] नेता नायको भवति ।

तद्भेदानाह—

**धीरोदात्तो धीरोद्धतस्तथा धीरललितश्च ।**
**धीरप्रशान्त इत्ययमुक्तः प्रथमश्चतुर्भेदः ॥ ३१ ॥**

स्पष्टम् ।

तत्र धीरोदात्तः—

**अविकत्थनः क्षमावानतिगम्भीरो महासत्त्वः ।**
**स्थेयान्निगूढमानो धीरोदात्तो दृढव्रतः कथितः ॥ ३२ ॥**

अविकत्थनोऽनात्मश्लाघाकरः । महासत्त्वो[3] हर्षशोकाद्यनभिभूतस्वभावः । निगूढमानो विनयच्छन्नगर्वः । दृढव्रतोऽङ्गीकृतनिर्वाहकः ।

यथा—रामयुधिष्ठिरादिः ।

---

इति शेषः ॥ **तद्भेदौ** विभावप्रकारौ । **तस्य** विभावस्य ॥ **नायकादिरिति** । नायको रतेर्नायकः आलम्बनं तं नायकादिमालम्ब्य विषयीकृत्य ॥ **त्यागी** दाता । कृती वीरः । कुलीनः सत्कुलोद्भवः । उत्साहः कर्मण्यध्यवसायः । रूपादित्रयवान् । निगूढाभिप्रायज्ञत्वं वैदग्ध्यम् । शीलं सद्वृत्तम् । नेता नायकः **तद्भेदा**न्नायकप्रकारान् ॥ **अतिगम्भीरो** दुरवबोधाभिप्रायः । स्थेयान् कर्मणि स्थिरतरः ॥

---

1. इयं गाथा षट्चरणात्मिका । एवमग्रेऽपि ॥

---

१. 'कृती कृतज्ञः' इत्यधिकं ग-पुस्तके. २. 'एवम्—' इति फक्किका ग-पुस्तके नास्ति. ३. महासत्त्वपदव्याख्या ग-पुस्तके नास्ति.

अथ धीरोद्धतः—

**मायापरः प्रचण्डश्चपलोऽहंकारदर्पभूयिष्ठः ।**
**आत्मश्लाघानिरतो धीरैर्धीरोद्धतः कथितः ॥ ३३ ॥**

यथा—भीमसेनादिः ।

अथ धीरललितः—

**निश्चिन्तो मृदुरनिशं कलापरो धीरललितः स्यात् ।**

[1]कला नृत्यादिका । यथा—रत्नावल्यादौ वत्सराजादिः ।

अथ धीरप्रशान्तः—

**सामान्यगुणैर्भूयान्द्विजादिको धीर[2]शान्तः स्यात् ॥ ३४ ॥**

यथा—मालतीमाधवादौ माधवादिः ।

एषां च शृङ्गारादिरूपत्वे भेदानाह—

**[1]एभिर्दक्षिणधृष्टानुकूलशठरूपिभिस्तु षोडशधा ।**

तत्र तेषां धीरोदात्तादीनां प्रत्येकं दक्षिणधृष्टानुकूलशठत्वेन षोडशप्रकारो नायकः ।

**एषु त्वनेकम[3]हिलासमरागो दक्षिणः कथितः ॥ ३५ ॥**

द्वयोस्त्रिचतुःप्रभृतिषु [4]नायिकासु तुल्यानुरागो दक्षिण[5]नायकः ।

यथा—

स्नाता तिष्ठति कुन्तलेश्वरसुता, वारोऽङ्गराजस्वसु-
र्द्यूते रात्रिरियं जिता कमलया, देवी प्रसाद्याद्य च ।

---

**अहंकारः** अहं महानिति ज्ञानविशेषः । **दर्पः** शौर्यवीर्याद्यतिशयः । **मृदुः** अप्रचण्डचरितः ॥ **सामान्यगुणैर्नायकसामान्यगुणैः** । धीरोदात्तादित्रितयभिन्नो नायको धीरप्रशान्त इत्यभिप्रायः ॥ **एषां** धीरोदात्तादीनाम् । **षोडशधेति** । शृङ्गारे षोडशप्रकारो नायको भवति रसान्तरे तु चतुष्प्रकार इत्यवधेयम् ॥ **स्नाता** ऋतुस्नाता । वारः सुरतार्थं नियमितदिवसः । जिता जयेनात्मसुरतार्थं प्राप्ता । देवी कृताभिषेका राजपत्नी । देवेन राज्ञा । अप्रतिपत्त्या कर्तव्यानिश्चयेन मूढं व्याकुलम्

---

1. एभिरिति । दक्षिणधीरोदात्तः, दक्षिणधीरोद्धतः, दक्षिणधीरललितः, दक्षिणधीरप्रशान्तः, एवं धृष्टादिपदयोजनेन षोडशप्रकारका नायका इत्यवधेयम् ॥

---

१. ग-पुस्तके कलापदव्याख्या नास्ति. क-पुस्तके तु 'कला रत्यादिका' इति पाठः. २. 'धीरप्रशान्तः' घ. ३. 'महिलासु' घ. ४. 'नायिकासु' इति क-पुस्तके नास्ति. ५. 'नायक' इति नास्ति ग-पुस्तके.

इत्यन्तःपुरसुन्दरीः[1] प्रति मया विज्ञाय विज्ञापिते
देवेनाप्रतिपत्तिमूढमनसा द्वित्राः स्थितं नाडिकाः[2] ॥

**कृतागा अपि निःशङ्कस्तर्जितोऽपि न लज्जितः ।**
**दृष्टदोषोऽपि मिथ्यावाक्कथितो धृष्टनायकः ॥ ३६ ॥**

यथा[1] मम—

शोणं[3] वीक्ष्य मुखं विचुम्बितुमहं यातः समीपं, ततः
पादेन प्रहृतं तया, सपदि तं धृत्वा सहासे मयि ।
किंचित्तत्र विधातुमक्षमतया बाष्पं सृजन्त्याः सखे
ध्यातश्चेतसि कौतुकं वितनुते कोपोऽपि वामभ्रुवः ॥

**अनुकूल एकनिरतः—**

एकस्यामेव[2] नायिकायामासक्तोऽनुकूलनायकः ।

यथा—

असाकं सखि वाससी न रुचिरे, ग्रैवेयकं नोज्ज्वलं,
नो वक्रा गति, रुद्धतं न हसितं, नैवास्ति कश्चिन्मदः ।
किंत्वन्येऽपि जना वदन्ति सुभगोऽप्यस्याः प्रियो[3] नान्यतो
दृष्टिं निक्षिपतीति विश्वमियता मन्यामहे दुःस्थितम्[4] ॥

---

अप्राप्तिनिश्चयशून्यं वा मनो यस्य तेन ॥ **कृतागाः** कृतापराधः । मिथ्यावाक् मयैतन्न कृतमित्ययथार्थवचनः । तं पादम् । अत्र प्रथमपादेन कारिकायाः प्रथमपादोक्तं द्वितीयपादेन द्वितीयपादोक्तं लक्षणं वेदितव्यम् ॥ **अस्माकमिति** । कस्याश्चिन्नायिकाया उक्तिरियम् । ग्रैवेयकं कण्ठभूषणम् । वक्रा चित्रा । उद्धतमुत्कटम् ।

---

1. **इतीति** । इति अन्तःपुरसुन्दरीः प्रति विज्ञाय यस्या यद् वक्तव्यं तदवगम्य मया विज्ञापिते विविच्य निवेदिते सति । एतदुक्तं भवति—ऋतुस्नातैव तावदनुपेक्षणीया किमुत कुन्तलमहाराजतनया, साधारणोऽपि समयो दुर्लङ्घ्यः किमुताङ्गनाथस्वसृसमीहितन्यायागतसमागमसमयः, सामान्येऽपि जये परतन्त्रता किमुत कमलाललामकमलाप्रयुक्ते । एवमुत्तरोत्तराधिककार्यसंपातेऽपि महाराज्ञ्याः प्रसादनं तावत्सर्वोपरीति रहस्यम् ॥

2. **नाडिका इति** । अत्यन्तसंयोगे द्वितीया ॥

3. 'वक्त्रमवेक्ष्य चुम्बितुमहं' इति साधीयान् पाठः ॥

---

१. ग-पुस्तके तु 'तस्याः सान्द्रविलेपनस्तनयुगप्रश्लेषमुद्राङ्कितं किं वक्षश्चरणानतिव्यतिकरव्याजेन गोपाय्यते । इत्युक्ते क्व तदित्युदीर्य सहसा तत्संप्रमार्ष्टुं मया साश्लिष्टा रभसेन तत्सुखवशात्तन्व्या च तद्विस्मृतम् ॥' इति परकीयमुदाहरणं दृश्यते. २. 'एकस्यां–' इति फक्किका ग-पुस्तके नास्ति. ३. 'पतिः' ग. ४. 'इत्यादि' इत्यधिकं क-पुस्तके.

**शठोऽयमेकत्र बद्धभावो यः ।**
**दर्शितबहिरनुरागो विप्रियमन्यत्र गूढमाचरति ॥ ३७ ॥**

[1]यः पुनरेकस्यामेव नायिकायां बद्धभावो द्वयोरपि नायिकयोर्[2]बहिर्दर्शितानुरागोऽन्यस्यां नायिकायां गूढं विप्रियमाचरति स शठः ।

यथा—

'शठान्यस्याः काञ्चीमणिरणितमाकर्ण्य सहसा
यदाश्लिष्यन्नेव प्रशिथिलभुजग्रन्थिरभवः ।
तदेतत्क्वाचक्षे घृतमधु[3]मयत्वद्बहुवचो-
विषेणाघूर्णन्ती किमपि न सखी मे गणयति ॥'

**एषां[4] च त्रैविध्यादुत्तममध्याधमत्वेन ।**
**उक्ता नायकभेदाश्चत्वारिंशत्तथाष्टौ च ॥ ३८ ॥**

एषामुक्तषोडशभेदानाम् ।

अथ प्रसङ्गादेतेषां सहायानाह—

**दूरानुवर्तिनि स्यात्तस्य प्रासङ्गिकेतिवृत्ते तु ।**

---

सौभाग्ययौवनाद्यवलेपजो विकारो मदः । नायकवशीकरणकारणं मम किमपि नास्ति । किंतु तथापि । अन्ये परकीयाः । अपिना स्वकीयाः । सुभगोऽपि नायिकान्तरप्रियोऽपि । यद्वा मनोज्ञोऽपि । अन्यतो नायिकान्तरे । इयता एतावतैवा-मिथ्यावादेन । दुःस्थितं दुष्टचित्तं प्रतिकूलं वा ॥ बद्धभावो निभृतानुरागः । दर्शितो भूषणदानादिसाम्येन प्रकटितो बहिः सुरतातिरिक्तेऽनुरागो येन सः ॥ शठेति । दूत्या वचनमिदम् । क्वाचक्षे कुत्र कथयामि । न कुत्रापीत्यर्थः । घृतमधुमयेति । घृतमधुतुल्येत्यर्थः । घृतमधु यथा आपाततः स्वादु पश्चाद्विषम्, तथा तव वचनमप्यापाततो रमणीयं पश्चादनिष्टाचरणेनायथार्थत्वप्रतिभासाद्विषतुल्यमिति भावः ।

---

1. एषामिति । एत एव नायकभेदा दशरूपावलोके द्वितीयप्रकाशे । तत्र प्रथमस्य धीरोदात्तादिचतुष्टयस्य चोदाहरणानि द्रष्टव्यानि । अत्रेदमप्यवधेयम् । कामशास्त्रे दत्तादिजातिभेदेन चतुर्विधो नायकः । तथा चोक्तम्—'पुनश्चतुर्धा कथितः कामशास्त्रेषु जातितः । दत्तो भद्रः कूचिमारः पाञ्चाल इति सूरिभिः । पद्मिनीवल्लभो दत्तो भद्रः स्याच्चित्रिणीप्रियः । पाञ्चालकूचिमारौ तु पद्मिनीशङ्खिनीप्रियौ ॥' इति मन्दारमरन्दे शुद्धबिन्दौ ॥

---

१. 'य—'इत्यादिफक्किका ग-पुस्तके नास्ति. २ 'बहिः' क-पुस्तके नास्ति. ३. 'मयत्वाद्बहुवचो' इति पाठः. ४. 'सर्वेषामुत्तममध्यमाधमत्वेन क-ख. 'सर्वेषामुत्तमाधममध्यमत्वेन' घ. ग-पुस्तके तु 'एषां तु नायकानामुत्तममध्यमाधमत्वेन । कथिता नायकभेदाश्चत्वारिंशत्तथा चाष्टौ ॥'. इति पाठः.

**किंचित्तद्गुणहीनः सहाय एवास्य पीठमर्दाख्यः ॥ ३९ ॥**[1]

तस्य नायकस्य बहुव्यापिनि प्रसङ्गसंगते इतिवृत्तेऽनन्तरोक्तैर्नायक-सामान्यगुणैः किंचिदूनः पीठमर्दनामा सहायो भवति । यथा—रामचन्द्रादीनां सुग्रीवादयः ।[1]

अथ[2] शृङ्गारसहायाः[3]—

**शृङ्गारेऽस्य सहाया विटचेटविदूषकाद्याः स्युः ।**
**भक्ता नर्मसु निपुणाः कुपितवधूमानभञ्जनाः शुद्धाः ॥ ४० ॥**

आदिशब्दान्मालाकाररजकताम्बूलिकगान्धिकादयः ।[4]

तत्र विटः—

**संभोगहीनसंपद्विटस्तु धूर्तः कलैकदेशज्ञः ।**[2]
**वेशोपचारकुशलो वाग्मी मधुरोऽथ बहुमतो गोष्ठ्याम् ॥४१॥**[3]

चेटः प्रसिद्ध एव ।

**कुसुमवसन्ताद्यभिधः कर्मवपुर्वेषभाषाद्यैः ।**
**हास्यकरः कलहरतिर्विदूषकः स्यात्स्वकर्मज्ञः ॥ ४२ ॥**

स्वकर्म हास्यादि ।[5]

---

किमपि हितमहितं वा । गणयति निश्चिनोति ॥ **एषां** नायकानाम् ॥ **दूरानुवर्ति-**नीत्यस्यार्थमाह—**बहुव्यापिनीति** । इतिवृत्ते कर्तव्यकर्मणि ॥ **भक्ता** नायकानुरक्ताः । **नर्मसु** परिहासेषु । **शुद्धाः** परदारगमनदोषरहिताः ॥ **संभोगहीना** अपकृष्टा संपद् यस्य सः । नृत्यादिकलानामेकदेशं जानाति, नतु समुदायम् । वेशस्य उपचारे करणे कुशलः ॥ विदूषकमाह—**कुसुमेति** । **वपुरिति** ।

---

1. **पीठेति** । कार्यविशेषेऽधिकृतत्वात्पीठं मृद्नातीति पीठमर्द इत्यन्वर्था संज्ञा ॥

2. **विट इति** । वेश्यानागरिकयोः परस्परं संदेशं वेटति कथयतीति विटः । 'विट शब्दे' इति यशोधरः । 'एकविद्यो विटश्चेटः संधानकुशलो मतः' इति मन्दारमरन्दे ॥

3. **गोष्ठ्यामिति** । 'वेश्याभवने सभायामन्यतमस्योदवसिते वा समानविद्याबुद्धिशील-वित्तवयसां सह वेश्याभिरनुरूपैरालपैरासनबन्धो गोष्ठी' इति वात्स्यायनः । अन्यतमस्य नागरस्योदवसिते गृहे वा । स्त्रीप्रतिबद्धकलाप्रतिपत्त्यर्थं वेश्यानां गोष्ठ्यामन्तर्भाव इति तद्व्याख्यातारः ॥

---

१. 'रामस्य सुग्रीवः' ग. २. 'अथ—' इति फक्किका ग-पुस्तके नास्ति. ३. 'शृङ्गारविषये' इति ख. ४. 'आदि—' इति फक्किका ग. पुस्तके नास्ति. ५. ग-पुस्तके तु 'स्वकर्म—' इत्यारभ्य '—अथ दण्डस-हायाः' इत्यन्तो ग्रन्थो न दृश्यते.

अर्थचिन्तने सहायमाह—

**मन्त्री[1] स्यादर्थानां चिन्तायां—**

अर्थास्तन्त्रावापादयः[1] । यत्त्वत्र सहायकथनप्रस्तावे—'मन्त्री स्वं चोभयं[2] वापि सखा तस्यार्थचिन्तने' इति केनचिल्लक्षणं[2] कृतम्, तदपि राज्ञोऽर्थचिन्तनोपायलक्षणप्रकरणे लक्षयितव्यम्, न तु सहायकथनप्रकरणे। 'नायकस्यार्थचिन्तने मन्त्री सहायः' इत्युक्तेऽपि नायकस्यार्थत एव सिद्धत्वात्। यदप्युक्तम्—'मन्त्रिणां ललितः शेषा मन्त्रिष्वायत्तसिद्धयः' इति, तदपि स्वलक्षणकथनेनैव लक्षितस्य धीरललितस्य मन्त्रिमात्रायत्तार्थचिन्तनोपपत्तेर्गतार्थम्। न चार्थचिन्तने तस्य मन्त्री सहायः। किं तु स्वयमेव संपादकः। तस्यार्थचिन्तनाद्यभावात्।

---

शरीरचेष्टाविशेष इत्यर्थः ॥ **मन्त्रीति** । अस्य इति सहायः इति चानुषज्यते । चिन्तायामुपायनिरूपणे । स्वमण्डले क्रियमाणं कर्म तन्त्रम् । परमण्डले क्रियमाणं कर्म आवापः । आदिना शत्रुनिग्रहादयः । **यत्त्विति** । स्वं चेति चकारो वार्थः । उभयं मन्त्रिसद्वयम् । **तस्य** नायकस्य । सहायकथनपरत्वे दोषमाह—**नायकस्येति** । एवं च स्वं चेत्यादि निरर्थकम् । तदनुपादानेऽपि तल्लाभात् । स्वयं चिन्तापक्षे स्वस्य सहकारित्वरूपसहायत्वानुपपत्तेरुभयचिन्तायां कारणान्तरप्रसङ्गाच्चेति भावः । सखिशब्दस्योपायार्थत्वम्, न तु सहायपरत्वमित्यवगन्तव्यम् । **मन्त्रिणेति** । आयत्तसिद्धिरित्यन्वयः । ललितो धीरललितः । शेषा धीरोदात्तादयः । **स्वलक्षणेति** । **चिन्तन इति** । धीरललितलक्षणनिविष्टेन तस्यार्थचिन्तनाद्यभावः । तेन च मन्त्रिमात्रायत्तार्थसिद्धिकत्वं प्रतीयते इति भावः । **तस्य** धीरललि-

---

1. **तन्त्रेति** । तन्त्रणं तन्त्रम् । स्वाधीनत्वात्स्वराष्ट्रे क्रियमाणं कर्मापि तन्त्रशब्देनोच्यते । आ समन्ताद् वपन्ति इतिकर्तव्यताबीजमत्रेत्यावापः । 'डुवप् बीजतन्तुसंताने' 'हलश्च' इति घञ् । 'परं प्रत्यावापः फलति कृतसेकस्तरुरिव' इति ॥

2. **केनचिदिति** । दशरूपके धनंजयेनेत्यर्थः । तत्रायं सुगमः संदर्भः—अथ नेतुः कार्यान्तरसहायानाह—'मन्त्री स्वं वोभयं वापि सखा तस्यार्थचिन्तने ।' तस्य नेतुः अर्थचिन्तायां तन्त्रावापादिलक्षणायां मन्त्री वा आत्मा वा उभयं वा सहायः । तत्र विभागमाह—'मन्त्रिणां ललितः, शेषा मन्त्रिष्वायत्तसिद्धयः ।' उक्तलक्षणो ललितो नेता मन्त्रायत्तसिद्धिः । शेषा धीरोदात्तादयः अनियमेन मन्त्रिणा स्वेन वा उभयेन वा अङ्गीकृतसिद्धय इति ॥

---

१. क-पुस्तके तथा मुद्रितपुस्तकेषु 'मन्त्री स्यादर्थानां चिन्तायां तद्वदवरोधे ।' इत्यार्यार्धं स्वविवरणगतपदयोजनेन 'मन्त्री स्यादर्थचिन्तायामर्थास्तन्त्रावापादयः ।' इत्येवमनुष्टुप्रूपत्वं प्रापितम् 'तथा तद्वदवरोधे' इति खण्डं गद्ये योजितम्. २. 'स्वस्योभयस्यापि' क.

अथान्तःपुरसहायाः—

तद्वदवरोधे ।

वामनशण्ढ[1]किरातम्लेच्छाभीराः शकारकुब्जाद्याः ॥ ४३ ॥

मदमूर्खताभिमानी दुष्कुलतैश्वर्यसंयुक्तः ।

सोऽयमनूढाभ्राता राज्ञः श्यालः शकार इत्युक्तः ॥ ४४ ॥

आद्यशब्दान्मूकादयः । तत्र शण्ढवामनकिरातकुब्जादयो यथा रत्नावल्याम्—

नष्टं वर्षवरैर्मनुष्यगणनाभावादपास्य त्रपा-
मन्तःकञ्चुकिकञ्चुकस्य विशति त्रासादयं वामनः ।
पर्यन्ताश्रयिभिर्निजस्य सदृशं नाम्नः किरातैः कृतं
कुब्जा नीचतयैव यान्ति शनकैरात्मेक्षणाशङ्किनः ॥

शकारो मृच्छकटिकादिषु प्रसिद्धः । अन्येऽपि यथादर्शनं ज्ञातव्याः ।

अथ दण्डसहायाः—

दण्डे सुहृत्कुमाराटविकाः सामन्तसैनिकाद्याश्च ।

दुष्टनिग्रहो दण्डः । स्पष्टम् ।

ऋत्विक्पुरोधसः स्युर्ब्रह्मविदस्तापसास्तथा धर्मे ॥ ४५ ॥

---

तस्य । स्वयमेव मन्त्र्येव निष्पादकः प्रधानकारणम् ॥ **तद्वदिति** । अवरोधेऽन्तः-पुरे । वामनादयो नायकस्य सहाया इत्यर्थः । शण्ढश्छिन्नोपस्थः क्लीबो वा । शकारमाह—**मदेति** । मदमूर्खताभ्यामभिमानी अहं महानिति ज्ञानवान् । मदादित्रयवान् वा ॥ **नष्टमिति** । वानरवेषेणान्तःपुरप्रविष्टं विदूषकमालोक्य भयेनान्तःपुरस्थानां पलायनवर्णनमिदम् । नष्टमदर्शनतां प्राप्तम् । वर्षवरैः शण्ढैः । 'सौविदल्लाः कञ्चुकिनः' इत्यमरः । किरं पर्यन्तदेशमततीति किरात इति नाम्नः स्ववाचकशब्दस्य सदृशं योग्यं पर्यन्तदेशं प्राप्त इत्यर्थः ॥ मृच्छकटिका[2] नाटिकाविशेषः । अन्ये म्लेच्छाभीरादयः । आटविका वनचारिणः ॥ **ऋत्विगिति** । धर्मे धर्मकर्मणि

---

1. शण्ढेति । शाम्यति पौरुषाभावादिति शण्ढः । 'शमु उपशमे' । शमेर्ढः । मूर्धन्यादिस्तु षणुप्रकृतिकः । तत्र अमन्ताड्डस्तस्य बाहुलकाड्डुत्वं धातोः षस्य सत्त्वाभावश्च । शण्ढो वर्षवर इत्यनर्थान्तरम् । 'ये त्वल्पसत्त्वाः कुशलाः क्लीबाश्च स्त्रीस्वभाविनः । जात्या न दुष्टाः कार्येषु ते वै वर्षवराः स्मृताः ॥' इति नाट्यशास्त्रे स्त्रीपुंसोपचाराध्याये ॥

2. मृच्छेति । मृच्छकटिकं प्रकरणविशेष इत्युचितम् ॥

ब्रह्मविदो वेदविदः, आत्मविदो वा ।

[1]अत्र च

**उत्तमाः पीठमर्दाद्याः—**

आद्यशब्दान्मन्त्रिपुरोहितादयः ।

**मध्यौ विटविदूषकौ ।**

**तथा शकारचेटाद्या अधमाः परिकीर्तिताः ॥ ४६ ॥**

आद्यशब्दात्ताम्बूलिकगान्धिकादयः ।

अथ प्रसङ्गाद्दूतानां विभागगर्भलक्षणमाह—

**निसृष्टार्थो मितार्थश्च तथा संदेशहारकः ।**

**कार्यप्रेष्यस्त्रिधा दूतो दूत्यश्चापि तथाविधाः ॥ ४७ ॥**

तत्र कार्यप्रेष्यो दूत इति लक्षणम् ।

---

नायकस्य सहाया इत्यर्थः । आत्मविदो योगिनः ॥ सुश्लिष्टं सुसंगम् ॥ मिता·

---

1. दूत इति । पटुता धार्ष्ट्यमिङ्गिताकारज्ञता प्रतारणकालज्ञा विपद्यबुद्धित्वं लघ्वी प्रतिपत्तिः सोपाया चेति दूतगुणाः । अन्यत्राप्युक्तम्—'आत्मवान्मित्रवान्युक्तो भावज्ञो देशकालवित् । असाध्यमप्ययत्नेन कार्यं संसाधयेन्नरः ॥' इति । आत्मन्याहितगुणत्वादात्मवान् । सहायविमर्शेन मित्रवान् । युक्त इति राजवृत्तानुष्ठानेन युक्तः स्वकर्मनिष्ठ इति तदर्थः ॥

2. दूत्य इति । अन्यत्र विशेषः—निसृष्टार्था परिमितार्था पत्रहारी स्वयंदूती मूढदूती भार्यादूती मूकदूती वातदूती चेति दूतीविशेषाः । तत्र नायकस्य नायिकायाश्च यथामनीषितमर्थमुपलभ्य स्वबुद्ध्या कार्यसंपादिनी निसृष्टार्था, इदं करणीयमित्येतावतोऽर्थस्य निसृष्टत्वान्निसृष्टार्थेति कार्यैकदेशमभियोगैकदेशं चोपलभ्य शेषं संपादयतीति परिमितार्था, परिमितः परिच्छिन्नोऽर्थो यस्या इति । संदेशमात्रं प्रापयतीति पत्रहारी, संदेशमात्रमिति कार्यस्य स्थिरत्वात्तन्मात्रं पत्रेण वचसा वा प्रापयतीति पत्रहारीत्यर्थः । दौत्येन प्रहिता अन्यथा स्वयमेव नायकमभिगच्छेत्, अजानती नाम तेन सहोपभोगं स्वप्ने कथयेत्, गोत्रस्खलितं भार्यां चास्य निन्देत्, तद्व्यपदेशेन स्वयमीर्ष्यां दर्शयेत्, नखदर्शनचिह्नितं वा किंचिद्दद्यात्, भवतेऽहमादौ दातुं संकल्पितेति चाभिदधीत, मम भार्याया वा का रमणीयेति विविक्ते पर्यनुयुञ्जीत सा स्वयंदूती । नायकभार्यां मुग्धां विश्वास्यायन्त्रणयानुप्रविश्य नायकस्य चेष्टितानि पृच्छेत्, योगान्शिक्षयेत्, साकारं मण्डयेत्, कोपमेनां ग्राहयेत्, एवं च प्रतिपद्यस्वेति श्रावयेत्, स्वयं चास्यां नखदशनपदानि निर्वर्तयेत्, तेन द्वारेण नायकमाकारयेत्सा मूढदूती । स्वभार्यां वा मूढां प्रयोज्य तया

---

1. 'तत्र च' क, 'अत्र च–' इत्यादिः '—लक्षणमाह' इत्यन्तः पाठो ग-पुस्तके नास्ति.

तत्र—

उभयोर्भावमुन्नीय स्वयं वदति चोत्तरम् ।
सुश्लिष्टं कुरुते कार्यं निसृष्टार्थस्तु स स्मृतः ॥ ४८ ॥

उभयोरिति येन प्रेषितो यदन्तिके प्रेषितश्च ।

मितार्थभाषी कार्यस्य सिद्धकारी मितार्थकः ।
यावद्भाषितसंदेशहारः संदेशहारकः ॥ ४९ ॥

अथ सात्त्विकनायकगुणः—

शोभा विलासो माधुर्यं गाम्भीर्यं[1] धैर्यतेजसी ।
ललितौदार्यमित्यष्टौ सत्त्वजाः पौरुषा गुणाः ॥ ५० ॥

तत्र[2]—

शूरता दक्षता सत्यं महोत्साहोऽनुरागिता ।
नीचे घृणाधिके स्पर्धा यतः शोभेति तां विदुः ॥ ५१ ॥

तत्रानुरागिता यथा—

[1]अहमेव मतो महीपतेरिति सर्वः प्रकृतिष्वचिन्तयत् ।
उदधेरिव निम्नगाशतेष्वभवन्नास्य विमानना क्वचित् ॥

एवमन्यदपि ।

---

**र्थभाषी** अल्पार्थकथकः । स्वामिना यावदुक्तं तावदेव संदेशः, तं हरति व्याहरतीति स तथा ॥ **सात्त्विकाः** सत्त्वगुणाज्जाताः । स्तम्भादीनां सात्त्विकत्वेऽपि ते नायकस्य नायिकायाश्च भवन्ति । एते पुनर्नायकस्यैवेति विशेषः ॥ **पौरुषा** नायकसंबन्धिनः ॥ महानुत्साह उद्यमः । नीचे क्षुद्रे । घृणा दया ॥ **महीपतेरजस्य** । प्रकृतिषु मन्त्रिप्रभृतिषु । निम्नगाशतेषु नदीसमूहेषु । अस्य अजस्य ॥ अन्यच्छूर-

---

सह विश्वासेन योजयित्वा तयैवाकारयेत्, आत्मनश्च वैचक्षण्यं प्रकाशयेत्सा भार्यादूती । बालां वा परिचारिकामदोषज्ञामदुष्टेनोपायेन प्रहिणुयात्, तत्र स्रजि कर्णपत्रे वा गूढलेखनिधानं नखदशनपदं वा सा मूकदूती । पूर्वप्रस्तुतार्थलिङ्गसंबद्धमन्यजनाग्रहणीयं लौकिकार्थं द्व्यर्थं वा वचनमुदासीना या श्रावयेत्सा वातदूती । इति कविराजहृदयम् ॥

1. अहमिति । यथा नानादेशागतासूच्चावचासु सरित्सु सरित्पतेरेकाकारतया प्रेमभेदो न लक्ष्यते तथा महीपतेरजस्यापि प्रजासु क्वापि जने विमाननावतारो नालक्ष्यतेति भावः ॥

---

१. 'धैर्यं गाम्भीर्यतेजसी' इति क-पुस्तके; 'स्थैर्यं—' इति ख. लक्षणमपि पाठक्रमेणैव. २. 'तत्र—' इत्यादिः 'एषामुदाहरणान्यूह्यानि इत्यन्तः पाठो ग-पुस्तके नास्ति.

अथ विलासः—

**धीरा दृष्टिर्गतिश्चित्रा विलासे सस्मितं वचः ।**

यथा—

दृष्टिस्तृणीकृतजगत्त्रयसत्त्वसारा
धीरोद्धता नमयतीव गतिर्धरित्रीम् ।
कौमारकेऽपि गिरिवद्गुरुतां दधानो
वीरो रसः किमयमेत्युत दर्प एव ॥

**संक्षोभेष्वप्यनुद्वेगो माधुर्यं परिकीर्तितम् ॥ ५२ ॥**

ऊह्यमुदाहरणम् ।

**भीशोकक्रोधहर्षाद्यैर्गाम्भीर्यं निर्विकारता ।**

यथा—

आहूतस्याभिषेकाय विसृष्टस्य वनाय च ।
न मया लक्षितस्तस्य स्वल्पोऽप्याकारविभ्रमः ॥

**व्यवसायादचलनं धैर्यं विघ्ने महत्यपि ॥ ५३ ॥**

यथा—

श्रुताप्सरोगीतिरपि क्षणेऽस्मिन्हरः प्रसंख्यानपरो बभूव ।
आत्मेश्वराणां नहि जातु विघ्नाः समाधिभेदप्रभवो भवन्ति ॥

**अधिक्षेपापमानादेः प्रयुक्तस्य परेण यत् ।**
**प्राणात्ययेऽप्यसहनं तत्तेजः समुदाहृतम् ॥ ५४ ॥**

---

तादि ॥ **तृणीकृतौ** तुच्छीकृतौ जगत्त्रयस्य सत्त्वमुत्साहः सारो बलं च यया सा । धीरा मन्थरा । उद्धता उद्भटा च । एतेन गतेश्चित्रत्वं नैकरूपत्वं च । अत्र नायकस्य उत्साहदर्पयोरतिशयसूचनाय वीररसत्वेन दर्पत्वेन चोल्लेखः ॥ **ऊह्यमुदाहरणमिति** । यथा मम रामविलासे—'तन्निपीय कटु कर्णपदव्या खेदमाप न मनागपि रामः । शूलपाणिरिव घोरमुदग्रं कालकूटपटलं किल पूर्वम् ॥' तस्य[2] श्रीरामस्य । आकारो मुखनेत्रादिः तस्य विभ्रमो वैपरीत्यं येन हर्षशोकादयो लक्ष्यन्ते ॥ **व्यवसायात्** प्रारब्धकर्मणः । **अचलनम्** अप्रच्यवनम् ॥ **प्रसंख्यानपरो** योगनिष्ठः । **आत्मेश्वराणां** मनोनिरोधक्षमाणाम् ॥ **अधिक्षेपो**

---

1. अस्मिन्निति । अस्मिन्क्षणे वसन्ताविर्भावसमये ॥

---

१. 'एषः' घ. २. 'तस्य—' इत्यादिः '—लक्ष्यन्ते' इत्यन्तः पाठो हि 'मनोनिरोधक्षमाणाम्' इत्यस्मादग्रे दृश्यते कुत्रचित्.

**वाग्वेषयोर्मधुरता तद्वच्छृङ्गारचेष्टितं ललितम् ।**
**दानं सप्रियभाषणमौदार्यं शत्रुमित्रयोः समता ॥ ५५ ॥**

एषामुदाहरणान्यूह्यानि ।

**अथ नायिका त्रि[4]भेदा स्वान्या सा[2]धारणा स्त्रीति ।**
**नायकसामान्यगुणैर्भवति यथासंभवैर्युक्ता ॥ ५६ ॥**

ना[3]यिका पुनर्नायकसामान्यगुणैस्त्यागादिभिर्यथासंभवैर्युक्ता भवति । सा च स्वस्त्री अन्यस्त्री साधारणस्त्रीति त्रिवि[1]धा ।

तत्र स्वस्त्री—

**विनयार्जवादियुक्ता गृहकर्मपरा पतिव्रता स्वीया ।**

यथा—

> लज्जापज्जत्तपसाहणाइँ[1] परभत्तिणिप्पिवासाइं ।
> अविणअदुम्मेधाइं धण्णाण घरे कलत्ताइं ॥'

---

भर्त्सनम् । **अपमानः** पराभवः । आदिना अपकारादि । **प्रयुक्तस्य** कृतस्य । **परेण** शत्रुणा ॥ उदाहरणं यथा रामविलासे—'विस्फारस्फुरदोष्ठपल्लवमतिस्विन्नालकान्तं क्रुधा किंचिल्लोहितलोचनाम्बुजयुगेनाकुञ्चितभ्रूलतम् । युक्तं तस्य दुरुक्तमुत्तरयितुं तेजोभरादुद्यतं नेत्रान्तेन निवार्य लक्ष्मणममुं प्रोचे स्वयं राघवः ॥' विस्फारम-लन्तं स्फुरदोष्ठपल्लवं यस्य तम् । तस्य भार्गवस्य । अमुं भार्गवम् ॥ **तद्वन्मधुर-तायुक्तम्** ॥ ललितौदार्ययोरुदाहरणे मम—'वीक्ष्य तस्य रुचिरं कलेवरं संनिशम्य मधुरं च भाषितम् । स्मारसारमुपलभ्य विभ्रमं दास्यमस्य कलयन्ति सुभ्रुवः ॥', 'दत्ते सहासवचनं सप्रियवचनं च भूपालः । रिपुरपि लभते मानं निरीतिभावं धरा तस्मात् ॥' **स्वा** स्वकीया । **अन्या** अन्यदीया । **साधारणी** सर्वोपभोग-योग्या । 'स्त्री' इति सर्वत्रान्वेति । **यथासंभवैरिति** । तेन दक्षतोत्साहतेजांसि नायिकानां न वर्णनीयानि । अत एव दक्षतादयो नायकस्यैव सात्त्विका गुणा उक्ताः ॥ **लज्जेति** । 'लज्जापर्याप्तप्रसाधनानि परभर्तृनिष्पिपासानि । अविनयदु-

---

1. **पसाहणाइं इति** । अत्रान्त्यवर्णस्य 'इं' इत्यस्य दीर्घस्यापि लघुत्वेनोच्चारणं कर्तव्यं छन्दोनुरोधात् । तथा चाह प्राकृतपिङ्गलकारः—'जह दीहो विअ वण्णो लहु जीहा पढइ होइ सोवि लहु । वण्णो वि तुरिअपढिओ दोतिण्णिमि एक्क जाणेहु ॥' इति । 'यदि दीर्घ-मपि वर्णं लघुं कृत्वा जिह्वा पठति तदा सोऽपि वर्णो लघुरेव भवति । द्वौ वर्णौ त्रयो वा वर्णास्त्वरितपठितास्तानेक एव वर्ण इति जानीत ॥' इति तट्टीका । एवं चात्र दीर्घव-र्णस्य लघुत्वेनोच्चारणार्थं तद्वर्णोपरि ँ एवमर्धचन्द्राकारं चिह्नं कृतमिति बोध्यम् । एवमन्येऽपि वर्णसंधिवचनादेशप्रभृतयो विशेषास्तदाकरग्रन्थतोऽवधेयाः । यानन्तरा प्राकृतस्य कवि-कर्मणो यथावद् वाचनमपि दुःशकम् । तच्छायापरीक्षणं तु दूरापास्तम् ॥

---

१. 'अथ नायिकाभेदाः' क.' '—त्रिविधा' घ. २. 'साधारणा स्त्री च' ग. ३. 'नायिका पुनः' इति ख-पुस्तके नास्ति; 'नायिका—' इत्यादि '—कलत्ताइं' इत्यन्तं ग-पुस्तके नास्ति. ४. 'त्रिभेदा' क-ख.

**सापि कथिता त्रिंभेदा मुग्धा मध्या प्रगल्भेति ॥ ५७ ॥**

तत्र—

**प्रथमावतीर्णयौवनमदनविकारा रतौ वामा ।**
**कथिता मृदुश्च माने समधिकलज्जावती मुग्धा ॥ ५८ ॥**

तत्र प्रथमावतीर्णयौवना यथा मम तातपादानाम्—

मध्यस्य प्रथिमानमेति जघनं, वक्षोजयोर्मन्दता
दूरं यात्युदरं च, रोमलतिका नेत्रार्जवं धावति ।
कंदर्पं परिवीक्ष्य नूतनमनोराज्याभिषिक्तं क्षणा-
दङ्गानीव परस्परं विदधते निर्लुण्ठनं सुभ्रुवः ॥

प्रथमावतीर्णमदनविकारा यथा मम प्रभावतीपरिणये—

दत्ते सालसमन्थरं भुवि पदं, निर्याति नान्तःपुरात्,
नोद्दामं हसति, क्षणात्कलयते ह्रीयन्त्रणां कामपि,
किंचिद्भावगभीरवक्रिमलवस्पृष्टं मनाग्भाषते,
सभ्रूभङ्गमुदीक्षते प्रियकथामुल्लापयन्तीं सखीम् ॥

---

मेंधानि धन्यानां गृहे कलत्राणि ॥' इति संस्कृतम् । लज्जायै पर्याप्तानि समर्थानि प्रसाधनानि भूषणानि येषां तानि । अविनयदुर्मेधानि अविनयानभिज्ञानि ॥ सापि स्वकीयापि ॥ अवतीर्णमुत्पन्नम् ॥ मध्यस्येति । प्रथिमानं स्थूलत्वम् । मन्दता कृशत्वम् । धावति प्राप्नोति । नूतनं यथा स्यात्तथा मनोराज्येऽभिषिक्तम् । राज्ञः प्रथमाभिषेकसमये प्रजा हर्षेण परस्परं द्रव्यं लुण्ठन्तीति व्यवहारः ॥ दत्त इति । सालसं मन्थरं च यथा स्यात्तथा दत्ते । क्षणात् प्रतिक्षणं कलयते धत्ते । ह्रिया

---

1. प्रथमेति । प्रथमावतीर्णौ अभिनवोन्मेषौ यौवनमदनविकारौ तारुण्यानङ्गविभ्रमौ यस्याः सा । 'सकम्पा चुम्बते वक्त्रं हरत्येषोपगूहिता । परावृत्त्य चिरं तल्प आस्ते रन्तुं च वाञ्छति ॥' इत्यादिदिशा रतौ वामत्वमवधेयम् । 'अन्यां निषेवमाणेऽपि यदि कुप्यति सा प्रिये । रोदित्यस्याग्रतः स्वल्पमनुनीता च तुष्यति ॥' इत्युक्तदिशा माने मार्दवमवसेयम् । प्रथमावतीर्णयौवनाद्यवान्तरपञ्चभेदानां क्रमेणोदाहरणम् ॥

2. मध्यस्येति । मध्यभागे या विशालतासीत्सा जघनेन लुण्ठिता तेन तद्विशालं जातम्, एवं जघने यत्कार्श्यं तन्मध्यभागेन लुण्ठितं तेन स कृशो जातः । एवमुदरस्थौल्यं निर्लुण्ठितं सत् कुचयोर्जातम्, कुचयोश्च कार्श्यमुदरे । रोमलताकौटिल्यं नेत्रयोः संगतम्, नेत्रयोः सारल्यं रोमलतायामिति तात्पर्यम् ॥

3. इहोदाहरणे शब्दार्थयोर्बन्धसाम्यं नास्तीति सहृदया एव प्रमाणम् । अतएव पूर्वैः परकीयान्येवोदाहरणानि लक्ष्यभूतानि न्यस्तानि । यदत्र रसगङ्गाधरे सर्वंकषबुद्ध्या—'निर्माय नूतनमुदाहरणानुरूपम्—' इत्येवमुदटङ्कि तद् बहुत्रावरकक्षाप्रवेशान्न शिक्षासमुचितमित्यलं महत्सु वाचालतया ॥

---

१. 'त्रिविधा' घ. २. 'प्रथम—' इत्यादि '—पुनः कथनम्' इत्यन्तः पाठो ग-पुस्तके नास्ति।

रतौ वामा यथा—

'दृष्टा दृष्टिमधो ददाति, कुरुते नालापमाभाषिता,
शय्यायां परिवृत्त्य तिष्ठति, बलादालिङ्गिता वेपते ।
निर्यान्तीषु सखीषु वासभवनान्निर्गन्तुमेवेहते,
जाता [1]वामतयैव संप्रति मम प्रीत्यै नवोढा प्रिया ॥'

माने मृदुर्यथा—

'सा पत्युः प्रथमापराधसमये सख्योपदेशं विना
नो जानाति [2]सविभ्रमाङ्गवलनावक्रोक्तिसंसूचनम् ।
स्वच्छैरच्छकपोलमूलगलितैः पर्यस्तनेत्रोत्पला
बाला केवलमेव रोदिति लुठल्लोलालकैरश्रुभिः ॥

समधिकलज्जावती यथा—

'दत्ते सालसमन्थरं—'इत्यत्र (१०८ पृ.) श्लोके ।

---

यन्त्रणां व्याकुलभावम् । कामप्यनिर्वचनीयाम् । भावेन निगूढाभिप्रायेण किंचिद्गभीरं दुरवबोधं वक्रिम्णा लवं स्पृष्टं च यथा स्यात्तथा भाषते । उल्लापयन्तीं सादरं कथयन्तीम् । ईहते चेष्टते ॥ **सा पत्युरिति** । अपराधोऽन्यनायिकासंगमः । प्राथमिकतज्ज्ञानसमये सख्या [3]सख्येन वा य उपदेशस्तम् । विभ्रमः स्मरविकारः, अङ्गस्य वलनं संवरणम्, ताभ्यां सहिता । यदि विभ्रमो न स्यात्तदा पत्युरपराधे ईर्ष्यापि न स्यादिति भावः । वक्राया अपराधव्यञ्जिकाया उक्तेः संसूचनं कथनम् । पर्यस्ते चपले, व्याकुले वा नेत्रोत्पले यस्याः सा । रोदित्येव । न तु भ्रुकुटिवन्धादिकं करोति । लुठन्तो लोलाश्चला अलका यत्र तैः ॥ ननु समधिकलज्जावती तावद्रतौ प्रतिकूला भवतीति 'रतौ वामा' इत्यनेनैव तस्या ग्रहणे सिद्धे 'समधिक-

---

1. **वामतयेति** । इति प्रतिकूलाचरणतयैव संप्रति नवसंगमे नवोढा नवपरिणीता प्रिया मम प्रीत्यै जाता । अत्रेदमाकूतम्—अभिनवसमागमे वध्वाः प्रतिकूलवर्तित्वमेव नितरां भूषणम् । अन्यथा गौरवराहित्येन दौःशील्यं स्यात् ॥

2. **सविभ्रमेति** । सविभ्रमं यथा स्यात्तथा अङ्गस्य भ्रुकुट्यादेः वलना स्वाभिप्रायाविष्करणाय चालनं वक्रीकरणम्, याश्च वक्रोक्तयः, ताभिः संसूचनमिति समस्तस्वारस्यम् । स्वच्छैरतिनिर्मलैः । अच्छयोर्निर्मलयोः कपोलयोर्मूलेन गलितैः । अञ्जनपत्ररचनाव्यपगमादश्रुकपोलयोः स्वच्छता, तेन रोदनाधिक्यम् । उत्तानशयनान्मूलेन गलनम् । 'अश्रुभिः' इतीत्थंभूतलक्षणे तृतीया । अश्रुज्ञाप्यं विशिष्टं वा केवलं रोदनमेव करोतीत्यर्थः ।

3. **सख्येनेति** । सख्येन सौहृदेनेत्येव पक्षो ज्यायान् ॥

अत्र समधिकलज्जावतीत्वेनापि लब्धाया रतिवामताया विच्छित्ति-विशेषवत्तया पुनः कथनम् ।

अथ मध्या—

**मध्या विचित्रसुरता प्ररूढस्मरयौवना ।**
**ईषत्प्रगल्भवचना मध्यमव्रीडिता मता ॥ ५९ ॥**

विचित्रसुरता[3] यथा—

'कान्ते[1] तथा[2] कथमपि प्रथितं मृगाक्ष्या
चातुर्यमुद्धतमनोभवया रतेषु ।
तत्कूजितान्यनुवदद्भिरनेकवारं
शिष्यायितं गृहकपोतशतैर्यथास्याः ॥'

प्ररूढस्मरा यथात्रैवोदाहरणे ।

प्ररूढयौवना यथा मम—

'नेत्रे खञ्जनगञ्जने, सरसिजप्रत्यर्थि पाणिद्वयं,
वक्षोजौ करिकुम्भविभ्रमकरीमत्युन्नतिं गच्छतः ।
कान्तिः काञ्चनचम्पकप्रतिनिधि, र्वाणी सुधास्यन्दिनी,[4]
स्मेरेन्दीवरदामसोदरवपुस्तस्याः कटाक्षच्छटा ॥'

---

लज्जावती' इति पृथगुपादानं किमर्थमित्याह—**अत्रेति** । विच्छित्तिविशेषवत्तया वैचित्र्यविशेषसंपादकत्वेन ॥ **प्ररूढे** अत्यर्थमुत्पन्ने स्मरयौवने यस्याः सा । **मध्यमं** व्रीडितं लज्जा यस्याः सा । **त** (अ)स्याः कूजितानि अव्यक्तशब्दविशेषान् । **शिष्यायितं** शिष्यवदाचरितम् ॥ **नेत्रे इति** । खञ्जनानां गञ्जने पराभवका-

---

1. कान्त इति । हे कान्ते, उद्धत उत्कटो मनोभवो यस्यास्तया मृगाक्ष्या रतेषु सुरत-व्यतिकरेषु चित्तपरिस्पन्देन रमणाद्रतम् । कपोतानां चिराध्ययनलाभाय रतेष्विति बहुवचनम् । अन्यथा तादृशी शिष्यता भज्येत । कथमपि महता व्यवसायेन तथा चातुर्यं सुरतसंगरवैदग्ध्यं प्रथितं यथास्याः तानि विविधभङ्गिवैलक्षण्येन प्रथितानि । एतेन ग्राह्यत्वं सूच्यते । कूजितानि मणितविशेषान् । अनेकवारमसकृत् अनुवदद्भिः कूजनाव्यवहितोत्तरकालं गृणद्भिः गृहकपोतशतैः शिष्यायितम् । अन्तेवासिवदाचरितमित्यर्थः । कान्ते प्रिये, इति सप्तम्यन्तमपि ॥

---

१. ग-पुस्तके तु 'मध्या' यथा—'मध्यास्तयौवनानङ्गा मोहान्तः सुरतक्षमा ।' इत्येव लक्षणं दृश्यते. २. 'यथा' क., 'तथा' ख. ३. 'विचित्र–' इत्यादेः '–अन्यत्रापि' इत्यन्तस्य ग्रन्थस्य स्थाने 'तत्र यौवनवती मध्या यथा—'आलापान्भ्रूविलासो विरलयति रसद्बाहुविक्षेपपातं नीवीग्रन्थिं प्रथिम्ना प्रतनयति मनाङ्मध्यनिम्नो नितम्बः । उत्पुष्यत्पार्श्वमूर्च्छत्कुचशिखरमुरो नूनमन्तःस्मरेण स्पृष्टा कोदण्डकोट्या हरिणशिशुदृशो दृश्यते यौवनश्रीः ॥' एवं मध्यामावादिकमूह्यम् । इति पाठो ग-पुस्तके. ४. 'सुधास्पर्धिनी' क.

एवमन्यत्रापि ।

अथ प्रगल्भा—

**स्मरान्धा गाढतारुण्या समस्तरतकोविदा ।**
**भावोन्नता दरव्रीडा प्रगल्भाक्रान्तनायका ॥ ६० ॥**

स्मरान्धा यथा—

'[1]धन्यासि या कथयसि प्रियसंगमेऽपि
विश्रब्धचाटुकशतानि रतान्तरेषु ।

---

रिणि । प्रत्यर्थि वैरि । ताभ्यां सादृश्यलाभः । करिकुम्भयोर्विशिष्टभ्रमं करोति या ताम् । स्मेरस्य प्रफुल्लस्य इन्दीवरदाम्नः सोदरं सदृशं वपुः स्वरूपं यस्याः सा । छटा धारा ॥ **एवमिति** । एवं लक्षणानुसारेण अन्यत्र किंचित्प्रगल्भवचनामध्यमव्रीडितयोरुदाहरणमूह्यम् । यथा—'सुभग कुरवकस्त्वं किं ममालिङ्गनोत्कः किमु मुखमदिरेच्छुः केसरो नो हृदिस्थः । त्वयि नियतमशोके युज्यते पादघातः प्रियमिति परिहासात्पेशलं काचिदूचे ॥' 'किंचिदाकुञ्चयत्यास्यं मन्दहासातिसुन्दरम् । दरमुद्रितनेत्रान्ता चुम्बतीशे नितम्बिनी ॥' **भावैरनुभावैरुन्नता** प्राप्ताधिकरूपा ॥ **धन्यासीति** । सखीनां मध्ये सुरतसमये बाह्यकथालापिनीं कांचिदुपहसन्त्याः

---

1. धन्येति । सखीमण्डले रहस्यं कथयन्तीं प्रति विदग्धाया उक्तिरियम् । पूर्वं साकूतोक्तावेकस्याः संबोध्यत्वादेकवचनं धन्येति । ततः स्वोत्कर्षख्यापने बह्वीनां संबोध्यत्वाद् बहुवचनं सख्य इति नासंगतिः शङ्कनीयात्र । पाठोऽप्येवमेव सर्वत्र । हे सखि, या त्वं प्रियसंगमे रतान्तरेष्वपि रतिमध्येष्वपि विश्रब्धानां विश्वस्तानां चाटुकानां प्रियवाक्यानां शतानि कथयसि सा त्वं धन्यासि । इति योजना । प्रथमतः प्रियसंगमे एव विलक्षणानन्दमन्थरतया तत्कथनमशक्यम् । तत्रापि रते । तत्रापि नादौ नान्ते, किं तु मध्ये । तस्य च पुनरिदानीं स्मरणमित्याश्चर्यभूतं तव सावधानत्वमिति भावः । भोः सख्यः, प्रियेण नीवीं नाभितलवसनग्रन्थिं प्रति करे प्रणिहिते प्रणिधानविषयीकृते, नीव्यां करोऽर्पितव्य इति संकल्पविषयीकृते । न त्वर्पिते इत्यर्थः । आदिकर्मणि क्तः । अवाचकत्वापत्तेः अभिप्रायस्य लाघवापत्तेश्च । यदि किंचिदपि स्मरामि तदा शपामि शपथं करोमीति योजना । भवतीनां शपथोऽहं तु न किंचिदपि स्मरामि । किं पुनस्तादृशवाक्यमित्यपिशब्दार्थः । यद्यपि 'शप उपलम्भने' इति वार्तिकेनात्मनेपदं प्राप्नोति तथापि शपथकरणकप्रकाशनाविवक्षया न तत्प्रवृत्तिरिति, भाष्ये 'उपलम्भने' इत्येव पाठः. प्रकाशनमिति तदर्थः । सिद्धान्तकौमुद्याम् 'उपालम्भे' इति पाठ एतस्य व्याख्यानं च वृत्तिग्रन्थानुरोधेनेति च शब्देन्दुशेखरे द्रष्टव्यम् ॥ अस्यैव श्लोकस्य च्छायाभूतः 'धन्यास्ताः सखि योषितः प्रियतमे सर्वाङ्गलग्नेऽपि याः प्रागल्भ्यं प्रथयन्ति मोहनविधावालम्ब्य धैर्यं महत् । अस्माकं तु तदीयपाणिकमलेऽप्युन्मोचयत्यंशुकं कोऽयं का वयमत्र किं नु सुरतं नैव स्मृतिर्जायते ॥' इति रुद्रकविश्लोकः ॥

नीवीं प्रति प्रणिहिते तु करे प्रियेण
सख्यः शपामि यदि किंचिदपि स्मरामि ॥'

गाढतारुण्या[1] यथा—

'अत्युन्नतस्तनमुरो, नयने सुदीर्घे,
वक्रे भ्रुवावतितरां, वचनं ततोऽपि ।
मध्योऽधिकं तनु, रनूनगुरुर्नितम्बो,
मन्दा गतिः किमपि चाद्भुतयौवनायाः ॥'

समस्तरतकोविदा[2] यथा—

'क्वचित्ताम्बूलाक्तः क्वचिदगरुपङ्काङ्कमलिनः
क्वचिच्चूर्णोद्गारी क्वचिदपि च सालक्तकपदः ।
वलीभङ्गाभोगैरलकपतितैः शीर्णकुसुमैः
स्त्रियाः सर्वावस्थं कथयति रतं प्रच्छदपटः ॥'

भावोन्नता यथा—

'मधुरवचनैः सभ्रूभङ्गैः कृताङ्गुलितर्जनै
रभसरचितैरङ्गन्यासैर्महोत्सवबन्धुभिः ।
असकृदसकृत्स्फारस्फारैरपाङ्गविलोकितै-
स्त्रिभुवनजये सा पञ्चेषोः करोति सहायताम् ॥'

स्वल्पव्रीडा यथा—

'धन्यासि या कथयसि–' इत्यत्रैव ( १११ )

कस्याश्चिदुक्तिरियम् । प्रियस्य संगमेऽपि स्पर्शमात्रेऽपि या त्वं विश्रब्धेन विश्वासेन चाटुकशतानि प्रियोक्तिशतानि कथयसि सा त्वं धन्या । किमुत रतान्तरेषु । शपामि शपथं करोमि । अत्र परस्मैपदमशिष्टम् ॥ **ततोऽपि** भ्रूभ्यामपि । अतितरामत्यर्थम् । वक्रमित्यर्थः । **अनूनगुरुः** अतिस्थूलः । **किमप्य**त्यर्थम् । अद्भुतयौवनायाः उद्दामयौवनायाः ॥ **क्वचिदिति** । ताम्बूलाक्तः ताम्बूलजन्यरागोक्षितः । अगरु कालागरु । अङ्कं चिह्नम् । चूर्णानि गन्धद्रव्यविशेषानुद्गिरति निष्ठीवतीति सः । पदं चिह्नम् । वलीभिस्त्रिवलीभिः कृता ये भङ्गा निम्नत्वानि तेषामाभोगैः परिपूर्णताभिः । अलकेभ्यः केशेभ्यः पतितैः स्खलितैः शीर्णकुसुमैः उपमर्दितपुष्पैश्चोपलक्षितः । सर्वावस्थं सर्वप्रकारम् । कथयति सूचयति । प्रच्छदपटः शय्यावरणवस्त्रम् ॥ **मधुरेति** । कृतानि अङ्गुलितर्जनानि यत्र सः । रभसरचितैः हर्ष-

१. ग-पुस्तके तु गाढतारुण्याया उदाहरणं नास्ति. २. 'समस्त–' इत्यादिः '–भेदान्तराण्यह' इत्यन्तः पाठो ग-पुस्तके नास्ति.

आक्रान्तनायका यथा—

'स्वामिन्भङ्गुरयालकं, सतिलकं भालं विलासिन्कुरु,
प्राणेश त्रुटितं पयोधरतटे हारं पुनर्योजय ।
इत्युक्त्वा सुरतावसानसमये संपूर्णचन्द्रानना
स्पृष्टा तेन तथैव जातपुलका प्राप्ता पुनर्मोहनम् ॥'

मध्याप्रगल्भयोर्भेदान्तराण्याह—

**ते धीरा चाप्यधीरा च धीराधीरेति षड्विधे ।**

ते मध्याप्रगल्भे ।

तत्र—

**प्रियं सोत्प्रासवक्रोक्त्या मध्या धीरा दहेद्रुषा[1] ॥ ६१ ॥**
**धीराधीरा तु रुदितैरधीरा परुषोक्तिभिः ।**

तत्र मध्या धीरा यथा—

'तदवितथमवादीर्यन्मम त्वं प्रियेति
प्रियजनपरिभुक्तं यद्दुकूलं दधानः ।
मदधिवसतिमागाः कामिनां मण्डनश्री-
र्व्रजति हि सफलत्वं वल्लभालोकनेन ॥'

मध्यैव धीराधीरा यथा—

'बाले, नाथ, विमुञ्च मानिनि रुषं, रोषान्मया किं कृतं,
खेदोऽस्मासु, न मेऽपराध्यति भवान् सर्वेऽपराधा मयि ।

---

कृतैः महोत्सवस्य बन्धुभिः जनकैः । स्फारस्फारैः अतिदीर्घैः ॥ **स्वामिन्निति** । भङ्गुरय भङ्गीयुक्तं कुरु । त्रुटितं छिन्नम् । तेन स्वामिना । मोहनं सुरतसुखादिज्ञानम् ॥ **'मध्या'** इति स्थानत्रयेऽन्वेति । **सोत्प्रासवक्रोक्त्या** सपरिहासश्लिष्टवचनेन । **दहेत्** संतापयेत् । रुषेति कर्तृविशेषणम् ॥ **तदिति** । अवितथं सत्यम् । मण्डनेन भूषणेन कृता श्रीः शोभा । वल्लभा प्रिया तत्कर्तृकालोकनेन । अत्र च [अ]वितथमिति मिथ्या, यद् यस्मात् मम तापाय प्रतिनायिकापरिहितवस्त्रं परिधाय मम गेहमागाः । यद्यहं ते प्रिया स्यां तदा मत्तापजनकं कर्म न कुर्याः । एतत्तावत्सतां मण्डनं न भवति । यदि तवैतन्मण्डनं तदा तज्जन्यशोभा या प्रिया भवति तामेवावलोकय । ममालोकनया किंवा प्रयोजनमिति श्लेष एवात्र वक्रोक्तिः ॥ **बाले इति** । नायकस्य नायिकायाश्चोक्तिप्रत्युक्तिरूपः श्लोकोऽयम् । खेदोऽस्मासु कृत इत्यन्वयः । भवत-

---

१. 'वदेत्' क. घ. २. इदमुदाहरणं ग-पुस्तके नास्ति.

तत्किं रोदिषि गद्गदेन वचसा, कस्याग्रतो रुद्यते,

नन्वेतन्मम, का तवास्मि, दयिता, नास्मीत्यतो रुद्यते ॥'

ईयमेवाधीरा यथा—

'सार्धं मनोरथशतैस्तव धूर्त कान्ता

सैव स्थिता मनसि कृत्रिमहावरम्या ।

अस्माकमस्ति नहि कश्चिदिहावकाश-

स्तस्मात्कृतं चरणपातविडम्बनाभिः ॥'

**प्रगल्भा यदि धीरा स्याच्छन्नकोपाकृतिस्तदा ॥ ६२ ॥**

**उदास्ते सुरते तत्र दर्शयन्त्यादरान्बहिः ।**

तत्र प्रिये ।

यथा—

'एकत्रासनसंस्थितिः परिहृता प्रत्युद्गमाद्दूरत-

स्ताम्बूलानयनच्छलेन रभसाश्लेषोऽपि संविघ्नितः ।

आलापोऽपि न मिश्रितः परिजनं व्यापारयन्त्यान्तिके

कान्तं प्रत्युपचारतश्चतुरया कोपः कृतार्थीकृतः ॥'

**धीराधीरा तु सोल्लुण्ठभाषितैः खेदयत्यमुम् ॥ ६३ ॥**

अमुं नायकम् ।

---

स्तावदपराधो नास्ति । मम रुषा कथं खेद इत्यभिप्रायेण—**का तवेति** । दयिता भार्या । **नास्मीति** । अहं न दयिता । प्रेमपात्रमित्यर्थः ॥ इयमेव मध्यैव ॥ **सार्धमिति** । कृत्रिमेण स्वाभाविकेतरेण हावेन भावविशेषेण तव मनोरमा इह तव मनसि । कृतं वैयर्थ्यम् । चरणपातेन विडम्बनाभिर्विद्रावैः ॥ **प्रगल्भेति** । छन्ना संवृता कोपाकृतिः कोपसूचको मुखरागादिर्यया । उदास्ते उदासीना अनुरागहीना भवति । बहिर्बाह्यान् । न त्वान्तरान् ॥ तत्रेति विवृणोति—**प्रिये इति** । **एकत्रेति** । एकस्मिन्नासने आसनसंस्थितिः उपवेशनसंबन्धः । रभसाश्लेषो हर्षालिङ्गनम् । संविघ्नितः सम्यक्प्रतिरुद्धः । न मिश्रितः नोत्तरेण युक्तः कृतः । व्यापारयन्त्या नायकपरिचर्यार्थं सव्यापारीकुर्वत्या । अन्तिके इति विजनत्वाभावोपपत्तये । उपचारतः प्रीतिहेतुव्यापारान् विधाय । कोप इति संभोगप्रतिरोधः क्रोधस्य फलम् । तेनैव कान्तो

---

१. 'एवं मध्यधीरादिष्वप्यूह्यम्' ग. २. 'सार्धं—' इति श्लोको ग-पुस्तके नास्ति. ३. 'तत्रेति नायके' ग. ४. 'सोल्लुण्ठवचनैः' इत्यधिकं ग-पुस्तके.

[1]यथा मम—

'अनलंकृतोऽपि सुन्दर हरसि मनो मे यतः प्रसभम् ।
किं पुनरलंकृतस्त्वं संप्रति नखरक्षतैस्तस्याः ॥'

**तर्जयेत्ताडयेदन्या—**

अन्या अधीरा । [2]यथा—'शोणं वीक्ष्य मुखं—' इत्यत्र (९९ पृ०) ।
अत्र च सर्वत्र 'रुषा' इत्यनुवर्तते ।

**प्रत्येकं ता अपि द्विधा**
**कनिष्ठज्येष्ठरूपत्वान्नायकप्रणयं प्रति ॥ ६४ ॥**

ता [3]अनन्तरोक्ताः षड्भेदा [4]नायिकाः ।

यथा—

'दृष्ट्वैकासनसंस्थिते प्रियतमे पश्चादुपेत्यादरा-
देकस्या नयने पिधाय विहितक्रीडानुबन्धच्छलः ।
ईषद्वक्रितकंधरः सपुलकः प्रेमोल्लसन्मानसा-
[1]मन्तर्हासलसत्कपोलफलकां धूर्तोऽपरां चुम्बति ॥'

**मध्याप्रगल्भयोर्भेदास्तस्माद्द्वादश कीर्तिताः ।**
**[2]मुग्धा त्वेकैव तेन स्युः स्वीयाभेदास्त्रयोदश ॥ ६५ ॥**

**परकीया द्विधा प्रोक्ता परोढा कन्यका तथा ।**

---

वशीकृत इति भावः ॥ प्रियवद्भासमानमप्रियं सोल्लुण्ठनम् ॥ **अनलंकृत इति ।** किं पुनरिति । किमुतेत्यर्थः । तस्याः प्रतिनायिकायाः ॥ शोणमित्यादि धृष्टनायकोदाहरणे उक्तम् । **सर्वत्र** लक्षणपञ्चके ॥ **दृष्ट्वेति ।** प्रियतमे भार्ये । एकस्याः स्वल्पप्रणयनायिकायाः । क्रीडायामनुबन्ध आरम्भः । अपरामतिप्रणयिनीम् ॥ **तस्मा-**

---

1. **अन्तरिति ।** अन्तर्यो हासस्तेन लसन्तौ नायिकाप्रतारणदृष्टनायकवैदग्ध्यजन्यबहलानन्दोदयेन देदीप्यमानौ कपोलौ फलकाविव यस्यास्ताम् ॥

2. **मुग्धेति ।** रुद्रोऽप्याह—'एकाकारा मता मुग्धा पुनर्भूश्च यतोऽनयोः । अतिसूक्ष्मतया भेदः कविभिर्न प्रदर्शितः ॥' इति ॥

---

१. 'यथा—' इत्यादि '—तस्याः' इत्यन्तं ग-पुस्तके नास्ति. २. 'अनयोरूह्यमुदाहरणम्' ग. ३. 'अनन्तरोक्ताः' ग-पुस्तके नास्ति. ४. 'नायिकाः' ग-पुस्तके नास्ति.

[1]तत्र

[1][2]यात्रादिनिरतान्योढा कुलटा गलितत्रपा ॥ ६६ ॥

[3]यथा—

'स्वामी निःश्वसितेऽप्यसूयति, मनोजिघ्रः सपत्नीजनः,
श्वश्रूरिङ्गितदैवतं, नयनयोरीहालिहो यातरः ।
तद्दूरादयमञ्जलिः, किमधुना दृग्भङ्गिभावेन ते,
वैदग्धीमधुरप्रबन्धरसिक, व्यर्थोऽयमत्र श्रमः ॥'

[4]अत्र हि मम परिणेतान्नाच्छादनादिदातृतया स्वाम्येव न तु वल्लभः। त्वं तु वैदग्धीमधुरप्रबन्धरसिकतया मम वल्लभोऽसीत्यादिव्यङ्ग्यार्थवशादस्याः परनायकविषया रतिः प्रतीयते ।

[5]कन्या त्वजातोपयमा सलज्जा नवयौवना ।

---

दिति । उपदर्शितलक्षणभेदादित्यर्थः ॥ **यात्रादीति** । उत्सवादीत्यर्थः । **कुलटा** परभर्तृगामिनी ॥ **स्वामीति** । निःश्वसिते सतीत्यर्थः । निःश्वसितेन प्रच्छन्नकामुकाप्राप्तिदुःखमनुमाय मह्यमीर्ष्यतीति भावः । मनसो घ्राणजप्रत्यक्षासंभवेन अभिप्रायवेदने लक्षणा तस्य याथार्थ्यं प्रयोजनम् । एवमग्रयोरपि । इङ्गितमभिप्रायसूचकश्चेष्टाविशेषः, तद्दैवतं तदभिज्ञा । ईहालिहश्चेष्टाविशेषसूचनीयार्थाभिज्ञाः । यातरः पतिभ्रातुः पत्न्यः । वैदग्ध्या मधुरो मनोहरः प्रबन्धः सुरतप्रयोगस्तस्य रसयुक्तः। यद्वा, वैदग्ध्या मधुरः प्रबन्धो यस्य तत्संबोधने तथा । अत्र स्वाम्याद्याकीर्णे देशे। श्रमो मत्प्राप्तिसाधनव्यापारः । ननु स्वप्राप्तिसाधनव्यापारव्यर्थत्वकथनेनास्याः परनायकरत्यभावः प्रतीयते तेन च कुलटात्वाभाव इति कथमस्याः परनायिकात्वमत आह—**अत्र हीति** । परिणेता विवाहकर्ता । एतदुपलक्षणम् । 'अधुना'-'अत्र' पदाभ्यामपि कालान्तरे देशान्तरे च श्रमसार्थकत्वव्यञ्जनेनापि रतिः प्रतीयत इति ॥ **अजातोपयमा** अजातविवाहा ॥ उदाहरणान्तरं तु **नैषधीयचरिते** यथा—'अनैषधायैव जुहोति तातः किं मां कृशानौ न शरीरशेषाम् । ईष्टे तनूजन्मतनोः स नूनं मत्प्राणनाथस्तु नलस्तथापि ॥' अत्र विवाहात्पूर्वं दमयन्त्या नलानुरागः ॥ साधार-

---

1. यात्रादीति । आदिशब्देन द्वारदेशावस्थान-गोष्ठीयोजन-राजमार्गावलोकन-तरुणप्रातिवेश्यसदनगमनादयो ज्ञेयाः । इयमन्योढा न प्रधानरसे क्वचिन्निबन्धनीया । तथा चोक्तम्—'अन्यस्त्री कन्यकोढा च, नाऽन्योढाङ्गिरसे क्वचित् । कन्यानुरागमिच्छातः कुर्यादङ्गाङ्गिसंश्रयम् ॥' इति दिक् ॥

---

१. कन्यका अनूढा । 'अस्याश्च पित्राद्यायत्तत्वात्परकीयात्वम् ।' इति ग. २. 'यात्रा—' इति कारिकार्धं नास्ति ग-पुस्तके. ३. 'तत्र परोढा यथा' इति ग. ४. ग-पुस्तके तु 'द्वितीया यथा सागरिकादिः' इत्येव पाठः न तु 'अत्र—'इत्यादिः 'प्रतीयते' इत्यन्तः ५ एतत्कारिकार्धं ग-पुस्तके नास्ति.

अस्याश्च पित्राद्यायत्तत्वात्परकीयात्वम् । यथा मालतीमाधवादौ मालत्यादिः ।

**धीरा कलाप्रगल्भा स्याद्वेश्या सामान्यनायिका ॥ ६७ ॥**

तन्नियमाह—धीरेति । सुरतपण्डितेत्यर्थः । कला नृत्यगीतादयः, तत्र प्रगल्भा

1. कलेति । कलाश्चतुःषष्टिः । ता एताः—(१) गीतम्, (२) वाद्यम्, (३) नृत्यम्, (४) आलेख्यम्, (५) विशेषकच्छेद्यम्, (६) तण्डुलकुसुमवलिविकाराः, (७) पुष्पास्तरणम्, (८) दशनवसनाङ्गरागः, (९) मणिभूमिकाकर्म, (१०) शयनरचनम्, (११) उदकवाद्यम्, (१२) उदकाघातः, (१३) चित्राश्च योगाः, (१४) माल्यग्रथनविकल्पाः, (१५) शेखरकापीडयोजनम्, (१६) नेपथ्यप्रयोगाः, (१७) कर्णपत्रभङ्गाः, (१८) गन्धयुक्तिः, (१९) भूषणयोजनम्, (२०) ऐन्द्रजालाः, कौचुमाराश्च योगाः, (२१) हस्तलाघवम्, (२२) विचित्रशाकयूपभक्ष्यविकारक्रिया, (२३) पानकरसरागासवयोजनम्, (२४) सूचीवानकर्माणि, (२५) सूत्रक्रीडा, (२६) वीणाडमरुकवाद्यानि, (२७) प्रहेलिका, (२८) प्रतिमाला, (२९) दुर्वाचकयोगाः, (३०) पुस्तकवाचनम्, (३१) नाटकाख्यायिकादर्शनम्, (३२) काव्यसमस्यापूरणम्, (३३) पट्टिकावेत्रवानविकल्पाः, (३४) तक्षकर्माणि, (३५) तक्षणम्, (३६) वास्तुविद्या, (३७) रूप्यरत्नपरीक्षा, (३८) धातुवादः, (३९) मणिरागाकारज्ञानम्, (४०) वृक्षायुर्वेदयोगाः, (४१) मेषकुक्कुटलावकयुद्धविधिः, (४२) शुकसारिकाप्रलापनम्, (४३) उत्सादने संवाहने केशमर्दने च कौशलम्, (४४) अक्षरमुष्टिकाकथनम्, (४५) म्लेच्छितविकल्पाः, (४६) देशभाषाविज्ञानम्, (४७) पुष्पशकटिका, (४८) निमित्तज्ञानम्, (४९) यन्त्रमातृका, (५०) धारणमातृका, (५१) संपाठ्यम्, (५२) मानसी, (५३) काव्यक्रिया (५४) अभिधानकोषः, (५५) छन्दोज्ञानम्, (५६) क्रियाकल्पः, (५७) छलितकयोगाः, (५८) वस्त्रगोपनानि, (५९) द्यूतविशेषाः, (६०) आकर्षक्रीडा, (६१) बालक्रीडनकानि, (६२) वैनयिकीनां, (६३) वैजयिकीनां (६४) व्यायामिकीनां च विद्यानां ज्ञानम् । ५–विशेषकेति । विशेषकस्तिलकः यो ललाटे दीयते । तस्य भूर्जादिपत्रमयस्यानेकप्रकारं छेदनमेव छेद्यम् । ६–तण्डुलेति । नानावर्णैरखण्डतण्डुलैः सरस्वतीभवने मणिकुट्टिमेषु तथा कुसुमैर्ग्रथितैः शिवार्चनार्थं च भक्तिविकाराः । ८–दशनेति । रागशब्दः प्रत्येकमभिसंबध्यते । तत्राङ्गरागोऽङ्गमार्ष्टिः कुङ्कुमादिना । ११–उदकेति । उदके मुरजादिवद्वाद्यम् । १२–उदकेति । हस्तयन्त्रमुक्तैरुदकैस्ताडनम् । १३– चित्रा इति । नानाप्रकारदौर्भाग्यैकेन्द्रियपलितीकरणादयः । २०–कौचुमारा इति । कुचुमारस्यैते सुभगंकरणादयः उपायान्तरासिद्धसाधनार्थाः । २४–सूचीति । सूच्या यत्संधानकरणं तत्सूचीवानम् । २५–सूत्रेति । नालिकासंचारनालादिसूत्राणामन्यथान्यथा दर्शनम् । छित्त्वा दग्ध्वा च पुनरच्छित्त्वादग्ध्वा च दर्शनम् । तच्चाङ्गुलिन्यासात् । देवकुलादिदर्शे-

१. 'अस्या–' इत्यादिः '–त्वम् ।' इत्यन्तः पाठो ग-पुस्तके 'परोढा कन्यका' इति कारिकाया अग्रे दृश्यते. २. 'यथा–' इत्यादि नास्ति ग-पुस्तके.

निर्गुणानपि न द्वेष्टि न रज्यति गुणिष्वपि ।
वित्तमात्रं समालोक्य सा रागं दर्शयेद्बहिः ॥ ६८ ॥
कामम्[1]ङ्गीकृतमपि परिक्षीणधनं नरम् ।
मात्रा निःसारयेदेषा पुनःसंधानकाङ्क्षया ॥ ६९ ॥

अतिनिपुणा । बहिः कृत्रिमम् । काममत्यर्थमङ्गीकृतं वल्लभत्वेन स्वीकृतम् । मात्रा

नम् । २८–प्रतीति । यस्या अन्त्याक्षरिकेति प्रतीतिः । सा क्रीडार्था वादार्था च । यथोक्तम्—'प्रतिश्लोकं क्रमाद्यत्र संधायाक्षरमन्तिमम् । पठेतां श्लोकमन्योन्यं प्रतिमालेति सोच्यते ॥' इति । २९–दुरिति । शब्दतोऽर्थतश्च दुःखेनोच्यत इति दुर्वाचकम् । तस्य प्रयोगाः क्रीडार्था वादार्थाश्च । ३२–काव्येति । समसनं समस्या । 'असु क्षेपणे' ण्यत् । 'संज्ञापूर्वको विधिरनित्यः' इति वृद्धिर्न । तस्याः पूरणम् । तद्यथा मम—'गीर्वाणगेहेषु महाशयानां वेशान्तरालेषु च कामुकानाम् । रागाङ्कुरं पल्लवयत्यमन्दं यत्राच्युतोदारकथाप्रसङ्गः ॥' अत्र तुरीयः पादः समस्या । ३५–तक्षणेति । वर्धकिकर्म । शयनासनाद्यर्थम् । ३८–धात्विति । क्षेत्रवादः । स हि मृत्प्रस्तररत्नधातूनां पातनशोधनमेलनादिज्ञानहेतुरर्थार्थः । ४०–वृक्षेति । रोपणपुष्टिचिकित्सावैचित्र्यकृतो गृहोद्यानार्थाः । ४३–उत्सादन इति । मर्दनं द्विविधम्—पादाभ्यां हस्ताभ्यां च । तत्र पादाभ्यां यन्मर्दनं तदुत्सादनमुच्यते । हस्ताभ्यां यच्छिरोभ्यङ्गकर्म तत्केशमर्दनम् । शेषाङ्गेषु मर्दनं संवाहनम् । ४४–अक्षरेति । अक्षराणां मुष्टिरिव मुष्टिका गुप्तिरिति । सा साभासा निराभासा च । तत्र साभासा अक्षरमुद्रेत्युच्यते । तया कथनं गूढवस्तुमन्त्रणार्थं ग्रन्थसंक्षेपार्थं च । तदुक्तमाचार्यरविगुप्तेन चन्द्रप्रभाविजये—'गहनप्रसन्नसर्वां कतिपयसूत्रामिमामनन्तमुखीम् । अनधीत्याक्षरमुद्रां वादसमुद्रे परिप्लवते ॥' इति । निराभासा मुद्रेत्युच्यते । तया कथनं गोप्यवस्तुमन्त्रणार्थम् । यथोक्तम्—'मुष्टिः किसलयं चैव च्छटा च त्रिपताकिका । पताकाङ्कुशमुद्राश्च मुद्रावर्गेषु सप्तसु ॥ अङ्गुल्यश्चाक्षराण्येषां स्वराश्चाङ्गुलिपर्वसु । संयोगादक्षरं युक्तं भूतमुद्रा प्रकीर्तिता ॥' इति । ४५–म्लेच्छितेति । यत्साधुशब्दोपनिबद्धमप्यक्षरविन्यासादस्पष्टार्थं तन्म्लेच्छितम् । गूढवस्तुमन्त्रार्थमेतत् । ४९–यन्त्रेति । सजीवानां निर्जीवानां यन्त्राणां यानोदकसंग्रामार्थं घटनाशास्त्रम् । ५०–धारणेति । श्रुतस्य ग्रन्थस्य धारणार्थं शास्त्रम् । ५२–मानसीति । मनसि भवा चिन्ता दृश्यादृश्यभेदविषया । ५७–छलितकेति । परव्यामोहनार्थाः । आकर्षेति । पाशकक्रीडा । द्यूतविशेषत्वेऽपि पुनर्वचनमादरार्थम् । सश्रृङ्गारत्वाद्दुर्विज्ञेयत्वाद्वा । अक्षहृदयापरिज्ञाने हि नलयुधिष्ठिरयोरपि पराजयात् । ६२–वैनेति । स्वपरविनयप्रयोजनाद्वैनयिक्यः आचारशास्त्राणि । एवमितरे अपि ॥

1. काममित्यादि । स्पष्टोऽयमर्थो वात्स्यायनीये वैशिकाधिकरणे—'सक्तं तु पूर्वोपकारिणमप्यल्पफलं व्यलीकेनानुपालयेत् । असारं तु निष्प्रतिपत्तिकमुपायतोऽपवाहयेत् । अन्यमवष्टभ्य ।' इति, 'वर्तमानं निष्पीडितार्थमुत्सृजन्ती पूर्वसंसृष्टेन सह संदध्यात् । स चेदवसितार्थो वित्तवान्सानुरागश्च ततः संधेयः ।' इति च ॥

1. 'निष्कासयेत्' क-ख-ग.

तस्कराः[1] पण्डका मूर्खाः सुखप्राप्तधनास्तथा।
लिङ्गिनश्छन्नकामाद्या अस्याः प्रायेण वल्लभाः॥ ७० ॥
एषापि मदनायत्ता क्वापि सत्यानुरागिणि।
रक्तायां वा विरक्तायां रतमस्यां[2] सुदुर्लभम्॥ ७१ ॥

पण्डको[3] वातपाण्ड्वादिः। छन्नं प्रच्छन्नं ये कामयन्ते ते छन्नकामाः। तत्र रागहीना यथा लटकमेलकादौ मदनमञ्जर्यादिः। रक्ता यथा मृच्छकटिकादौ वसन्तसेनादिः।

---

गृहीतोपकरणद्रव्यं निःसारयेद् वाहयति (येत्)। **संधानं** सुरतार्थं संनिधानम्। सुखेन अनायासेन प्राप्तं धनं यैस्ते। **लिङ्गिनस्तपस्विवेषधारिणः।** **अस्याः** वेश्यायाः।

---

1. **तस्करा इति।** अयमर्थो वात्स्यायनीये सविशेषमुक्तः—'स्वतन्त्रः पूर्वे वयसि वर्तमानो वित्तवानपरोक्षवृत्तिरधिकरणवानकृच्छ्राधिगतवित्तः। संघर्षवान्संततायः सुभगमानी श्लाघनकः पण्डकश्च पुंशब्दार्थी। समानस्पर्धी स्वभावतस्त्यागी। राजनि महामात्रे वा सिद्धो दैवप्रमाणो वित्तावमानी गुरूणां शासनातिगः सजातानां लक्ष्यभूतः सवित्त एकपुत्रो लिङ्गी प्रच्छन्नकामः शूरो वैद्यश्च।' इति॥

2. **रतमिति।** रतमस्यां सुदुर्लभमित्युक्तिस्तु नितरां जघन्यतमा हरितालपातयोग्या च। शास्त्रस्य वस्तुस्थितिख्यापनमात्रपरतया तदनुमोदनानुपलम्भाच्छिष्टैरनादृतत्वाच्च। अत एव कामसूत्रकृताप्यभिहितम्—'धर्ममर्थं च कामं च प्रत्ययं लोकमेव च। पश्यत्येतस्य तत्त्वज्ञो न च रागात्प्रवर्तते॥ अधिकारवशादुक्ता ये चित्रा रागवर्धनाः। तदनन्तरमत्रैव ते यत्नाद्विनिवारिताः॥ तदेतद्ब्रह्मचर्येण परेण च समाधिना। विहितं लोकयात्रार्थं न रागार्थोऽस्य संविधिः॥' इति। एवं परकीयाविषयोऽपि जघन्यतम एव। उक्तं च तेनैव—'संदृश्य शास्त्रतो योगान्पारदारिकलक्षितान्। न याति च्छलनां कश्चित्स्वदारान्प्रति शास्त्रवित्॥ पाक्षिकत्वात्प्रयोगाणामपायानां च दर्शनात्। धर्मार्थयोश्च वैलोम्यान्नाचरेत्पारदारिकम्॥ तदेतद्दारगुप्त्यर्थमारब्धं श्रेयसे नृणाम्। प्रजानां दूषणायैव न विज्ञेयोऽस्य संविधिः' इति॥ अथवा, अष्टादशभाषावारविलासिनीभुजंगस्य च सर्वं शोभते॥

3. **पण्डक इति।** पण्डको नरंमन्यो नपुंसकः। स चात्मनः पुंस्त्वज्ञापनार्थं बहु वितरति। वस्तुतस्तु पण्डको वातपण्डकादिरिति व्याख्यानं ज्यायः। तथा चोक्तं चरकसंहितायां शारीरस्थानेऽतुल्यगोत्रीयाख्ये द्वितीयाध्याये—'वाय्वग्निदोषाद्वृषणौ तु यस्य नाशं गतौ वातिकपण्डकः सः।' इति। एवमन्येऽपि पण्डकभेदा निरूपिताः। पण्डते। 'पडि गतौ'। अच्। यद्वा, पणते। 'पण व्यवहारे स्तुतौ च'। अमन्ताड्डः॥

4. **छन्नेति।** प्रच्छन्नकामिनो हि प्रकटं न कामयन्ते लोको मा ज्ञासीदिति। ते कामेन बाध्यमाना बहु वितरन्ति। छन्नं यथा स्यात् तथा कामयन्ते इति कर्मण्यण्॥

---

१. 'पण्डूकाः' घ २. 'वातरोग' क-घ ३. 'गृहोपकरणद्रव्याणि' इति पुस्तकान्तरे पाठः.

पुनश्च—

अवस्थाभिर्भवन्त्यष्टावेताः षोडशभेदिताः ।
स्वाधीनभर्तृका तद्वत्खण्डिताथाभिसारिका ॥ ७२ ॥
कलहान्तरिता विप्रलब्धा प्रोषितभर्तृका ।
अन्या वासकसज्जा स्याद्विरहोत्कण्ठिता तथा ॥ ७३ ॥

तत्र—

कान्तो रतिगुणाकृष्टो न जहाति यदन्तिकम् ।
विचित्रविभ्रमासक्ता सा स्यात्स्वाधीनभर्तृका ॥ ७४ ॥

यथा—'अस्माकं सखि वाससी—' इत्यादि (९९ पृ.) ।

पार्श्वमेति प्रियो यस्या अन्यसंयोगचिह्नितः ।
सा खण्डितेति कथिता धीरैरीर्ष्याकषायिता ॥ ७५ ॥

यथा—'तदवितथमवादीः—' इत्यादि (११३ पृ.)

अभिसारयते कान्तं या मन्मथवशंवदा ।
स्वयं वाभिसरत्येषा धीरैरुक्ताभिसारिका ॥ ७६ ॥

क्रमाद्यथा—

न च मेऽवगच्छति यथा लघुतां करुणां यथा च कुरुते स मयि ।
निपुणं तथैनमभिगम्य वदेरभिदूति काचिदिति संदिदिशे ॥

'उत्क्षिप्तं करकङ्कणद्वयमिदं, बद्धा दृढं मेखला,
यत्नेन प्रतिपादिता मुखरयोर्मञ्जीरयोर्मूकता ।

---

एषा वेश्यापि ॥ ईर्ष्याकषायिता ईर्ष्यया कलुषीकृतचित्ता ॥ अभिसारिकापदस्य व्युत्पत्तिलभ्यमर्थद्वयमेव लक्षणद्वयमाह—अभिसारयत इति ॥ न चेति । स कान्तः अभिदूति अभिमुखागतां दूतीं प्रति संदिदिशे वाचिकं न्यस्तवती ॥ उत्क्षि-

---

1. षोडशेति । त्रयोदश स्वीयाः, द्वे परकीये, एका सामान्येति मिलित्वा षोडशभेदिता एताः स्वाधीनपतिकाद्यष्टावस्थाभिः प्रत्येकं भिद्यन्त इति तात्पर्यम् ॥

2. वदेरिति । विध्यर्थे प्रार्थने वा लिङ् ॥

---

१. 'यथा' क. २. 'यस्या रतिगुणाकृष्टः पतिः पार्श्वं न मुञ्चति । ग. ३. ग.-पुस्तके तु—'निद्राकषायमुकुलीकृतताम्रनेत्रो नारीनखव्रणविशेषविचित्रिताङ्गः । यस्याः कुतोऽपि गृहमेति पतिः प्रभाते सा खण्डितेति कथिता मुनिभिः पुराणैः ॥' यथा—'नवनखपदमङ्गं गोपयस्यंशुकेन—' (इत्यादि) इति पाठः. ४. 'क्रमात्' इति ग-पुस्तके नास्ति. ५. 'त्वरय प्रस्तुतविधये यावत्तिमिराणि तरुणतरुणानि । भावी कुलटावाटः शशधरकरकण्टकैरवहः ॥' ग. ६. 'उत्क्षिप्तं—' इत्यादिः 'उदाहरणम् ।' इत्यन्तः पाठो ग-पुस्तके नास्ति.

आरब्धे रभसान्मया प्रियसखि क्रीडाभिसारोत्सवे,
चण्डालस्तिमिरावगुण्ठनपटक्षेपं विधत्ते विधुः ॥'

संलीना स्वेषु गात्रेषु मूकीकृतविभूषणा ।
अवगुण्ठनसंवीता कुलजाभिसरेद्यदि ॥ ७७ ॥
विचित्रोज्ज्वलवेषा तु रणन्नूपुरकङ्कणा ।
प्रमोदस्मेरवदना स्याद्वेश्याभिसरेद्यदि ॥ ७८ ॥
मदस्खलितसंलापा विभ्रमोत्फुल्ललोचना ।
आविद्धगतिसंचारा स्यात्प्रेष्याभिसरेद्यदि ॥ ७९ ॥

तत्राद्ये 'उत्क्षिप्तं—' इत्यादि ( १२० पृ. ) । अनयोरूह्यमुदाहरणम् ।
प्रसङ्गादभिसारस्थानानि कथ्यन्ते—

क्षेत्रं वाटी भग्नदेवालयो दूतीगृहं वनम् ।
[1]मालापञ्चः [2]श्मशानं च नद्यादीनां तटी तथा ॥ ८० ॥

---

प्तम् ऊर्ध्वं न्यस्तम् । एतेन तयोः शब्दप्रतिरोधः । प्रतिपादिता कृता । तिमिरमेव अवगुण्ठनपटः आच्छादनवस्त्रं तस्य क्षेपं निरासम् ॥ प्रसङ्गादभिसरणक्रममाह— **संलीनेति** । गात्रेषु अङ्गेषु । संकुचितसर्वाङ्गीत्यर्थः । अवगुण्ठनेन आच्छादनपटेन संवीता संवृतदेहा । एतदुपलक्षणम् । अनुलेपादिनापि संवीता । तत्रान्धकारे नीलवस्त्रकुसुमकस्तूरिकासंवीता । ज्योत्स्नायां चन्दनद्रवसंवीता । क्रमेण यथा—'सितं वसनमर्पितं वपुषि नीलचैलभ्रमान्मया मृगमदाशया मलयजद्रवः सेवितः । करेण परिवोधितः खजनशङ्कया दुर्जनः परं परमपुण्यतः सखि न लङ्घिता देहली ॥', 'मल्लिकामालभारिण्यः सर्वाङ्गीणार्द्रचन्दनाः । क्षौमवत्यो न लक्ष्यन्ते ज्योत्स्नायामभिसारिकाः ॥' आविद्धः उद्भावितः पत्युः सद्भावो यया । 'आविद्धगतिसंचारा' इति पाठे आविद्धया उद्धतया गत्या संचारः संकेतस्थानप्राप्तिर्यस्याः सेत्यर्थः ॥ आद्ये कुलजाभिसरणप्रकारे । अनयोर्वेश्याप्रेष्याभिसरणप्रकारयोः । तत्र क्रमेणोदाहरणम् । यथा मम—'कामेषुवेधविधुरं धुरि दत्तवित्तं शिञ्जानमञ्जुमणिनूपुरकिङ्किणीका । मन्दं बृहत्कुचनितम्बभरेण दूरादाश्वासयत्यभिसरत्युत कापि धन्यम् ॥' 'कान्तं तमेकान्तगुणाभिरामं मदीहिताधानविवृद्धकामम् । प्राप्यापमोदं विदधे सखीति ब्रुवत्यभीष्टं प्रमदाभियाति ॥' अत्र 'संमोदम्' इति वक्तव्ये 'अपमोदम्' इति

---

1. **मालेति** । मालापञ्च इति शब्दः संदिग्ध एव सर्वत्रोपलभ्यते । तथापि टीकाविवृतपुष्पोद्यानपदस्वारस्येन 'मालानां पञ्चो व्यक्तीकरणं यस्मात्' इत्यादिरीत्या कथंचिद् व्याख्येयः । 'मालपं च' इति पाठे मा नास्ति आलापो यत्र तच्छून्यं गृहमित्यर्थ इति योज्यम् ॥

---

१. 'मालापश्चाः' क; 'मालामश्चाः' ग; 'मालयं च' घ. २. 'श्मशानानि' क.

**एवं कृताभिसाराणां पुंश्चलीनां विनोदने ।**
**स्थानान्यष्टौ [1]तथा ध्वान्तच्छन्ने कुत्रचिदाश्रये ॥ ८१ ॥**
**[2]चाटुकारमपि प्राणनाथं रोषादपास्य या ।**
**पश्चात्तापमवाप्नोति कलहान्तरिता तु सा ॥ ८२ ॥**

[3]यथा मम तातपादानाम्—

'नो चाटुश्रवणं कृतं, न च दृशा हारोऽन्तिके वीक्षितः,
कान्तस्य प्रियहेतवो निजसखीवाचोऽपि दूरीकृताः ।
पादान्ते विनिपत्य तत्क्षणमसौ गच्छन्मया मूढया
पाणिभ्यामवरुध्य हन्त सहसा कण्ठे कथं नार्पितः ॥'

**[4]प्रियः कृत्वापि संकेतं यस्या नायाति संनिधिम् ।**
**विप्रलब्धा तु सा ज्ञेया नितान्तमवमानिता ॥ ८३ ॥**

[5]यथा—

'उत्तिष्ठ दूति, यामो, यामो यातस्तथापि नायातः ।
याऽतः परमपि जीवेज्जीवितनाथो भवेत्तस्याः ॥'

**[6]नानाकार्यवशाद्यस्या दूरदेशं गतः पतिः ।**
**सा मनोभवदुःखार्ता भवेत्प्रोषितभर्तृका ॥ ८४ ॥**

---

संलापस्खलनम् ॥ क्षेत्रं सस्योत्पत्तिस्थानम् [1]**वाटी** निर्जनवास्तु । मालापञ्चैः पुष्पोद्यानम् । **विनोदने इति** । सुरतोत्सवायेत्यर्थः । **कुत्रचिदाश्रये** पुंश्चल्योऽभिसरन्ति इति शेषः । 'आश्रयः' इति प्रथमान्तपाठे ध्वान्तच्छन्ने कुत्रचिद्देशे आश्रयोऽधिष्ठानं पुंश्चलीनां विनोदे भवतीत्यर्थः । चाटुं प्रियोक्तिं करोतीति चाटुकारः तम् ॥ **हारो** नायकेन प्रसादाय दीयमानो मुक्ताकलापः ॥ **यामः** संकेतकालः ॥ **नानाकार्यवशादिति** । शापसंभ्रमयोरप्युपलक्षणम् । तेनोक्ते हरणे नाव्याप्तिः ॥

---

1. वाटीति । गृहोद्यानमित्युचितम् । मालापञ्च इत्यस्याग्रे लिखितं 'पुष्पोद्यानम्' इति लेखदोषाद्भ्रष्टम्, 'निर्जनवास्तु' इति तु अत्रत्यमिति प्रतिभाति एवं 'मालापं च' इति पाठः साधुः ॥

---

१. 'मुनिः प्राह ध्वान्तच्छन्नं स्थलं तथा ।' ग. २. 'पादयोः पतिते कान्ते या मानं न विमुञ्चति । तस्मिन्गते तु तापार्ता कलहान्तरिता तु सा ॥' ग. ३. 'यथा मम तातपादानाम्' ग-पुस्तके नास्ति. ४. 'अहरहरनुरागाद्दूतिकां प्रेष्य पूर्वं सरल (?) सम्रभिसृत्य कापि संकेतके च । न मिलति खलु यस्या वल्लभो दैवयोगात्प्रवदति भरतस्तां नायिकां विप्रलब्धाम् ॥' इति ग. ५. ग-पुस्तके तु 'सखि स विजितो वीणाद्यूते—' (इत्यादि) इति पाठः ६. 'दूरदेशं गते कान्ते विवर्णा मलिना कृशा । या तिष्ठति तदाकाङ्क्षा सा स्यात्प्रोषितभर्तृका ॥' इति ग. ७. 'मालापं च' इत्येकस्मिन्पुस्तके.

यथा—

'[1]तां जानीयाः परिमितकथां जीवितं मे द्वितीयं
दूरीभूते मयि सहचरे चक्रवाकीमिवैकाम् ।
गाढोत्कण्ठां गुरुषु दिवसेष्वेषु गच्छत्सु बालां
जातां मन्ये शिशिरमथितां पद्मिनीं वान्यरूपाम् ॥'

**[2]कुरुते मण्डनं यस्याः सज्जिते वासवेश्मनि ।**
**सा तु वासकसज्जा स्याद्विदितप्रियसंगमा ॥ ८५ ॥**

यथा [3]राघवानन्दानां नाटके—

'विदूरे केयूरे कुरु, करयुगे रत्नवलयै-
रलं, गुर्वी ग्रीवाभरणलतिकेयं किमनया ।
नवामेकामेकावलिमयि मयि त्वं विरचये-
र्न नेपथ्यं पथ्यं बहुतरमनङ्गोत्सवविधौ ॥'

**[4]आगन्तुं कृतचित्तोऽपि दैवान्नायाति यत्प्रियः ।**
**तदनागमदुःखार्ता विरहोत्कण्ठिता तु सा ॥ ८६ ॥**

---

**तां जानीया इति** । कुबेरशापात्प्रोषितस्य यक्षस्य मेघं प्रत्युक्तिरियम् । पद्मिनीं वेति वाशब्द इवार्थः । 'वा स्याद्विकल्पोपमयोरिवार्थे च समुच्चये ।' इति **विश्वप्रकाशः** । उत्तरार्धे द्वितीयान्तेषु प्रथमान्तपाठः क्वचित्पुस्तकेषु दृश्यते तदा पुनरिवशब्द एव ॥ **कुरुत इति** । सखी इति शेषः । सज्जिते शय्याप्रदीपादिभिः परिष्कृते ॥ **विदूर इति** । मण्डयन्तीं सखीं प्रति कस्याश्चिदुक्तिरियम् । नवां नवगुम्फिताम् । अन्यथा परिरम्भभरेण झटिति त्रुटिता स्यात् । बहुयष्टिकहारस्य परिरम्भातिविघ्नहेतुत्वादाह—**एकावलिमिति** । एकयष्टिकहारमित्यर्थः ॥ **यत्प्रिय इति** । यस्याः

---

१. ग-पुस्तके तु 'आधिक्षामां विरहशयने–'इत्युदाहृतम्. २. 'वासवेश्मनि सुकल्पिततल्पे या समागमविधिं विदधाना । तिष्ठति प्रियसमागमसज्जा तां मुनिर्वदति वासकसज्जाम् ॥' इति ग. ३. ग-पुस्तके तु 'राघवानन्दानां–'इत्यादिः '–विधौ ॥' इत्यन्तः पाठो नास्ति, किंतु तत्स्थाने 'अङ्गेष्वाभरणं करोति बहुशः पत्रेऽपि संचारिणि प्राप्तं त्वां परिशङ्कते वितनुते शय्यां चिरं ध्यायति । इत्याकल्पविकल्पतल्परचनासंकल्पलीलाशतव्यासक्तापि विना त्वया वरतनुर्नैषा निशां नेष्यति ॥' इति दृश्यते. ४. 'उद्दाममन्मथमहाज्वरवेपमानां रोमाञ्चकञ्चुकितमङ्कमावहन्तीम् । गाढानुरागवचनां पुरतः सखीनामुत्कण्ठितां वदति तां भरतः कवीन्द्रः ॥' इति ग.

यथा—

'किं रुद्धः प्रियया कयाचि, दथवा सख्या ममोद्वेजितः,
किंवा कारणगौरवं किमपि, यन्नाद्यागतो वल्लभः ।
इत्यालोच्य मृगीदृशा करतले विन्यस्य वक्त्राम्बुजं
दीर्घं निःश्वसितं, चिरं च रुदितं, क्षिप्ताश्च पुष्पस्रजः ॥'

**इति साष्टाविंशतिशतमुत्तममध्याधमस्वरूपेण ।**
**चतुरधिकाशीतियुतं शतत्रयं नायिकाभेदाः ॥ ८७ ॥**

---

प्रिय इत्यर्थः । तदनागमेति । प्रियानागमनेनेत्यर्थः ॥ किं रुद्ध इति । संके-

---

1. कारणेति । कारणगौरवं हेतूद्रेकः । प्रयोजनविशेष इति यावत् ॥

2. इतीति । स्वीया तावत्त्रिविधा—मुग्धा मध्या प्रगल्भा चेति । तत्र मुग्धैकधा, मध्याप्रगल्भे तु धीराधीरोभयभेदेन षड्विधे । धीरा मध्या, अधीरा मध्या, धीराधीरा मध्या । एवमग्रेऽपि । एताश्च षड्विधा ज्येष्ठत्वकनिष्ठत्वाभ्यां द्विविधाः । धीरा ज्येष्ठा-कनिष्ठा, अधीरा ज्येष्ठा-कनिष्ठा, धीराधीरा ज्येष्ठा-कनिष्ठा चेति । एवं द्वादशभेदा मुग्धया सह त्रयोदश भवन्तीति स्वीयाकथा । परकीया द्विविधा—परोढा कन्यका चेति। सामान्या त्वेका । एताः पुनः सभेदाः स्वकीयापरकीयासामान्याः स्वाधीनपतिकाद्यष्टावस्थाभिः प्रत्येकं भिद्यन्ते । एवं चतुरधिकशतं स्वीयाः । षोडश परकीयाः । अष्टौ सामान्याः । आसां संकलनेऽष्टाविंशत्यधिकशतं नायिकाः । १०४+१६+८=१२८। तासामप्युत्तममध्यमाधमभेदगणनया चतुरधिकाशीतियुतं शतत्रयं भेदाः । ३×१२८=३८४ । तत्रापि दिव्यादिव्योभयभेदगणनया द्विपञ्चाशदधिकैकादशशतं भेदा जायन्ते। ३×३८४=११५२ । अत्रेदमप्यवधेयम्—यद्यपि मुग्धाया लज्जाप्राधान्येन, मध्याया लज्जामदनप्राधान्येन, प्रगल्भायाः प्रौढिप्राधान्येन, धीराया धैर्यप्राधान्येन, अधीराया अधैर्यप्राधान्येन, धीराधीराया धैर्याधैर्यप्राधान्येन, ज्येष्ठायाः प्रेमज्यैष्ठ्यप्राधान्येन, कनिष्ठायाः प्रेमकानिष्ठ्यप्राधान्येन, परोढाया रहस्यप्राधान्येन मुग्धाया इव कन्यकायाः, सामान्याया वित्तप्राधान्येन, अष्टविधा नायिका भवन्ति तथापि 'प्रस्थानं वलयैः कृतं प्रियसखैरस्रैरजस्रं गतं धृत्या न क्षणमासितं व्यवसितं चित्तेन गन्तुं पुरः । यातुं निश्चितचेतसि प्रियतमे सर्वे समं प्रस्थिता गन्तव्ये सति जीवितप्रिय सुहृत्सार्थः किमु त्यज्यते ॥' इत्यादिलक्ष्यादुत्तरक्षणे कृतदेशान्तरगमनाध्यवसाये प्रिये प्रवत्स्यद्भर्तृका नवमी नायिका भवितुमर्हति । तस्याः प्रोषितभर्तृकाविप्रलब्धाविरहोत्कण्ठितासु नान्तर्भावः । संनिहिते प्रेयसि तत्त्वायोगात् । न कलहान्तरितायामन्तर्भावः । कलहाभावाद्-

---

१. 'एणीदृशः प्रबलतापभयादिवास्याः श्वासानिलाः प्रति मुहुः प्रसरन्ति दूरम् । बाष्पाम्बुवीचिषु निमज्जनकातरेव निद्रा दृशोर्न सविधेऽपि पदं विधत्ते ॥' इति ग. २. 'मध्यमाधमस्वरूपमतः' क-ख-ग-पुस्तके तु 'भेदे पूर्ववदासामुत्तममध्याधमत्वेन ।' इति पूर्वार्धम्; 'मध्यमाधमस्वरूपतः' घ. ३. 'नायिकाभिदानां स्यात्' क-ख; 'नायिकाभिधानं स्यात्' ग; 'नायिकाभेदानां स्यात्' घ.

इह च परस्त्रियौ[1] कन्यकान्योढे संकेतात्पूर्वं विरहोत्कण्ठिते । पश्चाद्विदूषकादिना सहाभिसरन्त्यावभिसारिके । कुतोऽपि संकेतस्थानमप्राप्ते नायके विप्रलब्धे । इत्यवस्थैवानयोः । अस्वाधीनप्रिययोरवस्थान्तरायोगात् ।' इति कश्चित्[1][2] ।

क्वचिदन्योन्यसांकर्यमासां लक्ष्येषु दृश्यते ।

यथा—

'न[2] खलु वयममुष्य दानयोग्याः पिबति च पाति च यासकौ रहस्त्वाम् ।
विट विटपममुं ददस्व तस्यै भवति यतः सदृशोश्चिराय योगः ॥'

---

तस्याया नायिकायाः प्रियानागमने वितर्कोऽयम् ॥ **अवस्था** त्रयो भेदाः । अनयोः परस्त्रियोः । **अवस्थान्तरायोगादिति** । प्रकारासंभवादिति भावः । तथाहि— परस्त्रियाः पार्श्वे नायकस्य संततमवस्थानायोगान्न[3] स्वाधीनभर्तृकात्वम् । नायिकान्तरसंभोगेन ईर्ष्याया असंभवान्न खण्डितात्वम् । नायिकान्तरसंभोगदोषात्कान्तत्यागासंभवेन न कलहान्तरितात्वम् । कान्तस्य दूरदेशगमनेन मनोभवदुःखार्तत्वाभावान्न प्रोषितभर्तृकात्वम् । परालोकनशङ्कया सज्जितवासवेश्मनि मण्डनासंभवान्न वासकसज्जात्वम् । तथा चानयोस्त्रैविध्येन षडेव भेदाः । न त्वष्टविधत्वेन षोडशेति । तत्र चतुरशीत्यधिकशतत्रयसंख्या नोपपन्नेति भावः । 'अस्वाधीनप्रिययोः' इत्युपदर्शनमात्रम् ॥ **आसामुपदर्शितप्रकाराणां** नायिकानाम् । लक्ष्येषु महाकविप्रयोगेषु ॥ **न खल्विति** । सपुष्पपल्लवां वृक्षशाखां प्रियायै यच्छन्तं नायकं प्रति नायिकाया उक्तिरियम् । अमुष्य विटपस्य । पिबति चुम्बति । पाति योषिदन्तरेभ्यो वारयति । हे विट हे षिड्ग कामुक । विटपं सपुष्पमालां शाखाम् । **सदृशोरिति** । विटं त्वां

---

नवमानित्वाच्च । न खण्डितायामन्तर्भावः । अन्योपभोगलाञ्छितस्य प्रियस्यागमनाभावात्, प्रियायाः कोपाभावदर्शनात्, काकुवचनकातरावलोकनादिसूचितान्तरिकपक्षपातदर्शनाच्च । न वासकसज्जायामन्तर्भावः । गच्छति प्रिये सज्जीकरणाभावात् खेदोद्गमाच्च । न स्वाधीनभर्तृकायामन्तर्भावः । उत्तरक्षण एव विप्रयोगदर्शनाद् भर्तरि स्वाधीनत्वव्याघाताच्च । नाप्यभिसारिकायामन्तर्भावः । उत्साहराहित्याद् अन्तस्तापदर्शनाच्चेति । एतल्लक्षणं तु 'पतिर्देशान्तरं यस्या यास्यत्येवोत्तरक्षणे । प्रवत्स्यत्पतिका सा स्यात्प्रयाणच्छेदनोद्यमा ॥' इति ज्ञेयमिति नव्याः । इत्येवमादि रसमञ्जरीविभ्रमा भ्रमरभ्रामका व्यक्ता एवेत्यलं कालयापनेन ॥

1. कश्चिदिति आचार्यधनिकः ॥

2. नेति । वयममुष्य दानयोग्या न भवामः खलु । किंतु या असावेवासकौ त्वत्प्रिया रहः एकान्ते त्वां पिबति पानं करोति पाति मदनानलसंतापाद्रक्षति च । तस्यै

---

१. 'कन्यकोढे' ख-ग-घ. २. 'क्वचित्' क. ३. 'संततस्थान—' इति पुस्तकान्तरे.

'तव कितव किमाहितैर्वृथा नः क्षितिरुहपल्लवपुष्पकर्णपूरैः ।
ननु जनविदितैर्भवद्व्यलीकैश्चिरपरिपूरितमेव कर्णयुग्मम् ॥'
'मुहुरुपहसितामिवालिनादैर्वितरसि नः कलिकां किमर्थमेनाम् ।
वसतिमुपगतेन धाम्नि तस्याः शठ कलिरेष महांस्त्वयाद्य दत्तः ॥'
'इति गदितवती रुषा जघान स्फुरितमनोरमपक्ष्मकेसरेण ।
श्रवणनियमितेन कान्तमन्या सममसिताम्बुरुहेण चक्षुषा च ॥'

इयं हि वक्रोक्त्या परुषवचनेन कर्णोत्पलताडनेन च धीरमध्यताधीरमध्यताधीरप्रगल्भताभिः संकीर्णा । एवमन्यत्राप्यूह्यम् ।

**इतरा[1] अप्यसंख्यास्ता[2] नोक्ता विस्तरशङ्कया ॥ ८८ ॥**

ता नायिकाः ।

---

पिवति पाति वेति व्युत्पत्तिद्वयेन सैव विटपा अयमपि विटप इति तुल्ययोर्योगो योग्यो भवतीत्यर्थः । भवद्व्यलीकैर्भवतोऽप्रियवचनैः । स्फुरितो मनोरमः पक्ष्मवत्केसरो यस्य तेन । चक्षुःपक्षे—पक्ष्मैव केसरो यस्य तेन । **वक्रोक्त्येति** । विटशब्दस्य नानार्थकल्पनाविचित्रोक्त्येत्यर्थः ॥ **इतरा अपि** पद्मिनीहस्तिनीप्रभृतयः ॥

---

अमुं विटान्पातीति विटपं पल्लवम् । 'विटपः पल्लवे षिड्गे' इति विश्वः । ददस्व प्रयच्छ । व्रज गच्छ । यतो दानाच्चिराय सदृशोरनुरूपयोर्योगो भवतु । उभयोरपि विटपत्वादिति भावः ॥ हे कितव धूर्त, वृथा व्यर्थमेवाहितैः । तत्कार्यस्यान्यथा सिद्धत्वादिति भावः । तव संबन्धिभिः क्षितिरुहाणां पल्लवाः पुष्पाणि च तान्येव कर्णं पूरयन्तीति कर्णपूराः कर्णावतंसाः । तैर्नोऽस्माकं किं तत्साध्यम् । न किंचिदस्तीत्यर्थः । ननु अङ्ग, जनविदितैर्भवद्व्यलीकैस्तवाप्रियवचनैः कर्णयुग्मं चिरपरिपूरितं निखं पूर्णमेव । अतः पूरितस्य पूरणायोगादलमेभिरिति ॥ अलिनादैर्मुहुरुपहसितां प्रतारणार्थेति प्रहस्यमानामिव स्थितामेनां कलिकां कोरकम्, अल्पं कलिं कलहं च । 'कलहे च युगे कलिः' इति वैजयन्ती । स्त्रीप्रत्ययस्त्वविवक्षितः श्लेषे । नः अस्माकं किमर्थं वितरसि । हे शठ गूढविप्रियकारिन्, तस्याः त्वत्प्रियाया धाम्नि भवने वसतिं स्थितिमुपगतेन त्वया अद्यैव वर्तमानो महान् कलिः कलहो दत्तः । स्वदत्त एव महति कलौ स्थिते किं कल्यन्तरेणेत्यर्थः ॥ इति गदितवती उक्तवती अन्या स्त्री रुषा कान्तं स्फुरितान्युज्ज्वलानि मनोरमाणि च पक्ष्माणीव केसराणि । अन्यत्र केसराणीव पक्ष्माणि, यस्य तेन श्रवणे नियमितेन श्रोत्रे निरुद्धेन असिताम्बुरुहेण नीलोत्पलेन चक्षुषा च समं युगपज्जघान ताडयामासेति ॥

1. इतरा इति । तथा चोक्तम्—'पुनश्च तास्त्रिधा ज्ञेया दिव्यादिव्योभयात्मना । चतुर्थी चोद्धतोदात्ता ललिता शान्तिका तथा ॥ अक्षता च क्षता यातायाता यायावरेत्यपि ।

---

1. अयं श्लोकः क-ग-घ- पुस्तके नास्ति। 2. 'इतरा-' इति कारिकार्धं नास्ति ग- पुस्तके।

अथासामलंकाराः—

यौवने सत्त्वजास्तासामष्टाविंशतिसंख्यकाः ।
अलंकारास्तत्र भावहावहेलास्त्रयोऽङ्गजाः ॥ ८९ ॥
शोभा कान्तिश्च दीप्तिश्च माधुर्यं च प्रगल्भता ।
औदार्यं धैर्यमित्येते सप्तैव स्युरयत्नजाः ॥ ९० ॥
लीला विलासो विच्छित्तिर्विव्वोकः किलकिञ्चितम् ।
मोट्टायितं कुट्टमितं विभ्रमो ललितं मदः ॥ ९१ ॥
विहृतं[1] तपनं मौग्ध्यं विक्षेपश्च कुतूहलम् ।
हसितं चकितं केलिरित्यष्टादशसंख्यकाः ॥ ९२ ॥
स्वभावजाश्च[2] भावाद्या दश पुंसां भवन्त्यपि[3] ।

पूर्वे भावादयो धैर्यान्ता दश नायकानामपि [4]संभवन्ति । किंतु सर्वेऽप्यमी नायिकाश्रिता एव विच्छित्तिविशेषं पुष्णन्ति ।

---

नायिका निरूप्य [5]कार्यत्वसंगत्या तदलंकारं निरूपयति—**अथेति** । तासां नायिकानाम् । अलंकाराणामङ्गजत्वायत्नत्वस्वभावजत्वैस्त्रैविध्यं दर्शयन्नुद्देशं करोति—**शोभेति** । 'भवन्त्यपि' इत्यपिशब्दस्य योजनां दर्शयन्विवृणोति—**पूर्वे इति** ।

---

पुनश्चतुर्धा कथिताः पूर्वैर्भोजादिभिर्बुधैः ॥ पद्मिनी चित्रिणी चैव शङ्खिनी हस्तिनीति च । पुनश्चतुर्धा कथिताः कामशास्त्रेषु जातितः ॥ कफिनी वातुला पित्तला प्रकृत्या पुनस्त्रिधा । अथोक्तानां च भेदानां लक्षणोदाहृती ब्रुवे ॥ दिव्याः शच्यादयः प्रोक्ता अदिव्या मालतीमुखाः । दिव्यादिव्या इति प्रोक्ता जानकीरुक्मिणीमुखाः ॥ गर्वशालिन्युद्धता स्यादुदात्ता गूढमानिनी । ललिता साध्यमानेहा शान्ता निर्मानमानसा ॥ उदात्तैव भवेद्धीराथाधीरा तूद्धता मता । ललिता तु भवेन्मुग्धा शान्ता स्वीयोत्तमा मता ॥ भुक्तान्येन पुरा पश्चादूढान्येनाक्षता मता । भुक्ता शक्तिसुतेनोढा राज्ञा सत्यवती यथा ॥ गते भर्तरि यद्यन्यं श्रिता सा तु क्षता मता । यथा तारा रविसुतं श्रिता वालिनि मारिते ॥ यातायाता तु युगपदूढानेकैस्तु भर्तृभिः । यथा पाण्डुसुतैरूढा द्रुपदस्य कुमारिका ॥ ऊढैकेन तु संत्यक्ता क्रमाद्यायावरा मता । यथा बहुवरैरूढा माधवी चोपलात्मजा ॥ पद्मिनी चन्द्रवदना शिरीषमृदुला तथा । शङ्खिनी स्याद्बृहन्मध्या कोपिन्यल्पस्तनी तथा ॥ दीर्घपादा द्रुतगतिः कुटिलाक्षी च पिङ्गला । हस्तिनी बहुभुक्क्रूरा निस्त्रपा पिङ्गकुन्तला ॥ ह्रस्वा स्थूलाधरा गौरशरीरा मन्दगामिनी । कफिनी दृढरागा स्याच्छ्यामा सुस्निग्धलोचना ॥ वातुला तु कठोराङ्गी चञ्चला कृष्णपाणिजा । श्यामधूसरवर्णा च बहु-

---

1. 'विहतं' ख-घ. 2. 'स्वभाव—' इत्यादिः 'पुष्णन्ति' इत्यन्तः पाठो ग-पुस्तके नास्ति. 3. 'स्युः' क-ख. 4. 'भवन्ति क-ख. 5. 'कार्यत्वसंगत्या' इति पुस्तकान्तरे नास्ति.

तत्र[1] भावः—

**निर्विकारात्मके[2] चित्ते भावः प्रथमविक्रिया ॥ ९३ ॥**

जन्मतः[3] प्रभृति निर्विकारे मनसि उद्बुद्धमात्रो विकारो भावः ।

यथा[4]—

'स[5] एव सुरभिः कालः स एव मलयानिलः ।
सैवेयमबला किंतु मनोऽन्यदिव दृश्यते ॥'

अथ हावः—

**भ्रूनेत्रादिविकारैस्तु[6] संभोगेच्छाप्रकाशकः ।**
**भाव एवाल्पसंलक्ष्यविकारो हाव उच्यते ॥ ९४ ॥**

यथा—

'विवृण्वती[7] शैलसुतापि भावमङ्गैः स्फुरद्बालकदम्बकल्पैः ।
साचीकृता चारुतरेण तस्थौ मुखेन पर्यस्तविलोचनेन ॥'

अथ हेला—

**हेलात्यन्तसमालक्ष्यविकारः स्यात्स एव तु[8] ।**

स एव भाव एव ।

---

विच्छित्तिविशेषं विलक्षणवैचित्र्यम् ॥ **प्रथमविक्रिया** संभोगेच्छायाः प्रथमः प्रकृतिविपर्यासः । उद्बुद्धमात्रः, नतु स्फुटं प्रतीयमानः । एतेन हावहेलालक्षणातिव्याप्तिर्वारिता ॥ कौमारे चाञ्चल्यादिरहितानां भ्रूनेत्रादीनां चाञ्चल्यादिरूपप्रकृतिविपर्यासैरल्पसंलक्ष्यविकारः ईषल्लक्ष्यस्वभावः । एतेन हेलालक्षणातिव्याप्तिर्वारिता ॥ **विवृण्वती** प्रकटयन्ती । साचीकृता वक्रीकृता । पर्यस्तविलोचनेन शिवे

---

भोज्या प्रलापिनी ॥ पित्तला शोणनयना गौराङ्गी कुशला रते । सा चतुर्धा पुनरपि नायिका प्रतिनायिका ॥ यथा द्रुपदजा प्रोक्ता वेणीसंहारनाटके । हेतुरीर्ष्यारुडादीनां सपक्षा प्रतिनायिका ॥ दुर्योधनस्य दयिता तत्र भानुमती यथा । तस्याः कैश्चिद्गुणैर्हीना पूज्या चैवोपनायिका ॥ समा न्यूनापि वा किंचित्कनीयस्यनुनायिका ॥' इत्यादि **मन्दारमरन्दे** ॥

---

१. 'लक्षणान्याह' ग. २. 'निर्विकारात्मकात्सत्त्वाद्भावस्तत्राद्यविक्रिया' इति ग. ३. 'जन्मत.' इति फक्किका नास्ति ग-पुस्तके. ४. 'यथा इत्यतः प्राक्' ग-पुस्तके 'तत्र विकारहेतौ सत्यपि अविकारकरं सत्त्वम् ।' इति पाठः. ५. 'स एव–' इति नास्ति ग-पुस्तके, तत्स्थाने तु 'श्रुताप्सरोगीतिरपि क्षणेऽस्मिन्–' इति श्लोको दृश्यते. ततः 'अविकाररूपात्तस्मात्सत्त्वाद्यः प्रथमो विकारान्तर्विपरिवर्ती बीजस्योच्छूनतेव स भावः । यथा–'हरस्तु किंचित्परिवृत्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः । उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि ॥' इति पाठः. ६. 'हेवाकस्तु सशृङ्गारो हावोऽक्षिभ्रूविलासकृत् । प्रतिनियताङ्गविकारकारी सशृङ्गारः स्वभावविशेषो हावः ॥' इति ग. ७. 'विवृण्वती–' इति श्लोको नास्ति ग-पुस्तके. ८. 'स एव हेला सुव्यक्तशृङ्गाररससूचकः । हाव एव स्पष्टभूतो विकारभूतत्वात्सुव्यक्तशृङ्गाररससूचको हेला ।' इति ग.

यथा—

'तह से झत्ति पउत्ता वहुए सव्वङ्गविब्भमा सअला ।
संसइअमुद्धभावा होइ चिरं जह सहीणं पि ॥'

[1]अथ शोभा—

**रूपयौवनलालित्यभोगाद्यैरङ्गभूषणम् ॥ ९५ ॥**

**शोभा प्रोक्ता—**

तत्र यौवनशोभा यथा—

'असंभृतं मण्डनमङ्गयष्टेरनासवाख्यं करणं मदस्य ।
कामस्य पुष्पव्यतिरिक्तमस्त्रं बाल्यात्परं साथ वयः[1] प्रपेदे ॥'

एवमन्यत्रापि ।

अथ कान्तिः—

**सैव[2] कान्तिर्मन्मथाप्यायितद्युतिः ।**

[3]मन्मथोन्मेषेणातिविस्तीर्णा शोभैव कान्तिरुच्यते ।

यथा—'नेत्रे खञ्जनगञ्जने—' इत्यत्र (१०५ पृ.) ।

अथ दीप्तिः—

**[4]कान्तिरेवातिविस्तीर्णा दीप्तिरित्यभिधीयते ॥ ९६ ॥**

यथा मम चन्द्रकलानामनाटिकायां चन्द्रकलावर्णनम्—

---

परिक्षिप्तनेत्रेण । बालकदम्बेत्यनेन पुलकस्याल्पत्वं तेन च भावस्याल्पलक्ष्यत्वं प्रतीयते ॥ **तह से इति** । 'तथा तस्या झटिति प्रवृत्ता वध्वाः सर्वाङ्गविभ्रमाः सकलाः । संशयितमुग्धभावा भवन्ति चिरं यथा सखीनामपि ॥' इति संस्कृतम् । संशयितमुग्धभावाः संदिग्धशैशवाः ॥ **लालित्यमङ्गानां सुकुमारत्वम्** ।

---

1. वय इति । यौवनोन्मेषेणैव हि युवतयो भूष्यन्ते माद्यन्ते काम्यन्ते चेति भावः ॥

---

१. 'अथ—' इत्यादिः 'एवमन्यत्रापि' इत्यन्तः पाठो ग-पुस्तके नास्ति. तत्स्थाने 'अथायत्नजाः—(शोभा) रूपोपभोगतारुण्यैः शोभाङ्गानां विभूषणम् ।' यथा—'ताः प्राङ्मुखीं तत्र निवेश्य बालां क्षणं व्यलम्बन्त पुरो निषण्णाः । भूतार्थशोभाह्रियमाणनेत्राः प्रसाधने संनिहितेऽपि नार्यः ॥' इति. २. 'मन्मथाप्यायितच्छाया सैव कान्तिरिति स्मृता ।' इति ग. ३. ग-पुस्तके तु 'मन्मथ—' इति फक्किका नास्ति. तदग्रे 'उन्मीलद्वदनेन्दुदीप्तिविसरैर्दूरे समुत्सारितं भिन्नं पीनकुचस्थलस्य च रुचा हस्तप्रभाभिर्हतम् । एतस्याः कलविङ्ककण्ठकदलीकल्पं मिलत्कौतुकादप्राप्ताङ्गसुखं रुषेव सहसा केशेषु लग्नं तमः ॥' इत्युदाहरणं दृश्यते. ४. 'दीप्तिः कान्तेश्च विस्तारः' इति ग.

'तारुण्यस्य विलासः समधिक[1]लावण्यसंपदो हासः ।
धरणितलस्याभरणं युवजनमनसो वशीकरणम् ॥'

अथ माधुर्यम्—

**[1]सर्वावस्थाविशेषेषु[2] माधुर्यं रमणीयता ।**

यथा—

'[2]सरसिजमनुविद्धं शैवलेनापि रम्यं
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति ।
इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनाम् ॥'

अथ प्रगल्भता—

**निःसाध्वसत्वं प्रागल्भ्यम्[3]—**

यथा—

'[4]समाश्लिष्टाः समाश्लेषैश्चुम्बिताश्चुम्बनैरपि ।
दष्टाश्च दंशनैः कान्तं दासीकुर्वन्ति योषितः ॥'

अथौदार्यम्—

**औदार्यं विनयः सदा ॥ ९७ ॥**

यथा—

'न ब्रूते परुषां गिरं, वितनुते न भ्रूयुगं भङ्गुरं,
नोत्तंसं क्षिपति क्षितौ श्रवणतः सा मे [3]स्फुटेऽप्यागसि ।

---

भोगः स्रक्चन्दनादिजनितसुखानुभवः । आद्यशब्देन अलंकारादिग्रहणम् ॥ तारु**ण्यस्येति** । अत्र तारुण्यविलासादीनामतिशयो लक्षणाप्रयोजनम् ॥ **सरसिजमिति** । शकुन्तलाया वल्कलधारणेऽपि शोभातिशयमनुभवतो दुष्यन्तस्य स्वयं परामर्शोऽयम् । अनुविद्धं व्याप्तम् । लक्ष्मीं शोभाम् ॥ **समाश्लिष्टा इति** । दन्ते-

---

1. **समधिकेति** । 'मुक्ताफलेषु च्छायायास्तरलत्वमिवान्तरा । प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते ॥' इति तल्लक्षणं ज्ञेयम् ॥

2. **सरसिजमिति** । यथा शैवललक्ष्मसंपर्कस्य माधुर्यविघटकत्वेऽपि कमलचन्द्रमसोर्नैसर्गिकमाधुर्यसत्त्वान्न कापि क्षतिस्तथा वल्कलधारणेन शकुन्तलाया अपीति भावः ॥

3. **स्फुट इति** । अन्योपभोगरूपेऽपराधे व्यक्ते सत्यपीत्यर्थः ॥

---

१. 'अनुल्बणं माधुर्यम्' ग. २. उक्तं च–'अभूषणेऽपि रम्यत्वं माधुर्यमिति गीयते' इत्यधिकं ग-पुस्तके. ३. 'मनःक्षोभपूर्वकोऽङ्गसादः साध्वसम्, तदभावः प्रागल्भ्यम् ।' इत्यधिकं ग-पुस्तके. ४. 'तथा व्रीडाविधेयापि तथा मुग्धापि सुन्दरी । कलाप्रयोगचातुर्यसभास्वाचार्यतां गता ॥' इत्युदाहरणान्तरं ग-पुस्तके.

कान्ता गर्भगृहे गवाक्षविवरव्यापारिताक्ष्या बहिः
सख्या वक्त्रमभि प्रयच्छति परं पर्यश्रुणी लोचने ॥'

अथ धैर्यम्—

[1]मुक्तात्मश्लाघना धैर्यं मनोवृत्तिरचञ्चला ।

यथा—

'ज्वलतु गगने रात्रौ रात्रावखण्डकलः शशी,
दहतु मदनः, किंवा मृत्योः परेण विधास्यति ।
[2]मम तु दयितः श्लाघ्यस्तातो जनन्यमलान्वया
कुलममलिनं न त्वेवायं जनो न च जीवितम् ॥'

अथ लीला—

[2]अङ्गैर्वेषैरलंकारैः प्रेमिभिर्वचनैरपि ॥ ९८ ॥
प्रीतिप्रयोजितैर्लीलां प्रियस्यानुकृतिं विदुः ।

यथा—

[3]मृणालव्यालवलया वेणीबन्धकपर्दिनी ।
हरानुकारिणी पातु लीलया पार्वती जगत् ॥

---

नाधरादिखण्डनं दंशनम् ॥ **उत्तंसं** कर्णभूषणम् । **गर्भगृहे** वासगृहाभ्यन्तरे । गवाक्षविवरेण व्यापारितं संचारितमक्षि यया तस्याः । अभिलक्ष्यीकृत्य प्रयच्छति अर्पयति । पर्यश्रुणी अश्रुव्याप्ते ॥ **ज्वलत्विति** । ज्वलतु संतापकः सन् दीप्यताम् । 'परेण' इत्यव्ययमधिकार्थे । 'श्लाघ्य' इति काकाक्षिगोलकन्यायेन उभयत्रान्वेति । यद्वा 'अमलान्वया' इति लिङ्गव्यत्ययेनान्वयः । न त्वेवायं जनः । स्थिर इति शेषः ॥ **मृणालमेव** व्यालः सर्पो वलयं यस्याः, वेणीबन्ध एव कपर्दो जटा-

---

1. **गर्भेति** । गर्भगृहे स्थिता सती बहिरवलोकनार्थं गवाक्षविवरेण वातायनपथेन व्यापारिते क्षिप्ते अक्षिणी यथा तथाभूतायाः सख्या वक्त्रमभि आननं लक्ष्यीकृत्य परं केवलं परिगतानि अश्रूणि ययोस्तथाभूते लोचने प्रयच्छति योजयति । विषयान्तरावलोकनप्रवणेयं ममैवंविधामवस्थां न ज्ञास्यतीति तथाचरति । अन्यथा स्वजनसमक्षं दुःखोत्पीडस्य प्रतिरोद्धुमशक्यतया तत्कारणाभिव्यक्तौ विनयव्यत्यासः स्यात् ॥

2. **ममेति** । मम तु दयितः प्रेयान् श्लाघ्यः, पिता च श्लाघ्यः, जननी च अमलान्वया

---

१. 'चापलाविहता धैर्यं चिद्वृत्तिरविकत्थना । चापलानुपहता मनोवृत्तिरात्मगुणानाख्यायिका धैर्यम् । तथा चोक्तम्—'शीलानुल्लङ्घनं धैर्यं कीर्त्यतेऽत्र मनीषिभिः ।' इति ग. २. 'लीलाप्रियानुकरणं वाग्भिर्गत्याथ चेष्टितैः ।' इति ग. ३. ग-पुस्तके तु-'इयं चेष्टानुरागेण तथानुकुरुते प्रियम् । मुक्तासूयं सपत्न्योऽपि वीक्षन्ते सस्पृहं यथा ॥' इत्युदाहरणम्.

अथ विलासः—

[1]यानस्थानासनादीनां मुखनेत्रादिकर्मणाम् ॥ ९९ ॥
विशेषस्तु विलासः स्यादिष्टसंदर्शनादिना ।

यथा—

'अत्रान्तरे किमपि वाग्विभवातिवृत्त-
वैचित्र्यमुल्लसितविभ्रममायताक्ष्याः ।
तद्भूरिसात्त्विकविकारमपास्तधैर्य-
माचार्यकं विजयि मान्मथमाविरासीत् ॥'

अथ विच्छित्तिः—

[2]स्तोकाप्याकल्परचना विच्छित्तिः कान्तिपोषकृत् ।

यथा—

'[3]स्वच्छाम्भःस्नपनविधौतमङ्गमोष्ठ-
स्ताम्बूलद्युतिविशदो विलासिनीनाम् ।
वासस्तु प्रतनु विविक्तमस्त्वितीया[1]-
नाकल्पो यदि कुसुमेषुणा न शून्यः ॥'

---

जूटो यस्या अस्तीति ॥ अत्रान्तरे नायकसंदर्शनादिसमये । वाग्विभवमतिवृत्तमतिक्रम्य स्थितं वैचित्र्यं गमनादिचातुरी यस्मात्तत् । ते प्रसिद्धाः भूरिसात्त्विकविकाराः स्तम्भादयो यस्मात्तत् । आचार्यकमुपाध्यायकर्म । उपदेश इत्यर्थः ॥ स्तोका अल्पा आकल्परचना वेषविन्यासः । प्रतनु अतिसूक्ष्मम् । विविक्तं विमलम् ॥

---

महाकुलोत्पन्ना, कुलं स्वामिकुलममलिनं निष्कलङ्कम् । अयं मल्लक्षणो जनः न त्वेव स्थिरः, जीवितं च न स्थिरम् । अचिरावस्थायिनः शरीरस्य कृते मातृपितृभर्तृकुलकलङ्कनमतितरामनुचितमिति भावः ॥

1. इतीति । इत्येवंरूप इयान् एतावानेव विलासिनीनामाकल्पो नेपथ्यमस्तु । किमन्यैरित्यर्थः । यदि स कुसुमेषुणा कामेन शून्यो न स्यात् । अन्यथा उद्विजितानामिव कनकभूषणमपि भारायत एवेति भावः ॥

---

१. 'तात्कालिको विशेषस्तु विलासोऽङ्गक्रियादिषु ॥' इति ग. २. 'स्तोकभूषणयोगेन विच्छित्तिरन्यता ।' इति ग. ३. 'कर्णार्पितो रोध्रकषायरूक्षे गोरोचनाभेदनितान्तगौरे । तस्याः कपोलेऽपरभागलाभाद्बबन्ध चक्षूंषि यवप्ररोहः ॥' इति ग.

अथ विब्वोकः—

**विब्वोकस्त्वतिगर्वेण वस्तुनीष्टेऽप्यनादरः ॥ १०० ॥**

यथा—

'[1]यासां सत्यपि सद्गुणानुसरणे दोषानुवृत्तिः परा,
याः [1]प्राणान्वरमर्पयन्ति, न पुनः संपूर्णदृष्टिं प्रिये ।
अत्यन्ताभिमतेऽपि [2]वस्तुनि विधिर्यासां निषेधात्मक-
स्त्रास्त्रैलोक्यविलक्षणप्रकृतयो [3]वामाः प्रसीदन्तु ते ॥'

अथ किलकिञ्चितम्—

**[3]स्मितशुष्करुदितहसितत्रासक्रोधश्रमादीनाम् ।**
**सांकर्यं किलकिञ्चितमभीष्टतमसंगमादिजाद्धर्षात् ॥ १०१ ॥**

यथा—

'[4][4]पाणिरोधमविरोधितवाञ्छं भर्त्सनाश्च मधुरस्मितगर्भाः ।
कामिनः स्म कुरुते करभोरूर्हारि शुष्करुदितं च सुखेऽपि ॥'

---

**यासामिति** । कंचित्कामिनं प्रति सख्युराशीर्वचनमिदम् । सद्गुणानामनुसरणे परै-रुद्भावने दोषाणामनुवृत्तिः स्वयं पुनःपुनरुद्भावनम् ॥ **सांकर्यं** मेलनम् ॥ **पाणि-रोधं** वस्त्रक्षेपणादिप्रवृत्तनायककरप्रतिवन्धम् । हारि मनोहरम् । कारणं विना रुदितं

---

1. **प्राणानिति** । मानग्रहग्रस्तत्वात्प्राणार्पणं तावत्सुकरम्, न पुनः संपूर्णदृष्ट्यर्पणम् ॥

2. **वस्तुनीति** । नीवीस्रंसनादिरूपे ॥

3. **वामा इति** । वामा योषितः । इष्टेऽपि वस्तुनि अनिष्टोद्भावनं विलक्षणप्रकृतित्वे बीजम् ।

4. **पाणीति** । करभोरूः स्त्री अविरोधितवाञ्छमनिवारितप्रियमनोरथं यथा तथा का-मिनः पाणिरोधं नीवीमोक्षणे व्यापृतस्य प्रियपाणेर्निवारणं कुरुते स्म । तथा मधुरं स्मितं गर्भे अन्तर्वर्ति यासु ता मन्दहासमिश्रा भर्त्सनास्तर्जनाश्च कुरुते स्म । तथा सुखेऽपि अधरपीड-

---

१. 'गर्वाभिमानादिष्टेऽपि विब्वोकोऽनादरक्रिया । तथा वात्स्यायनः—'सौभाग्यस्यातिगर्वेण यत्प्रियस्यावधीरणम् । ताडनं वावतंसेन स्रजा काञ्च्याथ बन्धनम् ॥ प्रियेऽल्पागसि शिञ्जाननूपुरेणाङ्घ्रिणा हतिः । दन्तखण्डितपत्रैश्चारोपस्थानेऽपि यत्स्मितम् ॥ प्रेयस्ताम्बूलरागेण रागश्चौष्ठप्रचालके । विब्वोकाख्यः स्मृतो हावः कामशास्त्रविचक्षणैः ॥ अभिनवगुप्तैस्तूपकृतावपि गर्वादनादरस्तन्व्याः । स्खलनं प्रियस्य संयम(न)ताडनमत्राभिधायि विब्वोकः ॥' अवधीरणे यथा कालिदासः—'निर्विभुज्य दशनच्छदं ततो वाचि भर्तुरवधीरणापरा । शैलराजतनया समीपगामाललाप विजयामहेतुकम् ॥' इति ग. २. 'यासां—' इति श्लोको नास्ति ग-पुस्तके. ३. 'क्रोधाश्रुहर्षभीत्यादेः संकरः किलकिञ्चितम्' इति ग. ४. 'रतिक्रीडाद्यूते कथमपि समासाद्य समयं मया लब्धे तस्याः क्वणितकलकण्ठार्धमधरे । कृतभ्रूभङ्गासौ प्रकटितविलक्षार्धरुदितस्मितक्रोधोद्भ्रान्तं पुनरपि विदध्यान्मयि मुखम् ॥' इति ग.

अथ मोट्टायितम्—

तद्भावभाविते[1] चित्ते वल्लभस्य कथादिषु ।
मोट्टायितमिति प्राहुः कर्णकण्डूयनादिकम् ॥ १०२ ॥

यथा—

'सुभग त्वत्कथारम्भे कर्णकण्डूतिलालसा ।
उज्जृम्भवदनाम्भोजा भिनत्त्यङ्गानि साङ्गना ॥'[2]

अथ कुट्टमितम्—

केशस्तनाधरादीनां[3] ग्रहे हर्षेऽपि संभ्रमात् ।
आहुः कुट्टमितं नाम शिरःकरविधूननम् ॥ १०३ ॥

यथा—

'पल्लवोपमितिसाम्यसपक्षं[4] दष्टवत्यधरबिम्बमभीष्टे ।
पर्यकूजि सरुजेव तरुण्यास्तारलोलवलयेन करेण ॥'

अथ विभ्रमः—

त्वरया[5] हर्षरागादेर्दयितागमनादिषु ।

---

शुष्करुदितम् । सुखेऽपि सुखसमयेऽपि ॥ **तद्भावेन** कान्तसद्भावेन भाविते व्याप्ते चित्ते सति । कथादिषु सत्सु । 'कर्णकण्डूयनादिभिः' इति पाठेऽभेदे तृतीया । आदिना जृम्भाङ्गभङ्गादिः ॥ **कर्णकण्डूतिलालसा** कर्णकण्डूयनतत्परा ॥ **पल्लवोप**मित्या यत्साम्यं तेन सपक्षं सखायम् । अभीष्टे नायके । पर्यकूजि महाशब्दः कृतः । शब्दोपयोगित्वं दर्शयति—**तारेति** । तारमतिशयं लोलं चपलं वलयं कङ्कणं यत्र तेन । सख्युर्दर्शने व्यथा भवतीति भावः ॥ **त्वरयेति** । हर्षादिजन्य-

---

नादौ सुखातिरेके सत्यपि हारि मनोहरं शुष्करुदितमनश्रुत्वादनार्द्रं कृत्रिमरोदनं च कुरुते स । स्त्रीणामेष स्वभावो यदिष्टमप्यनिष्टतया निवारयन्त्य एव सुरतसुखमुपभुञ्जत इत्यर्थः ॥

---

१. 'श्रुत्वा कथां प्रियजनस्य तु संनिधौ वा कर्णोदरस्थितचलत्तनुतर्जनीकम् । यद्वाङ्गभङ्गमपि जृम्भितमङ्गनानां मोट्टायितं तदुदितं स्मरशास्त्रविद्भिः ॥' तथा च मुनिः—'कथायां संनिधौ वापि कर्णकण्डूविजृम्भणम् । कान्तस्य क्रियते वध्वा तद्धि मोट्टायितं मतम् ॥' इति ग. २. 'चित्तवर्तिन्यपि नृपे तत्त्वावेशेन चेतसि । व्रीडार्धवलितं चक्रे मुखेन्दुमवशैव सा ॥' इति ग. ३. भरतः—'केशस्तनाधरादिग्रहणे रतहर्षसंभ्रमोपेतम् । कुट्टमितं विज्ञेयं सुखं च दुःखोपचारेण ॥' इति ग. ४. ग-पुस्तके तु 'पल्लव–' इति श्लोकस्य स्थाने 'दासीभवामि तव निर्दय निःसहास्मि मुञ्च क्षणं स्वपिमि देहि ममावकाशम् । इत्यादिकुट्टमितमाकुलमारचन्ती भूयो नवानि कुरुते रमणी रतानि ॥' इत्युदाहरणं दृश्यते, ततश्च भोजराजस्तु सरस्वतीकण्ठाभरणे विपरीतमेव लक्षणमाह—'केशस्तनाधरादीनां ग्रहाद्दुःखेऽपि यत्पुनः । सुखाविष्करणं तन्व्यास्तच्च कुट्टमितं मतम् ॥' यथा—'ह्रीभरादवनतं परिरम्भे रागवानवटुजेष्वकृष्य । अर्पितोष्ठदलमाननपद्मं योषितो मुकुलिताक्षमधासीत् ॥' इति. ५. विभ्रमस्त्वरया काले भूषास्थानविपर्ययः । यथाह शाक्यभिक्षुः—'क्रोधः स्मितं च कुसुमाभरणादियाच्ञा तत्तर्जनं च सहसैव

**अस्थाने विभ्रमादीनां विन्यासो विभ्रमो मतः ॥ १०४ ॥**

यथा—

'श्रुत्वायान्तं बहिः कान्तमसमाप्तविभूषया ।
भालेऽञ्जनं दृशोर्लाक्षा कपोले तिलकः कृतः ॥'

अथ ललितम्—

**सुकुमारतयाङ्गानां विन्यासो ललितं भवेत् ।**

यथा—

'गुरुतरकलनूपुरानुनादं सललितनर्तितवामपादपद्मा ।
इतरदनतिलोलमादधाना पदमथ मन्मथमन्थरं जगाम ॥'

अथ मदः—

**मदो विकारः सौभाग्ययौवनाद्यवलेपजः ॥ १०५ ॥**

यथा—

'मा गर्वमुद्वह कपोलतले चकास्ति
कान्तस्वहस्तलिखिता मम मञ्जरीति ।

---

त्वरयेत्यर्थः । तत्र प्रथमेनादिपदेन उत्सवादेः, द्वितीयादिपदेन दयिताभिसरणादेः, तृतीयेन लाक्षादेर्ग्रहणम् ॥ **असमाप्त**विभूषया कान्तया । विन्यासोऽप्रचण्डविक्षेपः ॥ **गुरुतरेति** । प्रथमपादः क्रियाविशेषणार्थकः । इतरत् दक्षिणम् । अनतिलोलमनतिचञ्चलम् ॥ यौवनादीत्यादिपदेनालंकारादेर्ग्रहणम् ॥ **मा गर्वमिति** । 'मम कपोलतले' इत्यन्वयः । ईदृशीनां मञ्जरीणाम् । वैरी शत्रुरिव, तव तावत्कपो-

---

विडम्बनं च । आक्षिप्य कान्तवचनं लपनं सखीनां निष्कारणेच्छितगतं खलु विभ्रमः स्यात् ॥' शिंगिरपि—'साङ्गभङ्गं विकारेण सकटाक्षविलोकनैः । केशसंयमनव्याजाद्बाहुमूलप्रदर्शनैः ॥ मेखलादिप्रकटनैः स्तननाभिप्रदर्शनैः । अभिलापप्रकटनैर्विभ्रमः परिकीर्तितः ॥' इति ग.

१. ग-पुस्तके तु 'श्रुत्वा—' इति श्लोकस्य स्थाने 'अ[ङ्गा]गते शशिनि पेशलकान्तिदूतीसंलापसंचलितलोचनमानसाभिः । अग्राहि [मण्डन]विधिर्विपरीतभूषाविन्यासहासितसखीजनमङ्गनाभिः ॥' इति दृश्यते. २. 'सुकुमाराङ्गविन्यासो मसृणो ललितं भवेत् ।' इति ग. ३. 'सभ्रूभङ्गं करकिसलयावर्तनैरालपन्ती सा पश्यन्ती ललितललितं लोचनस्याञ्चलेन । विन्यस्यन्ती चरणकमले लीलया स्वैरपातैर्निःसंगीतं प्रथमवयसा नर्तिता पङ्कजाक्षी ॥' यद्वा, 'सद्यः पुरीपरिसरेऽपि शिरीषमृद्वी गत्वा जवात्रिचतुराणि पदानि सीता । गन्तव्यमस्ति कियदित्यसकृद्ब्रुवाणा रामाश्रुणः कृतवती प्रथमावतारम् ॥' इत्युदाहरणान्तरं ग-पुस्तके. ४. 'मधुपानमदप्रायस्तारुण्यातिशयोद्भवः । विकारो यौवने स्त्रीणां तं वदन्ति मदं बुधाः ॥' इति ग. ५. 'आलापः स्मितकौमुदीसहचरो दृष्टिः प्रहर्षोल्लसद्भ्रूनृत्याध्वरदीक्षिता चरणयोर्न्यासः समे भङ्गुरः । वेषेषु क्षणिकाः स्पृहा मदविधावद्वैतवादाश्च ते त्वद्ध्यानैकविकारसूर्भधुमदप्रायो मदः स्फूर्जति ॥' इत्युदाहरणान्तरं ग-पुस्तके.

अन्यापि किं न खलु भाजनमीदृशीनां
वैरी न चेद्भवति वेपथुरन्तरायः ॥'[1]

अथ विहृतम्[1]—

वक्तव्यकालेऽप्यवचो व्रीडया विहृतं[2] मतम्[3] ।

यथा—

'दूरागतेन[4] कुशलं पृष्टा नोवाच सा मया किंचित् ।
पर्यश्रुणी तु नयने तस्याः कथयांबभूवतुः सर्वम् ॥'

अथ[5] तपनम्—

तपनं प्रियविच्छेदे स्मरवेगोत्थचेष्टितम् ॥ १०६ ॥

यथा मम—

'श्वासान्मुञ्चति, भूतले विलुठति, त्वन्मार्गमालोकते,
दीर्घं रोदिति, विक्षिपत्यत[2] इतः क्षामां भुजावल्लरीम् ।
किंच, प्राणसमान, काङ्क्षितवती स्वप्नेऽपि ते संगमं
निद्रां वाञ्छति, न प्रयच्छति पुनर्दग्धो विधिस्तामपि[3] ॥'

---

लतले एकैव मञ्जरी यदृच्छयापि भवितुमर्हति, तेन सौभाग्यातिशयो न नियमतः प्रतीयत इति गर्वो नोचित एव । ईदृशीनामिति बहुवचनेन सौभाग्यातिशयः सूचितः ॥ **सर्वमिति** । मम प्रवासे दुःखातिशयमागमने हर्षातिशयं चेत्यर्थः ॥ **स्मरवेगोत्थेति** । कामोद्वेगजनितेत्यर्थः ॥ **श्वासानिति** । प्रवासिनं प्रति सख्युक्तिरियम् । हे प्राणसमान, दग्धो निर्दयः । तां निद्राम् ॥ तेषां द्रुमाणां फलमित्य-

---

1. अन्येति । सखीं प्रति सख्या उक्तिरियम् । चेद्यदि वेपथुः स्पर्शसंजातसात्त्विकभावविशेषः वैरी मञ्जरीरचनाविघटकत्वेन सपत्न इव अन्तरायो विघ्नो न भवति, तदा अन्यापि मादृश्यपि ईदृशीनां त्वत्कपोलतललिखितया मञ्जर्या सदृशीनामनेकासां मञ्जरीणां भाजनं पात्रं किं न खलु भवति । भवत्येवेत्यर्थः ॥

2. अत इति । अत इतः । इतस्तत इत्यर्थः ॥

3. तामपीति । विधिः तस्यै निद्रामपि न प्रयच्छति, यत्र तव समागमः स्यात् ॥

---

१. 'विकृतम्' घ. २. 'प्राप्तकालं न यद्ब्रूयाद्व्रीडया विहृतं हि तत् ।' इति ग. ३. 'विकृतम्' घ. ४. ग-पुस्तके तु 'दूरागतेन—' इत्यस्य स्थाने 'पादाङ्गुष्ठेन भूमिं किसलयरुचिना सापदेशं लिखन्ती भूयो भूयः क्षिपन्ती मयि सितशबले लोचने लोलतारे । वक्त्रं ह्रीनम्रमीषत्स्फुरदधरपुटं वाक्यगर्भं दधाना यन्मां नोवाच किंचित्स्थितमपि पुरतो मानसं तद्धुनोति ॥' इति श्लोकोऽस्ति. ५. 'अथ—' इत्यादि '—तामपि ॥' इत्यन्तः पाठो नास्ति ग-पुस्तके.

अथ मौग्ध्यम्—

[१]अज्ञानादिव या पृच्छा प्रतीतस्यापि वस्तुनः ।
वल्लभस्य पुरः प्रोक्तं मौग्ध्यं तत्तत्त्ववेदिभिः ॥ १०७ ॥

यथा—

[२]'के द्रुमास्ते क वा ग्रामे सन्ति केन प्ररोपिताः ।
नाथ मत्कङ्कणन्यस्तं येषां मुक्ताफलं फलम् ॥'

अथ विक्षेपः—

[३]भूषाणामर्धरचना मिथ्या विष्वगवेक्षणम् ।
रहस्याख्यानमीषच्च विक्षेपो दयितान्तिके ॥ १०८ ॥

यथा—

[४]'धम्मिल्लमर्धमुक्तं कलयति तिलकं तथासकलम् ।
किंचिद्वदति रहस्यं चकितं विष्वग्विलोकते तन्वी ॥'

अथ कुतूहलम्—

[५]रम्यवस्तुसमालोके लोलता स्यात्कुतूहलम् ।

यथा—

[६][1]'प्रसाधिकालम्बितमग्रपादमाक्षिप्य काचिद्द्रवरागमेव ।
उत्सृष्टलीलागतिरा गवाक्षादलक्तकाङ्कां पदवीं ततान ॥'

---

न्वयः ॥ मिथ्या निष्कारणम् । विष्वक् सर्वतः । रहस्याख्यानं गुह्यभाषणम् ॥ धम्मिल्लं बद्धकेशसमूहम् । असकलं खण्डितम् ॥ लोलता सतृष्णत्वम् ॥ प्रसाधिका मण्डनकर्त्री, तया आलम्बितं धारितम् । द्रवरागमशुष्कलाक्षारसम् । अलक्तकाङ्कां लाक्षाचिह्नाम् । पदवीं पन्थानम् । अत्र हरदर्शनाय कस्याश्चिद्रागातिशयः कुतूहलम् ॥

---

1. इदं पद्यं कुमारसंभवस्य सप्तमसर्गेऽपि ॥

---

१. 'बाल्ये गते वचोभङ्गी रामाणां कान्तसंनिधौ । हारमौक्तिकमालेव तन्मौग्ध्यं परिकीर्तितम् ॥' इति ग. २. ग-पुस्तके तु 'यदि चूतस्य मञ्जर्यां सख्यः संनिहितः स्मरः । मग्नायां तत्कथं सौख्यं मनागपि न दृश्यते ॥' 'सत्यं किमन्यदेशेऽपि विद्यते मृगलाञ्छनः । एवमादिवचो बाल्ये व्यतीते मौग्ध्यमुच्यते ॥' 'यतः प्रभृत्यहं सख्यः शिरीषकुसुमैर्हता । ततः प्रभृति मे शूलं हृदि तन्मौग्ध्यमीरितम् ॥' आचार्यस्तु—'स्त्रीणां स्वभावमेव मौग्ध्यं मन्यते ।' इति. ३. 'अन्यथा वेषविन्यासो विकाराद्यो भवेत्स्त्रियाम् । तमामनन्ति विक्षेपं श्रीशाल्यकपिलादयः ॥' इति ग. ४. 'चकार काचित्स्मितचन्दनाङ्के काञ्चीकलापं स्तनभारपृष्ठे । प्रियं प्रति प्रेषितचित्तवृत्तिर्नितम्बबिम्बे चपलं च हारम् ॥' इति ग. ५. अनुरागकाल एव प्रियतमोपसर्पणं कुतूहलम् ॥ यथाह भरतः—'कुतूहलं रम्यदृष्टौ चापलं परिकीर्तितम् ।' इति ग. ६. ग-पुस्तके तु 'पारावत इवानङ्गमोहिते कूजति प्रिये । पश्य कौतुकिनी जाया समीपमुपसर्पति ॥' इत्युदाहरणम्.

अथ हसितम्—

[1]हसितं तु वृथाहासो यौवनोद्भेदसंभवः ॥ १०९ ॥

यथा—

'अकस्मादेव तन्वङ्गी जहास यदियं पुनः ।
नूनं प्रसूनबाणोऽस्यां स्वाराज्य[2]मधितिष्ठति ॥'

अथ चकितम्—

[3]कुतोऽपि दयितस्याग्रे चकितं भयसंभ्रमः ।

[4]यथा—

'त्रस्यन्ती चलशफरीविघट्टितोरू-
र्वामोरूरतिशयमाप विभ्रमस्य ।
क्षुभ्यन्ति प्रसभमहो विनापि हेतो-
र्लीलाभिः किमु सति कारणे तरुण्यः ॥'

अथ केलिः—

वि[5]हारे सह कान्तेन क्रीडितं केलिरुच्यते ॥ ११० ॥

यथा—

'[6]व्यपोहितुं लोचनतो मुखानिलैरपारयन्तं कि[1]ल पुष्पजं रजः ।
पयोधरेणोरसि काचिदुन्मनाः प्रियं जघानोन्नतपीवरस्तनी ॥'

---

**यौवनोद्भेदो** यौवनोत्पत्तिः ॥ **अकस्मात्**कारणं विना । स्वाराज्यं स्वर्गवदधिकारम् । अधितिष्ठति कुरुते ॥ **कुतोऽपीति** । अलक्षितकारणादित्यर्थः । भयसंभ्रमः भयेनातिचाञ्चल्यम् ॥ **विभ्रमस्य** भ्रमणविशेषस्य । क्षुभ्यन्ति भयव्याकुला भवन्ति । किमु सुतरामित्यर्थः ॥ **विहारे इति** । कान्तेन सह क्रियमाणे विहारे सति यन्नायिकायाः क्रीडितं सा केलिरित्यर्थः ॥ **व्यपोहितुं** निरसितुम् । अपारयन्तमशक्नुव-

---

1. किलेति । किलेत्यलीके । वस्तुतस्तदास्यस्पर्शलोभादपारयन्तमित्यर्थः ॥

---

१. 'आकस्मिकं तु हसितं यौवनादिविकारजम् ॥' इति ग. २. 'अधिगच्छति' ग. ३. 'त्रासेन लज्जया वापि निजवल्लभसंनिधौ । संभ्रमातिशयो यस्तच्चकितं सूत्रकृन्मतम् ॥' इति ग. ४. ग-पुस्तके तु 'तत्र त्रासेन यथा—'परिस्फुरन्मीनविघट्टितोरवः स्वरङ्गनात्रासविलोलदृष्टयः । उपाययुः कम्पितपाणिपल्लवाः सखीजनस्यापि विलोकनीयताम् ॥' लज्जया यथा—'अभिमुनि सहसा हृते परस्या घनमरुता जघनांशुकैकदेशे । चकितमवसनोरु सत्रपायाः प्रतियुवतीरपि विस्मयं निनाय ॥' इत्युदाहरणे. ५. 'वल्लभेन सहैकान्ते कान्तायाः क्रीडितेषु यः । चुम्बनालिङ्गनादीनां विशेषः केलिरुच्यते ॥' इति ग. ६. 'मदनशरहतस्योपांशु कान्ता समन्तादुपरि निरवलम्बा प्रेयसो निष्पपात । सपदि स पतिरेनामालिलिङ्गे चुचुम्बे स्मरशरविनिपातं केवलं पुण्यभाजाम् ॥' इति ग.

अथ मुग्धाकन्ययोरनुरागेङ्गितानि—

दृष्ट्वा दर्शयति व्रीडां संमुखं नैव पश्यति ।
प्रच्छन्नं वा भ्रमन्तं वातिक्रान्तं पश्यति प्रियम् ॥ १११ ॥
बहुधा[1] पृच्छ्यमानापि मन्दमन्दमधोमुखी ।
सगद्गदस्वरं किंचित्प्रियं प्रायेण भाषते ॥ ११२ ॥
अन्यैः प्रवर्तितां शश्वत्सावधाना च तत्कथाम् ।
शृणोत्यन्यत्र दत्ताक्षी प्रिये बालानुरागिणी ॥ ११३ ॥

अथ सकलानामपि नायिकानामनुरागेङ्गितानि—

चिराय सविधे स्थानं प्रियस्य बहु मन्यते ।
विलोचनपथं चास्य न गच्छत्यनलंकृता ॥ ११४ ॥
क्वापि कुन्तल[2]संव्यानसंयमव्यपदेशतः ।
बाहुमूलं स्तनौ नाभिपङ्कजं दर्शयेत्स्फुटम् ॥ ११५ ॥
आच्छादयति[3] वागाद्यैः प्रियस्य परिचारकान् ।
विश्वसित्यस्य मित्रेषु बहु मानं करोति च ॥ ११६ ॥
सखीमध्ये गुणान्ब्रूते स्वधनं प्रददाति च ।
सुप्ते स्वपिति दुःखेऽस्य दुःखं धत्ते सुखे सुखम् ॥ ११७ ॥
स्थिता[4] दृष्टिपथे शश्वत्प्रिये पश्यति दूरतः ।

---

न्तम् ॥ अनुरागेङ्गितानि अनुरागसूचकचेष्टितानि । प्रच्छन्नं भित्त्यादिव्यवहितम् । अतिक्रान्तं दूरे गच्छन्तम् । तत्कथां प्रियकथाम् । कुन्तलेति । केशसमूहबन्धनच्छलेनेत्यर्थः । आच्छादयति वशीकरोति । वाक् प्रियवचनम् । आद्य-

---

1. बहुधेति । कामसूत्रेऽप्युक्तम्—'पृष्टा च किंचित्सस्मितमव्यक्ताक्षरमनवसितार्थं च मन्दं मन्दमधोमुखी कथयति ।' इति ॥

2. कुन्तलेति । कुन्तलः केशपाशः । संवीयतेऽनेनेति संव्यानम् । 'व्येञ् संवरणे' । ल्युट् । 'संव्यानमुत्तरीयं च' इत्यमरः । तयोर्यः संयमो यथोचितन्यासस्तद्व्यपदेशतस्तद्व्याजादिति वास्तवार्थः ॥

3. आच्छादयतीति । कामसूत्रेऽप्युक्तम्—'परिजनानवष्टभ्य तांस्तांश्च लीला दर्शयति, तन्मित्रेषु विश्वसिति, वचनं चैषां बहु मन्यते करोति च, तत्परिचारकैः सह प्रीतिं संकथां द्यूतमिति च करोति ।' इत्यादि ॥

4. स्थितेति । कामसूत्रेऽप्युक्तम्—'दूरे स्थिता, पश्यतु मामिति मन्यमाना परिजनं समदनविकारमाभाषते ।' इति ॥

आभाषते परिजनं संमुखं स्मरविक्रियम् ॥ ११८ ॥
[1]यत्किंचिदपि संवीक्ष्य कुरुते हसितं मुधा ।
कर्णकण्डूयनं तद्वत्कबरीमोक्षसंयमौ ॥ ११९ ॥
जृम्भते स्फोटयत्यङ्गं [2]बालमाश्लिष्य चुम्बति ।
[3]भाले तथा वयस्याया रचयेत्तिलकक्रियाम् ॥ १२० ॥
अङ्गुष्ठाग्रेण लिखति सकटाक्षं निरीक्षते ।
दशति स्वाधरं चापि ब्रूते प्रियमधोमुखी ॥ १२१ ॥
न मुञ्चति च तं देशं नायको यत्र दृश्यते ।
आगच्छति गृहं तस्य कार्यव्याजेन केनचित् ॥ १२२ ॥
दत्तं किमपि कान्तेन धृत्वाङ्गे मुहुरीक्षते ।
नित्यं हृष्यति तद्योगे वियोगे मलिना कृशा ॥ १२३ ॥
मन्यते बहु तच्छीलं तत्प्रियं मन्यते प्रियम् ।
प्रार्थयत्यल्पमूल्यानि सुप्ता न परिवर्तते ॥ १२४ ॥
विकारान्सात्त्विकानस्य संमुखी नाधिगच्छति ।
भाषते सूनृतं स्निग्धामनुरक्ता नितम्बिनी ॥ १२५ ॥
एतेष्वधिकलज्जानि चेष्टितानि नवस्त्रियाः ।
मध्यव्रीडानि मध्यायाः स्रंसमानत्रपाणि तु ॥ १२६ ॥
अन्यस्त्रियाः प्रगल्भायास्तथा स्युर्वारयोषितः ।

दिङ्मात्रं यथा—

'अन्तिकगतमपि मामियमलोकयन्तीव हन्त दृष्ट्वापि ।

---

पदादन्नवस्त्रादिदानानां ग्रहणम् । अस्य प्रियस्य । संमुखमिति परिजनस्य विशेषणम् । तद्योगे प्रियसंगमे । तच्छीलं प्रियचरित्रम् । तत्प्रियं प्रियाभीष्टं वस्तु । प्रार्थयतीति परस्मैपदम्, आत्मनेपदस्य प्रायिकत्वात् । अधिगच्छति प्रकाशयति । सूनृतं प्रियसत्यवचनम् । स्निग्धां वयस्याम् । 'स्निग्धम्' इति पाठे स्नेहव्यञ्जकं

---

1. यदिति । कामसूत्रेऽप्युक्तम्—'यत्किञ्चिद्दृष्ट्वा विहसितं करोति ।' इति ॥

2. बालमिति । कामसूत्रेऽप्युक्तम्—'बालस्याङ्कगतस्यालिङ्गनं चुम्बनं च करोति ।' इति ॥

3. भाल इति । कामसूत्रेऽप्युक्तम्—'परिचारिकायाश्च तिलकं रचयेत् ।' इति ॥

सरसनखक्षतलक्षितमाविष्कुरुते भुजामूलम् ॥'

तथा[2]—

लेख्य[3]प्रस्थापनैः स्निग्धैर्वीक्षितैर्मृदुभाषितैः ॥ १२७ ॥
दूतीसंप्रेषणैर्नार्या भावाभिव्यक्तिरिष्यते ।

दूत्यश्च—

दूत्यः[5] सखी नटी दासी धात्रेयी प्रतिवेशिनी ॥ १२८ ॥
बाला प्रव्रजिता[1] कारुः शिल्पिन्याद्याः स्वयं तथा ।

कारू रजकीप्रभृतिः । शिल्पिनी[6] चित्रकारादिस्त्री । आदिशब्दात्ताम्बूलिकगान्धिकस्त्रीप्रभृतयः ।

तत्र सखी यथा—'श्वासान्मुञ्चति—' इत्यादि (१३६ पृ.)

स्वयंदूती यथा मम—

'पंथिअ[3] पिआसिओ विअ लच्छीअसि जासि ता किमण्णत्तो ।
ण मणं वि वारओ इध अत्थि घरे घणरसं पिअन्ताणं ॥'

---

यथा स्यात्तथा भाषत इत्यर्थः ॥ **सरसनखक्षतेन** आर्द्रनखाघातेन लक्षितं चिह्नितम् ॥ लेख्यप्रस्थापनं यथा—'विज्ञप्तिरेषा मम जीवबन्धो तत्रैव नेया दिवसाः कियन्तः । संप्रत्ययोग्यस्थितिरेष देशः करा यदिन्दोरुपतापयन्ति ॥' **पन्थिअ** इति । 'पान्थ पिपासित इव लक्ष्यसे यासि तत्किमन्यत्र । न मनागपि वारक इहास्ति गेहे घनरसं पिबताम् ॥' इति संस्कृतम् । पिपासा जलतृष्णा । पक्षे—

---

1. प्रव्रजितेति । इह प्रव्रजिताशब्देन श्रमणाक्षपणारक्तपट्टिकादयस्तद्विशेषा अपि ग्राह्याः । कारूस्तक्षादीनां योषित् । 'तक्षा च तन्तुवायश्च नापितो रजकस्तथा । पञ्चमश्चर्मकारश्च कारवः शिल्पिनो मताः ॥' इति ॥

2. ताम्बूलिकेति । ताम्बूलं शिल्पमस्येति ताम्बूलिकः । एवं गान्धिकः । एतदादीनां स्त्रियो हि प्रगल्भा निष्णाता अप्रतिषिद्धगमनाश्च भवन्ति । वात्स्यायनोऽप्याह—'विधवेक्षणिका दासी भिक्षुकी शिल्पकारिका । प्रविशत्याशु विश्वासं दूतीकार्यं च विन्दति ॥' गृहमिति शेषः ॥

3. पन्थीति । गीतिरियम् । तदुक्तम्—'गाथाद्वितीयतुर्यावष्टादशमात्रकौ यदा भवतः । मात्राषष्टिशरीरा प्रोक्ता सा गीतिरिह फणिपतिना ॥' इति वाणीभूषणकाराः ॥

---

१. ग-पुस्तके तु 'अथ मुग्धाकन्ययोः—' इत्यारभ्य—'भुजामूलम् ।' इत्यन्तो ग्रन्थो न दृश्यते. २. 'तथा' ग-पुस्तके नास्ति. ३. 'लेख—' ग. ४. 'चैव तथा संदेशभाषणैः' ग. ५. 'दूत्यः सप्तविधाः मायो धात्रेयी प्रतिवेशिनी' इति ग. ६. 'शिल्पिनी—' इत्यारभ्य 'इत्यादि' इत्यन्त पाठो ग-पुस्तके नास्ति.

[1]एताश्च नायिकाविषये नायकानामपि दूत्यो भवन्ति ।

[2]दूतीगुणानाह—

**कलाकौशलमुत्साहो भक्तिश्चित्तज्ञता स्मृतिः ॥ १२९ ॥**
**माधुर्यं नर्मविज्ञानं वाग्मिता चेति तद्गुणाः ।**
**[1]एता अपि यथौचित्यादुत्तमाधममध्यमाः ॥ १३० ॥**

एता दूत्यः ।

अथ प्रतिनायकः—

**धीरोद्धतः पापकारी व्यसनी प्रतिनायकः ।**

यथा रामस्य रावणः ।

अथोद्दीपनविभावाः—

**उद्दीपनविभावास्ते रसमुद्दीपयन्ति ये[3] ॥ १३१ ॥**

ते च—

**[4]आलम्बनस्य चेष्टाद्या देशकालादयस्तथा ।**

---

संभोगेच्छा । घनरसं जलम्, पक्षे—संभोगसुखम् । पिबतामनुभवताम् । यद्वा घनो निबिडो रसो रागो यत्र सोऽधरस्तम् ॥ एता अनन्तरोक्ताः सख्यादयः ॥ तद्गुणाः दूतीगुणाः ॥ व्यसनं द्विविधम्—कामजं कोपजं च । तद्योगाद् व्यसनान्याह मनुः- 'कामजेषु प्रसक्तो हि व्यसनेषु महीपतिः । वियुज्यतेऽर्थधर्माभ्यां क्रोधजेष्वात्मनैव तु ॥ मृगयाक्षो दिवास्वप्नः परिवादः स्त्रियो मदः । तौर्यत्रिकं वृथाट्या च कामजो दशको गणः ॥ पैशुन्यं साहसं द्रोह ईर्ष्यासूयार्थदूषणम् । वाग्दण्डजं च पारुष्यं क्रोधजोऽपि गणोऽष्टकः ॥' ( ७. अ. ) अक्षो द्यूतक्रीडा । तौर्यत्रिकं नृत्यगीतवाद्यानि त्रीणीति दश । पैशुन्यं अविज्ञातपरदोषाविष्करणम् । साहसं साधोर्बन्धनादिना निग्रहः । द्रोहो जिघांसा । ईर्ष्या परगुणासहिष्णुता । असूया परगुणेषु दोषाविष्करणम् । अर्थदूषणं अर्थानामपहरणम्, देयानामदानं च ॥ उद्दीपयन्ति परिपोष-

---

1. एता इति । वात्स्यायनो दूतीकर्माण्यप्याह—'विद्वेषं ग्राहयेत्पत्यौ रमणीयानि वर्णयेत् । चित्रान्सुरतसंभोगानन्यासामपि दर्शयेत् ॥ नायकस्यानुरागं च पुनश्च रतिकौशलम् । प्रार्थनां चाधिकस्त्रीभिरवष्टम्भं च वर्णयेत् ॥' श्लाघनीयया चास्य प्रच्छन्नं संयोगं भूतमभूतपूर्वं वा वर्णयेत् । अवष्टम्भं नायिकाविषयं निश्चयम् ॥

---

१. 'एताश्च—' इति फक्किका नास्ति ग-पुस्तके. २. 'दूती—' इत्यारभ्य '—दूत्यः' इत्यन्तः पाठो ग-पुस्तके नास्ति. ३. 'ते चोद्याननभःकालचन्द्रभृङ्गरुतादयः' । यथा—'वियदलि—' इत्यादि । इत्यधिकं ग. पुस्तके. ४. 'आलम्बनस्य—' इत्यादिः—'अनुभावाः' इत्यन्तः पाठो ग-पुस्तके नास्ति.

चेष्टाद्या[1] इत्याद्यशब्दाद्रूपभाषणादयः । कालादीत्यादिशब्दाच्चन्द्रच-न्दनकोकिलालाप[3]भ्रमरझंकारादयः ।

तत्र[4] चन्द्रोदयो यथा मम—

'करमुदयमहीधरस्तनाग्रे गलिततमःपटलांशुके निवेश्य ।
विकसितकुमुदेक्षणं विचुम्बत्ययममरेशदिशो मुखं सुधांशुः ॥'

यो यस्य रसस्योद्दीपनभावः स तत्स्वरूपवर्णने वक्ष्यते ।

अथानुभावाः—

उद्बुद्धं कारणैः स्वैः स्वैर्बहिर्भावं प्रकाशयन्[5] ॥ १३२ ॥
लोके यः कार्यरूपः सोऽनुभावः काव्यनाट्ययोः ।

यः[6] खलु लोके सीतादिचन्द्रादिभिः स्वैः स्वैरालम्बनोद्दीपनकारणै रामादेरन्त[7]रुद्बुद्धं रत्यादिकं बहिः प्रकाशयन्कार्यमित्युच्यते, स काव्य-नाट्ययोः पुनरनुभावः ।

कः पुनरसावित्याह—

उक्ताः स्त्रीणामलंकारा अङ्गजाश्च स्वभावजाः ॥ १३३ ॥
तद्रूपाः सात्त्विका भावास्तथा चेष्टाः परा अपि ।

तद्रूपा[8] अनुभावस्वरूपाः । तत्र यो यस्य रसस्यानुभावः स तत्स्वरू-पवर्णने वक्ष्यते ।

---

तिशयं नयन्ति । **आलम्बनस्य** नायिकादेः । **चेष्टा** नेत्रविक्षेपादिः ॥ **करं** किरणं पाणिं च । अमरेशदिशः प्राच्याः । उद्बुद्धमिति विवृणोति—**यः खल्विति ।** वहिः प्रकाशयन् अनुमापयन् ॥ **अङ्गजा** भावादयस्त्रयः । **स्वभावजा** लीला-दयोऽष्टादश । शोभाकान्त्यादीनां रत्यादिप्रकाशकत्वाभावान्नानुभावरूपता । **चेष्टा**

---

1. करमिति । अयं सुधांशुः शशी (नायकश्च) गलितं च्युतं तमःपटलं तिमिरवि-तानमेव (तद्वच्च) अंशुकं वसनं यस्य तथाभूते उदयमहीधर उदयाचल एव (तद्वच्च) स्तनः पयोधरस्तदग्रे करं किरणं (पाणिं च) निवेश्य । करेण स्तनाग्रमवलम्ब्येति तत्त्वम् । अमरेशदिशः पूर्वाशायाः (नायिकायाश्च) विकसितानि प्रफुल्लानि कुमुदानि कैरवाण्येव (तद्वच्च) ईक्षणे नयने यथा तथा मुखं प्राचीप्रारम्भलक्षणं (वदनं च) चुम्बति । चुम्बनं संबन्धः वदनसंयोगविशेषश्चेति ॥ अत्र वि-उपसर्गो मन्दप्रयोजनः ॥

---

१. 'चेष्टादि' क-ख. २. 'इत्यादि' क. ३. 'आलाप' इति क-पुस्तके नास्ति. ४. 'अत्र' क. ५. 'वागङ्गसत्त्वाभिनयैर्यस्मादर्थो विभाव्यते । वागङ्गोपाङ्गसंयुक्तः सोऽनुभाव इति स्मृतः ॥' इति ग. ६. 'यः खलु' इत्यादिः —'आह' इत्यन्तः पाठो ग-पुस्तके नास्ति. ७. 'अन्तः' इति क-पुस्तके नास्ति. ८. 'तद्रूपाः'—इत्यादिः 'सात्त्विकाः' इत्यन्तः पाठो ग-पुस्तके नास्ति.

तत्र[1] सात्त्विकाः—

**वि[2]काराः सत्त्वसंभूताः सात्त्विकाः परिकीर्तिताः ॥१३४॥**

सत्त्वं नाम स्वात्मविश्रामप्रकाशकारी कश्चनान्तरो धर्मः ।

**सत्त्वमात्रोद्भवत्वात्ते भिन्ना अप्यनुभावतः ।**

'गोबलीवर्दन्यायेन' इति शेषः ।

के त इत्याह—

**स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः ॥ १३५ ॥**
**वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विकाः स्मृताः ।**

तत्र[3]

**स्तम्भश्चेष्टाप्रतीघातो भ[4]यहर्षामयादिभिः ॥ १३६ ॥**
**वपुर्जलोद्गमः स्वेदो रतिघर्मश्रमादिभिः ।**
**ह[5]र्षाद्भुतभयादिभ्यो रोमाञ्चो रोमविक्रिया ॥ १३७ ॥**
**म[6]दसंमदपीडाद्यैर्वैस्वर्यं गद्गदं विदुः ।**

---

नायकस्य नेत्रविक्षेपादयः । **पराः** सात्त्विकविकारभिन्नाः ॥ **सत्त्वमिति** । स्वात्मनि एव विश्रामो यस्य स रसादिः, तस्य प्रकाश उद्बोधस्तत्कारी । प्रागुक्तमपि सत्त्वलक्षणं ( ७८ पृ० ) शिष्याणां विविधव्युत्पत्त्यै प्रकारान्तरेण पुनरुक्तम् । **ते** सात्त्विका विकाराः । **भिन्ना अपीति** । अपिना अभिन्ना इत्यस्य लाभः । ननु भेदाभेदयोर्विरोध इत्यत आह—**गोबलीवर्देति** । तथा चानुभावत्वावच्छिन्नप्रतियोगिताकभेदाभावेन सहानुभावत्वसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकभेदस्य समावेशः । यथा बलीवर्दे गोत्वावच्छिन्नप्रतियोगिताकभेदाभावेन सह गोत्वसमानाधिकरणधेनुत्वादिधर्मावच्छिन्नप्रतियोगिताकभेदस्येति भावः । 'विभावा अनुभावाश्च सात्त्विका व्यभिचारिणः ।' इत्यादौ सात्त्विकभावस्य पृथगुपन्यासेनानुभावातिरिक्तत्वशङ्कानिरासार्थमिह पृथगुपादानम् ॥ **प्रतीघातः** प्रतिबन्धः । वपुषो जलोद्गमः । रोम्णो विक्रिया

---

१. 'अत्र' क. २. 'सत्त्वमात्रोद्भवा भावाः' इति ग. ३. 'अत्र' क. ४. 'भयहर्षानुरागतः । यथा—'अधीराक्ष्याः कटाक्षा वः श्रेयसे सन्तु जिष्णवः । युवानस्तत्र तत्रैव यत्पातैर्लिखिता इव ॥' स्वेदो यथा—'वपुर्जलोद्गमः स्वेदो रतितापश्रमादिभिः' । यथा—'कान्तानां कृतपुलकः स्तनान्तराले वक्त्रेषु च्युततिलकेषु मौक्तिकाभः । आपेदे श्रमसलिलोद्गमो विभूषां रम्याणां विकृतिरपि श्रियं तनोति ॥' इति ग. ५. अथ रोमाञ्चः—'रोमाञ्चः प्रोद्गमो रोम्णां रोमहर्षादिभिस्तनौ । यथा—'प्रेयःकरतलस्पर्शात्......पुलकोत्कराः । प्रियागण्डस्थले भान्ति हर्षबीजाङ्कुरा इव' ॥ अत्राचार्यास्तु—'यत्र यत्र रसोत्कर्षः श्रूयते दृश्यतेऽपि वा । स्वप्रीत्यभिगमेनासौ रोमाञ्चः सर्वभावजः ॥' इति ग. ६. स्वरभङ्गो यथा—'गद्गदो विस्वरत्वं च वैस्वर्यं प्रमदादिभिः ।' यथा—'उन्मादिकोकिलकुलक्वणनोज्ज्वलानि संबाध्यमानकुररीगणकूजितानि । संभ्रान्तगद्गदविभिन्नमृदुस्वराणि चेतो हरन्ति वचनानि सरोरुहाक्ष्याः ॥' इति ग.

रागद्वेषश्रमादिभ्यः कम्पो गात्रस्य वेपथुः ॥ १३८ ॥[1]

विषादमदरोषाद्यैर्वर्णान्यत्वं विवर्णता ।[2]

अश्रु नेत्रोद्भवं वारि क्रोधदुःखप्रहर्षजम् ॥ १३९ ॥[3]

[4]प्रलयः सुखदुःखाभ्यां चेष्टाज्ञाननिराकृतिः ।

[5]यथा मम—

'[1]तनुस्पर्शादस्या दरमुकुलिते हन्त नयने

उदञ्चद्रोमाञ्चं व्रजति जडतामङ्गमखिलम् ।

कपोलौ घर्मार्द्रौ ध्रुवमुपरताशेषविषयं

मनः सान्द्रानन्दं स्पृशति झटिति ब्रह्म परमम् ॥'

एवमन्यत् ।

---

उद्गमः । वैस्वर्यं स्वरविकारः । **सुखदुःखाभ्यामिति** । सुखेन दुःखेन वेत्यर्थः ॥ **ब्रह्म परममिति** । ब्रह्मनिविष्टचेतसो यथा चेष्टाबाह्यज्ञाननिरासो भवति तथा नायिकानिविष्टचेतसोऽपीति भावः । अत्र स्तम्भस्वेदरोमाञ्चप्रलयाः ॥ **एवमन्यदिति** । 'बाले नाथ विमुञ्च मानिनि रुषम्–' (११३ पृ.) इत्यत्र स्वरभङ्गः । 'मा गर्वमुद्वह–' (१३५पृ.)

---

1. तन्विति । अस्याः तनुस्पर्शात् गात्रसंपर्कात् नयने अक्षिणी दरमुकुलिते किंचिन्मुकुलीभावमधिगते हन्त । अखिलं सकलमङ्गम् उदञ्चन्तः प्रादुर्भवन्तः रोमाञ्चा रोमविकारा यस्मिंस्तथाभूतं सत् जडतां जडत्वं व्रजति गच्छति । अत्र 'नयने उदञ्चत्–' इति 'ईदूदेद्द्विवचनं प्रगृह्यम्' इति सूत्रेण द्विवचनस्य प्रगृह्यसंज्ञायां 'प्लुतप्रगृह्या अचि नित्यम्' इति सूत्रेण प्रकृतिभावे प्रगृह्यहेतुकानुशासनिको विश्लेषः स त्वसकृदेव दोषावहः । 'समुद्यद्रोमाञ्चम्' इति पाठस्तु ज्यायान् । कपोलौ घर्मार्द्रौ स्वेदसलिलपिच्छिलौ भवतः । उपरतो विरतः अशेषविषयः सकलबाह्येन्द्रियव्यापारो यस्य तथाभूतं मनः झटिति सान्द्रानन्दं निबिडानन्दरूपं परमं सर्वोत्कृष्टं ब्रह्म स्पृशति साक्षात्करोति ध्रुवं नूनम् । ब्रह्मानन्दमनुभवतीवेति भावः ॥

---

१. 'वेपथुर्यथा—रागरोषभयादिभ्यः कम्पो गात्रस्य वेपथुः । यथा—मा गर्वमुद्वह कपोलतले चकास्ति—'इत्यादि । रागाद्यथा—वारंवारं तिरयति दृशोरुद्गमं बाष्पपूरस्तत्संकल्पोपहितजडिमस्तम्भमभ्येति गात्रम् । सद्यः स्विद्यत्ययमविरतोत्कम्पलोलाङ्गुलीकः पाणिर्लेखाविधिषु नितरां कम्पते किं करोमि ॥ एवं रोषादिभिरूह्यम् ।' इति ग. २. ग-पुस्तके तु 'विवर्णता' इत्यस्मादग्रे 'परिम्रुदित–' इति श्लोको दृश्यते. ३. ग-पुस्तके तु 'प्रहर्षजम्' इत्यस्मादग्रे 'यथा—शशाम वृष्ट्या मेघानामुत्सङ्गे तस्य भूभृतः । विरराम न रामस्य धारासंततिरश्रुणः ॥' इति श्लोको वर्तते. ४. प्रलयो यथा—'प्रलयो रागदुःखादेरिन्द्रियास्तमयो मतः' । यथा—'प्रेमार्द्राः प्रणयस्पृशः—' इत्यादि ।' इति ग. ५. 'यथा–' इत्यादिः 'एवमन्यत्' इत्यन्तः पाठो ग-पुस्तके नास्ति.

अथ व्यभिचारिणः—

**विशेषादाभिमुख्येन चरणाद्व्यभिचारिणः ।**
**स्थायिन्युन्मग्ननिर्मग्नास्त्रयस्त्रिंशच्च तद्भिदाः ॥ १४० ॥**

स्थिरतया वर्तमाने हि रत्यादौ निर्वेदादयः प्रादुर्भावतिरोभावाभ्यामाभिमुख्येन चरणाद् व्यभिचारिणः कथ्यन्ते ।

के त इत्याह—

**निर्वेदावेगदैन्यश्रममदजडता औग्र्यमोहौ विबोधः**
**स्वप्नापस्मारगर्वा मरणमलसतामर्षनिद्रावहित्थाः ।**
**औत्सुक्योन्मादशङ्काः स्मृतिमतिसहिता व्याधिसन्त्रासलज्जा**
**हर्षासूयाविषादाः सधृतिचपलता ग्लानिचिन्तावितर्काः १४१**

तत्र निर्वेदः[2]—

**तत्त्वज्ञानापदीर्ष्यादेर्निर्वेदः[1] स्वावमाननम् ।**
**दैन्यचिन्ताश्रुनिःश्वासवैवर्ण्योच्छ्वसितादिकृत् ॥ १४२ ॥**

[3]तत्त्वज्ञानान्निर्वेदो यथा—

'मृत्कुम्भवालुकारन्ध्रपिधानरचनार्थिना ।
दक्षिणावर्तशङ्खोऽयं हन्त चूर्णीकृतो मया ॥'

---

इत्यत्र वेपथुः । 'शोणं वीक्ष्य–' ( ९९ पृ. ) इत्यत्र वैवर्ण्यमश्रु च ॥ **विशेषादिति ।** विभावानुभावापेक्षया आभिमुख्येन रसानुगुण्येन रत्यादौ रसरूपतया संगच्छमानाः । उन्मग्ना बुद्बुदवत् झटिति प्रतीयमानत्वेन प्रादुर्भूताः । निर्मग्ना विलम्बप्रतीतिकत्वेन तिरोभूताः । त्रयस्त्रिंशदिति न्यूनसंख्याया व्यवच्छेदकम्, न त्वधिकसंख्यायाः । अत एवोक्तम्—'हासक्रोधादयः शृङ्गारादौ व्यभिचारिणः' इति । ( ७७ पृ० ) एतदर्थमत्र चकार उपन्यस्तः । **तद्भिदा** व्यभिचारिभावप्रकाराः । **चरणात्** मेलनात् ॥ निर्वेदादीनां ज्ञानाय कार्यकारणकथनपुरःसरं तल्लक्षणमाह—**तत्त्वेति** । तत्त्वज्ञानमिह देहविषयादावनुपादेयत्वज्ञानमेव, न तु जीवात्मपरमात्मनोरभेदज्ञानम् । तस्मिन्सति मोक्ष एव न तु स्वावमाननम् । तत्कारणे वैराग्यादौ लक्षणा । प्रथमादिपदात् पुराणश्रवणादीनां द्वितीयादिपदात् स्वस्य कुकर्मोद्भावनादीनां ग्रहणम् ॥ **मृदिति ।** चूर्णीकृतः चूर्णाख्यद्रव्यविशेषीकृतः । विरक्तस्य दक्षिणावर्तशङ्खचूर्णनकथनमसंगतमि-

---

I. निर्वेद इति । 'चित्तस्य खेदो निर्वेदस्तत्त्वज्ञानोदयादिभिः ।' इति केचित् ॥

---

१. 'निर्वेदा(द)यस्त्रयस्त्रिंशद्यथासंभवं रत्यादिस्थायिषु आविर्भावतिरोभावाभ्यामाभिमुख्येन चरणाद् व्यभिचारिण उच्यन्ते' इति ग. २. 'निर्वेदः' इति नास्ति ग-पुस्तके. ३. 'तत्र' इत्यधिकं ग-पुस्तके.

अथावेगः—

आवेगः संभ्रमस्तत्र हर्षजे पिण्डिताङ्गता ।
उत्पातजे स्रस्तताङ्गं, धूमाद्याकुलताग्निजे ॥ १४३ ॥
राजविद्रवजादेस्तु शस्त्रनागादियोजनम् ।
गजादेः स्तम्भकम्पादि, पांस्वाद्याकुलतानिलात् ॥ १४४ ॥
इष्टाद्धर्षाः, शुचोऽनिष्टाज्ज्ञेयाश्चान्ये यथायथम् ।

तत्र शत्रुजो यथा—

'अर्घ्यमर्घ्यमिति वादिनं नृपं सोऽनवेक्ष्य भरताग्रजो यतः ।
क्षत्रकोपदहनार्चिषं ततः संदधे दृशमुदग्रतारकाम् ॥'

एवमन्यदूह्यम् ।

अथ दैन्यम्—

दौर्गत्याद्यैरनौजस्यं दैन्यं मलिनतादिकृत् ॥ १४५ ॥

---

त्युपमाकल्पनयायं निदर्शनालंकारः । तथा च मृत्कुम्भवालुकारन्ध्रपिधानवत्तुच्छं वैषयिकसुखम् तस्य रचना अनुकूलव्यापारः तदर्थिना तत्कामेन । परमपुरुषार्थसाधनतया दक्षिणावर्तशङ्खवदुपादेयो मनुष्यदेहः चूर्णीकृतः । जरया जर्जरीकृत इत्यर्थः । यद्वा रावणशक्त्या पतिते लक्ष्मणे श्रीरामस्य परिदेवनमिदम् । अयं लक्ष्मण एव दक्षिणावर्तशङ्खः मया चूर्णीकृतो विनाशितः, चूर्णाख्यद्रव्यविशेषीकृतश्च । कीदृशेन मया । रावणवधादिरेव मृत्कुम्भवालुकारन्ध्रपिधानं तद्रचनाकामेन । अतिशयोक्त्यलंकारोऽयं रूपकोपपादकः । अत्र पक्षे आपज्जन्यं निर्वेदं स्वावमाननं वेद्यम् । एवमन्यदपि ॥

तत्रावेगे पिण्डिताङ्गता संकुचितशरीरत्वम् । 'पीडिताङ्गता' इति पाठे स्पष्ट एवार्थः । उत्पातजे दिव्यनाभसभूमिजरूपत्रिविधोत्पातजन्ये । राजविद्रवजादेरित्यादिना शत्रुजादिग्रहणम् । नागादीत्यादिना अश्वादिपरिग्रहः । गजादेर्जायमाने आवेगे । एवमग्रेऽपि । नृपं दशरथम् । स भार्गवः । क्षत्रेषु यः कोपः स एव दहनः तस्य शिखाम् । ततः तस्मिन् । अत्रार्घ्यमर्घ्यमिति मुहुर्वदतो दशरथस्य भार्गवदर्शने संभ्रमः । दौर्गत्यं दारिद्र्यम् । आदिना श्रमादेर्ग्रहणम् । अनौजस्यं निस्तेजस्त्वम् ।

---

1. आवेग इति । अनर्थातिशयजनिता चित्तस्य संभ्रमाख्या वृत्तिरावेग इति ॥

2. दैन्यमिति । दुःखदारिद्र्यापराधादिजनितः स्वापकर्षभाषणादिहेतुश्चित्तवृत्तिविशेषो दैन्यमिति । 'चिन्तौत्सुक्यान्मनस्तापाद्दौर्गत्याच्च विभावतः । अनुभावात्तु शिरसोऽप्यावृत्तेर्गात्रगौरवात् । देहोपस्करणत्यागाद्दैन्यं भावं विभावयेत् ॥' इति च ॥

---

१. 'अथावेगः' इति ग-पुस्तके नास्ति. २. 'पिहिताङ्गता' ग. ३. 'नागाभियोजनम्' क-ग. ४. इतोऽग्रे 'नष्टं वर्षवरैः—' इति श्लोको दृश्यते घ-पुस्तके, ततश्च अत्र परिमुक्तवानरभयादेपां संभ्रमः ।' इति. ५. 'तत्र—' इत्यादिः '—ऊह्यम्' इत्यन्तः पाठो नास्ति ग-पुस्तके. ६. 'निर्वेद' इति पुस्तकान्तरे नास्ति.

यथा—

'वृद्धोऽन्धः पतिरेष मञ्चकगतः, स्थूणावशेषं गृहं,
कालोऽभ्यर्णजलागमः कुशलिनी वत्सस्य[1] वार्तापि नो ।
यत्नात्संचिततैलबिन्दुघटिका भग्नेति पर्याकुला
दृष्ट्वा गर्भभरालसां निजवधूं[2] श्वश्रूश्चिरं रोदिति ॥'

अथ श्रमः—

**खेदो रत्यध्वगत्यादेः[1] श्वासनिद्रादिकृच्छ्रमः[3] ।**

यथा[2]—

'सद्यः[3] पुरीपरिसरेऽपि शिरीषमृद्वी
सीता जवात्त्रिचतुराणि पदानि गत्वा ।
गन्तव्यमस्ति कियदित्यसकृद्ब्रुवाणा
रामाश्रुणः कृतवती प्रथमावतारम्[4] ॥'

अथ मदः—

**संमोहानन्दसंभेदो[5] मदो[4] मद्योपयोगजः ॥ १४६ ॥**

---

स्थूणा स्तम्भः । अभ्यर्णजलागमो निकटस्थवर्षासमयः । तैलबिन्दूनां घटिका क्षुद्रभाजनम् ॥ सद्य इति । वारंवारं गन्तव्याध्वपरिमाणजिज्ञासया सीतायाः स्वल्पपथलङ्घनश्रममवधार्य श्रीरामस्य रोदनम् ॥ संमोहानन्दयोः संभेदो मेलकः ।

---

1. वत्सस्येति । वत्सस्य पुत्रस्य ॥

2. निजवधूमिति । निजवधूं आत्मस्नुषाम् ॥

3. श्रम इति । बहुतरशारीरव्यापारजन्मा निःश्वासाङ्गसंमर्दनिद्रादिकारणीभूतः खेदविशेषः श्रम इति । यदाहुः—'अध्वव्यायामसेवाद्यैर्विभावैरनुभावकैः । गात्रसंवाहनैरास्यसंकोचैरङ्गमोटनैः ॥ निःश्वासैर्जृम्भितैर्मन्दैः पादोत्क्षेपैः श्रमो मतः ॥' इति । अयं च सत्यपि बले जायते, शारीरव्यापारादेव च जायते न तु ग्लानिः । अतो ग्लानिः श्रमस्य भेदः ॥

4. प्रथमेति । प्रथमावतारं पूर्वाविष्करणम् ॥

5. मद इति । मद्याद्युपयोगजन्मा उल्लासाख्यः शयनहसितादिहेतुश्चित्तविशेषो

---

१. '—श्रमः खेदादिकारकः रतान्मार्गगमनादेश्च यः खेदः स श्रमः स्वेदमर्दनाद्यनुभावजनकः ।' इति ग. २. 'यथा' इति ग-पुस्तके नास्ति. ३. ग-पुस्तके तु 'सद्यः' इति श्लोकस्य तु स्थाने 'अइ पिहुलं जलकुम्भं घेत्तूण समागदम्हि सहि तुरिअम् । समसेअसलिलणीसासणीसहा वीसमानि खणम् ॥' इति दृश्यते. ४. 'च' घ. ५. 'हर्षोत्कर्षो मदः पानात्स्खलदङ्गवचोगतिः । मद्यादिपानाद्यो हर्षोत्कर्षः स मदोऽङ्गवचनगत्यादिस्खलनानुभावकः ।' इति ग.

**अमुना चोत्तमः शेते, मध्यो हसति गायति ।**
**अधमप्रकृतिश्चापि परुषं वक्ति रोदिति ॥ १४७ ॥**

यथा—

'[1]प्रातिभं त्रिसरकेण गतानां वक्रवाक्यरचनारमणीयः ।
गूढसूचितरहस्यसहासः सुभ्रुवां प्रववृते परिहासः ॥'

[1]अथ जडता—

**अप्रतिपत्तिर्[2]जडता स्यादिष्टानिष्टदर्शनश्रुतिभिः ।**
**अनिमिषनयननिरीक्षणतूष्णींभावादयस्तत्र ॥ १४८ ॥**

[2]यथा मम कुवलयाश्वचरिते प्राकृतकाव्ये—

'[3]णवरिअ तं जुअजुअलं अण्णोण्णं णिहिदसजलमन्थरदिट्ठिं ।

---

मद्यस्यासवस्य उपयोगाद् भक्षणाज्जातः । **अमुना** मदेन ॥ **प्रातिभं** प्रागल्भ्यम् । त्रिसरकेण मद्येन । गूढं सूचितं रहस्यं यत्र स चासौ हासश्चेति ॥ **अप्रतिपत्तिः** कर्तव्यानिश्चयः । तूष्णींभावो मौनम् । तत्र जडतायाम् ॥ **णवरिअ**

---

मद इति । तत्रोत्तमे पुरुषे स्वापोऽनुभावः । मध्यमे हसितगाने । अधमे तु रोदनपरुषोक्त्यादि । अयं च मदस्त्रिविधः । तरुणमध्यमाधममेदात् । अव्यक्तासंगतवाक्यैः सुकुमारस्खलद्गत्या च योऽभिनीयते स आद्यः । भुजाक्षेपस्खलितघूर्णितादिभिर्मध्यमः । गतिभङ्गस्मृतिनाशहिक्काछर्द्यादिभिरधमः । प्रदीपे तु 'उत्तमसत्त्वः प्रहसति गायति तद्वच्च मध्यमप्रकृतिः । परुषवचनाभिधायी शेते रोदित्यधमसत्त्वः ॥' इति व्यत्यासोऽस्ति ॥

1. प्रातिभमिति । मदानुभाववर्णनमिदम् । त्रयाणां सरकाणां समाहारस्त्रिसरकं त्रिवारमधुपानम् । 'सरकं शीधुपात्रे स्याच्छीधुपाने च शीधुनि ।' इति विश्वः । तेन त्रिसरकेण । 'त्रिपानं मदातिभूमिः' इति पानप्रसिद्धिः । प्रतिभैव प्रातिभं प्रतिभाविशेषः । तत्प्रातिभं गतानां त्रिवारसुरापानोत्कटमदोद्बुद्धप्रागल्भ्यभाजां सुभ्रुवां वक्रवाक्यरचनारमणीयः वक्रोक्तिशोभनः । गूढानि पूर्वं लज्जया संवृतानि, सूचितानि संप्रति मदेन प्रकाशितानि रहस्यानि ग्राम्यावयवचेष्टाप्रलपितानि यस्मिन् स गूढसूचितरहस्यः, स चासौ हासश्चेति विशेषणसमासः । प्रववृते प्रवृत्तः ॥

2. जडतेति । चिन्तोत्कण्ठाभयविरहेष्टानिष्टदर्शनश्रवणादिजन्यावश्यकर्तव्यार्थप्रतिसंधानविकला चित्तवृत्तिर्जडता । इयं च मोहात्पूर्वतः परतश्च जायते । यदाहुः—'कार्याविवेको जडता पश्यतः शृण्वतोऽपि वा । तद्विभावाः प्रियानिष्टदर्शनश्रवणे रुजा ॥ अनुभावास्त्वमी तूष्णींभावविसरणादयः । सा पूर्वं परतो वा स्यान्मोहादिति विदां मतम् ॥' इति ॥

3. णवेति । स्कन्धकमिदम् । तल्लक्षणम्—स्कन्धकमिति तत्कथितं यत्र चतुष्क-

---

१. 'अथ जडता' इति नास्ति ग-पुस्तके. २. 'यथा—' इत्यादिपङ्क्तिका नास्ति ग-पुस्तके.

आलेक्खओपिअं विअ खणमेत्तं तत्थ संठिअं मुअसण्णं ॥'

अथोग्रता—

शौर्यापराधादिभवं भवेच्चण्डत्वमुग्रता ।
तत्र स्वेदशिरःकम्पतर्जनाताडनादयः ॥ १४९ ॥

यथा—

'प्रणयिसखीसलीलपरिहासरसाधिगतै-
र्ललितशिरीषपुष्पहननैरपि ताम्यति यत् ।
वपुषि वधाय तत्र तव शस्त्रमुपक्षिपतः
पततु शिरस्यकाण्डयमदण्ड इवैष भुजः ॥'

अथ मोहः—

मोहो विचित्तता भीतिदुःखावेगानुचिन्तनैः ।
मूर्च्छनाज्ञानपतनभ्रमणादर्शनादिकृत् ॥ १५० ॥

यथा—

'तीव्राभिषङ्गप्रभवेण वृत्तिं मोहेन संस्तम्भयतेन्द्रियाणाम् ।

---

इति । 'केवलं तद्युवयुगलमन्योन्यं निहितसजलमन्थरदृष्टि । आलेख्यार्पितमिव क्षणमात्रं तत्र संस्थितं मुक्तसञ्ज्ञम् ॥' इति संस्कृतम् । णवरिअशब्दः केवलार्थे देशी ॥ चण्डत्वमत्यन्तासहिष्णुत्वम् । प्रणयिनी या सखी तस्याः परिहासरसेनाधिगतैः प्राप्तैः । **अकाण्डयमदण्ड इति** । अकालयमदण्ड इत्यर्थः । अत्र मालतीशरीरे शस्त्रप्रहारं कुर्वतोऽघोरघण्टस्यापराधेन माधवस्य चण्डत्वमेतादृशोक्त्या व्यज्यते ॥ चित्तस्य निमीलनत्वं **विचित्तता** । सुषुप्तिवारणायाह—**भीतीति**। आवेगः संभ्रमः । **अनुचिन्तन**मत्यन्तचिन्ता । **अदर्शन**मज्ञानम् ॥ **अभिषङ्गः**

---

लगणाष्टकेनार्धं स्यात् । तत्तुल्यमग्रिमदलं भवति चतुःषष्टिमात्रकशरीरमिदम् ॥' इति दामोदरमिश्राः ॥

1. उग्रतेति । अधिक्षेपापमानादिप्रभवा किमस्य करोमीत्याद्याकारा चित्तवृत्तिरुग्रता। यदाहुः—'नृपापराधोऽसद्दोषकीर्तनं चोरधारणम् । विभावाः स्युरथो बन्धो वधस्ताडनभर्त्सने ॥ एते यत्रानुभावास्तदौग्र्यं निर्दयतात्मकम् ॥'

2. मोह इति । भयवियोगादिप्रयोज्या वस्तुतत्त्वानवधारिणी चित्तवृत्तिर्मोहः । 'अवस्थान्तरशबलिता चित्तवृत्तिः' इति तु नव्याः ॥

---

१. 'अथोग्रता' इति नास्ति ग-पुस्तके. २. इतोऽग्रे 'शौर्यादिना यच्चण्डत्वमुग्रता । तत्र स्वेदशिरःकम्पाद्यनुभावा भवन्ति ।' इत्यधिकं ग-पुस्तके. ३. 'देहेन्द्रियगतिस्तम्भशून्यताद्यनुभावकृत् । शोकादिना चित्तविक्षेपो मोह इन्द्रियस्तम्भाद्यनुभावकृत् ।' इति ग.

अज्ञातभर्तृव्यसना मुहूर्तं कृतोपकारेव रतिर्बभूव ॥'

अथ विबोधः—

**निद्रापगमहेतुभ्यो विबोधश्चेतनागमः।**
**जृम्भाङ्गभङ्गनयनमीलनाङ्गावलोककृत् ॥ १५१ ॥**

यथा—

'चिररतिपरिखेदप्राप्तनिद्रासुखानां
चरममपि शयित्वा पूर्वमेव प्रबुद्धाः।
अपरिचलितगात्राः कुर्वते न प्रियाणा-
मशिथिलभुजचक्राश्लेषभेदं तरुण्यः ॥'

अथ स्वप्नः—

**स्वप्नो निद्रामुपेतस्य विषयानुभवस्तु यः।**

---

शोकः। वृत्तिं विषयसंबन्धम्। **संस्तम्भयता** प्रतिबध्नता। एतेनाज्ञानकरत्वं मोहस्य सूचितम्। **व्यसनं** विपत् ॥ **निद्रापगमहेतवो** गीतवादित्रादयः तेभ्यश्चेतनागमो ज्ञानलाभः। **नयनमीलनं** नेत्रप्रकाशः ॥ **चरमं** नायकनिद्रायाः पश्चात्। **पूर्वं** नायकप्रबोधात्प्राक्। अशिथिलेन दृढनिक्षिप्तेन भुजेन यः कण्ठस्याश्लेषः तस्य भङ्गम्। 'प्रशिथिल-'इति पाठे निद्रावशाद् भुजशैथिल्यं प्रियः प्रबुध्य

---

1. **विबोध इति**। निद्रानाशोत्तरं जायमानो बोधो विबोधः। निद्रानाशश्च तत्पूर्तिस्वप्नान्तबलवच्छब्दस्पर्शादिभिर्जायत इति त एवात्र विभावाः। अक्षिगात्रमर्दनादयोऽनुभावाः। केचिदविद्याध्वंसजन्यमप्यमुमामनन्ति। तेषां मते 'नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाच्युत। स्थितोऽस्मि गतसंदेहः करिष्ये वचनं तव ॥' इति गीताश्लोक उदाहार्यः ॥

2. **चिरेति**। चरममपि शयित्वा पश्चात्सुप्तापि पूर्वमेव प्रबुद्धाः। 'सुप्ते पश्चाच्च या शेते पूर्वमेव प्रबुध्यते। नान्यं कामयते चित्ते सा स्त्री ज्ञेया पतिव्रता ॥' इति स्मरणादिति भावः। तथापि तरुण्योऽपरिचलितगात्रा अस्पन्दवपुष्काः सत्यः चिररतिपरिखेदेन प्राप्तनिद्रासुखानां प्रियाणाम्। अशिथिलो गाढो यो भुजचक्रेण परस्परभुजवलयेन आश्लेषः तस्य भेदं विश्लेषं न कुर्वते किं त्वाश्लिष्यैव स्थिताः। अन्यथा, तन्निद्राभङ्गः स्यात्। 'शयानं न प्रबोधयेत्' इति निषेधास्कन्दनभयादिति भावः। इह 'कण्ठाश्लेषभङ्गम्' इति टीकाकारसंमतः पाठः। स तु सांप्रतिकपुस्तकेषु न दृश्यते ॥

---

१. 'विबोधः परिणामादेस्तत्र जृम्भाक्षिमर्दने। आहारपरिणामादेश्चेतनाभावो विबोधो जृम्भाद्यनुभावकः।' इति ग. २. 'चिररति-' इति श्लोकस्य स्थाने 'एकेन नेत्रकमलं कलयन्करेण पाणिं परं च कलयन्नवनीतभाण्डे। निद्राविरागकमनीयमुखाम्बुजश्रीर्मां पातु पादरजसा बत नन्दबालः ॥' इति दृश्यते ग-पुस्तके.

[1]कोपावेगभयग्लानिसुखदुःखादिकारकः ॥ १५२ ॥

यथा—

'[2]मां[1]माकाशप्रणिहितभुजं निर्दयाश्लेषहेतो-

र्लब्धायास्ते कथमपि मया स्वप्नसंदर्शनेन ।

पश्यन्तीनां न खलु बहुशो न स्थलीदेवतानां

मुक्तास्थूलास्तरुकिसलयेष्वश्रुलेशाः पतन्ति ॥'

अथापस्मारः—

[3]मनःक्षेपस्त्वपस्मारो ग्रहाद्यावेशनादिजः ।

भूपातकम्पप्रस्वेदफेनलालादिकारकः ॥ १५३ ॥

'आश्लिष्टभूमिं रसितारमुच्चैर्लोलद्[4]भुजाकारबृहत्तरङ्गम् ।

फेनायमानं पतिमापगानामसावपस्मारिणमाशशङ्के ॥'

अथ गर्वः—

गर्वो मदः प्रभावश्रीविद्यासत्कुलतादिजः ।

[5]अवज्ञासविलासाङ्गदर्शनाविनयादिकृत् ॥ १५४ ॥

[6]तत्र शौर्यगर्वो यथा—

'धृतायुधो यावदहं तावदन्यैः किमायुधैः ।

यद्वा न सिद्धमस्त्रेण मम तत्केन साध्यताम्[7] ॥'

---

भुजाक्षेपं कर्तुमर्हतीति । अस्य निद्राभङ्गो नोचित इति भावः ॥ **मामिति** । यक्षस्य मेघं प्रति प्रियायै वाचनिकार्पणमिदम् । मां यक्षम् । कथमपि महता कष्टेन । मुक्ता इव स्थूलाः ॥ **मनःक्षेप इति** । मनसो नाडीविशेषणनिवेशेन घूर्णनमित्यर्थः । ग्रहादीत्यादिना भूतादिपरिग्रहः । मध्यमादिपदेन धातुवैषम्यादिपरिग्रहः ॥ **फेनायमानं** फेनमुद्वमन्तम् । असौ श्रीकृष्णः आशशङ्के ज्ञातवान् ॥ **मदश्चित्तविकारविशेषः** । राज्ञः कोशदण्डादिजन्यः प्रतापः **प्रभावः** । श्रीवि-

---

1. मामिति । मया कथमपि स्वप्नसंदर्शनेन लब्धायाः ते तव निर्दयाश्लेषहेतोः गाढालिङ्गनार्थम् आकाशप्रणिहितभुजं शून्यार्पितबाहुं मां पश्यन्तीनां स्थलीदेवतानां वनदेवतानां

---

१. 'मात्सर्यभयकोपादेरनुभावस्य कारणम्' । निद्राणस्यापि विषयज्ञानं स्वप्नः । मात्सर्याद्यनुभावहेतुः । इति ग. २. 'भूयश्चासि त्वमसि शयने कण्ठलग्ना पुरा मे—' इत्युदाहरणान्तरं ग-पुस्तके. ३. 'आवेशी ग्रहदुःखाद्यैरपस्मारः स्मृतो बुधैः । घुर्घुरध्वनिभूपातफेनाङ्गान्दोलनादिकृत् ॥' इति ग. ४. 'लोलद्' ख. ५. 'औद्धत्यसदृशावज्ञासहेलालोकनादिकृत् । प्रभावादिजन्यो मदो गर्वः । आदिशब्दाल्लावण्यसौभाग्यादिः । स चाविनयाद्यनुभावहेतुः ।' इति ग. ६. 'यथा' क-घ. ७. असावग्रे 'एवमन्यदप्यूह्यम्' इत्यधिकं ग-पुस्तके.

अथ मरणम्[2]—

शराद्यैर्मरणं[1] जीवत्यागोऽङ्गपतनादिकृत् ।

यथा[3]—

'राममन्मथशरेण ताडिता दुःसहेन हृदये निशाचरी ।
गन्धवद्रुधिरचन्दनोक्षिता जीवितेशवसतिं जगाम सा ॥'

अथालस्यम्—

आलस्यं[2] श्रमगर्भाद्यैर्जाड्यं[4] जृम्भासितादिकृत्[5] ॥ १५५ ॥

---

वर्गसंपत्तिः । अवज्ञा परस्मिन् ॥ अन्यैर्मद्धृतायुधभिन्नैः ॥ रामेति । सा निशाचरी ताडका राक्षसी, सैव निशाचरी अभिसारिका नायिका । राम एव मन्मथः तस्य शरेण हृदये वक्षसि मनसि च ताडिता सती जीवितेशो यम एव जीवितेशः प्रियः तस्य वसतिं जगाम । कीदृशी । गन्धवद्रुधिरमेव चन्दनं तेनोक्षिता लिप्ता ॥ 'जाड्यम्' इत्यत्र क्वापि 'जैह्मयम्' इति पाठः । स न सम्यक् असंगतार्थापत्तेः ।

---

मुक्तास्थूला अश्रुलेशा नयनोदविन्दवः तरुकिसलयेषु बहुशः न खलु न पतन्ति । अपि तु पतन्त्येव । एवंविधं मामवलोक्य वनदेवता अपि रुदन्तीति भावः ॥

1. शरेति । अत्र विशेषमाहू रसगङ्गाधरकाराः 'रोगादिजन्या मूर्च्छारूपा मरणप्रागवस्था मरणम् । न चात्र प्राणवियोगात्मकं मुख्यं मरणमुचितं ग्रहीतुम् । चित्तवृत्त्यात्मकेषु भावेषु तस्याप्रसक्तेः । भावेषु च सर्वेषु कार्यसहवर्तितया शरीरप्राणयोगस्य हेतुत्वात् । उदाहरणम्—'दयितस्य गुणाननुसरन्ती शयने संप्रति या विलोकितासीत् । अधुना खलु हन्त सा कृशाङ्गी गिरमङ्गीकुरुते न भाषितापि ॥' प्रियविरहोऽत्र विभावः । वचनविरामोऽनुभावः । हन्तपदस्यात्रात्यन्तमुपकारकत्वाद्वाक्यव्यङ्ग्योऽप्ययं भावः पदव्यङ्ग्यतामावहति । दयितस्य गुणाननुसरन्तीत्यनेन व्यज्यमानं चरमावस्थायामपि तस्या दयितगुणविस्मरणं नाभूदिति विप्रलम्भस्य शोकस्य वा चरममभिव्यक्तस्य पोषकम् । अयं च भावः स्वव्यञ्जकवाक्योत्तरवर्तिना वाक्यान्तरेण संदर्भघटकेन नायिकादेः प्रत्युज्जीवनवर्णने विप्रलम्भस्य, अन्यथा तु करुणस्य पोषक इति विवेकः । कवयः पुनरमुं प्राधान्येन न वर्णयन्ति । अमङ्गलप्रायत्वात् ।' इति । प्रदीपेऽप्युक्तम्—'जीवस्योद्गमनारम्भो मरणं परिकीर्तितम् । संमोहेन्द्रियसंग्लानिगात्रविक्षेपणादिकृत् ॥' इति ॥

2. आलस्यमिति । अतितृप्तिगर्भव्याधिश्रमादिजन्या चेतसः क्रियानुन्मुखतालस्यम् । अत्र च नासामर्थ्यम् । नापि कार्याकार्यशून्यत्वम् । तेन कार्याकरणरूपस्यानुभावस्य तुल्यत्वेऽपि ग्लानेर्जडतायाश्चास्य भेदः ॥

---

१. 'अथ मरणम्' इति नास्ति ग-पुस्तके. २. 'मरणं सुप्रसिद्धत्वादनर्थत्वाच्च नोच्यते ।' इति ग. ३. यथा—'राम—' इत्युदाहरणं नास्ति ग-पुस्तके. ४. 'जैह्मयं' क-ग. ५. इतोऽग्रे 'श्रमादिना यज्जैह्मयं प्रवृत्तिसंकोचः, तदालस्यम् । जृम्भणस्थित्याद्यनुभावहेतुः ।' इत्यधिकं ग-पुस्तके.

यथा—

'न[1] तथा भूषयत्यङ्गं न तथा भाषते सखीम् ।
जृम्भते मुहुरासीना बाला गर्भभरालसा ॥'

अथामर्षः—

**निन्[2]दाक्षेपापमानादे[1]रमर्षोऽभिनिविष्टता ।**
**नेत्र[3]रागशिरःकम्पभ्रूभङ्गोत्तर्जनादिकृत् ॥ १५६ ॥**

यथा—

प्रा[4]यश्चित्तं चरिष्यामि पूज्यानां वो व्यतिक्रमात् ।
न त्वेव दूषयिष्यामि शस्त्रग्रहमहाव्रतम् ॥

अथ निद्रा—

**चेत[5]:संमीलनं निद्रा श्र[6]मक्लममदादिजा ।**
**जृ[7]म्भाक्षिमीलनोच्छ्वासगात्रभङ्गादिकारणम् ॥ १५७ ॥**

यथा—

'सा[8]र्थकानर्थकपदं ब्रुवती मन्थराक्षरम् ।
निद्रार्धमीलिताक्षी सा लिखितेवास्ति मे हृदि ॥'

---

**आसितमुपवेशनम् ॥** दोषोद्भावनं **निन्दा ।** भर्त्सनमाक्षेपः । **अपमानः** पराभवः । आदिना वित्तादिग्रहणादेर्ग्रहणम् । **अभिनिविष्टता** निन्दादिकर्तुर्यातननिर्णयः । क्रोधस्तूत्कटापचिकीर्षा । इत्यनयोर्भेदः ॥ **प्रायश्चित्तमिति ।** द्रोणादीन्प्रति अर्जुनस्योक्तिरियम् । व्यतिक्रमात् हननात् ॥ **चेतसः संमीलनं** मेध्यानाडीप्रवेशेन निश्चलत्वम् ॥ **सार्थकानि** अनर्थकानि च पदानि यत्र तद्यथा स्यात्तथा मन्थराणि गम्भीराणि अनासन्नानि असंपूर्णानि वा अक्षराणि यत्र तद्यथा

---

1. **अमर्ष इति ।** परकृतावज्ञादिनानापराधजन्यो मौनवाक्पारुष्यादिकारणीभूतश्चित्तवृत्तिविशेषोऽमर्षः ॥

---

१. 'न तथा–' इत्यस्य स्थाने 'सुरेन्द्रमात्राश्रितगर्भगौरवात्–' इत्युदाहरणं ग-पुस्तके. २. 'अधिक्षेप' ग. ३. 'उच्चासप्रतिकारेच्छा मनःक्षोभादिकारकः ।' इति ग. ४. ग-पुस्तके तु 'लाक्षागृहानलविषान्नसमाप्रवेशैः प्राणेषु वित्तनिचयेषु च नः प्रहृत्य । आकृष्य पाण्डववधूपरिधानकेशान्स्वस्था भवन्तु मयि जीवति धार्तराष्ट्राः ॥' इत्युदाहरणम्. ५. 'मनः' ग. ६. 'चिन्तालस्यश्रमादिभिः' ग. ७. 'चेष्टाप्रतिहतिस्वप्नघूर्णनाद्यनुभावकः । चिन्तादिभिर्मनसो निरिन्द्रियप्रदेशावस्थानं निद्रा चेष्टानाशाद्यनुभावहेतुः ।' इति ग. ८. ग-पुस्तके तु 'निमीलितादक्षियुगाच्च निद्रया हृदोऽपि बाह्येन्द्रियमौनमुद्रितात् । अदर्शि संगोप्य कदाप्यवीक्षितो रहस्यमस्याः स महन्महीपतिः' इत्युदाहरणम्.

अथावहित्था—

भयगौरवलज्जादेर्हर्षाद्याकारगुप्तिरवहित्था ।
व्यापारान्तरसक्त्यन्यथावभाषणविलोकनादिकरी॥१५८॥

यथा—

'एवंवादिनि देवर्षौ पार्श्वे पितुरधोमुखी ।
लीलाकमलपत्राणि गणयामास पार्वती ॥'

अथौत्सुक्यम्—

इष्टानवाप्तेरौत्सुक्यं कालक्षेपासहिष्णुता ।
चित्ततापत्वरास्वेददीर्घनिःश्वसितादिकृत् ॥ १५९ ॥

यथा—'यः कौमारहरः स एव हि वरः—' इत्यादौ ( १५ पृ० )

अत्र यत् काव्यप्रकाशकारेण रसस्य प्राधान्यमित्युक्तं तद्रसनधर्मयोगित्वाद्व्यभिचारिभावस्यापि रसशब्दवाच्यत्वेन गतार्थं मन्तव्यम् ।

---

स्यात्तथा । **लिखितेवेति** धारावाहिकस्मरणस्फोरणाय । हर्षादेराकारस्य सूचकस्य मुखरागादेर्गुप्तिः संवरणम् । **सक्तिरासङ्गः** । **अन्यथेति** । अप्रक्रान्तस्य भाषणं विलोकनं च । आदिना क्रियामात्रस्य ग्रहः ॥ देवर्षौ नारदे । पितुर्हिमालयस्य ॥ **व्यभिचारिभावस्येति** । तत्रानुभावादिकृतपरिपोषराहित्येन रतेः संपूर्णरसत्वं न संभवति । वर्णनीयत्वेन चमत्कारित्वेनौत्सुक्यस्यैव प्राधान्यमिति भावः ।

---

1. **अवहित्थेति** । व्रीडादिभिर्निमित्तैर्हर्षाद्यनुभावानां गोपनाय जनितो भावविशेषोऽवहित्था । अवहिःस्थितिरवहित्था, 'सुपि स्थः' इत्यत्र 'स्थः' इति योगविभागात्कः । पृषोदरादिः । तदुक्तम्—'अनुभावपिधानार्थेऽवहित्थं भाव उच्यते । तद्विभाव्यं भयव्रीडाधार्ष्ट्यकौटिल्यगौरवैः ॥' इति ॥

2. **औत्सुक्यमिति** । अधुनैवास्य लाभो ममास्त्वितीच्छा औत्सुक्यम् । इष्टविरहादिरत्र विभावः । त्वराचिन्तादयोऽनुभावः । यदाहुः—'संजातमिष्टविरहादुद्दीप्तं प्रियसंस्मृतेः । निद्रया तन्द्रया गात्रगौरवेण च चिन्तया ॥ अनुभावितमाख्यातमौत्सुक्यं भावकोविदैः ॥' इति ॥

3. **काव्यप्रकाशेति** । प्रकृते कौमारविघटको वर आलम्बनम्, चैत्रक्षपाद्या उद्दीपनम्, सुरतव्यापारलीलाविधिः कार्यम्, उत्कण्ठादि सहकारि यथायथं घटमानं, विप्र-

---

१. 'औत्सुक्यं वाञ्छितार्थस्य लाभे कालासहिष्णुता । उपायान्वेषणार्थैर्यैश्चिन्तनाद्यनुभावकृत् । इष्टार्थस्य माप्तौ कालप्रतीक्षा, औत्सुक्यम् ।' इति ग. २. 'रसशब्देन' क. ३. 'गतार्थत्वं' क. ४. अतोऽग्रे 'तथोक्तम्—रसभावौ तदाभासौ भावस्य प्रशमोदयौ । संधिः शबलता चेति सर्वेऽपि रसनाद्रसाः ॥' इत्यधिकं ग-पुस्तके।

अथोन्मादः—

**चित्तसंमोह उन्मादः[1] कामशोकभयादिभिः ।**
**अस्थानहासरुदितगीतप्रलपनादिकृत् ॥ १६० ॥**

यथा मम[2]—

'भ्रातर्द्विरेफ[3] भवता भ्रमता समन्ता-
त्प्राणाधिका प्रियतमा मम वीक्षिता किम् ।

( झंकारमनुभूय सानन्दम् । )

ब्रूषे किमोमिति सखे कथयाशु तन्मे
किं किं व्यवस्यति कुतोऽस्ति च कीदृशीयम् ॥'

---

अत एव काव्यप्रकाशटीकाकारचण्डीदासेनोक्तम्—'रसपदं चात्र संभोगव्यभिचार्यौत्सुक्यमाह 'रस्यते आस्वाद्यते' इति व्युत्पत्त्या । न तु संभोगनामा रसः । स्वाधीनपतिकायाः क्रीडास्थानं प्रत्युत्सुकताया वर्णनीयत्वात्' इति । **गतार्थं** प्राप्तविषयम् ॥ चित्तस्य संमोहश्चेतनाचेतनादिविशेषज्ञानजननाक्षमत्वम् ॥ **भ्रातरिति** । व्यवस्यति कर्तुमीहते । अत्र कामेन भ्रमरः प्रत्युत्तराक्षम इति विशेषनिर्धारणाक्ष-

---

लम्भाख्यश्रृङ्गाररसं घटयति । न चात्र वरादिप्रथमान्तपदाक्षिप्तास्तिक्रियाबलेन विप्रलम्भो न संगच्छत इति भ्रमितव्यम्, तस्य वैयधिकरण्यलक्षणस्य वियोगाख्यान्तःकरणवृत्तिविशेषसत्त्वेनापि घटितत्वात् । अधिकरणं चापि देशकालानुरोधेन भिन्नम्, एवं च नायिकायाः ( शीलाभट्टारिकायाः ) स्वाधीनपतिकात्वेऽपि का हानिः । अथोदाहरणं तु "आत्मानमालोक्य च शोभमानमादर्शबिम्बे स्तिमितायताक्षी । हरोपयाने त्वरिता बभूव, स्त्रीणां प्रियालोकफलो हि वेषः ॥' इति 'पशुपतिरपि तान्यहानि कृच्छ्रादनिनयदद्रिसुतासमागमोत्कः । कमपरमवशं न विप्रकुर्युर्विभुमपि तं यदमी स्पृशन्ति भावाः" इति वा आचार्यधनिकनिर्दिष्टं कुमारसंभवस्थं द्रष्टव्यम् ॥

1. उन्माद इति । विप्रलम्भमहापत्तिपरमानन्दादिजन्मान्यस्मिन्नन्यावभास उन्मादः । शुक्तिरजतादिज्ञानव्यावृत्तये जन्मान्तम् । उन्मादस्य व्याधावन्तर्भावे संभवत्यपि पृथगुपादानं व्याध्यन्तरापेक्षया वैचित्र्यविशेषस्फोरणाय ॥

2. ब्रूषे इति । 'किं ब्रूषे' इति प्रश्ने 'ओम्' इत्युत्तरम् । ओमिति स्वीकारार्थेऽव्ययम् ॥

---

१. 'अप्रेक्षाकारितोन्मादः संनिपातग्रहादिभिः । तत्र प्रलापचापल्यकृतविस्मरणादयः ॥' इति ग. २. 'मम' इति नास्ति ग-पुस्तके. ३. 'हंस प्रयच्छ मे कान्तां गतिस्तस्यास्त्वया हृता । विभावितैकदेशेन देयं यदभियुज्यते ॥' इति ग.

अथ शङ्का[1]—

**परक्रौर्यात्मदोषाद्यैः शङ्कानर्थस्य तर्कणम् ।**
**वैवर्ण्यकम्पवैस्वर्यपार्श्वालोकास्यशोषकृत् ॥ १६१ ॥**

यथा मम—

'प्राणेशेन प्रहितनखरेष्वङ्गकेषु क्षपान्ते
जातातङ्का रचयति चिरं चन्दनालेपनानि ।
धत्ते लाक्षामसकृदधरे दत्तदन्तावघाते
क्षामाङ्गीयं चकितमभितश्चक्षुषी विक्षिपन्ती ॥'

अथ स्मृतिः—

**सदृशज्ञानचिन्ताद्यैर्भ्रूसमुन्नयनादिकृत् ।**
**स्मृतिः पूर्वानुभूतार्थविषयज्ञानमुच्यते ॥ १६२ ॥**

यथा मम[2]—

'मयि सकपटं किंचित्क्वापि प्रणीतविलोचने
किमपि नयनं प्राप्ते तिर्यग्विजृम्भिततारकम् ।
स्मितमुपगतामालीं दृष्ट्वा सलज्जमवाञ्चितं
कुवलयदृशः स्मेरं स्मेरं स्मरामि तदाननम् ॥'

---

मत्वम् ॥ **तर्कणं** संभावना ॥ **प्रहितनखरेषु** कृतनखाघातेषु । जात आतङ्कः सख्याद्युपहासरूपा शङ्का यस्याः सा । अत्र संभोगचिह्नगोपन एव विश्रान्तिरिति शङ्काया एव प्राधान्यम् ॥ **सदृशेति** । चिन्ता भावनाख्यसंस्कारः । आद्यपदेन संबन्धिज्ञानादेर्ग्रहणम् । अत्र सदृशज्ञानादेः संस्कारोद्बोधनद्वारा संस्कारस्य तु स्मृतिं प्रति साक्षादेव कारणत्वमिति बोध्यम् ॥ **मयीति** । सकपटं यथा स्यात्तथा क्वापि अजिज्ञासितपदार्थे किंचित्प्रणीतलोचने मयि तिर्यक्कुटिलं यथा स्यात्तथा विजृम्भिता व्यापारिताः प्रकाशिता वा तारका यस्य तादृशं नयनं प्राप्ते सति स्मितमुपगतां सखीं दृष्ट्वा सलज्जं यथा स्यात्तथा अवाञ्चितमानमितं स्मेरं पुनः

---

1. शङ्केति । किमनिष्टं मम भविष्यतीत्याकारश्चित्तवृत्तिविशेषः शङ्का । इयं तु भयाद्युत्पादनेन कम्पादिकारिणी, नतु चिन्ता ॥

---

१. 'अनर्थप्रतिभा शङ्का परक्रौर्यात्स्वदुर्नयात् । चिह्नापह्नुतिभूयोदिक्प्रेक्षणाद्यनुभाविकी ॥' इति ग-
२. 'यथा मम' इति ग-पुस्तके नास्ति.

अथ मतिः—

**नीतिमार्गानुसृत्यादेरर्थनिर्धारणं मतिः[1] ।**
**स्मेरता धृतिसंतोषौ बहुमानश्च तद्भवाः ॥ १६३ ॥**

यथा—

'असंशयं क्षत्रपरिग्रहक्षमा यदार्यमस्यामभिलाषि मे मनः ।
सतां हि संदेहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः ॥

अथ व्याधिः—

**[2]व्याधिर्ज्वरादिर्वाताद्यैर्भूमीच्छोत्कम्पनादिकृत् ।**

तत्र दाहमयत्वे भूमीच्छादयः । शैत्यमयत्वे उत्कम्पनादयः । [2]स्पष्टमुदाहरणम् ।

अथ त्रासः—

**[3]निर्घातविद्युदुल्काद्यैस्त्रा[3]सः कम्पादिकारकः ॥ १६४ ॥**

---

पुनः स्मितयुक्तं वदनं स्मरामीत्यर्थः ॥ **नीतिमार्गो** नीतिशास्त्रं तस्यानुसृतिरवगमः । आदिना अनुमानादेर्ग्रहणम् । **निर्धारणं** निश्चयः ॥ **असंशयमिति** । शकुन्तलामालोक्य दुष्यन्तस्यानुमानमिदम् । क्षत्रपरिग्रहक्षमा क्षत्रियविवाहोचिता । 'इयम्' इति शेषः । अस्यां शकुन्तलायाम् । समर्थयति—**सतामिति** । प्रमाणं निश्चयबीजम् । अन्तःकरणस्य मनसः प्रवृत्तयः संकल्पादयः ॥ **वाताद्यैरिति** । आद्यपदेन पित्तश्लेष्मणोर्ग्रहणम् । भूमीच्छा भूमिपतनेच्छा । तत्र व्याधावुदाहरणं यथा मम—'प्रियजनपरिषङ्गाद्वेपमानां कृशाङ्गीं विकृतवचनवर्णां खेदसंसिक्तगात्रीम् । विपुलपुलकलेखामाकलय्य ज्वरार्तां कुमतिरमितचिन्तासागरे निर्ममज्ज ॥' **निर्घात इति** । 'यदान्तरिक्षे बलवान्मारुतो मरुता-

---

1. **मतिरिति** । शास्त्रादिविचारजन्यमर्थनिर्धारणं मतिरिति परमार्थः । तत्र निःशङ्कतदर्थानुष्ठानसंशयोच्छेदादयोऽनुभावाः ॥

2. **व्याधिरिति** । रोगविरहादिप्रभवो मनस्तापो व्याधिः । गात्रशैथिल्यश्वासादयोऽत्रानुभावाः । यदाहुः—'एकैकशो द्वन्द्वशो वा त्रयाणां वा प्रकोपतः । वातपित्तकफानां स्युर्व्याधयो ये ज्वरादयः । इह तत्प्रभवो भावो व्याधिरित्यभिधीयते ॥' इति ॥

3. **त्रास इति** । भीरोर्घोरसत्त्वदर्शनस्फूर्जथुश्रवणादिजन्मा चित्तवृत्तिविशेषस्त्रासः । अनुभावाश्चास्य रोमाञ्चकम्पस्तम्भभ्रमादयः । अयं भयाद्भिद्यते । तदुक्तम्—'पूर्वापरविचारोत्थं भयं त्रासात्पृथग्भवेत् ।' इति ॥

---

१. 'तथात्मनि' इति क्वाचित्कः पाठः २. 'अमङ्गलत्वान्नोदाह्रियते' इति ग. ३. 'गर्जितादेर्मनःक्षोभस्त्रासो...कम्पनादयः । मेघादिगर्जनान्मनसो वैक्लव्यं त्रासः । अत्रोत्कम्पनालिङ्गनाद्यनुभावाः' इति ग.

यथा—

'परिस्फुरन्मीनविघट्टितोरवः सुराङ्गनास्त्रासविलोलदृष्टयः ।
उपाययुः कम्पितपाणिपल्लवाः सखीजनस्यापि विलोकनीयताम् ॥'[1]

अथ व्रीडा—

धार्ष्ट्याभावो[3] व्रीडा[2] वदनानमनादिकृद्दुराचारात् ।

यथा—'मयि[3] सकपटं—'इत्यादि ( १५७ पृ. ) ।

अथ हर्षः—

हर्षस्त्विष्टावाप्तेर्मनःप्रसादोऽश्रुगद्गदादिकरः[3][4] ॥ १६५ ॥

---

हतः । पतत्यधः स निर्घातो जायते वायुसंभवः ॥' इत्युक्तलक्षणो निर्घातः । 'बृहच्छिखा च सूक्ष्माग्रा रक्तनीलशिखोज्ज्वला । पौरुषी च प्रमाणेन उल्का नानाविधा स्मृता ॥' इत्युक्तलक्षणा चोल्का । आद्यपदेन भूकम्पादेर्ग्रहणम् । अत्र 'मनःक्षोभः' इति पूरणीयम् ॥ **परिस्फुरदिति** । जलविहारवर्णनमिदम् । अपिना नायकस्य

---

1. **परीति** । परितः स्फुरद्भिर्विवर्तमानैर्मीनैर्विघट्टिता ऊरवो यासां ताः अत एव त्रासविलोलदृष्टयः कम्पितपाणिपल्लवाश्च सुराङ्गनाः सखीजनस्यापि विलोकनीयतामुपाययुः । किमुत प्रियजनस्येति भावः ॥

2. **व्रीडेति** । स्त्रीणां पुरुषमुखावलोकनादेः पुंसां च प्रतिज्ञाभङ्गपराभवादेरुत्पन्नो वैवर्ण्याधोमुखत्वादिकारणीभूतश्चित्तवृत्तिविशेषो व्रीडा । केचित्तु—'चेतोनिमीलनं व्रीडा व्यङ्गरागस्तवादिभिः ।' इत्याहुः । व्यङ्गं वैकृतम् ॥

3. **हर्ष इति** । इष्टप्राप्त्यादिजन्मा सुखविशेषो हर्षः । तदुक्तं—'देवभर्तृगुरुस्वामिप्रसादः प्रियसंगमः । मनोरथादिप्राप्यमनोहरधनागमः ॥ तथोत्पत्तिश्च पुत्रादेर्विभावो यत्र जायते । नेत्रवक्त्रप्रसादश्च प्रियोक्तिः पुलकोद्गमः ॥ अश्रुस्वेदादयश्चानुभावा हर्षं तमादिशेत् ॥' इति ॥

---

१. ग-पुस्तके तु 'समुत्क्षिपन्यः पृथिवीभृतां वरम्—' इति माघपद्यमुदाहृतम्. २. 'दुराचारादिभिर्व्रीडा धार्ष्ट्याभावस्तमुन्नयेत् । मौनितावाङ्मुखीभावनेत्रसंमीलनादिभिः ॥ दुराचारादिभिः प्रागल्भ्यमतिरोधो लज्जा । मौनादिभिरनुभावैस्तामुन्नयेत् ।' इति ग. ३. ग-पुस्तके तु 'पटालग्ने पत्यौ नमयितु(?)मुखं जातविनया हठाश्लेषं वाञ्छत्यपहरति गात्राणि निभृतम् । न शक्नोत्याख्यातुं स्मितमुखसखीदत्तनयना ह्रिया ताम्यत्यन्तः प्रथमपरिहासे नववधूः ॥' इत्युदाहरणम्. ४. 'उत्सवादिकृतश्चेतःप्रसादो हर्ष उच्यते । शीताश्रुगद्गदस्वेदरोमाञ्चाद्यैर्निरूप्यते ॥' इति ग.

यथा—

'[1]समीक्ष्य पुत्रस्य चिरात्पिता मुखं निधानकुम्भस्य यथैव दुर्गतः ।
मुदा शरीरे प्रबभूव नात्मनः पयोधिरिन्दूदयमूर्च्छितो यथा ॥'

अथासूया—

[2]असूयान्यगुणर्द्धीनामौद्धत्यादसहिष्णुता ।
दोषोद्घोषभ्रूविभेदावज्ञाक्रोधेङ्गितादिकृत् ॥ १६६ ॥

यथा—

'[3]अथ तत्र पाण्डुतनयेन सदसि विहितं मधुद्विषः ।
मानमसहत न चेदिपतिः परवृद्धिमत्सरि मनो हि मानिनाम् ॥'

अथ विषादः—

उपायाभावजन्मा तु विषादः सत्त्वसंक्षयः ।

---

विलोकनीयतां रमणीयताम् ॥ **धार्ष्ट्याभावः** । प्रागल्भ्यराहित्यम् ॥ **निधानकुम्भस्य** निधिपूर्णकलशस्य । पिता दिलीपः शरीरे शरीरचेष्टायाम् । प्रबभूव समर्थो बभूव । इन्दूदयेन मूर्च्छितः प्रवृद्धः । अतिवृद्धस्य समुद्रस्य स्तम्भितत्वं भवतीत्यभिप्रायेणेयमुपमा । अथवा यथा पयोधिरिन्दूदयेन तरलो भवति तथा पुत्रोत्पत्त्या हर्षतरलो बभूवेत्युपमा ॥ **क्रोधेङ्गितं** मुखरागादि ॥ मानं पूजाम् । चेदिपतिः

---

1. **समीक्ष्येति** । 'निवातपद्मस्तिमितेन चक्षुषा नृपस्य कान्तं पिबतः सुताननम् । महोदधेः पूर इवेन्दुदर्शनाद्गुरुः प्रहर्षः प्रबभूव नात्मनि ॥' इति रघुवंशश्लोक एवायं पाठान्तरमहिम्ना रूपान्तरं नीतः क्षेपकत्वेनोपलभ्यमानश्च ॥ तत्र 'स वीक्ष्य पुत्रस्य' इति पाठो दृश्यते ॥

2. **असूयेति** । परोत्कर्षदर्शनादिजन्यः परनिन्दादिकारणीभूतश्चित्तवृत्तिविशेषोऽसूया । इमामेवासहनादिशब्दैर्व्यवहरन्ति ॥

3. **अथेति** । अथ कृष्णपूजानन्तरं चेदिपतिः शिशुपालः तत्र सदसि सभायां पाण्डुसुतेन युधिष्ठिरेण विहितं मधुद्विषः कृष्णस्य मानं पूजां नासहत । ईर्ष्यामकरोदित्यर्थः । तथाहि मानिनामहंकारिणां मनः परवृद्धौ मत्सरि हि । परशुभद्वेषि खल्वित्यर्थः ॥

4. **विषाद इति** । इष्टासिद्धिराजगुर्वाद्यपराधजन्योऽनुतापो विषादः । तत्र संस्कृतमुदाहरणम्—'व्यर्थं यत्र हरीन्द्रसख्यमपि मे, वीर्यं हरीणां वृथा, प्रज्ञा जाम्बवतो न यत्र, न गतिः पुत्रस्य वायोरपि । मार्गं यत्र न विश्वकर्मतनयः कर्तुं नलोऽपि क्षमः, सौमित्रेरपि पत्रिणामविषयस्तत्र प्रिया क्वास्ति मे ॥' इति ॥

---

१. ग-पुस्तके तु 'युगान्तकाल–' इति माघपद्यमुदाहृतम्. २. 'परोत्कर्षाक्षमासूया गर्वदौर्जन्यमन्युजा ।' इति ग. ३. ग-पुस्तके तु 'मा गर्वमुद्वह–' इत्युदाहरणम् ४. घ- पुस्तके तु विषादलक्षणात्प्राग् धृतिलक्षणं तदुदाहरणं च विषादलक्षणादग्रेऽस्ति, विषादोदाहरणं चासूयोदाहरणाग्रे.

**निःश्वासोच्छ्वासहृत्तापसहायान्वेषणादिकृत् ॥ १६७ ॥**

यथा मम—

'[1]एसा कुडिलघणेन चिउरकडप्पेण तुह णिबद्धा वेणी ।
मह सहि दारइ डंसइ आअसजट्ठिव्व कालउरइव्व हिअअं ॥'

अथ [1]धृतिः—

**ज्ञानाभीष्टागमाद्यैस्तु संपूर्णस्पृहता धृतिः ।**
**सौहित्यवचनोल्लाससहासप्रतिभादिकृत् ॥ १६८ ॥**

यथा मम—

'[2]कृत्वा दीननिपीडनां निजजने बद्धा वचोविग्रहं
नैवालोच्य गरीयसीरपि चिरादामुष्मिकीर्यातनाः ।
द्रव्यौघाः परिसंचिताः खलु मया यस्याः कृते सांप्रतं
नीवाराञ्जलिनापि केवलमहो सेयं कृतार्था तनुः ॥'

अथ चपलता—

**मात्सर्यद्वेषरागादेश्[3]चापल्यं त्वनवस्थितिः ।**

---

शिशुपालः । **सत्त्वसंक्षयो** बलहानिः ॥ **एसा इति** । 'एषा कुटिलघनेन चिकुरकलापेन तव निबद्धा वेणी । मम सखि ! दारयति दशत्यायसयष्टिरिव कालोरगीव हृदयम् ॥' इति संस्कृतम् । **स्पृहायाः** समाप्तिरेव संपूर्णत्वम् ॥ **बद्धा** कृत्वा । आ-

---

1. धृतिरिति । लोभशोकभयादिजनितोपप्लवनिवारणकारणीभूतश्चित्तवृत्तिविशेषो धृतिः ॥

2. कृत्वेति । निजपूर्वावस्थां निन्दतः कस्यचिज्ज्ञानवतः कथनमेतत् । दीनानां दुर्गतानां निपीडनामुत्कोचादिना निष्पीडनं कृत्वा, निजजने बान्धवादिवर्गे वचोविग्रहं वाक्कलहं बद्धा, चिरात् चिरकालिकीः गरीयसीरतितरां गुर्वीः आमुष्मिकीः पारलौकिकीरपि यातना नानाविधनरकभोगान् नैवालोच्य, अपर्यालोच्यैवेत्यर्थः । यस्याः कृते निमित्तम्, उपभोगार्थमित्यर्थः । मया द्रव्यौघा वित्तराशयः परिसंचिताः इतस्ततः परिभ्रम्य एकत्रीकृताः खलु, सेयं मामकीना तनुः सांप्रतं तत्त्वज्ञानदशायां केवलं नीवाराञ्जलिना अञ्जलिपरिमिततृणधान्येनापि कृतार्था कृतकृत्या । अहो आश्चर्यम् ॥

3. चापल्यमिति । अमर्षादिजन्यवाक्पारुष्यादिकारणीभूता चित्तवृत्तिश्चापल्यम् । यदाहुः—'अमर्षप्रातिकूल्येर्ष्यारागद्वेषाश्च मत्सरः । इति यत्र विभावाः स्युरनुभावस्तु भर्त्सनम् ॥' वाक्पारुष्यं प्रहारश्च ताडनं वधबन्धने । तच्चापलमनालोच्य कार्यकारित्वमिष्यते ॥ इति ॥

---

१. ग-पुस्तके तु 'वारं वारं तिरयति'—इत्युदाहरणम्. २ 'संतोषाज्ञानशक्त्यादेर्धृतिरव्यग्रभोगकृत्' इत्यर्धमेव ग-पुस्तके.

[१]तत्र भर्त्सनपारुष्यस्वच्छन्दाचरणादयः ॥ १६९ ॥

यथा—

'अन्यासु तावदुपमर्दसहासु भृङ्ग
लोलं विनोदय मनः सुमनोलतासु ।
मुग्धामजातरजसं कलिकामकाले
व्यर्थं कदर्थयसि किं [1]नव[२]मालिकायाः ॥'

अथ ग्लानिः—

[३]रत्यायासमनस्तापक्षुत्पिपासादिसंभवा ।
ग्लानिर्निष्प्राणताकम्प[४]कार्श्यानुत्साहतादिकृत् ॥ १७० ॥

यथा—

'[५]किसलयमिव मुग्धं बन्धनाद्विप्रलूनं
हृदयकुसुमशोषी दारुणो दीर्घशोकः ।
ग्लपयति परिपाण्डु क्षाममस्याः शरीरं
शरदिज इव घर्मः केतकीगर्भपत्रम् ॥'

अथ चिन्ता—

ध्यानं [2]चिन्ता हितानाप्तेः शून्यताश्वासतापकृत् ।

---

सुष्मिकीः परलोकभवाः । नीवारस्तृणधान्यम्, कृते निमित्तम् । सांप्रतं वार्धके । अत्र तत्त्वज्ञानेन निःस्पृहत्वम् ॥ **अन्यास्विति** । मधुपानकालीनश्चरणप्रहारादिरुपमर्दः । पक्षे संभोगकालीनश्चुम्बनालिङ्गनादिः । लोलं सतृष्णम् । मुग्धां कोमलां सुरतमूढां च । रजः परागः आर्तवं च । अकाले मकरन्दाभावदशायां बाल्ये च । अत्रोपभोक्तरि बालाया अस्थैर्यं परुषवचनेन प्रतीयते ॥ **निष्प्राणता** असामर्थ्यम् ॥ **बन्धनात्** उत्पत्तिस्थानात् । निष्प्राणत्वानौजस्यसत्त्वसंक्षयाणां बलहानिरूपत्वेऽपि

---

1. **नवेति** । सप्तलायाः 'सप्तला नवमालिका' इत्यमरः । 'नवमल्लिकायाः' इति पाठे तु मुग्धेत्यादिनैव नवत्वलाभे पुनर्मल्लिकायां नवत्वविशेषणं व्यर्थम् । नवा स्तुत्या माला अस्याः, कप् । इति भानुजिदीक्षिताः ॥

2. **चिन्तेति** । इष्टाप्राप्त्यनिष्टप्राप्त्यादिजनिता ध्यानापरपर्याया वैवर्ण्यभूलेखनाधोमुखत्वादिहेतुश्चित्तवृत्तिविशेषश्चिन्ता । यदाहुः—'विभावा यत्र दारिद्र्यमैश्वर्यभ्रंशनं तथा ।

---

१. 'उद्वेगास्थितिवैरस्यप्रमुखैरवबुध्यते ।' इति ग. २. 'नवमल्लिकायाः' इति क. ३. 'रत्याद्यायासक्षुत्तृड्भिर्ग्लानिर्निष्प्राणता मता । अनुत्साहाङ्गदौर्बल्यस्वेदाद्यैर्व्यक्तिमेति सा ॥' ग. ४. 'कार्श्य' घ. ५. 'लुलितनयनताराः क्षामवक्त्रेन्दुबिम्बा रजनय इव निद्राक्लान्तनीलोत्पलाक्ष्यः । तिमिरमिव दधानाः स्रंसिनः केशपाशानवनिपतिगृहेभ्यो यान्त्यमूर्वारवध्वः ॥' इति ग.

यथा मम[1]—

'कमलेण[2] विअसिएण संजोएन्ती विरोहिणं ससिबिम्बं ।
करअलपल्लत्थमुही किं चिन्तसि सुमुहि अन्तराहिअहिअआ ॥'

( अथ तर्कः )

तर्को[1] विचारः संदेहाद्भ्रूशिरोङ्गुलिनर्तकः ॥ १७१ ॥

यथा—'किं रुद्धः प्रियया—' इत्यादि ( १२४ पृ. ) ।

एते[2][3] च त्रयस्त्रिंशद्व्यभिचारिभेदा इति यदुक्तं तदुपलक्षण-मित्याह—

रत्यादयोऽप्यनियते रसे स्युर्व्यभिचारिणः ।

तथाहि—शृङ्गारेऽनुच्छिद्यमानतयावस्थानाद् रतिरेव स्थायिशब्द-

---

विभिन्नकारणत्वेन ग्लानिदैन्यविषादानां भेदः । **कमलेनेति** । 'कमलेन विकसितेन संयोजयन्ती विरोधिनं शशिबिम्बम् । करतलपर्यस्तमुखी किं चिन्तयसि सुमुखि अन्तराहितहृदया ॥' इति संस्कृतम् ॥ **अनियते** स्वावस्थितनियमरहिते । **अनुच्छिद्यमानतया** अवश्यंस्थायित्वेन । **उत्पद्यमानः** विशेषानुकूल्येन शृङ्गाररूपतया

---

इष्टार्थापहृतिः श्वच्छ्वासोच्छ्वासावधोमुखम् ॥ संतापः स्मरणं चैव कार्श्यं देहानुपस्कृतिः अधृतिश्चानुभावाः स्युः सा चिन्ता परकीर्तिता । वितर्कोऽस्याः क्षणे पूर्वे पाश्चात्ये वोपजायते ॥' इति ॥

1. तर्क इति । संदेहाद्यनन्तरं जायमान ऊहो वितर्कः ॥

2. एते चेति । ननु कथमेषां भावानां संख्यानियमः, मात्सर्योद्वेगदम्भेर्ष्याविवेकनिर्णयक्लैब्यक्षमाकुतुकोत्कण्ठाविनयसंशयधार्ष्ट्यादीनामपि तत्र तत्र लक्ष्येषु दर्शनात् इति चेत्, न उक्तेष्वेवैषामन्तर्भावेण संख्यान्तरानुपपत्तेः । असूयातो मात्सर्यस्य, त्रासादुद्वेगस्य, अवहित्थातो दम्भस्य, अमर्षादीर्ष्यायाः, मतेर्विवेकनिर्णययोः, दैन्यात्क्लैब्यस्य, धृतेः क्षमायाः, औत्सुक्यात्कुतुकोत्कण्ठयोः, लज्जातो विनयस्य, तर्कात्संशयस्य, चापलाद् धार्ष्ट्यस्य च वस्तुतः सूक्ष्मे भेदेऽपि नान्तरीयकतया तदनतिरिक्तस्यैवाध्यवसायात् । मुनिवचनानुपालनस्य संभवे उच्छृङ्खलताया अनौचित्यात् । एषु संचारिभावेषु मध्ये केचन केषांचन विभावा अनुभावाश्च भवन्ति । तथाहि—ईर्ष्याया निर्वेदं प्रति विभावत्वम्, असूयां प्रति चानुभावत्वम् । चिन्ताया निद्रां प्रति विभावत्वम्, औत्सुक्यं प्रति चानुभावत्वम् । एवमग्रेऽप्यूह्यम् ॥

---

१. 'मम' इति नास्ति ग-पुस्तके. २. ग-पुस्तके तु 'खेदोज्झितामपि तनूमवसादयन्ती विश्वं निरावरणमेव तिरोदधाना । निद्रां विनापि नयने विनिमीलयन्ती चिन्ता पदं कृतवती हृदये ततोऽस्याः ॥' इत्युदाहरणम्. ३. 'एते च—' इत्यादिः '—भावितबुद्धिभिः ॥' इत्यन्तो ग्रन्थो ग-पुस्तके न दृश्यते.

वाच्या । हासः पुनरुत्पद्यमानो व्यभिचार्येव । व्यभिचारिलक्षणयोगात् । तदुक्तम्—

'रसावस्थः परं भावः स्थायितां प्रतिपद्यते ।' इति ।

तत्कस्य स्थायिनः कस्मिन्रसे संचारित्वमित्याह—

**शृङ्गारवीरयोर्हासो वीरे क्रोधस्तथा मतः ॥ १७२ ॥**

**शान्ते जुगुप्सा कथिता व्यभिचारितया पुनः ।**
**इत्याद्यन्यत्समुन्नेयं तथा भावितबुद्धिभिः ॥ १७३ ॥**

अथ स्थायिभावः—

**अविरुद्धा विरुद्धा वा यं तिरोधातुमक्षमाः ।**
**आस्वादाङ्कुरकन्दोऽसौ भावः स्थायीति[1] संमतः ॥ १७४ ॥**

यदुक्तम्—

'स्रक्सूत्रवृत्त्या भावानामन्येषामनुगामकः ।
न तिरोधीयते स्थायी तैरसौ पुष्यते परम् ॥' इति ।

---

रतौ संगच्छमानः ॥ **परमिति** । अवश्यमित्यर्थः ॥ **अक्षमा इति** । 'भावाः' इति शेषः । कन्दो मूलम् ॥ **स्रक्सूत्रवृत्त्या** स्रक्सूत्रन्यायेन । अनुगामकः व्यञ्जक-

---

1. **स्थायीति** । अन्तःकरणवृत्तिस्वरूपस्य रत्यादेराशुविनाशित्वेऽपि संस्कारात्मना चिरकालमवस्थायित्वाद्यावद्रसप्रतीतिकालमनुसंधानाच्च स्थायित्वम् । तदुक्तम्—'विरुद्धैरविरुद्धैर्वा भावैर्विच्छिद्यते न यः । आत्मभावं नयत्यन्यान्स स्थायी लवणाकरः ॥ चिरं चित्तेऽवतिष्ठन्ते संबध्यन्तेऽनुबन्धिभिः । रसत्वं ये प्रपद्यन्ते प्रसिद्धाः स्थायिनोऽत्र ते ॥' चिरमिति व्यभिचारिवारणाय । अनुबन्धिभिर्विभावादिभिः । तथा—'सजातीयविजातीयैरतिरस्कृतमूर्तिमान् । यावद्रसं वर्तमानः स्थायिभाव उदाहृतः ॥' इति ॥ नाट्यशास्त्रेऽप्युक्तम्—'यथा नराणां नृपतिः शिष्याणां च यथा गुरुः । एवं हि सर्वभावानां भावः स्थायी महानिह ॥' इति । तत्रायं निष्कर्षः—'यथा समानलक्षणाः समानाङ्गप्रत्यङ्गाः कुलविद्याकर्मशिल्पविचक्षणत्वाद्राजत्वमाप्नुवन्ति तत्रैव चान्येऽल्पबुद्धयस्तेषामेवानुचरा भवन्ति, तथा विभावानुभावव्यभिचारिणः स्थायिभावानुपाश्रिता भवन्ति । तत्र बह्वाश्रयत्वात्स्वामिभूताः स्थायिनो भावाः । तत्स्थानीयपुरुषगुणभूता अन्ये भावास्तान्गुणतयाश्रयन्ते परिजनभूता व्यभिचारिणो भावाः । यथा राजा बहुजनपरिवारोऽपि स एव नाम लभते नान्यः सुमहानपि पुरुषस्तथा विभावानुभावव्यभिचारिपरिष्कृतः स्थायिभावो रसतां लभते' इति ॥

तद्भेदानाह—

रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा।
जुगुप्सा विस्मयश्चेत्थमष्टौ प्रोक्ताः शमोऽपि च॥ १७५॥

तत्र

[1]रतिर्मनोनुकूलेऽर्थे मनसः प्रवणायितम्।
वागादिवैकृतैश्चेतोविकासो हास इष्यते॥ १७६॥
इष्टनाशादिभिश्चेतोवैक्लव्यं शोकशब्दभाक्।
[2]प्रतिकूलेषु तैक्ष्ण्यस्यावबोधः क्रोध इष्यते॥ १७७॥
[3]कार्यारम्भेषु संरम्भः स्थेयानुत्साह उच्यते।
रौद्रशक्त्या तु जनितं चित्तवैक्लव्यदं भयम्॥ १७८॥

---

त्वेन संबन्धी। तैर्भावैः पुष्यते रसरूपतां नीत्वा प्रवृद्धः क्रियते॥ **तद्भेदान्** स्थायिभावान्। अष्टौ भावाः स्थायिभावाः **शमोऽपि च**। स्थायिभाव इत्यर्थः॥ **रतिरिति**। मनसोऽनुकूले प्रिये वस्तुनि प्रवणायितम्। प्रेमार्द्रं मनो रतिरित्यर्थः। तच्चोत्कटावेश एव पर्यवस्यति। स चानुराग एव सोऽपि प्रकृते सुरतेच्छारूप एव। केचित्तु—"स चानुराग एव सोऽपीष्टसाधनताज्ञानधारारूपः, अभिलाषहेतुत्वेनोक्तत्वात्" इत्याहुः। तन्न। सुरतेच्छाया आलम्बनप्राप्त्यभिलाषं प्रति हेतुत्वसंभवेन लक्षणाया अयोगात्। **चेतोविकास** उपहसनीयत्वेन ज्ञानमुखविकासरूपहास्यहेतुः। **चेतोवैक्लव्यं** दुःखम्। **तैक्ष्ण्यस्य** अपचिकीर्षाया अवबोध उत्कटत्वम्। **कार्यारम्भेषु** संनिकृष्टकार्येषु **संरम्भ** उत्कट आवेशः। केचित्तु—'संरम्भः सहर्षप्रवृत्तिः' इत्याहुः। तन्न। आद्यप्रवृत्तिरूपस्यारम्भस्य प्रवृत्त्यसंभवात्, वीररसे उत्कटावेशस्यैव स्थायित्वेनास्वाद्यमानत्वाच्च। **रौद्रशक्त्येति**। शात्रवादेरनिष्टदर्शि-

---

1. **रतिरिति**। रत्यादीनां विशदतरं लक्षणमिहितं **रसगङ्गाधरे**—'स्त्रीपुंसयोरन्योन्यालम्बनः प्रेमाख्यश्चित्तवृत्तिविशेषो रतिः। गुरुदेवतापुत्राद्यालम्बनस्तु व्यभिचारी। वागङ्गादिविकारदर्शनजन्मा विकासाख्यो हासः। पुत्रादिवियोगमरणादिजन्मा वैक्लव्याख्यश्चित्तवृत्तिविशेषः शोकः। गुरुबन्धुवधादिपरमापराधजन्मा प्रज्वलनाख्यः क्रोधः। अयं च परविनाशादिहेतुः। क्षुद्रापराधजन्मा तु परुषवचनासंभाषणादिहेतुः। अयमेवामर्षाख्यो व्यभिचारीति विवेकः। परपराक्रमदानादिस्मृतिजन्मा औन्नत्याख्य उत्साहः। व्याघ्रदर्शनादिजन्मा परमानर्थविषयको वैक्लव्याख्यः स भयम्। परमानर्थविषयकत्वाभावे तु स एव त्रासो व्यभिचारी। अपरे तु—औत्पातिकप्रभवस्त्रासः, स्वापराधोत्थं भयमिति भेदमाहुः। कदर्यवस्तुविलोकनजन्मा विचिकित्साख्यश्चित्तवृत्तिविशेषो जुगुप्सा। अलौकिकवस्तुदर्शनादिजन्मा आश्चर्याख्यो विस्मयः॥

---

१. '—वैकृतात्' घ. २. 'प्रातिकूल्यागमाच्चित्तविक्षोभः क्रोध उच्यते।' इति ग. ३. 'अवधानात्मिका कर्तुरुत्साहोऽध्यवसायिता। अरिष्टदर्शनं भीतिरिरिसंदर्शनादिभिः॥' इति ग.

**दोषेक्षणादिभिर्गर्हा जुगुप्सा विस्मयोद्भवा ।**
**विविधेषु पदार्थेषु लोकसीमातिवर्तिषु ॥ १७९ ॥**
**विस्फारश्चेतसो यस्तु स विस्मय उदाहृतः ।**
**[1]शमो निरीहावस्थायां [3]स्वात्मविश्रामजं सुखम् ॥ १८० ॥**

नसामर्थ्येन जनितं यच्चेतसो वैक्लव्यमस्थिरत्वं जनयति तत्स्वानिष्टतर्कणम् । भयमित्यर्थः । केचित्तु—"'वैक्लव्यं मनसो भयम्' इति पठित्वा रौद्रः क्रुद्धः तस्य क्रोधरूपया शक्त्या वैक्लव्यमिह भाविदुःखे द्वेषः । तस्य च परक्रोधजन्यत्वम्, तज्जन्यसुखविषयत्वात् । न तु तज्जन्यं दुःखमेव वैक्लव्यम्, तदनुत्पत्तिदशायामपि भीत्युपलम्भात् । एवं च मनःक्षोभरूपात्त्रासाख्यव्यभिचारिभावादस्य भेदः" इति व्याकुर्वन्ति । तन्न । व्याघ्रादीनां क्रोधाभावेऽपि तेभ्यो भयोत्पत्तिसंभवात् । मनःक्षोभरूपत्रासाख्यव्यभिचारिभावस्य भयंकरशात्रवाद्यनिष्टजननसामर्थ्यजन्यत्वेनैव भेदसंभवाच्च । **लोकसीमातिवर्तिषु** लोकव्यवहारातिक्रान्तेषु । **विस्फारो** विस्तारः । स च दृष्टहेतुभ्योऽसंभवित्वज्ञानेन हेत्वनुसंधाने मनोव्यापाररूपः । **निरीहावस्थायां** निःस्पृ-

1. शम इति । शमो निरीहावस्थायामित्यादेरयमाशयः—शान्तो नाम नवमो रसोऽनुभवसिद्धतया दुरपलापः । नास्य स्थायी निर्वेदो भवितुमर्हति । विषयेष्वलंप्रत्ययरूपत्वात्, आत्मावहेलनरूपत्वाद्वा । शान्तेश्च निखिलविषयपरिहारजनितात्ममात्रविश्रामानन्दप्रादुर्भावमयत्वानुभवात् । तदुक्तम्—'यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् । तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥' इति । अत एव 'सर्ववृत्तिविरामोऽस्य स्थायी' इति परास्तम् । अभावस्य स्थायित्वायोगात् । तस्माच्छमोऽस्य स्थायी । निर्वेदादयस्तु व्यभिचारिणः । स च शम उक्तलक्षणः । एतेन 'निर्वेदस्थायिभावोऽस्ति शान्तोऽपि नवमो रसः ।' इति वदन्तः काव्यप्रकाशकाराः प्रत्युक्ता इति । तन्न पेशलम् । विषयेष्वलंप्रत्ययरूपस्य आत्मावहेलनरूपस्य वा निर्वेदस्य शोकवत्समाधेयत्वात् । वस्तुतस्तु रत्यादिकमुपजीव्य हर्षादेरिव तत्त्वज्ञानोत्पन्नं निर्वेदमुपजीव्य शमादेः प्रवृत्तिर्जायते । स एव स्थायी नतु शमः । न 'क्वचिच्छमः' इत्याधिकारिकवचनविरोध इति वाच्यम् । शम्यते यस्मादिति व्युत्पत्त्या तस्य निर्वेदपरत्वात् । तृष्णायाः क्षयो यस्मादिति व्युत्पत्त्या तृष्णाक्षयोऽपि निर्वेद एव । अत एव 'एकोनपञ्चाशद्भावाः' ( ना. शा. ७ अ.) इति मुनिवचनं संगच्छते । अष्टौ स्थायिनः, अष्टौ सात्त्विकाः, त्रयस्त्रिंशद्व्यभिचारिण इति संकलनेन एकोनपञ्चाशत्त्वम् । शमस्यापि भावत्वेन स्वीकारे तु पञ्चाशत्त्वापत्तिः । अन्यत्रापि निर्वेदस्य शान्ते स्थायित्वमाम्नातम् । तदुक्तम्—'रतिः शोकश्च निर्वेदक्रोधोत्साहाश्च विस्मयः । हासो भयं जुगुप्सा च स्थायिभावाः क्रमादमी ॥' इति प्रकाशोन्मीलितमतयो रसगङ्गाधरकारादयश्च । ध्वन्यालोकलोचने आचार्याभिनवगुप्तपादा अपि 'एकाश्रयत्वे निर्दोषो नैरन्तर्ये विरोधवान्' इत्यादिध्वनिकारिकावृत्तिव्याख्यानावसरे 'ननु

१. 'जुगुप्सा गर्हणार्थानां दोषसंदर्शनादिभिः ।' इत्यर्धमेव ग. पुस्तके. २. 'विस्मयश्चित्तविस्तारः पूर्वादृष्टविलोकनात् ।' इति ग. ३. 'आत्म' घ.

यथा मालतीमाधवे रतिः । लटकमेलके[1] हासः । रामायणे शोकः । महाभारते शमः । एवमन्यत्रापि । एते ह्येष्वन्तरा उत्पद्यमानैस्तैस्तैर्विरुद्धैरविरुद्धैश्च भावैरनुच्छिन्नाः प्रत्युत परिपुष्टा एव सहृदयानुभवसिद्धाः ।

किं[2] च ।

नानाभिनयसंबन्धान्भावयन्ति रसान्यतः ।

---

हृदशायां स्वस्य जीवस्य आत्मनि परमात्मरूपे विश्रामोऽवस्थानम् । तज्जन्यमित्यर्थः । 'शान्तरसस्य निर्वेदः स्थायी' इति काव्यप्रकाशकृत् । तन्न । निर्वेदस्य व्यभिचारिरूपत्वेन स्थायित्वायोगात् । 'अविरुद्धाः' इति कारिकां विवृणोति—**एते हीति** । रत्यादयो हीत्यर्थः । **एषु** रसेषु । भावानां विशेषलक्षणान्युक्त्वा सामान्यलक्षणमाह—**किं चेति** । वेषचेष्टादिभिर्नायकसदृशीकरणमभिनयः तत्संबन्धान् तद्व्यञ्जान् । **अभिनयेति** काव्यमात्रपरम् । **सात्त्विका** इति अनुभावमात्रोप-

---

नास्त्येव शान्तो रसः, तस्य तु स्थाय्येव नोपदिष्टो मुनिना—' इति पूर्वपक्षीकृत्य विचारं कुर्वाणाः पर्यवसाने "—आधिकारिकत्वेन तु शान्तो रसो निबद्धव्य इति चन्द्रिका ( ध्वन्यालोकव्याख्या ) कारः । तच्चेहास्माभिर्न पर्यालोचितम्,' प्रसङ्गान्तरात् । मोक्षफलत्वेन चायं परमपुरुषार्थनिष्ठत्वात्सर्वरसेभ्यः प्रधानतमः । स चायमस्मदुपाध्यायभट्टतौतेन काव्यकौतुके, अस्माभिश्च तद्विवरणे बहुतरकृतनिर्णयः पूर्वपक्षसिद्धान्त इत्यलं बहुना" इत्युपसमहार्षुः । अन्यैस्त्वेवं स्पष्टमेवोक्तम्—'द्वैतप्रबोधौदासीन्यमतिमुख्यैः सुपोषितः । विभावाद्यैस्तु निर्वेदस्थायी शान्तो रसः स्मृतः ॥' इति । अत्र द्वैतमालम्बनम्, प्रबोधो ब्रह्मसाक्षात्कार उद्दीपनम्, औदासीन्यमनुभावः, मतिर्व्यभिचारीत्यादि द्रष्टव्यम् । एवं रसतरङ्गिण्यादावपि निरूपितम् । अत्र चैषा व्यवस्थितिः—तत्त्वज्ञानजन्यो निर्वेदः स्थायी, आपदीर्ष्यादिजन्यो व्यभिचारीति । उक्तं चाभियुक्तैः—'स्थायी स्याद् विषयेष्वेष तत्त्वज्ञानाद्भवेद्यदि । इष्टानिष्टवियोगाप्तिकृतस्तु व्यभिचार्यसौ ॥' इति । अत्रेदं स्पष्टतरमुदाहरणम्—'कदाप्यदृष्टदृश्यस्य भूम्नश्चिन्मात्रवस्तुनः । अखण्डानन्दसिन्धोर्मे करणीयं किमीहितम् ॥' इति । एतेन जीवात्मपरमात्मनोरभेदज्ञानस्य द्वैविध्यादिवर्णनं कुशकाशावलम्बनायितं ब्रह्ममीमांसाशास्त्रविरुद्धमिति स्पष्टम् ॥

1. लटकेति । लटकानां दुर्जनानां मेलको यस्मिन् प्रहसने इति लटकमेलकम् । रघुवंशादिवद् व्यधिकरणो बहुव्रीहिः । न च लटकान् मेलयतीत्येव कुतो न व्युत्पादनीयं लक्ष्यैकशरणा वैयाकरणा इति पस्पशादिज्ञापनात् । श्रीहर्षेणाप्युपाश्लोकि 'भङ्क्तुं प्रभुर्व्याकरणस्य दर्पं पदप्रयोगाध्वनि लोक एषः । शशो यदस्यास्ति शशी ततोऽयमेवं मृगोऽस्यास्ति मृगीति नोक्तः ॥' ( नै. २२ स. ८४ श्लो. )

---

१. 'यथा—' इत्यादिः '—सिद्धाः ।' इत्यन्तः पाठो ग-पुस्तके नास्ति. २. 'एतेषां भावशब्दार्थमाह' इति ग.

तस्माद्भावा अमी प्रोक्ताः स्थायिसंचारिसात्त्विकाः ॥१८१॥

यदुक्तम्—

'सुखदुःखादिभिर्भावैर्भावस्तद्भावभावनम्'

अथ रसस्य भेदानाह—

शृङ्गारहास्यकरुणरौद्रवीरभयानकाः ।
बीभत्सोऽद्भुत इत्यष्टौ रसाः शान्तस्तथा मतः ॥ १८२ ॥

---

लक्षणम् । बहुवचनाद्विभावपरिग्रहः । सुखदुःखादिभिरिति । सुखं शमः । दुःखं शोकः । आदिना रत्यादिपरिग्रहः । सुखादिभिः स्थायिभावैस्तद्भावनं रसत्वप्रापणं यस्मात्स भाव इत्यर्थः । अष्टाविति नाट्याभिप्रायेण । शान्तस्य नाट्ये ताद-

---

1. रसा इति । शृङ्गारादयः शान्तान्ता नव रसा इत्यर्थः । यत्तु केचित्—'शान्तस्य शमसाध्यत्वान्नटे च तदसंभवात् । अष्टावेव रसा नाट्ये न शान्तस्तत्र युज्यते ॥' इति व्यवस्थापयन्ति, तच्चापरे न क्षमन्ते । तथाहि—नटे शमाभावादिति हेतुरसंगतः । तत्र रसाभिव्यक्तेरस्वीकारात् । सामाजिकानां शमवत्त्वेन तत्र रसोद्बोधे बाधकाभावात् । न च नटस्य शमाभावात्तदभिनयप्रकाशकत्वानुपपत्तिरिति वाच्यम् । तस्य भयक्रोधादेरप्यभावेन तदभिनयप्रकाशकताया अप्यसंगत्यापत्तेः । यदि च नटस्य क्रोधादेरप्यभावेन वास्तवतत्कार्याणां वधबन्धादीनामुत्पत्त्यसंभवेऽपि कृत्रिमतत्कार्याणां शिक्षाभ्यासादित उत्पत्तौ नास्ति बाधकमिति निरीक्ष्यते तदा प्रकृतेऽपि तुल्यम् । अथ नाट्ये गीतवाद्यादीनां विरोधिनां सत्त्वात् सामाजिकेष्वपि विषयवैमुख्यात्मनः शान्तस्य कथमुद्रेक इति चेत्, नाट्ये शान्तरसमभ्युपगच्छद्भिः फलबलात्तद्गीतवाद्यादेस्तस्मिन्विरोधिताया अकल्पनात् । विषयचिन्तासामान्यस्य तत्र विरोधित्वस्वीकारे तदीयालम्बनस्य संसारनित्यत्वस्य तदुद्दीपनस्य पुराणश्रवणसत्सङ्गपुण्यवनतीर्थावलोकनादेरपि विषयत्वेन विरोधित्वापत्तेः । अत एव चरमाध्याये संगीतरत्नाकरे—'अष्टावेव रसा नाट्येष्विति केचिदचूचुदन् । तदचारु यतः कंचिन्न रसं स्वदते नटः ॥' इत्यादिना नाट्येऽपि शान्तो रसोऽस्तीति व्यवस्थापितम् । यैरपि नाट्ये शान्तो रसो नास्तीत्यभ्युपगम्यते तैरपि बाधकाभावान्महाभारतादिप्रबन्धानां शान्तरसप्रधानताया अखिललोकानुभवसिद्धत्वाच्च काव्ये सोऽवश्यं स्वीकार्यः । अत एव 'अष्टौ नाट्ये रसाः स्मृताः' इत्युपक्रम्य 'शान्तोऽपि नवमो रसः' इति राजानकमम्मटाचार्या अप्युपसमहार्षुः । एतेन प्रकृतग्रन्थमन्यथा योजयतां विवृतिकृतामुक्तिर्न पेशलेति दरमुकुलितनयनैः सुधीभिर्विचारणीयम् ॥

---

1. 'यदुक्तम्—' इत्यादि—'भावनम् ।' इत्यन्तः पाठो ग-पुस्तके.

तत्र शृङ्गारः

> शृङ्गं हि मन्मथोद्भेदस्तदागमनहेतुकः ।
> उत्तमप्रकृतिप्रायो रसः[1] शृङ्गार इष्यते ॥ १८३ ॥
> परोढां वर्जयित्वा तु वेश्यां चाननुरागिणीम् ।
> आलम्बनं नायिकाः स्युर्दक्षिणाद्याश्च नायकाः ॥ १८४ ॥
> चन्द्रचन्दनरोलम्बरुताद्युद्दीपनं मतम् ।
> भ्रूविक्षेपकटाक्षादिरनुभावः प्रकीर्तितः ॥ १८५ ॥
> त्यक्त्वौग्र्यमरणालस्यजुगुप्साव्यभिचारिणः ।
> स्थायिभावो रतिः श्यामवर्णोऽयं विष्णुदैवतः ॥

यथा—'शून्यं वासगृहम्—' इत्यादि ( २३ पृ. ) । अत्रोक्तस्वरूपः पतिः, उक्तस्वरूपा च बाला आलम्बनविभावौ । शून्यं वासगृहमुद्दीपनविभावः । चुम्बनमनुभावः । लज्जाहासौ व्यभिचारिणौ । एतैरभिव्यक्तः सहृदयविषयो रतिभावः शृङ्गाररसरूपतां भजते ।

तद्भेदावाह—

> विप्रलम्भो[2]ऽथ संभोग इत्येष द्विविधो मतः ॥ १८६ ॥

---

क्पुष्टिविरहात् । तदुक्तम्—'अष्टौ नाट्ये रसाः स्मृताः' इति ॥ शृङ्गमिति । [2]मन्मथस्य संभोगेच्छाया [3]उद्भेद उद्बोधः । तदागमनहेतुकः मन्मथोद्भेदप्राप्तिजन्यः । वीतरागाणां रसानुत्पत्तेः । उत्तमप्रकृतिर्नायको यत्र सः । प्राय इत्यनेन शृङ्गाराभासादावधमप्रकृतित्वं सूचितम् । एवं च शृङ्गमृच्छति कारणत्वेन प्राप्नोतीति शृङ्गारपदव्युत्पत्तिरवधेया । [4]अथवा शृङ्गेण अर्यते सामाजिकैः प्राप्यतेऽसाविति कर्मव्युत्पन्नेन अणा तत्पदं सिद्धम् । अत्र शृङ्गारे परोढानुरागिवेश्यावर्जनम् । तद्विषयरसस्य शृङ्गाराभासत्वादिति भावः । रोलम्बो भ्रमरः । आदिना देशकालादि-

---

1. शृङ्गार इति । शृणाति चरमदशाप्रापणेन हिनस्ति कामुकानिति शृङ्गं मन्मथोद्भेदः 'शॄ हिंसायाम्' 'शृणातेर्ह्रस्वश्च' 'इत्युणादिसूत्रेण गुन्नुड्ह्रस्वाः । इह शृङ्गपदस्योत्कर्षाद्यर्थलाभेऽपि योगजशक्त्या मरणावधिको मान्मथो व्यापार इति सूच्यते । शृङ्गमृच्छति प्राप्नोतीति शृङ्गारः । कर्मण्यण् । यद्वा अन्तर्भावितण्यर्थक ऋच्छतिः । यद्वा शृङ्गम् आ समन्ताद् राति ददातीति योजना । अत्र आङः परिपोषणे पर्यवसानम् ॥

2. विप्रेति । शृङ्गारो द्विविधः—'संयोगो विप्रलम्भश्च । रतेः संयोगकालावच्छि-

---

१. 'च' क-ग. २. 'मन्मथस्य—' इत्यादिः 'उद्बोधः' इत्यन्तः पाठः पुस्तकान्तरे नास्ति. ३. 'उद्भेदः' इति पुस्तकान्तरे नास्ति. ४. 'अथवा—' इत्यादिः—'सिद्धम् ।' इत्यन्तः पाठः पुस्तकान्तरे नास्ति.

तत्र[1]

**यत्र तु रतिः प्रकृष्टा नाभीष्टमुपैति विप्रलम्भोऽसौ ।**

अभीष्टं[3] नायकं नायिकां वा ।

**स[4] च पूर्वरागमानप्रवासकरुणात्मकश्चतुर्धा स्यात् ॥१८७॥**

तत्र

**श्रवणाद्दर्शनाद्वापि मिथः संरूढरागयोः ।**

---

ग्रहणम् ॥ तद्भेदौ शृङ्गारभेदौ ॥ तत्र तयोर्मध्ये । विप्रलम्भमाह—**यत्र त्विति** । तुशब्दश्चार्थः । तत्र रसे प्रकृष्टा प्रकरणादिना प्रधानत्वं प्राप्ता रतिरस्ति । नायिका नायिको वा अभीष्टं नायकं नायिकां वा नोपैति नोपभुङ्क्ते असौ विप्रलम्भ इत्यर्थः । तथा चोपभोगाभावसंवलितप्रकृष्टरतिविषयो रसो विप्रलम्भ इत्यर्थः । करुणादौ शोकोद्दीपनतया रतिसत्त्वेन तत्रातिव्याप्तिवारणाय प्रकृष्टेति । संभोगेऽतिव्याप्तिवारणाय उपभोगाभावेति । विप्रलम्भसमानविषयके ज्ञानान्तरे संस्कारे वा अतिव्याप्तिवारणाय रस इति । अन्ये तु—'यत्र दुःखसंवलितत्वाद्रतिर्न प्रकृष्टा अभीष्टमुपैति विषयीकरोति स विप्रलम्भः' इति व्याकुर्वन्ति । तन्न । करुणेऽतिव्याप्तेः । यदि च 'यत्र' इत्यस्य 'शृङ्गारे इति व्याकरणात्करुणे नातिव्याप्तिरित्युच्यते तदा अभीष्टमुपैति' इत्यस्यानर्थक्यम् । अभीष्टविषयरतेरेव शृङ्गारत्वेन परिणामात् । अपरे तु—'नायिकादिभिरभीष्टं नोपैति न संगच्छते । तथा चाभीष्टविच्छेदसंवलिता रतिर्यत्र स विप्रलम्भः' इत्याहुः । तन्न । प्रणयमानादावभीष्टविच्छेदाभावेनाव्याप्तेः । केचित्तु—"संयोगः सुखसंभिन्नो विप्रलम्भस्तु दुःखयुक् । रतिस्तयोः प्रकर्षः स्यादाधिक्यात्सुखदुःखयोः ॥' इति दर्शनाद् दुःखसंवलितरतिस्थायिभावको रसो विप्रलम्भः" इत्याहुः । तन्न । प्रणयमाने दुःखायोगादव्याप्तेः ॥ स च विप्रलम्भः चतुर्धा इतीदमुपलक्षणम् । विरहोऽपि वेदितव्यः । स च गुर्वादिपरतन्त्रत्वात् । संगमप्रतिरोधो यथा—'किं रुद्धः प्रियया–' ( १२४ पृ. ) इत्यादि । अन्यथा

---

न्नत्वे प्रथमः । वियोगकालावच्छिन्नत्वे द्वितीयः । संयोगश्च न दंपत्योः सामानाधिकरण्यम् । एकतल्पशयनेऽपीर्ष्यादिसद्भावे विप्रलम्भस्यैव वर्णनात् । एवं वियोगोऽपि न वैयधिकरण्यम् । दोषस्योक्तत्वात् । तस्माद्वाविमौ संयोगवियोगाख्यावन्तःकरणवृत्तिविशेषौ । यत्संयुक्तो वियुक्तश्चास्मीति धीः । तत्राद्यो यथा—'शयिता सविधेऽप्यनीश्वरा सफलीकर्तुमहो मनोरथान् । दयिता दयिताननाम्बुजं दरमीलन्नयना निरीक्षते ॥' इति । द्वितीयो यथा—'वाचो माङ्गलिकीः प्रयाणसमये जल्पत्यनल्पं जने केलीमन्दिरमारुवातायनमुखे विन्यस्तवक्राम्बुजा । निःश्वासग्लपिताधरोपरिपतद्बाष्पार्द्रवक्षोरुहा बाला लोलविलोचना शिव शिव प्राणेशमालोकते ॥' इति विशेषो रसगङ्गाधरे ॥

---

१. 'तत्र' इति नास्ति ग. पुस्तके. २. 'तत्रापि विप्रलम्भो यूनोरन्योन्यरक्तयोर्विरहः' इति ग. ३. 'अभीष्टम्' इति नास्ति ग-पुस्तके. ४. 'स तु' ग.

दशाविशेषो योऽप्राप्तौ पूर्वरागः स[1] उच्यते ॥ १८८ ॥

श्रवणं तु भवेत्तत्र दूतबन्दिसखीमुखात् ।

इन्द्रजाले च चित्रे च साक्षात्स्वप्ने च दर्शनम् ॥ १८९ ॥

अभिलाषश्चिन्तास्मृ[1]तिगुणकथनोद्वेगसंप्रलापाश्च ।

उन्मादोऽथ[2] व्याधिर्जडता मृतिरिति दशात्र कामदशाः १९०

अ[3]भिलाषः स्पृहा चिन्ता प्राप्त्युपायादिचिन्तनम् ।

उन्मादश्चापरिच्छेदश्चेतनाचेतनेष्वपि ॥ १९१ ॥

अलक्ष्यवाक्प्रलापः स्याच्चेतसो भ्रमणाद्भृशम् ।

व्याधिस्तु दीर्घनिःश्वासपाण्डुताकृशतादयः ॥ १९२ ॥

जडता हीनचेष्टत्वमङ्गानां मनसस्तथा ।

शेषं स्पष्टम् ।

क्रमेणोदाहरणानि—

'प्रेमार्द्राः प्रणयस्पृशः परिचयादुद्गाढरागोदया-

स्तास्ता मुग्धदृशो निसर्गमधुराश्चेष्टा भवेयुर्मयि ।

---

तस्य निरुक्तप्रकारचतुष्टयानन्तर्भावाल्लक्ष्यत्वाभावेन तत्र सामान्यलक्षणस्यातिव्याप्तिप्रसङ्गात् । तत्र पूर्वरागादिषु । मिथ इति । अन्योन्यमित्यर्थः । दशाविशेषोऽवस्थाभेदः । अप्राप्तौ परस्परासंगमे । बन्दिनः स्तुतिपाठकाः । दशाविशेषानाह—अभिलाष इति । दश प्रकाराः । अत्र पूर्वरागे । कामकृता रतिजन्यदशाः कामदशाः । स्पृहा अभीष्टप्राप्तीच्छा । अपरिच्छेदो विशेषनिर्धारणाभावः । अलक्ष्यवाक् निर्विषयं वचः । शेषं स्मृत्यादिकम् ॥ प्रेमार्द्रा इति । प्रेम्णा आर्द्रा निविडसंपृक्ताः । प्रेमाभिव्यञ्जिका इति यावत् । प्रणयं द्रष्टुः स्नेहं स्पृशन्ति जनयन्ति । परिचयान्मुहुर्मुहुर्दर्शनात् । उद्गाढ उत्कटो यो रागः सुरतेच्छा तस्योदयो याभ्यस्ताः । मुग्धदृशो मालत्याः । चेष्टा नेत्रविक्षेपादिरूपाः

---

1. स्मृतीत्यादि । 'द्वेषो यत्रान्यकार्येषु तदेकाग्रं च मानसम् । श्वासैर्मनोरथैश्चापि चेष्टास्ताः स्मृतिरुच्यते ॥', 'सौन्दर्यहसितालापैर्नास्त्यन्यस्तत्समो युवा । इति वाणी भवेद्यत्र तदुक्तं गुणकीर्तनम् ॥', यस्मिन्रम्यमरम्यं वा न च हर्षाय जायते । प्रद्वेषः प्राणितव्येऽपि स उद्वेगोऽभिधीयते ॥', 'श्वासप्ररोदनोत्कम्पवसुधोल्लेखनैरपि । व्यापारो जायते यत्र स उन्मादो निरूप्यते ॥'

---

१. 'स कीर्तितः' ग. २. 'अथ' नास्ति क-पुस्तके. ३. 'अभिलापः—' इत्यादि—'स्पष्टम् ।' इत्यन्तः पाठो ग. पुस्तके नास्ति.

यास्वन्तःकरणस्य बाह्यकरणव्यापाररोधी क्षणा-
दाशंसापरिकल्पितास्वपि भवत्यानन्दसान्द्रो लयः ॥'

अत्र मालतीसाक्षाद्दर्शनप्ररूढरागस्य माधवस्याभिलाषः।

'कथमीक्षे कुरङ्गाक्षीं साक्षाल्लक्ष्मीं मनोभुवः।
इति चिन्ताकुलः कान्तो निद्रां नैति निशीथिनीम् ॥'

अत्र कस्याश्चिन्नायिकाया इन्द्रजालदर्शनप्ररूढरागस्य नायकस्य चिन्ता। इदं[1] मम। 'मयि सकपटम्—' इत्यादौ (१५७ पृ.) नायकस्य स्मृतिः। 'नेत्रे खञ्जनगञ्जने—' इत्यादौ (११० पृ.) गुणकथनम्। 'श्वासान्मुञ्चति' इत्यादौ (१३६ पृ.) उद्वेगः।

'त्रिभागशेषासु निशासु च क्षणं निमील्य नेत्रे सहसा व्यबुध्यत।
क्व नीलकण्ठ व्रजसीत्यलक्ष्यवागसत्यकण्ठार्पितबाहुबन्धना ॥'

अत्र प्रलापः।

'भ्रातर्द्विरेफ—' इत्यादौ (१५६ पृ.) उन्मादः।

'पाण्डु क्षामं वदनं हृदयं सरसं तवालसं च वपुः।
आवेदयति नितान्तं क्षेत्रियरोगं सखि हृदन्तः ॥'

अत्र व्याधिः।

'भिसिणीअलसअणीए निहिअं सव्वं सुणिच्चलं अङ्गं।
दीहो णीसासहरो एसो साहेइ जीअइत्ति परं ॥'

---

क्रियाः। बाह्यकरणव्यापाररोधी बाह्येन्द्रियसंबन्धप्रतिबन्धकः। आशंसापरिकल्पितासु संकल्पविषयीभूतासु। अन्तःकरणस्य लयो निबिडाभिनिवेशो भवतीत्यन्वयः॥ **निशीथिनीम्**, इत्यविच्छेदे द्वितीया॥ **इन्द्रजालेति**। इन्द्रजालस्य कुहकस्य क्रीडा॥ 'मयि सकपटं—' इति स्मृतिसंचारिभावोदाहरणम्। 'नेत्रे खञ्जनगञ्जने—' इति प्ररूढयौवनाया मध्यमनायिकाया उदाहरणम्॥ **त्रिभागशेषासु** तृतीयभागावशिष्टासु। **अलक्ष्यवाक्** अविषयवचः। असत्यं मिथ्या शिवस्य कण्ठेऽर्पितं बाहुबन्धनं यया। यद्वा असत्यस्य अलीकदृष्टस्य शिवस्य कण्ठेऽर्पितं बाहुबन्धनं यया॥ 'भ्रातर्द्विरेफ—' इत्युन्मादसंचारिभावोदाहरणम्॥ **क्षामं** कृशम्। **सरसं** सानुरागम्। तव मालत्याः॥ **क्षेत्रियेति**। एतच्छरीराच्चिकित्स्येत्यर्थः। हृदन्तः हृदयमध्ये॥ **भिसिणीति**। 'बिसिनीदलशयनीये निहितं सर्वं सुनिश्चलमङ्गम्। दीर्घो निःश्वासभर एष[2] साधयति जीवतीति परम्॥' इति संस्कृतम्॥ **रसस्य रतेर्विच्छेद**

---

१. 'इदं मम—' इत्यादिः 'जडता। इदं मम।' इत्यन्तः पाठो ग-पुस्तके नास्ति. २. 'एव' इति पुस्तकान्तरे.

अत्र जडता । इदं मम ।

रसविच्छेदहेतुत्वान्मरणं नैव वर्ण्यते ॥ १९३ ॥

जातप्रायं तु तद्वाच्यं चेतसाकाङ्क्षितं तथा ।
वर्ण्यतेऽपि यदि प्रत्युज्जीवनं स्याददूरतः ॥ १९४ ॥

तत्राद्यं यथा—

'शेफालिकां विदलितामवलोक्य तन्वी
प्राणान्कथंचिदपि धारयितुं प्रभूता ।
आकर्ण्य संप्रति रुतं चरणायुधानां
किं वा भविष्यति न वेद्मि तपस्विनी सा ॥'

द्वितीयं यथा—

'रोलम्बाः परिपूरयन्तु हरितो झंकारकोलाहलै-
र्मन्दंमन्दमुपैतु चन्दनवनीजातो नभस्वानपि ।
माद्यन्तः कलयन्तु चूतशिखरे केलीपिकाः पञ्चमं
प्राणाः सत्वरमश्मसारकठिना गच्छन्तु गच्छन्त्वमी ॥'

ममैतौ ।

तृतीयं यथा—कादम्बर्यां महाश्वेतापुण्डरीकवृत्तान्ते । एष च प्रकारः करुणविप्रलम्भविषय इति वक्ष्यामः ।

---

हेतुत्वाद् विनाशहेतुत्वात् । रत्याश्रयस्य मरणाद्रतेर्नाश इति मरणरूपानुभावेन रतेर्मिलनाभावाद्रसत्वं नोपपद्यत इति भावः । तन्मरणम् । मरणात्परं जीवनं प्रत्युज्जीवनम् । **प्रभूता** समर्था । **संप्रति** रात्रिशेषयामार्धे । **चरणायुधानां** कुक्कुटानाम् । **किं** कीदृगवस्था । **तपस्विनी** ब्रह्मचारिणी । मैथुनरहितत्वात् । अथवा तुच्छा । अर्धरात्रे शेफालिका विकसति, तदानीमेव त्वामप्राप्य कथंचित्प्राणान्धारयति, रात्रिशेषयामार्धे कुक्कुटा नदन्ति, इदानीमपि त्वामप्राप्य सा मृतप्रायेति भावः ॥ **द्वितीयं** चेतसा काङ्क्षितं मरणम् । **नभस्वान्** वायुः । **पञ्चमं** स्वरविशेषम् । **अश्मसारकठिनाः** लोहकठिनाः ॥ **तृतीयं** प्रत्युज्जीवनं संनिकृष्टमरणं । एष

---

1. चन्दनेति । दाक्षिणात्यो वायुरित्यर्थः ॥

---

१. 'प्रति' ग. २. 'फलयन्तु' ग. ३. 'एष च—' इत्यादिः—'हृदयंगमं भवति ।' इत्यन्तः पाठो ग-पुस्तके न दृश्यते.

[1]केचित्तु—

[2]'नयनप्रीतिः प्रथमं चित्तासङ्गस्ततोऽथ संकल्पः ।
निद्राच्छेदस्तनुता विषयनिवृत्तिस्त्रपानाशः ॥
उन्मादो मूर्च्छा मृतिरित्येताः स्मरदशा दशैव स्युः ॥' इत्याहुः ।

तत्र च—

**आदौ वाच्यः स्त्रिया रागः पुंसः पश्चात्तदिङ्गितैः ।**

इङ्गितान्युक्तानि । यथा रत्नावल्यां सागरिकावत्सराजयोः । आदौ पुरुषानुरागे संभवत्यप्येवमधिकं हृदयंगमं भवति ।

**नीली कुसुम्भं मञ्जिष्ठा पूर्वरागोऽपि च त्रिधा ॥ १९५ ॥**

तत्र

**न चातिशोभते यन्नापैति प्रेम मनोगतम् ।**
**तन्नीलीरागमाख्यातं यथा श्रीरामसीतयोः ॥ १९६ ॥**
**[3]कुसुम्भरागं तत्प्राहुर्यदपैति च शोभते ।**
**मञ्जिष्ठारागमाहुस्तद् यन्नापैत्यतिशोभते ॥ १९७ ॥**

**अथ मानः—**

**मानः कोपः स तु द्वेधा प्रणयेर्ष्यासमुद्भवः ।**

---

च तृतीयः ॥ **नयनप्रीतिर्**दर्शनेच्छा । **चित्तासङ्गः** मनसः संगतिः नायकप्राप्तीच्छा । **संकल्पः** प्राप्त्युपायादिचिन्ता ॥ **तत्र च** पूर्वरागे च । **तदिङ्गितैः** स्त्रीचेष्टाविशेषैः । **इङ्गितान्युक्तानीति** । अभिलाषादिरूपाणीत्यर्थः । **एवं** प्रथमं स्त्रिया रागवर्णने मनोहरम् । 'एवमधिकहृदयंगमता भवति' इति पाठः । **एवं** प्रथमं स्त्रिया रागवर्णने । कुसुम्भरागमञ्जिष्ठारागयोर्लक्ष्यं दर्शयितव्यमवश्यं यदि श्राव्यम् ॥ मानमाह—**अथेति** । **स तु** मानस्तु । **द्वयोः** स्त्रीपुंसयोः ॥ **प्रमोदे**

---

1. **केचिदिति** । वात्स्यायनादयः ।

2. **नयनेति** । नायिकामवलोकयतः संयोगेच्छालक्षणात्कामादनन्तरं दृशौ स्निग्धे जायेते । ततो विषयाप्राप्तौ चित्तासङ्गस्तत्र चित्तस्यासक्तिः । तस्मिन्सक्ते संकल्पः कथं प्राप्स्यामि प्राप्य चैवमनुष्ठातव्यमिति । ततः संकल्पयतो निद्राच्छेदः । निद्रामलभमानस्य तनुता शरीरकार्श्यम् । ततो विषयेभ्यो निवृत्तिः । सर्वथा तद्गतचित्तत्वादन्यविषयाज्ज्वलज्ज्वलनज्वालाप्रख्यान्नोपयाति । तेभ्यश्च व्यावर्तमानस्य त्रपानाशो लज्जाप्रणाशनम् । गुरुभ्योऽपि निर्लज्जत्वान्न बिभेति । विप्रणष्टलज्जस्य निर्भयस्य चोन्मादः । ततो मूर्च्छा भवत्यस्वास्थ्यसंज्ञिका । ततो मृतिः प्राणत्यागः ॥

3. **कुसुम्भेति** । अथेदानीं वत्सराजदम्पत्योः । मञ्जिष्ठा श्रीकृष्णराधिकयोः ॥

---

१. 'कुसुम्भ—' इत्यादिः '—श्राव्यम्' इत्यन्तः पाठः पुस्तकान्तरे नास्ति प्रक्षिप्त इव प्रतिभाति।

**द्वयोः प्रणयमानः स्यात्प्रमोदे[1] सुमहत्यपि ॥ १९८ ॥**
**प्रेम्णः कुटिलगामित्वात्कोपो यः कारणं विना ।**

द्वयोरिति नायकस्य नायिकायाश्च उभयोश्च प्रणयमानो वर्णनीयः । उदाहरणम्[2] । तत्र नायकस्य यथा—

'अलिअपसुत्तअणिमिलिअच्छ देसु सुहअ मज्झ ओआसं ।
गण्डपरिउम्बणापुलइअङ्ग ण पुणो चिराइस्सं ॥'

नायिकाया यथा कुमारसंभवे संध्यावर्णनावसरे ।

उभयोर्यथा—

'पणअकुविआणँ दोण्ह वि अलिअसुत्ताणँ माणइल्लाणं ।
णिच्चलणिरुद्धणीसासदिण्णअण्णाणँ को मल्लो ॥'

अनुनयपर्यन्तासहत्वे त्वस्य न विप्रलम्भभेदता, किंतु संभोगसंचार्याख्यभावत्वम् ।

यथा—

'[3]भ्रूभङ्गे रचितेऽपि दृष्टिरधिकं सोत्कण्ठमुद्वीक्षते
रुद्धायामपि वाचि सस्मितमिदं दग्धाननं जायते ।

---

प्रेम्णि । ननु प्रमोदे सति कोप एव न भवति, कथं तत्र मानलक्षणसंगतिरित्यत आह—**प्रेम्ण इति** । कुटिलगामित्वात् कुटिलनायकादिवृत्तित्वात् । **कारणम**पराधादि । कुटिलस्य विनापि कारणं तत्संभावनया कोपो भवतीति भावः । यद्वा कुटिलगामित्वाद् दुरवगमस्वभावत्वात् ॥ **अलिअ इति** । 'अलीकप्रसुप्तकनिमीलिताक्ष देहि सुभग मह्यमवकाशम् । गण्डपरिचुम्बनपुलकिताङ्ग न पुनश्चिरयिष्यामि ॥' इति संस्कृतम् । मम विलम्बे तव क्रोधो जात इति लक्ष्यते । पुनरेवं विलम्बं न करिष्यामीति भावः । अत्रालीकस्वप्ने नायकस्य कौटिल्यम् ॥ **पणअकुवि इति** । 'प्रणयकुपितयोर्द्वयोरप्यलीकसुप्तयोर्मानविज्ञयोः (वतोः)। निश्चलनिरुद्धनिःश्वासदत्तकर्णयोः को मल्लः ॥' इति संस्कृतम् । मल्लो मानभङ्गसमर्थः । प्रियवचनादिरूपमानभङ्गानुकूलव्यापारोऽ**नुनयः** तत्पर्यन्तासहत्वे । तं विनैव भङ्गुरत्वे चेत्यर्थः । **अस्य** प्रणयमानस्य । ईर्ष्या अत्रासूया, तस्या एव व्यभिचारित्वेन गणितत्वात् ॥ **भ्रूभङ्ग इति** । मानोपदेष्ट्रीं सखीं प्रति नायिकाया उक्ति-

---

१. 'प्रणये' क. २. 'उदा—' इत्यादिः '—भावत्वम् ।' इत्यन्तः पाठः क-ख-ग-पुस्तकेषु नास्ति.
३. 'भ्रूभङ्गे—' इति श्लोकः क. ग. पुस्तकयोर्नास्ति.

कार्कश्यं गमितेऽपि चेतसि तनू रोमाञ्चमालम्बते
दृष्टे [1]निर्वहणं भविष्यति कथं मानस्य तस्मिञ्जने ॥'

यथा वा—

'एकस्मिञ्शयने पराङ्मुखतया [2]वीतोत्तरं ताम्यतो-
रन्योन्यस्य हृदि स्थितेऽप्यनुनये संरक्षतोर्गौरवम् ।
दंपत्योः शनकैर[3]पाङ्गवलनान्मिश्रीभवच्चक्षुषो-
र्भग्नो मानकलिः [4]सहासरभसव्यासक्तकण्ठग्रहः ॥'

**पत्युरन्यप्रियासङ्गे दृष्टेऽथानुमिते श्रुते ॥ १९९ ॥**
**ईर्ष्या मानो भवेत्स्त्रीणां तत्र त्वनुमितिस्त्रिधा ।**
**उत्स्वप्नायितभोगाङ्कगोत्रस्खलनसंभवा ॥ २०० ॥**

तत्र दृष्टे यथा—

'विनयति सुदृशो दृशोः परागं
प्रणयिनि कौसुमम[5]ाननानिलेन ।
तदहितयुवतेरभीक्ष्णमक्ष्णो-
र्द्वयमपि रोषरजोभिरापुपूरे ॥'

---

रियम् । दग्धाननं तुच्छमुखम् । 'अधिकम्' इत्युत्तरत्रापि स्थानद्वयेऽनुषज्यते । अत्र दर्शनादीनामनुभावानां बलवत्त्वेन तैः परिपुष्टा रतिः संभोगत्वमेवावलम्बते । भ्रूभङ्गादिभिर्व्यज्यमानाया ईर्ष्यायास्तत्साधनत्वमेवेति भावः ॥ **स्त्रीणामिति** । प्रणयमानवन्नायकस्यायं न भवतीति भावः । सुरतश्रमवशादुत्कटनिद्राप्राप्तिरुत्स्व**प्नायितम्** । **भोगाङ्कः** संभोगचिह्नम् । **गोत्रस्य** नाम्नः स्खलनम्, अतस्मिन्नुच्चारणम् । एतत्संभवा तत्परामर्शजन्या ॥ **विनयति** निरस्यति सति । 'परागः कौसुमे रेणौ स्नानीयादौ रजस्यपि' इति शासनाच्च कौसुममिति पौनरुक्त्यम् । तस्या अहितयुवतेः प्रतिपक्षनायिकायाः । रोषरजोभिर्नायकापराधजन्यक्रोधप्रभव-

---

1. **निर्वहणमिति** । निर्वहणं निर्वाहः । मानावलम्बनमिति यावत् ॥

2. **वीतोत्तरमिति** । वीतं विगतमुत्तरमुक्तिप्रत्युक्तिरूपं यस्मिन्कर्मणि तद्यथा स्यात्तथा ताम्यतोः क्लिश्यतोः ॥

3. **अपाङ्गेति** । अपाङ्गवलनान्नयनान्तचालनात् ॥

4. **सहासेति** । सहासं यथातथा रभसेन वेगेन व्यासक्तो भुजबन्धनेन दृढं लग्नः कण्ठग्रहो यस्मिन्सः ॥

5. **आननानिलेनेति** । निजमुखफूत्कारेण ॥

संभोगचिह्ने[1]नानुमिते यथा—

'नवनखपदमङ्गं गोपयस्यंशुकेन
स्थगयसि पुनरोष्ठं पाणिना दन्तदष्टम् ।
प्रतिदिशमपरस्त्रीसङ्गशंसी विसर्प-
न्नवपरिमलगन्धः केन शक्यो वरीतुम् ॥'

ए[2]वमन्यदपि ।

साम भेदोऽथ दानं च नत्युपेक्षे रसान्तरम् ।
तद्भङ्गाय पतिः कुर्यात्षडु[1]पायानिति क्रमात् ॥ २०१ ॥
तत्र प्रियवचः साम, भेदस्तत्स[3]ख्युपार्जनम् ।
दानं व्याजेन भूषादेः पादयोः पतनं नतिः ॥ २०२ ॥
सामादौ तु परिक्षीणे स्यादुपेक्षावधीरणम् ।
रभसत्रासहर्षादेः कोपभ्रंशो रसान्तरम् ॥ २०३ ॥

यथा—'नो चाटुश्रवणं कृतम्—' इत्यादि ( १२२ पृ. ) । अत्र सामादयः पञ्च सूचिताः । रसान्तरमू[4]ह्यम् ।

अथ प्रवासः—

प्रवासो भिन्न[5]देशित्वं कार्याच्छापाच्च संभ्रमात् ।

परागैः ॥ **नवनखेति** । नायकं प्रति मानिन्या उक्तिरियम् । स्थगयसि आच्छादयसि । परिमलो विमर्दलग्नकुङ्कुमादिस्तस्य गन्धः । केन उपायेन । वरीतुं गोपयितुम् ॥ प्रसङ्गान्मानभङ्गोपायानाह—**सामेति** । **तद्भङ्गाय** मानभङ्गाय । तस्या मानिन्याः सख्या उपार्जनं प्रसादनम् । **अवधीरण**मवज्ञया त्यागः । **रभसः** संभ्रमः । यतो रभसादेः कोपभ्रंशस्तद्रसान्तरमित्यर्थः । रसान्तरोदाहरणं यथा—'कथं ममोरसि कृतपक्षनिस्वनः शिलीमुखोऽपतदिति जल्पति प्रिये । विवृत्त्य किं [6]किमिति सजल्पया तया ससाध्वसं कुपितममोचि कान्तया ॥' अत्र कान्तवक्षसि शरपतनशङ्कया मानभङ्गः ॥ प्रवासमाह—**प्रवास इति** । भिन्नदेशित्वं भिन्नदेशवृत्तित्वम् । अत्रापि यत्रेत्यनुषज्यते । यत्र स्त्रीपुंसयोर्भिन्नदेशित्वं तत्तदनुभावजनकत्वेन स्वाद्यते प्रवास इत्यर्थः । अस्य कारणान्याह—**कार्यादिति** ।

1. उपायानिति । अत्र विशेषः शृङ्गारतिलके—'यथोत्तरं बलीयांस इत्युपायाः प्रसादने । आद्यास्त्रयो घनं कार्या विदग्धैः पश्चिमाः क्वचित् ॥' इति ॥

१. 'चिह्नेन' इति क-पुस्तके नास्ति. २. 'एवमन्यत्र' क. 'ज्ञेयम्' इत्यधिकं ग-पुस्तके. ३. 'सख्युपायनम्' क, 'सख्युपासनम्' ग. ४. 'तूह्यम्' ग. ५. 'भिन्नदेशत्वम्' क-ग. ६. 'किमिदमिति ब्रुवाणया' इति शृङ्गारतिलकस्थः पाठः.

तत्राङ्गचेलमालिन्यमेकवेणीधरं शिरः ॥ २०४ ॥
निःश्वासोच्छ्वासरुदितभूमिपातादि जायते ।

किं च ।

अङ्गेष्वसौष्ठवं तापः पाण्डुता कृशतारुचिः ॥ २०५ ॥
अधृतिः स्यादनालम्बस्तन्मयोन्मादमूर्च्छनाः ।
मृतिश्चेति क्रमाज्ज्ञेया दश स्मरदशा इह ॥ २०६ ॥
असौष्ठवं मलापत्तिस्तापस्तु विरहज्वरः ।
अरुचिर्वस्तुवैराग्यं सर्वत्रारागिताधृतिः ॥ २०७ ॥
अनालम्बनता चापि शून्यता मनसः स्मृता ।
तन्मयं तत्प्रकाशो हि बाह्याभ्यन्तरतस्तथा ।

शेषं स्पष्टम् ।

एकदेशतो यथा मम तातपादानाम्—

'चिन्ताभिः स्तिमितं मनः, करतले लीना कपोलस्थली,
[1]प्रत्यूषक्षणदेशपाण्डु वदनं, श्वासैकखिन्नोऽधरः ।
[2]अम्भःशीकरपद्मिनीकिसलयैर्नापैति तापः शमं,
कोऽस्याः प्रार्थितदुर्लभोऽस्ति सहते दीनां दशामीदृशीम् ॥'

भावी भवन्भूत इति त्रिधा स्यात्तत्र कार्यजः ॥ २०८ ॥

[2]कार्यस्य बुद्धिपूर्वकत्वात्त्रैविध्यम् ।

---

अस्यानुभावानाह—तत्रेति । प्रवास इत्यर्थः । अङ्गमालिन्यादिकं नायिकायाः । मतान्तरमाह—किं चेति । दशेत्यत्र एकादशेति विज्ञेयम् । एवं च 'ज्ञेया' इत्यत्र 'एका' इति पाठः कल्पनीयः । इह प्रवासे । मलापत्तिर्मलसंबन्धः । शून्यता विषयाग्राहित्वम् । तत्प्रकाशः तस्य नायकस्यालीकदर्शनम् । बाह्याभ्यन्तरत इति बहिरिन्द्रियग्राह्ये मनोग्राह्ये चेत्यर्थः ॥ चिन्ताभिरिति । विरहिणीसख्याः कंचित्प्रत्युक्तिरियम् । स्तिमितं जडीकृतम् । विषयान्तरसंचाराक्षममिति यावत् । एतेनालम्बनता सूचिता । श्वासैकखिन्नः । न तु कान्तदशनक्षतेन । प्रार्थितः सन् दुर्लभः । यो दीनां दैन्यव्यञ्जिकां दशां सहत इत्यर्थः । बुद्धिपूर्वकत्वात्स्वेच्छया

---

1. प्रत्यूषेति । प्रत्यूषे प्रभाते यः क्षणदेशश्चन्द्रमास्तद्वत्पाण्डु । निष्प्रभमित्यर्थः ॥

2. अम्भ इति । अम्भःशीकरैश्चन्दनोदककणिकाभिः, पद्मिनीकिसलयैः पाथोजिनीनवदलैश्च । यद्वा अम्भसां शीकरा येषु तादृशैः पद्मिनीकिसलयैः । सद्यस्त्रोटितत्वादित्यर्थः ।

---

१. ग-पुस्तके तु 'असौष्ठवम्—' इत्यादिः' '—ईदृशीम् ॥' इत्यन्तः पाठो नास्ति. २. 'कार्यस्य—' इति फक्किका नास्ति ग-पुस्तके.

तत्र भावी यथा मम—

'यामः सुन्दरि, याहि पान्थ, दयिते शोकं वृथा मा कृथाः,
शोकस्ते गमने कुतो मम, ततो बाष्पं कथं मुञ्चसि ।
शीघ्रं न व्रजसीति, मां गमयितुं कस्मादियं ते त्वरा,
भूयानस्य सह त्वया जिगमिषोर्जीवस्य मे संभ्रमः ॥'

भवन्यथा—

'प्रस्थानं वलयैः कृतं, प्रियसखैरस्रैरजस्रं गतं,
धृत्या न क्षणमासितं, व्यवसितं चित्तेन गन्तुं पुरः ।
यातुं निश्चितचेतसि प्रियतमे सर्वे समं प्रस्थिता
गन्तव्ये सति जीवित ! प्रियसुहृत्सार्थः किमु त्यज्यते ॥'

विधीयमानत्वात् । एवं च भिन्नदेशगमनस्य संभावनायां भावित्वम् । निश्चये वर्तमानत्वम् । निष्पत्तौ भूतत्वम् । अन्ययोस्तु संभावनानिश्चयासंभवादेकविधत्वमेव ॥ **याम इति** । वर्तमानसामीप्ये लट् । गमनसंभावनामात्रेण तत्र यत् 'पान्थ' इति संबोधनं तत्स्वस्मिन्कान्तस्य प्रेमाभावसूचनाय । तदवगत्य झटित्येव 'दयिते' इत्यनेन संबोधनम् । ततः शोकाभावादिति हेतोर्बाष्पं मुञ्चामीत्यर्थः । जीवस्य प्राणानाम् संभ्रमस्त्वरा । अत्र कान्तासंमतिसापेक्षतया गमनस्य संभावनामात्रम् ॥ **प्रस्थानमिति** । कान्तप्रवासं निश्चित्य स्वजीवितं प्रति नायिकाया उक्तिरियम् । भो जीवित, प्रियतमप्रवासे सति त्वया अवश्यं गन्तव्यम् । तथा च प्रियतमे यातुं निश्चितचेतसि सति त्वया च वलयादिप्रियसुहृत्सार्थः किं कथं त्यज्यते । तेनैव साकं गम्यतामित्यर्थः । प्रियसुहृद्भिः सह गमने कष्टातिशयो न भविष्यतीति । जीवितसत्त्व एव वलयादिधारणं क्रियत इति वलयादीनां जीवितप्रियसुहृत्त्वम् । प्रस्थानमाह—**प्रस्थानमिति** । यात्रेत्यर्थः । बहुदिनव्यापकतद्वार्तया कार्श्येन वलयभ्रंशः । अस्रैरश्रुभिरजस्रं निरवच्छिन्नं गतं गन्तुमारब्धम् ॥ एषु पुनः प्रियसखत्वोपपादनमत्यन्तप्रियत्वसूचनाय । तच्चेदृशदुःखे अश्रुपातेनैव जीवितबन्धो भवतीति स्वरक्षाकारित्वात् । अन्ये तु—'अश्रुजीवितयोरेकहृदयगामित्वादत्यन्तप्रियत्वम्' इत्याहुः । तेषामयमाशयः—नाडीविशेषेण हृत्कोषादश्रुनिर्गमो भवतीति, न चैवं धृतेरपि प्रियसखत्वापत्तिरिति वाच्यम्, धृतेरात्मधर्मत्वेन मनोधर्मत्वेन वा हृदयवृत्तित्वायोगात् । नासितं गतं पुरो गन्तुमित्यनेन चित्तस्य पुरःसरत्वमेवोपपादितम् । नतु विभिन्नकालीनं गमनम् । तेन समं प्रस्थिता इति नानुपपन्नम् । यद्वा प्रियजीवन एव वलया धार्यन्त इति वलयानां धृतेः प्रीतिजनकत्वाच्चित्तस्य तत्प्रवणत्वात्प्रियस्य सुहृत्त्वम् । अस्राणां तु मानभङ्गव्यञ्जकतया

१. ग-पुस्तके तु 'यामः—' इति श्लोको नास्ति, तत्स्थाने 'प्रस्थानं वलयैः—' इति श्लोको वर्तते.
२. 'यामीति प्रेयसोक्तायाः [कान्तायाः] कण्ठसंस्थयोः । वचोजीवितयोरासीत्पुरोनिःसरणे रणः ॥' इति भा-

भूतो यथा—'चिन्ताभिः स्तिमितम्—' इत्यादि (१७८ पृ.) शापाद्यथा—'तां जानीयाः—' इत्यादि (१२३ पृ.) [2]संभ्रमो दिव्य-मानुषनिर्घातोत्पातादिजः। यथा—विक्रमोर्वश्यामुर्वशीपुरूरवसोः।

[3]अत्र पूर्वरागोक्तानामभिलाषादीनामत्रोक्तानां चाङ्गासौष्ठवादीनामपि दशानामुभयेषामप्युभयत्र संभवेऽपि चिरंतनप्रसिद्ध्या विविच्य प्रति-पादनम्।

अथ करुणवि[4]प्रलम्भः—

**यूनोरेकतरस्मिन्गतवति लोकान्तरं पुनरलभ्ये।**
**विमनायते यदैकस्तदा भवेत्करुणविप्रलम्भाख्यः ॥२०९॥**

यथा कादम्बर्यां पुण्डरीकमहाश्वेतावृत्तान्ते।

पुनरलभ्ये शरीरान्तरेण वा लभ्ये तु करुणाख्य एव रसः।

---

अत्यन्तसखित्वमित्यत्र पृथक् प्रियसखित्वोपादानम्। प्रियतमगमने गन्तुमारब्धा वलयादयः सख्योचितं कर्म कुर्वन्ति। त्वमपि प्रियस्य सुहृद्भवसीति तवापि गमनं न्याय्यमित्याह—गन्तव्ये सतीति। अत्रेयमुक्तिरनुभावः। अश्रुपातहृत्तापव्यङ्ग्यो विवादो व्यभिचारिभावः। प्रियतम आलम्बनम्। नायिकाया रतिश्च सामाजिके रसोत्पत्तिः॥ **तां जानीया इति**। प्रोषितभर्तृकाया नायिकाया उदाहरणमिदम्॥ **दिव्यो** विद्युदुल्कादिः। **मानुषो** मर्त्यलोकभवो भूकम्पादिः। **निर्घात** इति नाभसोपलक्षणम्। **उत्पातो**ऽनिष्टसूचको देवकृतः प्रकृतिविपर्यासः। आदिना उन्मादादिपरिग्रहः। **उर्वशीपुरूरवसोरिति**। उर्वशी हि पुरा मित्रावरुणशापान्मनुष्यलोकं प्राप्य पुरूरवसो गृहे 'यदि भवन्तं सुरतसमयातिरिक्तसमये नग्नं पश्यामि तदा त्वामहं त्यक्ष्यामि, मम मेषद्वयं भवता रक्षणीयम्' इति नियमं कृत्वा स्थिता। तदनन्तरं देवैरन्धतमसे मेषद्वयमपहृतम्। तच्छ्रुत्वा पुरूरवाः ससंभ्रमेण वस्त्रमपरिधायैव खड्गपाणिर्मेषापहर्तुः पश्चाद्धावितः। एतस्मिन्नन्तरे विद्युद्भिस्तं नग्नमवलोक्योर्वशी स्वर्गं गतेति ग्रन्थस्य वर्तुलार्थः। अत्र देवकृतमेषापहरणरूप-दिव्योत्पातेन पुरूरवसः संभ्रमः, तेनोर्वश्या भिन्नदेशवृत्तित्वम्॥ **उभयत्र** पूर्वरागे प्रवासे च॥ करुणविप्रलम्भमाह—**यूनोरिति**। विमनायते शोकव्याकुलचित्ततया विलापं कुरुते। **पुनरलभ्य इति**। रतेर्नाशाद् उत्कटशोकसंभवाच्च करुणाख्यो

---

1. संभ्रम इत्यादिफक्किकायां कारिकाभ्रमो न कार्यः।

---

1. ग-पुस्तके तु 'किं गतेन यदि सा न जीवति प्राणिति प्रियतमा तथापि किम्। इत्युदीक्ष्य नवमेघमालिकां न प्रयाति पथिकः स्वमन्दिरम्॥' इत्युदाहरणम्. 2. 'संभ्रमः—' इत्यादिः '—वसोः।' इत्यन्तः पाठो नास्ति ग-पुस्तके. 3. 'अत्र—' इत्यादि फक्किका ग-पुस्तके 'सरदश्च इह ॥२०६॥' इति श्लोकादग्रे दृश्यते. 4. 'विप्रलम्भः' इति क-ग-पुस्तकयोर्नास्ति.

किंचात्राकाशसरस्वतीभाषानन्तरमेव शृङ्गारः, संगमप्रत्याशया[1] रतेरुद्भवात् । प्रथमं तु करुण एव, इत्यभियुक्ता मन्यन्ते । यच्चात्र 'संगमप्रत्याशानन्तरमपि भवतो विप्रलम्भशृङ्गारस्य प्रवासाख्यो भेद एव' इति केचिदाहुः[2], तदन्ये 'मरणरूपविशेषसंभवात्तद्भिन्नमेव' इति[3] मन्यन्ते । अथ संभोगः—

> दर्शनस्पर्शनादीनि निषेवेते विलासिनौ[3] ।
> यत्रानुरक्तावन्योन्यं संभोगोऽयमुदाहृतः ॥ २१० ॥

आदिशब्दादन्योन्याधरपानचुम्बनादयः । यथा—'शून्यं वासगृहम्—' ( २३ पृ. ) इत्यादौ ।

> [6]संख्यातुमशक्यतया चुम्बनपरिरम्भणादिबहुभेदात् ।
> अयमेक एव धीरैः कथितः संभोगशृङ्गारः ॥ २११ ॥
> तत्र स्यादृतुषट्कं चन्द्रादित्यौ तथोदयास्तमयः ।
> जलकेलिवनविहारप्रभातमधुपानयामिनीप्रभृतिः ॥ २१२ ॥
> अनुलेपनभूषाद्या वाच्यं शुचि मेध्यमन्यच्च ।

---

रसः, न पुनर्विप्रलम्भ इति भावः । अत्र विशेषमाह—किं चेति । निषेवेते कुरुतः । एकतरस्यानुरागाभावे शृङ्गाराभास इति तद्वारणाय—अन्योन्यमिति ॥ शून्यमिति । व्याख्यातमेतत्प्राक् ( २३ पृ. ) एक एकप्रकारः । संभोगोद्दीपनविभावानाह—तत्रेति । संभोग इत्यर्थः । स्याद् उपयुक्तं भवति । वाच्यं संभोगोद्दीपकतया वर्णनीयम् । शुचि मेध्यमत्यन्तं निर्मलम् । अन्यद्धर्म्यादि । संख्यातुं

---

1. अत्रेति । अत्र कादम्बर्यां चन्द्रापीडं प्रति स्वप्रेयसः पुण्डरीकस्येतिवृत्तं वर्णयन्त्या महाश्वेताया वाक्येष्वित्यर्थः । स्त्रीपुंसयोर्वियोगे जीवितत्वज्ञानदशायां वैक्लव्यपोषितताया रतेरेव प्राधान्याद्विप्रलम्भः । वैक्लव्यं तु संचारिमात्रम् । मृतत्वज्ञानदशायां तु रतिपोषितस्य वैक्लव्यस्यैव प्राधान्यमिति करुण एव । यदा तु सत्यपि मृतत्वज्ञाने देवताप्रसादादिना पुनरुज्जीवनज्ञानं कथंचित्स्यात्तदालम्बनस्यात्यन्तिकनिरासाभावाच्चिरप्रवास इव विप्रलम्भ एव । न स करुण इति नव्याः ॥

2. केचिदिति । 'कादम्बर्यां तु प्रथमं करुणः, आकाशसरस्वतीवचनादूर्ध्वं प्रवासशृङ्गार एवेति' इत्याचार्यधनिकः ॥

3. विलासिनाविति । विलासिनी च विलासी च विलासिनावित्येकशेषः ॥

---

१. '—आशायां' ग-घ. २. 'एतदन्ये' क. ३. 'अपि मन्यन्ते' क-घ. ४. 'स संभोगो मुदान्वितः' ग. ५ 'आदि—' इत्यादि फक्किका नास्ति ग-पुस्तके. ६. 'वैचित्र्याच्च विभावानुभावसंचारिणामनन्तत्वात् ।' इति ग.

तथा च भरतः—'यत्किञ्चिल्लोके शुचि मेध्यमुज्ज्वलं दर्शनीयं वा तत्सर्वं शृङ्गारेणोपमीयते ( उपयुज्यते च )' इति ।

किं च ।

**कथितश्चतुर्विधोऽसावानन्तर्यात्तु पूर्वरागादेः ॥ २१३ ॥**

यदुक्तम्—

'न विना विप्रलम्भेन संभोगः पुष्टिमश्नुते ।
कषायिते हि वस्त्रादौ भूयान्रागो विवर्धते ॥' इति ।

तत्र पूर्वरागानन्तरं संभोगो यथा कुमारसंभवे पार्वतीपरमेश्वरयोः । प्रवासानन्तरं संभोगो यथा मम तातपादानाम्—

'क्षेमं ते ननु पक्ष्मलाक्षि !—किसअं खेमं महङ्गं दिढं,
एतादृक्कृशता कुतः—तुह पुणो पुट्ठं सरीरं जदो ।
केनाहं पृथुलः प्रिये !—पणइणीदेहस्स संमेलणात्,
त्वत्तः सुभ्रु[1] ! न कापि मे—जइ इदं खेमं कुदो पुच्छसि ॥'

एवमन्यत्राप्यूह्यम् ।

---

शक्या ये संभोगभेदास्तानाह—**किं चेति** । एतद्भेदवादिमतापेक्षया पक्षान्तरसूचनम् । आदिना मानप्रवासकरुणविप्रलम्भानां ग्रहणम् ॥ **अश्नुते** प्राप्नोति । एतेन पूर्वरागादिकं विनापि संभोगः संभवतीति सूचितम् । तथा च प्रकृष्टाप्रकृष्टभेदेन संभोगो द्विविधः । विप्रलम्भानन्तरः संभोगः प्रकृष्टः । स च विप्रलम्भस्य भेदेन चतुर्विधः । तद्विपरीतोऽप्रकृष्ट इति फलितम् ॥ **क्षेमं ते इति** । संस्कृतेन नायकस्य प्रश्नः, प्राकृतेन नायिकाया उत्तरम् । कृशकं क्षेमं ममाङ्गं दृढम् । अतिशयितं कृशं यन्ममाङ्गं तदेव क्षेममित्यर्थः । तव पुनः पुष्टं शरीरं यतः । प्रणयिनीदेहस्य संमेलनात् । यदीदं क्षेमं कुतः पृच्छसि ॥ अपरो यथा मम—'पादप्रणतमालोक्य कान्तमेकान्तकातरम् । मुञ्चन्ती बाष्पसंतानं सुमुखी तेन चुम्बिता ॥', 'कान्ते घोरकृतान्तवक्त्रकुहरात्त्वं पुण्यपुञ्जेन मे मुक्ता कृन्त तदर्जनश्रमभरं प्रत्यङ्ग'

---

1 सुभ्रु इति । 'सुभ्रु' इति ह्रस्वान्तोऽपि । 'प्रमाद एवायमिति बहवः' इति कौमुद्यां दीक्षितवाक्यध्वननात् । अतएव 'हा पितः ! क्वासि हे सुभ्रु !' इत्यत्र रामभद्रस्यानवस्थासूचनाय कविना तथा प्रयुक्त इति तत्त्वम् ॥

---

१. ग. पुस्तके तु 'कथितः—' इत्यादेः 'ऊह्यम् ।' इत्यन्तस्य ग्रन्थस्य स्थाने 'यद्यप्येक एवायमुक्तस्तथापि तत्र विप्रलम्भानन्तर्याच्चतुर्विधः । पूर्वरागानुत्तरसंभोगो यथा—'पाणिपीडनविधेरनन्तरं शैलराजदुहितुर्हरं प्रति । भावसाध्वसपरिग्रहादभूत्कामदोहदमनोहरं वपुः ॥' मानानन्तरसंभोगो यथा—'संदष्टेऽधरपल्लवे सचकितं हस्ताग्रमाधुन्वती मा मा मुञ्च शठेति कोपवचनैरानर्तितभ्रूलता । सीत्काराञ्चितलोचना सरभसं यैश्चुम्बिता मानिनी प्राप्तं तैरमृतं श्रमाय मथितो मूढैः सुरैः सागरः ॥' प्रवासानन्तरसंभोगो यथा—'गुरुजन··· ··· ··· ··· ··· ···त्वरितमहा··· ···पद्मबन्धो । इति वदति मनोभवाभिभूता चिरसमागतवल्लभा मृगाक्षी ॥' करुणानन्तरसंभोगो यथा उत्तरकादम्बर्याम् । उक्तं च वात्स्यायनेन—'नवो मन इवोदेति संभोगोऽनन्तरो हि सः । स चेतःप्रीतये चन्द्रः परिमुक्तो घनैरिव ॥' इति पाठान्तरमुपलभ्यते.

अथ हास्यः—

> विकृताकारवाग्वेषचेष्टादेः कुहकाद्भवेत् ।
> हास्यो[1] हासस्थायिभावः श्वेतः प्रमथदैवतः ॥ २१४ ॥
> विकृताकारवाक्चेष्टं यमालोक्य हसेज्जनः ।
> तमत्रालम्बनं प्राहुस्तच्चेष्टोद्दीपनं मतम् ॥ २१५ ॥
> अनुभावो[2]ऽक्षिसंकोचवदनस्मेरतादयः ।
> निद्रालस्यावहित्थाद्या[3] अत्र स्युर्व्यभिचारिणः ॥ २१६ ॥
> ज्येष्ठानां स्मितहसिते मध्यानां विहसितावहसिते च ।
> नीचानामपहसितं तथातिहसितं तदेष[4] षड्भेदः ॥ २१७ ॥
> ईषद्विकासिनयनं स्मितं स्यात्स्पन्दिताधरम् ।

मालिङ्ग्य माम् । इत्याकर्ण्य निमीलितार्धनयनं स्मेरं शनैरानतं सोल्लासं वदनाम्बुजं मृगदृशः स्मेरं चुचुम्बे प्रियः ॥' हास्यरसमाह—**विकृतेति** । विकृता आकारादयो यस्य तस्मात्कुहकात् नर्तकात् । एतदुपलक्षणम् । विकृताकारादिविषयकश्रव्यकाव्यादपि । 'कुतुकात्'[6] इति पाठे विकृताकारादिजन्यात्कौतुकादित्यर्थः । अत्र हास्यरसे । **तच्चेष्टा** विकृताकारादिपुरुषचेष्टा । हास्यरसस्थायिभावस्य हासस्य भेदानाह—**ज्येष्ठानामिति** । उत्तमानामित्यर्थः । **तदिति** । हासभेदादित्यर्थः । **एष** हास्यरसः । स्मितादीनां लक्षणमाह—**ईषदिति** । तत्र हासेषु

1. हास्य इति । हासस्थायिभावको विकृतकृदालम्बनको वैकृताद्युद्दीपितो गल्लफुल्लाद्यनुभावितः श्रमादिसंचारितो हास्य इति निर्गलितार्थः । अत्राहुः—'आत्मस्थः परसंस्थश्चेत्यस्य भेदद्वयं मतम् । आत्मस्थो द्रष्टुरुत्पन्नो विभावेक्षणमात्रतः ॥ हसन्तमपरं दृष्ट्वा विभावश्चोपजायते । योऽसौ हास्यरसस्तज्ज्ञैः परस्थः परिकीर्तितः ॥ उत्तमानां मध्यमानां नीचानामप्यसौ भवेत् । त्र्यवस्थः कथितस्तस्य षड्भेदाः सन्ति चापरे ॥ स्मितं च हसितं प्रोक्तमुत्तमे पुरुषे बुधैः । भवेद्विहसितं चोपहसितं मध्यमे नरे ॥ नीचेऽपहसितं चातिहसितं परिकीर्तितम् । ईषत्फुल्लकपोलाभ्यां कटाक्षैरप्यनुल्वणैः ॥ अदृश्यदशनो हासो मधुरः स्मितमुच्यते । वक्त्रनेत्रकपोलैश्चेदुत्फुल्लैरुपलक्षितः ॥ किंचिल्लक्षितदन्तश्च तदा हसितमिष्यते । सशब्दं मधुरं कालगतं वदनरागवत् ॥ आकुञ्चिताक्षि मन्द्रं च विदुर्विहसितं बुधाः । निकुञ्चितांसशीर्षश्च जिह्मदृष्टिविलोकनः ॥ उत्फुल्लनासिको हासो नाम्नोपहसितं मतम् । अस्थानजः साश्रुदृष्टिराकम्पस्कन्धमूर्धजः । शार्ङ्गदेवेन गदितो हासोऽपहसिताह्वयः ॥ स्थूलकर्णकटुध्वानो बाष्पपूरप्लुतेक्षणः । करोपगूढपार्श्वश्च हासोऽतिहसितं मतम् ॥' इति ॥

---

1. 'हासः' क. 2. 'अनुभावाः फुल्लगल्ल' ग. 3. 'हर्षावहित्थप्रमुखास्तथा' ग. 4. 'च षड्भेदाः' घ. 5. पादोनः श्लोकोऽयं क-पुस्तके त्रुटितः. 6. 'कुतुकात्' इति पाठो बहुत्र.

किंचिल्लक्ष्यद्विजं तत्र हसितं कथितं बुधैः ॥ २१८ ॥
मधुरस्वरं विहसितं सांसशिरःकम्पमवहसितम् ।
अपहसितं सास्राक्षं विक्षिप्ताङ्गं [च]भवत्यतिहसितम् ॥२१९॥

यथा[१]—

'गुरोर्गिरः पञ्च दिनान्यधीत्य वेदान्तशास्त्राणि दिनत्रयं च ।
अमी समाघ्राय च तर्कवादान्समागताः कुक्कुटमिश्रपादाः ॥'

अस्य[२] लटकमेलकप्रभृतिषु परिपोषो द्रष्टव्यः ।

अत्र च—

यस्य हासः स चेत्क्वापि साक्षान्नैव निबध्यते ।
तथाप्येष विभावादिसामर्थ्यादुपलभ्यते ॥ २२० ॥
अभेदेन विभावादिसाधारण्यात्प्रतीयते ।
सामाजिकैस्ततो हास्यरसोऽयमनुभूयते ॥ २२१ ॥

एवम[३]न्येष्वपि रसेषु बोद्धव्यम् ।

अथ करुणः—

इष्टनाशादनिष्टाप्तेः करुणा[४]ख्यो रसो भवेत् ।
धीरैः कपोतवर्णोऽयं कथितो यमदैवतः ॥ २२२ ॥
शोको[५]ऽत्र स्थायिभावः स्याच्छोच्यमालम्बनं मतम् ।
तस्य दाहादिकावस्था भवेदुद्दीपनं पुनः ॥ २२३ ॥

---

मध्ये ॥ **गुरोः** प्रभाकरस्य ॥ ननु रसे नायकस्याभेदः सामाजिके भासते स चात्र श्लोकेन निबद्धः कथं तस्याभेदारोपो जायतामित्यत आह—**अत्र चेति** । चकारादन्यत्र ॥ एष नायकः । **विभावादेः** सामर्थ्यात् अन्यथानुपपत्तिज्ञानात् । ततः किमित्यत आह—**अभेदेनेति** । स्वपरसाधारणत्वेनेत्यर्थः । **साधारण्यात्** साधारणीकरणव्यापारात् । **ततः** साधारण्यज्ञानात् ॥ करुणरसमाह—**इष्टेति** ।

---

1. गुरोरिति । गुरोर्भट्टप्रभाकरस्य गिरो मीमांसाशास्त्ररूपा इत्यर्थः । 'श्रीतातपादैर्विहिते निबन्धे निरूपिता नूतनयुक्तिरेषा । अङ्गं गवां पूर्वमहो पवित्रं न वा कथं रासभधर्मपत्न्याः ॥' इत्युदाहरणान्तरम् ॥

2. करुणेति । शोकस्थायिभावको मृताद्यालम्बनकस्तद्गुणाद्युद्दीपितो रोदनाद्यनुभावितो दैन्यादिसंचारितः करुण इति ॥

---

१. 'यथा मम' घ. २. 'अस्य—' इत्यादि फक्किका ग-पुस्तके नास्ति. ३. 'एवम्—' इति फक्किका नास्ति ग-पुस्तके. ४. 'शोकस्थायी कपोताभवर्णोऽयम्' ग. ५. 'अभीष्टं वस्तु यन्नष्टं तदालम्बनं मतम् । तदीयगुणदोषाद्यास्तस्योद्दीपनरूपिणः ॥' इति ग.

**[1]अनुभावा दैवनिन्दाभूपातक्रन्दितादयः ।**
**वैवर्ण्योच्छ्वासनिःश्वासस्तम्भप्रलपनानि च ॥ २२४ ॥**
**निर्वेदमोहापस्मारव्याधिग्लानिस्मृतिश्रमाः ।**
**विषादजडतोन्मादचिन्ताद्या व्यभिचारिणः ॥ २२५ ॥**

[2]शोच्यं विनष्टबन्धुप्रभृति ।

[1]यथा मम राघवविला[3]से—

'विपिने क्व जटानिबन्धनं तव चेदं क्व मनोहरं वपुः ।
अनयोर्घटना विधेः स्फुटं ननु खड्गेन शिरीषकर्तनम् ॥'

अत्र हि रामवनवासजनितशोकार्तस्य दशरथस्य दैवनिन्दा । एवं बन्धुवियोगविभवनाशादावप्युदाहार्यम् । परिपोषस्तु महाभारते स्त्रीपर्वणि द्रष्टव्यः ।

अस्य करुणविप्रलम्भाद्भेदमाह—

**शोकस्थायितया भिन्नो विप्रलम्भादयं रसः ।**
**विप्रलम्भे रतिः स्थायी पुनःसंभोगहेतुकः ॥ २२६ ॥**

---

इष्टनाशश्च पुत्रादेर्विच्छेदो मरणं च वित्तादेर्नाशश्च ॥ **अनयो**र्जटाधारणश्रीरामशरीरयोः **घटना** योजना । **खड्गेन** शिरीषकर्तनमिवेत्यर्थः । अत्र प्रकरणाद्दशरथो नायको लभ्यत इति । विवृणोति—**अत्रेति** । अनुचिताचरणमेव दैवस्य निन्दा सैवानुभावः । बन्धुवियोगो बन्धुमरणम् । तत्र यथा—'गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधौ । करुणाविमुखेन मृत्युना हरता त्वां वद किं न मे हृतम् ॥' अत्रेन्दुमतीमरणजनितशोकार्तस्याजस्य मृत्युनिन्दा । वित्तनाशो यथा—'प्रातर्भवामि वसुधाधिपचक्रवर्ती सोऽहं व्रजामि विपिने जटिलस्तपस्वी । यच्चिन्तितं तदिह दूरतरं प्रयाति यच्चेतसा न गणितं तदिहाभ्युपैति ॥' अत्र नष्टराज्यस्य रामस्य परिदेवनम् ॥ **स्थायी**भाव इति शेषः । **पुनः** संभोगो हेतुर्ज्ञापको

---

1. यथेति । यथा वा मम—'धारावन्धममी पतन्ति सततं दृग्भ्यां पयोबिन्दवो ज्वालालीढमिवान्तरं स्फुटति हा गात्रं मुहुः सीदति । जायन्ते पुरतस्तमांसि धिषणा वैकल्यमालम्बते हित्वास्मान्क्व गतोऽसि शीघ्रमहहा प्रत्युत्तरं दीयताम् ॥' इति ॥

---

१. 'अनुभावोऽश्रु.................लम्बनादयः । विषादग्लानिनिर्वेदमोहाद्या व्यभिचारिणः ॥' इति पाठान्तरं ग-पुस्तके. २. 'शोच्यं–' इत्यादेः '–द्रष्टव्यः ।' इत्यन्तस्य पाठस्य स्थाने ग-पुस्तके 'नवपल्लवसंस्तरेऽपि ते मृदु दूयेत यदङ्गमर्पितम् । तदिदं विषहिष्यते कथं वद वामोरु? चिताधिरोहणम् ॥' इत्येव दृश्यते. ३. 'विलापे' घ.

अथ रौद्रः—

[1]रौद्रः क्रोधस्थायिभावो रक्तो रुद्राधिदैवतः ।
[1]आलम्बनमरिस्तत्र तच्चेष्टोद्दीपनं मतम् ॥ २२७ ॥
मुष्टिप्रहारपातनविकृतच्छेदावदारणैश्चैव ।
संग्रामसंभ्रमाद्यैरस्योद्दीप्तिर्भवेत्प्रौढा ॥ २२८ ॥
[2]भ्रूविभङ्गौष्ठनिर्दंशबाहुस्फोटनतर्जनाः ।
आत्मावदानकथनमायुधोत्क्षेपणानि च ॥ २२९ ॥
उग्रतावेगरोमाञ्चस्वेदवेपथवो मदः ।
अनुभावास्तथाक्षेपक्रूरसंदर्शनादयः ॥ २३० ॥
मोहामर्षादयस्तत्र भावाः स्युर्व्यभिचारिणः ।

यथा—

[2]'कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकं
मनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः ।
नरकरिपुणा सार्धं तेषां सभीमकिरीटिना-
मयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम् ॥'

---

यस्य सः ॥ रौद्ररसमाह—**रौद्र इति** । तच्चेष्टा रिपुचेष्टा । तां विशिष्याह—**मुष्टीति** । विकृतं विरुद्धाचरणम् । छेदः खड्गादिना । **अवदारणं** शूलादिना । **अस्य** रौद्रस्य । 'अवदानं कर्मवृत्तम्' इत्यमरः ॥ **कृतमिति** । द्रोणशिरश्छेदेन क्रुद्धस्याश्वत्थाम्नोऽर्जुनंप्रति संबोध्योक्तिरियम् । इदं मत्पितृशिरश्छेदरूपं गुरुपातकं तत्कारणं कर्म यैरुद्यतायुधैर्मर्यादाशून्यैरत एव मनुजपशुभिर्भवद्भिः कृतमनुमतं दृष्टं वा, नरकरिपुणा कृष्णेन सार्धं भीमकिरीटिसहितानां तेषां मेदोमांसैरयमहं दिशां दिगवस्थितभूतानां बलिं करोमीत्यर्थः । अयमेतत्क्षणवर्त्येव । अत्राश्वत्थाम्नः क्रोधस्यार्जुनादिरालम्बनम् । तदकार्यमुद्दीपनम् । तादृशगर्जनमनुभावः ॥ ननु

---

1. रौद्र इति । क्रोधस्थायिभावको द्विषदालम्बनकस्तदपकाराद्युद्दीपितो विकत्थनाद्यनुभावितो गर्वादिसंचारितो रौद्र इति ॥

2. कृतमिति । इह रौद्ररसव्यञ्जनक्षमा वृत्तिर्नास्ति, अतः 'नवोच्छलितयौवनस्फुरदखर्वगर्वज्वरे मदीयगुरुकार्मुकं गलितसाध्वसं वृश्चति । अयं पततु निर्दयं दलितदृप्तभूभृद्गलस्खलद्रुधिरघस्मरो मम परश्वधो भैरवः ॥' इदमुदाहार्यम् । एषा च रामभद्रं प्रति परशुरामस्योक्तिः । अत्र महोद्धता वृत्ती रौद्रस्य परमौजस्वितां परिपुष्णाति ॥

---

१. 'आलम्बनं विरोधी स्यात्' ग. २. 'हस्तनिष्पेषपारुष्यरक्ताक्षाद्यनुभावभूः । मोहामर्षोग्रतासूयावेगादिव्यभिचारिमान् ॥' इति ग.

अस्य युद्धवीराद्भेदमाह—

रक्तास्यनेत्रता चात्र भेदिनी युद्धवीरतः ॥ २३१ ॥

अथ वीरः—

उत्तमप्रकृतिर्वीर उत्साहस्थायिभावकः ।
महेन्द्रदैवतो हेमवर्णोऽयं समुदाहृतः ॥ २३२ ॥
[1]आलम्बनविभावास्तु विजेतव्यादयो मताः ।
विजेतव्यादिचेष्टाद्यास्तस्योद्दीपनरूपिणः ।
अनुभावास्तु तत्र स्युः सहायान्वेषणादयः ॥ २३३ ॥
संचारिणस्तु धृतिमतिगर्वस्मृतितर्करोमाञ्चाः ।
[1]स च दानधर्मयुद्धैर्दयया च समन्वितश्चतुर्धा स्यात् ॥ २३४ ॥

[2]स च वीरो दानवीरो धर्मवीरो युद्धवीरो दयावीरश्चेति चतुर्विधः ।
तत्र [2]दानवीरो यथा परशुरामः—

---

रौद्रयुद्धवीरयो रिपुरालम्बनं विभाव इत्यनयोरभेद एवापतित इति तयोर्भेदं दर्शयितुमाह—**अस्येति** । रौद्रस्येत्यर्थः । रक्तास्यनेत्रताव्यङ्ग्यः क्रोध एव भेदः । तथा चोभयत्र रिपोरालम्बनत्वेऽपि क्रोधाविर्भावे रौद्रः; उत्साहाविर्भावे वीर इत्यनयोर्भेद इति भावः ॥ वीररसमाह—**उत्तमप्रकृतिरिति** । उत्तमा धीरोदात्तरूपा प्रकृतिर्नायको यत्रेत्यर्थः । यद्वा उत्तमा चमत्कारातिशयाधायकतया रसान्तरादुत्कृष्टा प्रकृतिः स्वभावो यस्येत्यर्थः । **विजेतव्यादिचेष्टाद्येत्यादिना** दाने सत्त्वाध्यवसायादेर्धर्मे धर्मशास्त्राध्ययनादेर्दयायां दीनस्य कातरोक्त्यादेर्ग्रहणम् । **सहायः** सहकारी । स च युद्धे सैन्यं दाने वित्तं धर्मे द्रव्यमन्त्रादि दयायां त्यागादि । रोमाञ्चस्य संचारिभावत्वाभावात्तज्जनकहर्षे लक्षणा । **स चेति** । वीरश्चेत्यर्थः । दानादावु-

---

1. **स चेति** । स च चतुर्धेति प्रायोवादः । 'राज्यं च–' ( पृ० १८९ ) इत्यत्रैव 'ते प्रकामं विप्लवन्तां मा भूत्सत्यस्य विप्लवः' इत्युत्तरार्धव्यत्यासेन श्लोकान्तरतानयने सत्यवीरस्यापि संभवात् । न च सत्यस्यापि धर्मान्तर्भावेन धर्मवीररसे एव तद्वीरस्याप्यन्तर्भाव इति वक्तुं युज्यते । दानदययोरपि धर्मान्तर्भावतया तद्वीरयोरपि धर्मवीरात्पृथग्गणनानौचित्यात् । एवं पाण्डित्यवीरबलवीरादयोऽपि संभवन्ति । तत्राद्यो यथा—'अपि वक्ति गिरांपतिः स्वयं यदि तासामधिदेवतापि वा । अयमस्मि पुरो हयाननस्मरणोल्लङ्घितवाङ्मयाम्बुधिः ॥' अत्र गीष्पत्याद्यालम्बनः सभादर्शनोद्दीपितो निखिलविद्वत्तिरस्कारानुभावितो गर्वेण संचारिणा परिपोषितो वक्तुरुत्साहः प्रतीयते ॥

2. **दानवीर इति** । अत्रेदमुदाहार्यम्—'कियदिदमधिकं मे यद्द्विजायार्थयित्रे कव-

---

१. 'आलम्बन–' इत्यादेः '–रोमाञ्चाः' इत्यन्तस्य पाठस्य स्थाने 'प्रतिनेतृतदुत्कर्षालम्बनोद्दीपनान्वितः । चातुर्यामन्त्रणस्थैर्यप्रसादाद्यनुभावभूः ॥ क्रोधाभिमानहासप्रमुखव्यभिचारिपरिपुष्टः ।' इति पाठो ग-पुस्तके. २. 'स–'इत्यादिः 'रामः ।' इत्यन्तः पाठो नास्ति ग-पुस्तके.

'त्यागः सप्तसमुद्रमुद्रितमहीनिर्व्याजदानावधिः' इति।

[1]अत्र परशुरामस्य त्यागे उत्साहः स्थायिभावः, संप्रदानभूतब्राह्मणैरालम्बनविभावैः [2]सत्त्वाध्यवसायादिभिश्चोद्दीपनविभावैर्विभावितः, सर्वस्वत्यागादिभिरनुभावैरनुभावितो, हर्षधृत्यादिभिः संचारिभिः पुष्टिं नीतो दानवीरतां भजते।

---

त्साहसंभवादिति भावः। **त्याग इति**। सप्तभिः समुद्रैर्मुद्रिता वेष्टिता या मही तस्या निर्व्याजं निरुपाधि यद्दानं तदेवावधिर्यस्य सः। **सत्त्वस्य** गुणविशेषस्य

---

चमरमणीयं कुण्डले चार्पयामि। अकरुणमवकृत्य द्राक्कृपाणेन निर्यद्बहलरुधिरधारं मौलिमावेदयामि॥' इति। एषा द्विजवेषाय शक्राय कवचकुण्डलदानोद्यतस्य कर्णस्य तद्दानविस्मितान्सभ्यान्प्रत्युक्तिः। अत्र याचमान आलम्बनम्। तदुदीरिता स्तुतिरुद्दीपिका। कवचादिवितरणं तत्र लघुत्वबुद्ध्यादिकं चानुभावः। मे इत्यर्थान्तरसंक्रमितवाच्यध्वन्युत्थापितो गर्वः स्वकीयलोकोत्तरपितृजन्यत्वादिस्मृतिश्च संचारिणौ। वृत्तिरप्यत्र तत्तदर्थानुरूपोद्गमविरामशालितया सहृदयैकचमत्कारिणी। तथाहि—उत्साहपोषकं कवचकुण्डलार्पणयोर्लघुत्वनिरूपणं विधातुं पूर्वार्धे तदनुकूलशिथिलबन्धात्मिका। उत्तरार्धे तु मौलितः प्राग्वक्तृगतगर्वोत्साहपरिपोषणायोद्धता ततः परं ब्राह्मणे सविनयत्वं प्रकाशयितुं तन्मूलीभूतं गर्वराहित्यं ध्वनयितुं पुनः शिथिलैव। अतएव 'आवेदयामि' इत्युक्तम्। न तु ददामि वितरामीति वा। इदं तु नोदाहरणीयम्—'यस्योद्दामदिवानिशार्थिविलसद्दानप्रवाहप्रथामाकर्ण्यावनिमण्डलागतविपद्बन्दीन्द्रवृन्दाननात्। ईर्ष्यानिर्भरफुल्लरोमनिकरव्यावल्गदूधःस्रवत्पीयूषप्रकरैः सुरेन्द्रसुरभिः प्रावृट्पयोदायते॥' अत्रेन्द्रसभामध्यगतसकलनिरीक्षकालम्बनः, अवनिमण्डलागतविपद्बन्दीन्द्रवदनविनिर्गतराजदानवर्णनोद्दीपितः, ऊधःप्रस्नुतपीयूषप्रकरैरनुभावितः, असूयादिसंचारिभिः परिपोषितोऽपि कामगवीगत उत्साहो राजस्तुतिगुणीभूत इति न रसव्यपदेशहेतुः। अतएवेदमपि नोदाहरणम्—'साब्धिद्वीपकुलाचलां वसुमतीमाक्रम्य सप्तान्तरां सर्वां द्यामपि सस्मितेन हरिणा मन्दं समालोकितः। प्रादुर्भूतपरप्रमोदविदलद्रोमाञ्चितस्तत्क्षणं व्यानम्रीकृतकंधरोऽसुरवरो मौलिं पुरो न्यस्तवान्॥' इह च भगवद्वामनालम्बनः, तत्कर्तृकमन्दनिरीक्षणोद्दीपितः, रोमाञ्चादिभिरनुभावितः, हर्षादिभिः पोषितः, उत्साहो व्यज्यमानोऽपि गुणः। प्रागन्यगतस्येव प्रकृते राजगतस्यापि तस्य राजस्तुत्युत्कर्षकत्वात्। एतेन 'त्यागः सप्तसमुद्र–' इति प्रकृतोदाहरणं न रमणीयम्। तस्य गुणीभूतव्यङ्ग्यत्वेन रसध्वनिप्रसङ्गेऽनुदाहरणीयत्वात्। 'उत्पत्तिर्जमदग्नितः स भगवान्देवः पिनाकी गुरुर्वीर्यं तत्र न मद्गिरामनुपमं व्यक्तं हि तत्कर्मभिः। त्यागः सप्तसमुद्रमुद्रितमहीनिर्व्याजदानावधिः सत्यब्रह्मतपोनिधेर्भगवतः किं किं न लोकोत्तरम्॥' इति तु पूर्णः श्लोकः॥

---

१. 'अत्र–' इत्यादिः '–भजते।' इत्यन्तः पाठो ग पुस्तके नास्ति. २. 'पात्रप्राप्तसाम्राज्यादिभिः' क.

धर्मवीरो यथा युधिष्ठिरः—

'राज्यं च वसु देहश्च भार्या भ्रातृसुताश्च ये ।
यच्च लोके ममायत्तं तद् धर्माय सदोद्यतम् ॥'

युद्धवीरो यथा श्रीरामचन्द्रः—

भो लङ्केश्वर! दीयतां जनकजा रामः स्वयं याचते
कोऽयं ते मतिविभ्रमः स्मर नयं नाद्यापि किंचिद्गतम् ।
नैवं चेत्खरदूषणत्रिशिरसां कण्ठासृजा पङ्किलः
पत्री नैष सहिष्यते मम धनुर्ज्याबन्धबन्धूकृतः ॥'

दयावीरो यथा जीमूतवाहनः—

'शिरामुखैः स्यन्दत एव रक्तमद्यापि देहे मम मांसमस्ति ।
तृप्तिं न पश्यामि तवापि तावत्किं भक्षणात्त्वं विरतो गरुत्मन्! ॥'

एष्वपि विभावादयः पूर्वोदाहरणवदूह्याः ।

अथ भयानकः—

**[1]भयानको भयस्थायिभावो [2]भूताधिदैवतः ।**
**स्त्रीनीचप्रकृतिः [3]कृष्णो मतस्तत्त्वविशारदैः ॥ २३५ ॥**

---

अध्यवसाय उद्रेकः । आदिना प्ररोचनादेर्ग्रहणम् ॥ **राज्यं चेति** । उद्यतमुपयुक्तम् । अत्र युधिष्ठिरस्य वैदिककर्मण्युत्साह एतादृशोक्त्यानुभावेनास्वाद्यमानः सामाजिकानां रसतामापद्यते ॥ **भो इति** । रावणं प्रति श्रीरामस्योक्तिरियम् । नयं नीतिम् । गतं नष्टम् । एवं जनकजादानम् । पत्री शरः । [4]आत्मनोऽसहनं पत्रिण्यारोपितम्, रिपुहनने तस्य प्रधानोपायत्वसूचनाय । ज्याबन्धबन्धूकृतः गुणयोजितः । अत्र श्रीरामस्य युद्धोत्साह एतादृशोक्त्यानुभावेनास्वाद्यमानः सामाजिकानां रसतामापद्यते ॥ **शिरामुखैरिति** । नाडीच्छेदैरित्यर्थः । मम जीमूतवाहनस्य । गरुत्मन्निति श्येनरूपधारिणः शक्रस्य संबोधनम् । अत्र जीमूतवाहनस्य कपोतरूपधारिधर्मात्मकपरदुःखप्रहरणोत्साहः स्वदेहमांसत्यागानुभावेनास्वाद्यमानः सामाजिकानां रसतामापद्यते ॥ भयानकरसमाह—**भयानक इति** । **स्त्रीनीचप्रकृतिरिति** । स्त्रीनीचनायक इत्यर्थः । 'बालस्त्रीनीचनायकः' इति [3]रुद्रपाठो-

---

1. भयानक इति । भयस्थायिभावको विकटाद्यालम्बनकस्तद्विकटकर्माद्युद्दीपितः पलायनाद्यनुभावितो जडतादिसंचारितो भयानक इति ॥
2. भूतेति । 'कामदेवो भयानकः' इति भरतोक्त्या 'कामाधिदैवतः' इति पाठः ।
3. रुद्रेति । श्रृङ्गारतिलककर्तू रुद्रभट्टस्य कथनादित्यर्थः ॥

---

१. 'एषु—' इति फक्किका नास्ति ग-पुस्तके. २. 'कालाधि—' क-ख-घ. ३. 'कृष्णवर्णोऽयं समुदाहृतः' ग. ४. 'आत्म—' इत्यादि 'सूचनाय' इत्यन्तं पुस्तकान्तरे नास्ति.

यस्मादुत्पद्यते भीतिस्तदत्रालम्बनं मतम् ।[1]
चेष्टा घोरतरास्तस्य भवेदुद्दीपनं पुनः ॥ २३६ ॥
अनुभावोऽत्र वैवर्ण्यगद्गदस्वरभाषणम् ।
प्रलयस्वेदरोमाञ्चकम्पदिक्प्रेक्षणादयः ॥ २३७ ॥
जुगुप्सावेगसंमोहसंत्रासग्लानिदीनताः ।
शङ्कापस्मारसंभ्रान्तिमृत्य्वाद्या व्यभिचारिणः ॥ २३८ ॥

यथा—'नष्टं[2] वर्षवरैः—' इत्यादि (१०३ पृ.) ।

अथ बीभत्सः—

जुगुप्सास्थायिभावस्तु बीभत्सः[I] कथ्यते रसः ।
नीलवर्णो महाकालदैवतोऽयमुदाहृतः ॥ २३९ ॥
दुर्गन्धमांसरुधिर[3]मेदांस्यालम्बनं मतम् ।
तत्रैव क्रिमिपाताद्यमुद्दीपनमुदाहृतम्[4] ॥ २४० ॥
[5]निष्ठीवनास्यवलननेत्रसंकोचनादयः ।
अनुभावास्तत्र मतास्तथा स्युर्व्यभिचारिणः ॥ २४१ ॥
मोहोऽपस्मार आवेगो व्याधिश्च मरणादयः ।

यथा—

'उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूच्छोथभूयांसि मांसा-
न्यंसस्फिक्पृष्ठपिण्डाद्यवयवसुलभान्युग्रपूतीनि जग्ध्वा ।

---

केर्बालनायकत्वमपि बोध्यम् । तस्यालम्बनस्य । संभ्रान्तिरुन्मादः ॥ नष्टमिति । अत्र वर्षवरादीनां नीचानां वानरवेषेणान्तःपुरप्रविष्टं विदूषकमालोक्य जायमानं भयं नाशाद्यनुभावेनास्वाद्यमानं सामाजिकानां रसतामापद्यते । स्त्रीनायको यथा—'इदं मघोनः कुलिशं धारासंनिहितानलम् । स्मरणं यस्य दैत्यस्त्रीगर्भपाताय कल्पते ॥' बालनायको यथा—'घोरमम्भोधरध्वानं निशम्य व्रजबालकाः । मातुरङ्के निलीयन्ते सकम्पविकृतस्वराः ॥' बीभत्सरसमाह—जुगुप्सेति । निष्ठीवनं थूत्कप्रक्षेपः । आस्यवलनं मुखसंवरणम् ॥ उत्कृत्योत्कृत्येति । श्मशाने

---

I. बीभत्स इति । जुगुप्सास्थायिभावको विण्मूत्राद्यालम्बनको दुर्गन्धाद्युद्दीपितो निष्ठीवनाद्यनुभावितो ग्लान्यादिसंचारितो बीभत्स इति ॥

---

१. ग-पुस्तके तु 'यस्मात्—' इत्यादेः '—चारिणः ॥' इत्यन्तस्य स्थाने—'व्याघ्राद्यालम्बनस्तत्तद्वैकृतोद्दीपनो मतः । कम्पप्रस्वेदरोमाञ्चमीलनाद्यनुभाववान् ॥ जडतादीनतात्रासमोहादिव्यभिचारियुक् ॥' इति पाठः. २. ग-पुस्तके तु 'ग्रीवाभङ्गाभिरामम्—' इति शाकुन्तलपद्यमुदाहृतम्. ३. 'पिशित' क-घ. ४. 'क्रिमिपाताद्यास्तस्योद्दीपनरूपिणः' ग. ५. 'निष्ठीवनास्य—' इत्यादेः 'मरणादयः ।' इत्यन्तस्य स्थाने 'निष्ठ्यूताद्यनुभावोऽत्र मोहाद्या व्यभिचारिणः' इति पाठो ग-पुस्तके.

आर्तः पर्यस्तनेत्रः प्रकटितदशनः प्रेतरङ्कः करङ्का-
दङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्यग्रमत्ति ॥'

अथाद्भुतः—

[1]अद्भुतो विस्मयस्थायिभावो [2]गन्धर्वदैवतः ॥ २४२ ॥
पीतवर्णो वस्तु लोकातिगमालम्बनं मतम् ।
[1]गुणानां तस्य महिमा भवेदुद्दीपनं पुनः ॥ २४३ ॥
स्तम्भः स्वेदोऽथ रोमाञ्चगद्गदस्वरसंभ्रमः ।
तथा नेत्रविकासाद्या अनुभावाः प्रकीर्तिताः ॥ २४४ ॥
वितर्कावेगसंभ्रान्तिहर्षाद्या व्यभिचारिणः ।

यथा—

'दोर्दण्डाञ्चितचन्द्रशेखरधनुर्दण्डावभङ्गोद्यत-
ष्टंकारध्वनिरार्यबालचरितप्रस्तावनाडिण्डिमः ।

शवं भुञ्जानं प्रेतं दृष्ट्वा माधवस्योक्तिरियम् । अयं प्रेतरङ्कः प्रेतदरिद्रः अङ्कस्थात् क्रोडस्थात् करङ्कात् मृतशरीरात् अस्थिसंस्थं स्थपुटगतं ग्रन्थिसंस्थमपि क्रव्यं मांसम्, अव्यग्रमव्याकुलं यथा स्यात्तथा अत्तीत्यन्वयः । क्रमेण भक्षणादव्यग्रता । भक्षणक्रममाह—उत्कृत्येति । प्रथमं कृत्तिं चर्म उत्कृत्योत्कृत्य पुनः पुनश्छित्त्वा अत्तीत्यनेनान्वयः । अथानन्तरम् । पृथूच्छोथेन महोत्फुल्लतया भूयांसि बहुलानि । अंसः स्कन्धः । स्फिक् नितम्बः । आदिना ऊरुपरिग्रहः । अंसाद्यवयवेषु सुलभानि उग्रपूतीनि उत्कटदुर्गन्धीनि जग्ध्वा भुक्त्वेत्यन्वयः । स्थपुटगतस्याकर्षणादार्तत्वं तदाकर्षणार्थं च दशनप्रकटनम् । कश्चिदाच्छिद्य नेष्यतीति भयात्पर्यस्तनेत्रत्वम् । '[3]करङ्कोऽस्थिशेषं शिरः स्थपुटो विकटगभीरभागः' इति **चण्डीदासः** । अत्र माधवस्य जुगुप्सा शवप्रेताभ्यामालम्बनाभ्यां पूतिगन्धाद्युद्दीपनेन तादृगुक्त्या आक्षेपलभ्येन निष्ठीवनादिना चानुभावेन तथैव मोहादिव्यभिचारिणा च संवलितो बीभत्सो रसः ॥ अद्भुतरसमाह—**अद्भुत इति** । लोकातिगं लोकातिवर्ति ॥ **दोर्दण्डेति** । दीर्घकालव्यापकेन हरधनुष्टंकारेण विस्मितस्य लक्ष्मणस्योक्तिरियम् । दोर्दण्डाभ्यामञ्चित आकुञ्चितो यश्चन्द्रशेखरस्य हरस्य धनुर्दण्डस्तस्यावभङ्गाय उद्यत उद्गतः । आर्यस्य श्रीरामस्य बालचरितानां प्रस्तावनायां गाने डिण्डिमो वाद्यभेदः ।

1. अद्भुत इति । विस्मयस्थायिभावको विस्मयजनककर्मकर्त्रालम्बनको विस्मयकर्माद्युद्दीपितश्चकिताद्यनुभावितो हर्षादिसंचारितोऽद्भुत इति ॥

2. गन्धर्वेति । नाट्यशास्त्रे तु 'अद्भुतो ब्रह्मदैवतः' इति दृश्यते ॥

3. करङ्क इति । 'करङ्कमस्तके' इति मेदिनी । 'करङ्कः प्रेतशरीरम्' इति केचित् ॥

१. 'तस्यैव च गुणोत्कर्ष उद्दीपनमुदीरितम् । रोमाञ्चाद्यनुभावोऽयं जाड्यादिर्व्यभिचारकः ॥' इति ग.

द्राक्पर्यस्तकपालसंपुटमिलद्ब्रह्माण्डभाण्डोदर-
भ्राम्यत्पिण्डितचण्डिमा कथमहो नाद्यापि विश्राम्यति ॥'

अथ शान्तः—

शान्तः शमस्थायिभाव उत्तमप्रकृतिर्मतः ॥ २४५ ॥
कुन्देन्दुसुन्दरच्छायः श्रीनारायणदैवतः ।
अनित्यत्वादिनाशेषवस्तुनिःसारता तु या ॥ २४६ ॥
परमात्मस्वरूपं वा तस्यालम्बनमिष्यते ।
पुण्याश्रमहरिक्षेत्रतीर्थरम्यवनादयः ॥ २४७ ॥
महापुरुषसङ्गाद्यास्तस्योद्दीपनरूपिणः ।
रोमाञ्चाद्याश्चानुभावास्तथा स्युर्व्यभिचारिणः ॥ २४८ ॥
निर्वेदहर्षस्मरणमतिभूतदयादयः ।

यथा—

'रथ्यान्तश्चरतस्तथा धृतजरत्कन्थालवस्याध्वगैः
सत्रासं च सकौतुकं च सदयं दृष्टस्य तैर्नागरैः ।
निर्व्याजीकृतचित्सुधारसमुदा निद्रायमाणस्य मे
निःशङ्कः करटः कदा करपुटीभिक्षां विलुण्ठिष्यति ॥'

---

पर्यस्त उत्क्षिप्तः कपालसंपुटः पिधानपात्राकारब्रह्माण्डोपरिभागः तेन द्राग् झटिति मिलत्संगच्छमानं ब्रह्माण्ड एव भाण्डं क्षुद्रस्थाली तस्योदरे भ्राम्यन् अतएव पिण्डितो बहुलीकृतश्चण्डिमा महत्त्वं यस्य । अद्यापि इदानीमपि । शरावाच्छन्नमुखस्थालीमध्ये जायमानः शब्दो बहुलो भवतीत्यभिप्रायेणेदम् । अत्र लक्ष्मणस्य विस्मयो धनुष्टंकारालम्बनेन तस्यातिदीर्घत्वगुणोद्दीपनेन एतादृगुक्त्या अनुभावनेन व्यक्त आश्चर्यरसतामापद्यते ॥ शान्तरसमाह—**शान्त इति** । अत्र निर्वेदः स्थायिभावः । एतत्पक्षे अवमाननीयत्वमेवालम्बनम् । निर्वेदस्य व्यभिचारित्वेन स्थायित्वायोगात्, शमस्य स्थायित्वेनानुभूयमानत्वाच्च ग्रन्थकृता तदुपेक्षितम्[1] । रोमाञ्चाद्या इत्याद्यपदेन दयादीनामपि ग्रहणम् ॥ **रथ्यान्तरिति** । कस्यचिज्ज्ञातनिर्वेदस्योक्तिरियम् । रथ्या गृहसमीपदेशः, तन्मध्ये चरतो भिक्षार्थं भ्रमतः । अध्वगैर्नागरैश्च बीभत्सवेषदर्शनेन त्रासः, अनुपादेयकन्थावधारणेन कौतुकम्, दीनत्वेन दया । निर्व्याजीकृतः कामादिनाशेन निष्प्रतिबन्धकीकृतो यश्चित्सुधाया ज्ञानामृतस्य रस आस्वादस्तस्य मुदा तज्जन्यानन्देन निद्रायमाणस्य मुद्रितनेत्रस्य ।

---

1. उपेक्षितमिति । अत्र यद्वक्तव्यं तत् 'शमो निरीहावस्थायाम्' इत्यत्राभिहितम् (१६६ पृ.) ॥

पुंष्टिस्तु महाभारतादौ द्रष्टव्या ।

निरहंकाररूपत्वाद्दयावीरादिरेष नो ॥ २४९ ॥

दयावीरादौ हि नागानन्दादौ जीमूतवाहनादेरन्तरा मलयवत्याद्यनुरागादेरन्ते च विद्याधरचक्रवर्तित्वाद्याप्तेर्दर्शनादहंकारोपशमो न दृश्यते । शान्तस्तु सर्वाकारेणाहंकारप्रशमैकरूपत्वान्न तत्रान्तर्भावमर्हति । ततश्च नागानन्दादेः शान्तरसप्रधानत्वमपास्तम् । ननु—

'न यत्र दुःखं न सुखं न चिन्ता न द्वेषरागौ न च काचिदिच्छा ।
रसः स शान्तः कथितो मुनीन्द्रैः सर्वेषु भावेषु समप्रमाणः ॥'

इत्येवंरूपस्य शान्तस्य मोक्षावस्थायामेवात्मस्वरूपापत्तिलक्षणायां प्रादुर्भावात्तत्र संचार्यादीनामभावात्कथं रसत्वमित्युच्यते—

युक्तवियुक्तदशायामवस्थितो यः शमः स एव यतः ।
रसतामेति तदस्मिन्संचार्यादेः स्थितिश्च न विरुद्धा २५०

---

'निर्बीजीकृत—' इति पाठेऽपि बीजं वासना तच्छून्यीकृतेत्यर्थः । करटः काकः ॥ ननु शान्ते दयाद्यतिशयसंभवेन दयावीरादिरेवायमित्यत आह—**निरहंकाररूपत्वादिति** । आदिना धर्मवीरदेवताविषयरतिप्रभृतीनां ग्रहणम् । **एष** शान्तरसः । तथा चाहंकारसंवलितो दयादिरेव दयावीरादेर्घटकः । तदितरः शान्तरस इति विशेषः । ततश्चेदृशविशेषावधारणाच्च । **नागानन्दे** दयावीरादिप्रधाने ग्रन्थविशेषे ॥ **न यत्रेति** । द्वेषो रिपूणामपचिकीर्षा । रागः सुहृदामुपचिकीर्षा । इच्छा वैषयिकसुखतदुपायेच्छा । भावेषु पदार्थेषु लोष्टकाञ्चनादिविभावादिषु सत्सु रागद्वेषराहित्येन सममविषमं प्रमाणं प्रतीतिर्येन । 'शमप्रधानः' इति पाठस्तु न मनोरमः, अर्थासंगतेः । तादृशदशायां व्यभिचारिभावादीनामसंभवात् । शम एव स्थायितया प्रधानं यत्र सः । **आत्मस्वरूपापत्तिलक्षणायां** परमात्मस्वरूपत्वप्राप्तिरूपायाम् ॥ **युक्तवियुक्तेति** । विषयेभ्यः प्रत्याहृत्य साक्षात्कर्तव्ये वस्तुनि मनो निधाय वर्तमानश्चिन्तासंतानवान् युक्तः । यस्य योगजधर्मसहकृतेन मनसा जिज्ञासितवस्तुसाक्षात्कारो जायते । यश्च भूतेन्द्रियजयी अणिमाद्याः कामसिद्धीर्दूरश्रवणाद्याश्चेन्द्रियसिद्धीरासादितवान् समाध्यन्वितो वियुक्तः । यस्य च योगजधर्म-

---

1. स एवेति । तादृशशम एव स्थायिभावो रसतां लभत इत्यर्थः ।

---

१. 'पुष्टिः—' इति फक्किका नास्ति ग-पुस्तके. २. 'अस्य दयावीरादेः सकाशाद्भेदमाह' इत्यधिकं ग-पुस्तके. ३. 'नागानन्दादौ' इति नास्ति क-घ-पुस्तकयोः. ४. '—वाहनादौ' क-घ. ५. आदिशब्दो नास्ति क-घ-पुस्तकयोः. ६. 'सर्वथापि' ग. ७. 'तत्र स संभवितुमर्हति' ग. ८. 'नन्दे' क-घ. ९. 'शमप्रधानः' क-ख-घ. १०. 'पदार्थेषु' नास्ति पुस्तकान्तरे. ११. 'लोष्टकाञ्चनादि' नास्ति पुस्तकान्तरे. १२. 'राग—' इत्यादि 'असंभवात्' इत्यन्तः पाठो नास्ति पुस्तकान्तरे.

यश्चास्मिन्सुखाभावोऽप्युक्तस्तस्य वैषयिकसुखपरत्वान्न विरोधः।
उक्तं हि—

> 'यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम्।
> तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम्॥'
> 'सर्वाकारमहंकाररहितत्वं व्रजन्ति चेत्।
> अत्रान्तर्भावमर्हन्ति दयावीरादयस्तथा॥'

आदिशब्दाद्धर्मवीरदानवीरदेवताविषयरतिप्रभृतयः।

तत्र देवताविषया रतिर्यथा—

> 'कदा वाराणस्यामिह सुरधुनीरोधसि वस-
> न्वसानः कौपीनं शिरसि निदधानोऽञ्जलिपुटम्।
> अये गौरीनाथ! त्रिपुरहर! शंभो! त्रिनयन!
> प्रसीदेति क्रोशन्निमिषमिव नेष्यामि दिवसान्॥'

अथ मुनीन्द्रसंमतो वत्सलः—

**स्फुटं चमत्कारितया वत्सलं च रसं विदुः।**
**स्थायी वत्सलतास्नेहः पुत्राद्यालम्बनं मतम्॥ २५१॥**

---

सहकृतानि बाह्येन्द्रियाणि स्वे स्वे विषये महत्त्वसंनिकर्षादिसहकारिनिरपेक्षाणि वर्तन्ते स एव युक्तवियुक्तः। तद्दशायामित्यर्थः। अस्मिञ्शान्तरसे॥ नन्वत्र शमरूपसुखसत्त्वेन न सुखमित्यसंगतमत आह—**यच्चेति**। तृष्णाक्षयसुखस्य शमसुखस्य। एते कामसुखदिव्यसुखे॥ **सर्वाकारं** सर्वप्रकारम्। एतेनाहंकारसामान्याभावः प्रतीयते। (**सर्वेति**। सर्वं देहेन्द्रियादि आकार आश्रयो यस्य तत्तथा। अहंकारोऽभिमानः, तद्रहितत्वं तद्भावं व्रजन्ति। दयावीरादिनायका इति शेषः। यदि दयावीरादिनायका देहेन्द्रियादिविषयकाभिमानशून्या भवन्ति, तदा दयावीरादयो रसाः शान्तरसस्वरूपा भवन्तीति तदर्थः। अभिमानश्च देहेन्द्रिययोरहमित्यारोपः। देहादिसंबन्धिनि पुत्रादौ ममेत्यारोपश्च।) अत्र शान्तरसे॥ **तत्रेति**। शान्तरसान्तर्भूतेषु दयावीरादिषु मध्ये। शान्तरसस्यान्तर्भूतदेवताविषयरतिरित्यर्थः॥ **कदेति**। कस्यचिच्छैवस्योक्तिरियम्। अत्र कौपीनपरिधानेच्छया अहंकारनिवृत्तिः प्रतीयते॥ केषांचिन्मतं वत्सलरसमाह—**स्फुटमिति**। उत्कटमित्यर्थः। विदु-

---

१. 'किं च तस्यामवस्थायां सुखमप्यस्ति' इति ग. २. 'तथा चोक्तम्' ग. ३. 'इति' इत्यधिकं ग-पुस्तके. ४. 'दानवीर' इति नास्ति ग-पुस्तके. ५. 'रतिभावादयः' ग. ६. 'निरहंकारधर्मवीरो यथा जनकादिः' इत्यधिकं ग-पुस्तके. ७. 'देवताविषयरतिभावादयः' ग. ८. 'तत्र स्थायी वत्सलता' इति ग. ९. 'सर्वेति—' इत्यारभ्य 'ममेत्यारोपश्च' इत्यन्तः पाठः पुस्तकान्तरे नास्ति. क्रोडपत्रस्थ इवं प्रतिभाति.

उद्दीपनानि तच्चेष्टा विद्याशौर्यदयादयः ।
आलिङ्गनाङ्गसंस्पर्शशिरश्चुम्बनमीक्षणम् ॥ २५२ ॥
पुलकानन्दबाष्पाद्या अनुभावाः प्रकीर्तिताः ।
संचारिणोऽनिष्टशङ्काहर्षगर्वादयो मताः ॥ २५३ ॥
पद्मगर्भच्छविर्वर्णो दैवतं लोकमातरः ।

यथा—

'यदाह धात्र्या प्रथमोदितं वचो ययौ तदीयामवलम्ब्य चाङ्गुलीम् ।
अभूच्च नम्रः प्रणिपातशिक्षया पितुर्मुदं तेन ततान सोऽर्भकः ॥'

एतेषां च रसानां परस्परविरोधमाह—

आद्यः करुणबीभत्सरौद्रवीरभयानकैः ॥ २५४ ॥

---

**रिति** । केचित् इति शेषः । अन्ये पुनरस्य भावकाव्यत्वमेवेच्छन्ति । तन्न । चमत्कारातिशययोगेन रसत्वस्यैव युक्तत्वात् । **वत्सलता** प्रेम, तत्सहितः स्नेहो रतिः । सा च लालनपालनादीच्छा । पुत्रादीत्यादिना भ्रात्रादिग्रहणम् । भ्रात्रालम्बनो यथा—'देशे देशे कलत्राणि देशे देशे च बान्धवाः । तं तु देशं न पश्यामि यत्र भ्राता सहोदरः ॥' इति । अत्र श्रीरामस्य भ्रातृस्नेहस्तादृशोक्त्या अनुभावेनास्वाद्यमानो रसतामेति । केचित्तु 'सहोदरः इति सहः संग्रामसहः, अदरो निर्भयश्च' इति व्याकुर्वन्ति, तन्मते तदुभयमुद्दीपनविभावः ॥ **यदाहेति** । पितुर्दिलीपस्य । स रघुः । अत्र दिलीपस्नेहस्य रघुरालम्बनम् । पादत्रयोक्ता तच्चेष्टा उद्दीपनम् । अन्येषामाक्षेपालाभः । अत्र रसानां तत्तद्वर्णकथनं तत्तद्देवताभिप्रायेण ॥ **आद्य इति** । शृङ्गार

---

1. अन्ये इति । काव्यप्रकाशानुयायिनः । तेषामयमभिप्रायः—'यदाह धात्र्या—' इत्यादिषु वात्सल्यलक्षणा रतिरेव जागर्ति । न तेन वत्सलो रसोऽङ्गीकरणीयः । भावत्वेनैव गतार्थत्वात् । यदि स च रसत्वव्यपदेशमर्हति तदा भगवदालम्बनो रोमाञ्चाद्यनुभावितो हर्षादिसंचारितो भागवतादिश्रवणसमये भगवद्भक्तैः स्फुटमनुभूयमानो भक्तिरसः कुतो न स्यात् । भगवदनुरागरूपा भक्तिश्चात्र स्थायिभावः । उक्तं च शाण्डिल्यमुनिना—'सा परानुरक्तिरीश्वरे' इति । न चायं शान्तेऽन्तर्भवति । अनुरागस्य वैराग्यविरुद्धत्वात् । नन्वसावपि रसत्वव्यपदेशं लभतां का क्षतिरिति चेत् । न । अन्यथैवोपपत्तौ मुनिशासनातिक्रमेण रसानां नवत्वाधिककल्पने मानाभावादिति संक्षेपः ॥

---

१. 'तच्चेष्टोद्दीपनं प्रोक्तमनुभावास्तथा पुनः । अश्रुपातसरोमाञ्चचुम्बनालिङ्गनादयः ॥ औत्सुक्यधृतिहर्षाद्याः कथिता व्यभिचारिणः । हरिद्वर्णोपमस्तस्य दैवतं लोकमातरः ॥' इति ग. २. क-पुस्तके तु 'यदाह—' इत्यतः प्राक् 'एह्येहि वत्स रघुनन्दन पूर्णचन्द्र चुम्बामि मूर्धनि चिरं च परिष्वजे त्वाम् । आरोप्य वा हृदि दिवानिशमुद्वहामि वन्देऽथवा चरणपुष्करकद्वयं ते ॥' इति श्लोको दृश्यते. ३. 'एतेषां च' इत्यादिः 'उन्मादः' इत्यन्तः पाठो ग-पुस्तके नास्ति.

भयानकेन करुणेनापि हास्यो विरोधभाक् ।
करुणो हास्यशृङ्गाररसाभ्यामपि तादृशः ॥ २५५ ॥
रौद्रस्तु हास्यशृङ्गारभयानकरसैरपि ।
भयानकेन शान्तेन तथा वीररसः स्मृतः ॥ २५६ ॥
शृङ्गारवीररौद्राख्यहास्यशान्तैर्भयानकः ।
शान्तस्तु वीरशृङ्गाररौद्रहास्यभयानकैः ॥ २५७ ॥
शृङ्गारेण तु बीभत्स इत्याख्याता विरोधिता ।

आद्यः शृङ्गारः । एषां च समावेशप्रकारा वक्ष्यन्ते ।

कुतोऽपि कारणात्क्वापि स्थिरतामुपयन्नपि ॥ २५८ ॥
उन्मादादिर्न तु स्थायी न पात्रे स्थैर्यमेति यत् ।

यथा विक्रमोर्वश्यां चतुर्थेऽङ्के पुरूरवस उन्मादः ।

[2]रसभावौ तदाभासौ भावस्य प्रशमोदयौ ॥ २५९ ॥
संधिः शबलता चेति सर्वेऽपि रसनाद्रसाः ।

[2]रसनधर्मयोगित्वाद्भावा[1]दिष्वपि रसत्वमुपचारादित्यभिप्रायः ।

---

इत्यर्थः । विरोधभाक् इत्यग्रेणान्वयः । शोकजुगुप्साभयसत्त्वेन रतेरसंभवादिति भावः । एवमग्रेऽपि । तादृश इति विरोधभाक् । स्थानत्रये 'विरोधभाक्' इत्यनेनान्वयः ॥ ननु शृङ्गारादावुन्मादादेरपि संभवात्कथं रत्यादिस्थायिभावत्वं नियतमित्यत आह—कुतोऽपीति । क्वापि तद्रसविशेषे । पात्रे तद्रसत्वावच्छिन्ने ॥ इदानीं रसपदस्य मुख्यलाक्षणिकार्थभेदज्ञापनार्थमाह—रसभावाविति । रसनादानन्दसंवलितज्ञानसंबन्धात् रसा रसपदप्रतिपाद्याः । उपचारादिति । रत्या-

---

1. भावादिष्विति । आदिपदेन भावादयः सप्त निर्दिष्टा एव गृह्यन्ते, रसानुबन्धतया तत्रैवोपचाराश्रयणस्यौचित्यात्, रस्यत इति दर्शितव्युत्पत्तियोगस्यापि तत्रैव तात्पर्यात् । एवं चादिपदार्थेन वा निरूपितव्युत्पत्तिबलेन काव्यभेदनिरूपणावसरे वस्त्वलंकारध्वनयो न गृह्यन्त इति सूक्ष्मेक्षिकया निरीक्षितव्यम् । न स्यादप्येवम्, यदि 'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः' ( ना. शा. ६ अ. ) इति रसशब्दो योगरूढो न भवेत् । अत एव रसनधर्मयोगमात्रेण यत्र क्वापि कविकर्मणि यथाकथंचित्परम्परया रसस्पर्शो निरस्तो रसगङ्गाधरकारादिभिरित्युक्तं प्राक् ( २१ पृ. ) । यत्तु धर्मदत्तेन 'रसे सारश्चमत्कारः—' इत्यादि प्रत्यपादि ( ७८ पृ. ) कविराजेनैतत्पर्यस्कारि तदपि वस्त्वलंकाररसादिध्वनिलक्षणे विश्राम्यत्किं विशिष्यात् । तत्रापि चमत्कृतितरतमभाव इति चेत्, रसादावपि तथेति किं महाकविसंप्रदायाकुलीकरणेनेति ॥

---

1. 'रस-' इत्यतः प्राक् 'अथ भावादीनामपि रसरूपत्वमाह—' इत्यधिकं ग-पुस्तके. 2. 'तत्र रसस्वरूपमुक्तं' इति ग-

[1]भावादय उच्यन्ते—

संचारिणः प्रधानानि देवादिविषया रतिः ॥ २६० ॥
उद्बुद्धमात्रः स्थायी च भाव इत्यभिधीयते ।
'[1,2]न भावहीनोऽस्ति रसो न भावो रसवर्जितः ।
परस्परकृता सिद्धिरनयो रसभावयोः ॥'

इत्युक्तदिशा परमालोचनया परमविश्रान्तिस्थानेन रसेन सहैव

---

दिस्थायिभावानामभावेन मुख्यलक्षणायोगादिति भावः । न चात्र देवादिविषयरतिसत्त्वात्कथं स्थायिभावाभाव इति वाच्यम् । कान्तादिविषयरतेरेव स्थायित्वोपपादनात् ॥ **संचारिण इति ।** यथा विभावादिरभिव्यक्तो रत्यादिश्चिदानन्दचमत्काररूपत्वेन परिणतो रसतामापद्यते, तथा स्वकार्यकारणाभ्यामभिव्यक्तो देवादिविषयरत्यादिश्चिदानन्दरूपतां प्राप्तो भावत्वं प्राप्नोति । चमत्कारसत्त्वासत्त्वाभ्यामनयोर्भेद इति भावः ॥ संचारिभावानां प्रधानत्वमुपपादयति—**न भावहीन इति ।**

---

1. न भावेति । भावहीनो भावासंवलितो रसो नास्ति । न भवतीत्यर्थः । यतो भावेभ्य एव सामान्यगुणयोगेन रसा निष्पद्यन्ते । तथा रसवर्जितो भावोऽपि नास्ति । तदुक्तम्—'योऽर्थो हृदयसंवादी तस्य भावो रसोद्भवः । शरीरं व्याप्यते तेन शुष्ककाष्ठमिवाग्निना ॥' इति ॥

---

१. 'भावादीनां स्वरूपमाह' इति ग. २. ग-पुस्तके तु "न भाव—" इत्यस्य स्थाने 'यथा नरिच—' इति श्लोकोऽस्ति, ततः 'इत्युक्तदिशोद्रेकं प्राप्य रसस्य प्राधान्येऽपि राजानुगतविवाहप्रवृत्तभृत्यवदापाततो यत्र प्राधान्येनाभिव्यक्ता व्यभिचारिणः स भावः ।' यथा—'जाने कोपपराङ्मुखी प्रियतमा—' (इत्यादि) । अत्र विधिं प्रत्यसूयैव प्राधान्येनाभिव्यक्ता चमत्कारभूमित्वात् । देवमुनिगुरुनृपादिविषया रतिर्भाव एव । कान्ताविषया रतिः परिपुष्टदशया शृङ्गारः । अपरिपुष्टे तु भावः । 'निरुपादानसंभारमभित्तावेव—' (इत्यादि)। उद्बुद्धमात्रस्थायी यथा—'स्मरत्यग्रेऽस्ति पथिकः प्रपापाल्याञ्जलिं स्पृशन् । सापि स्मरति वामाक्षी भजते सप्तवारिधीन् ॥' अत्र परस्परानुरागलक्षणाया रतेरुद्बोधमात्रम् । नत्वनुभावादिभिः परिपोषः । अनौचित्यप्रवृत्तत्व आभासो रसभावयोः । तदुक्तं ध्वनिकृता—'अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम् । प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत्परा ॥' अनौचित्यं तु 'उपनायकनिष्ठत्वं तथा तूभयनिष्ठता । नीचपात्रगतत्वं च (तथा) नायकनिष्ठता ॥ प्रतिनायकनिष्ठत्वं तिर्यग्विषयतादिकम् ॥ एवं रतेरनौचित्यं गुर्वादौ हास्यरौद्रयोः । भयस्योत्तमपात्रत्वं धीरस्याधमपात्रता ॥ दैन्यादिकं चोत्तमस्य राज्ञो राजान्तरस्तुतिः । एवमादिष्वनौचित्यं चिन्तनीयं विचक्षणैः ॥' प्रथमं यथा—'अत्ता एत्थ—' इत्यादि । द्वितीयं यथा—रावणस्य सीतानुरागवर्णनम् । तृतीयं यथा—भिल्लीरतवर्णनम् । चतुर्थं यथा—'स्तुमः कं वामाक्षि क्षणमपि विना यं न रमसे—' (इत्यादि)। पञ्चमं यथा—हयग्रीववधे हयग्रीवस्य जलक्रीडादिवर्णनम् । तिर्यग्विषयत्वं यथा—'मधु द्विरेफः—' (इत्यादि)। एवमन्यदप्यूह्यम् । भावाभासो यथा—'राकासुधाकरमुखी तरलायताक्षी—' (इत्यादि) । 'भावस्य शान्तिरुदयः संधिः शबलता तथा'। क्रमेणोदाहरणम्—'तस्याः सान्द्र—' इति । अत्र कोपस्य प्रशमः । 'एकस्मिञ्शयने विपक्षरमणी—' (इत्यादि) । अत्रौत्सुक्याभावस्योदयः । 'उत्सिक्तस्य तपः पराक्रमनिधेरभ्यागमादेकतः—' (इत्यादि) । "अत्रावेगहर्षयोः संधिः ।" इति पाठभेदः.

वर्तमाना अपि राजानुगतविवाहप्रवृत्तभृत्यवदापाततो यत्र प्राधान्येनाभिव्यक्ता व्यभिचारिणो देवमुनिगुरुनृपादिविषया च रतिरुद्बुद्धमात्रा विभावादिभिरपरिपुष्टतया रसरूपतामनापद्यमानाश्च स्थायिनो भावा भावशब्दवाच्याः । तत्र व्यभिचारी यथा—'एवंवादिनि देवर्षौ–' इत्यादि (१५५ पृ.)। अत्रावहित्था ।

देवविषया रतिर्यथा मुकुन्दमालायाम्—

'दिवि वा भुवि वा ममास्तु वासो नरके वा नरकान्तक! प्रकामम् ।
अवधीरितशारदारविन्दौ चरणौ ते मरणेऽपि चिन्तयामि ॥'

मुनिविषया रतिर्यथा—

'विलोकनेनैव तवामुना मुने! कृतः कृतार्थोऽस्मि निबर्हितांहसा ।
तथापि शुश्रूषुरहं गरीयसीर्गिरोऽथवा श्रेयसि केन तृप्यते ॥'

राजविषया रतिर्यथा मम—

'त्वद्वाजिराजिनिर्धूतधूलीपटलपङ्किलाम् ।
न धत्ते शिरसा गङ्गां भूरिभारभिया हरः ॥'

एवमन्यत् ।

---

**एवंवादिनीति** । देवर्षौ नारदे । अत्र शिवप्रसङ्गजातहर्षसूचकस्य मुखरागादेर्लज्जया गोपनमवहित्था । सा चाधोमुखत्वव्यङ्ग्यलज्जया कारणेन लीलाकमलपत्रगणनरूपव्यापारान्तरासङ्गेन च झटिति प्रतीयत इति तस्याः प्रधानत्वम् । विभावादीनामत्यन्ततिरस्कृतत्वेन शृङ्गारस्याप्रधानत्वम् ॥ **दिवि वेति** । हे नरकान्तक! श्रीकृष्ण । मरणेऽपीत्यपिना इदानीम् । अत्र वक्तुः श्रीकृष्णभक्तीच्छा रतिः ॥ **विलोकनेनेति** । नारदं प्रति श्रीकृष्णस्योक्तिरियम् । निबर्हितांहसा विनाशितपापेन ॥ **त्वद्वाजीति** । राजानं प्रति कस्यचिदुक्तिरियम् ॥ गुरुविषया रतिर्यथा—'असद्गोत्रमहत्तरः क्रतुभुजामद्यायमाद्यो रविर्यज्वानो वयमद्य ते भगवती भूरद्य राजन्वती । अद्य स्वं बहु मन्यते सहचरैरस्माभिराखण्डलो येनैतावदरुन्धतीपतिरपि स्वेनानुगृह्णाति नः ॥' अत्र दशरथस्य वसिष्ठे गुरौ रतिः ॥ पित्रोरपि गुरुत्वात्तद्विषया रतिर्यथा—'जीवत्सु तातपादेषु नवे दारपरिग्रहे । मातृभिश्चिन्त्यमानानां ते हि नो दिवसा गताः ॥' अत्र श्रीरामस्य पित्रो रतिः ॥ नृपादीत्यादिपदेन मित्रादेर्ग्रहणम् । तत्र यथा—'अद्य राज्यं मया प्राप्तमद्य वाली हतो मया । हरीणामद्य पूज्योऽस्मि यद्भवान्मित्रतां गतः ॥' अत्र सुग्रीवस्य श्रीरामे मित्रे रतिः ।, 'आदिपदात्पुत्रादेरपि ग्रहणम्' इत्यन्ये । तन्न । तद्विषयकरतेर्वत्सलरसत्वेनैव ग्रन्थकृता

उद्बुद्धमात्रस्थायिभावो यथा—

'हरस्तु किंचित्परिवृत्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः ।
उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि ॥'

अत्र पार्वतीविषया भगवतो रतिः ।

ननूक्तं प्रपाणकरसवद्विभावादीनामेकोऽत्राभासो रस इति (८८पृ०) तत्र संचारिणः पार्थक्याभावात्कथं प्राधान्येनाभिव्यक्तिरित्युच्यते—

**यथा मरिचखण्डादेरेकीभावे प्रपाणके ॥ २६१ ॥**
**उद्रेकः कस्यचित्क्वापि तथा संचारिणो रसे ।**

अथ रसाभासभावाभासौ—

**अनौचित्यप्रवृत्तत्व आभासो रसभावयोः ॥ २६२ ॥**

अनौचित्यं चात्र रसानां भरतादिप्रणीतलक्षणानां सामग्रीरहितत्वे एकदेशयोगित्वोपलक्षणपरं बोध्यम् । तच्च बालव्युत्पत्तये एकदेशतो दर्श्यते—

**उपनायकसंस्थायां मुनिगुरुपत्नीगतायां च ।**
**बहुनायकविषयायां रतौ तथानुभयनिष्ठायाम् ॥ २६३ ॥**

---

दर्शितत्वात् ॥ **हरस्त्विति** । परिवृत्तेति लुप्तेत्यर्थः । **अत्रेति** । उमामुखावलोकनरूपानुभावमात्रेण व्यक्ता रतिरुद्दीपनविभावादिकृतपरिपोषराहित्येन रसतां नापद्यत इति भावव्यपदेश एवास्योचित इति भावः ॥ **अनौचित्येति** । रसभावयोरनौचित्येन प्रवृत्तत्वे वर्तमानत्वे सति रसाभासो भावाभासश्चेत्यर्थः ॥ अत्र रसानामौचित्यमाह—**अनौचित्यमिति** । अनौचित्यपदमित्यर्थः । **सामग्रीरहितत्वे** विभावादिरूपयावत्कारणासत्त्वे । **एकदेशयोगित्वं** यत्किंचिल्लक्षणसंबन्धः, तदुपलक्षणपरं तद्बोधतात्पर्यकम् । तच्च अनौचित्यं च **उपनायकेति** । शृङ्गारे 'दक्षिणाद्याश्च नायकाः' इत्युक्तम् ( १६९ पृ. ) नायकलक्षणे ( ९७ पृ. ) 'कुलीनः' इत्यनेन सत्कुलजातत्वम् । 'शीलवान्' इत्यनेन सद्वृत्तत्वं च नायकस्य लभ्यते । 'नायकसामान्यगुणैर्भवति यथासंभवैर्युक्ता' ( १०७ पृ. ) इत्यनेन नायिकायाश्च सद्वृत्तत्वं न भवतीति तद्विषयशृङ्गारस्य तथोक्तनायकाभावादेकदेशयोगित्वम् । निषिद्धयोषित उक्ताः **शृङ्गारतिलके**—'संबन्धिमित्रद्विजराजहीनवर्णाधिकानां प्रमदा न गम्याः । व्यङ्ग्यस्तथा प्रव्रजिता विभिन्नमन्त्राश्च धर्मार्थमनोभवज्ञैः ॥' इति । एवं योषितामपि संबन्ध्यादयः पुरुषा निषिद्धाः । एवं च **मुनिगुरुपत्नीगतायां** चेति चकारेण संबन्ध्यादिपत्न्यो बोध्याः । **उपनायकसंस्थायामि**त्यत्र संबन्ध्याद्यन्यतम उपनायको बोध्यः । अन्यथा 'बहुनायकविषयायाम्' इति 'प्रतिनायकनिष्ठत्वे' इत्यनयोरुपादानं व्यर्थं स्यात् । **बहुनाय-**

प्रतिनायकनिष्ठत्वे तद्वदधमपात्रतिर्यगादिगते ।
शृङ्गारेऽनौचित्यं रौद्रे गुर्वादिगतकोपे ॥ २६४ ॥
शान्ते च हीननिष्ठे गुर्वाद्यालम्बने हास्ये ।
ब्रह्मवधाद्युत्साहेऽधमपात्रगते तथा वीरे ॥ २६५ ॥
उत्तमपात्रगतत्वे भयानके ज्ञेयमेवं[1]मन्यत्र ।

तत्र रतेरुपनायकनिष्ठत्वे यथा मम—

'स्वामी मुग्धतरो वनं घनमिदं बालाहमेकाकिनी
क्षोणीमावृणुते तमालमलिनच्छाया तमःसंततिः ।
तन्मे सुन्दर! मुञ्च कृष्ण! सहसा वर्त्मेति गोप्या गिरः
श्रुत्वा तां परिरभ्य मन्मथकलासक्तो हरिः पातु वः ॥'

---

**केति**। संबन्ध्यादिभिन्ना अपि बहुनायका निषिद्धा इति भावः। **अनुभयनिष्ठायामिति**। 'विभिन्नमन्त्राश्च' इत्यनेनान्यतरस्यां मतौ निषिद्धत्वादिति भावः। **नायकस्य** प्रतिपक्षः प्रतिनायकः। अस्य संबन्ध्यादिभिन्नत्वेनानिषिद्धेऽपि भर्तुरनभिमताचरणेनासद्वृत्तत्वं नायिकाया इति भावः। **अधमपात्रेति**। असत्कुलजातनायक इत्यर्थः। **तिर्यगादीति**। तिर्यगादीनां नायकलक्षणाभावादिति भावः। **रौद्र** इत्यादौ 'अनौचित्यम्' इत्यन्वेति। 'क्रोधात्मको भवेद्रौद्रः प्रतिशूरैरमर्षितः। रूक्षप्रायो भवेदत्र नायकोऽत्युग्रविग्रहः ॥' इत्यनेन रौद्रे प्रतिशूरजनितक्रोधः। न तु गुर्वादिजनितक्रोधो नायक इति भावः। **हीननिष्ठे** रागादिहीनविषये। 'गतेच्छो नायकस्तत्र तमोरागपरिक्षयात्' इत्युक्तनायकवैपरीत्यादनौचित्यमिति भावः॥ **ब्रह्मवधादीति**। ब्रह्मवधादीनां वेदविरुद्धानामाचरणतया नायकत्वं न संभवतीत्यर्थः। **अधमपात्रगत इति**। 'उत्साहात्मा भवेद्वीरो दयादानादिपूर्वकः। त्रिविधो नायकस्तत्र जायते सत्त्वसंकुलः॥ गाम्भीर्यौदार्यशौटीर्यधैर्यवीर्यादिभूषितः। आवर्जितजनो यश्च विरूढप्रौढविक्रमः॥' इत्युक्तगुणहीननायकगत इत्यर्थः। **उत्तमेति**। 'बालस्त्रीनीचनायकः' इत्यनेनं बालादिनायकत्वमेव भयानकस्योचितम्। **एवमन्यत्रेति**। अदैवहतपात्रगते करुणे, तत्त्वज्ञानपात्रगते बीभत्से, विशेषदर्शितपात्रगते आश्चर्ये, अपकार्यालम्बने वत्सलेऽनौचित्यं बोध्यमित्यर्थः॥ **स्वामीति**। मुग्धतरोऽतिमूढः विलम्बे प्रहारादिकं करोति, तथा चात्यन्तसुरतानभिज्ञः। **घनमि**त्यनेन भयदत्वम्, निबिडतया जनदर्शनाभावेन सुरतयोग्यस्थानत्वं च सूचितम्। **एकाकिनी**त्यादिना गमने भयम्, स्वच्छन्दं रमस्वेति च सूचितम्। **सुन्दरेति**। पथिपरित्या-

---

1. **एवमिति**। एवं जातिदेशकालवर्णाश्रमवयोवस्थाप्रकृतिव्यवहारादेरप्यनौचित्यं परिहरणीयम्॥

बहुनायकनिष्ठत्वे यथा—

'कान्तास्त एव भुवनत्रितयेऽपि मन्ये
येषां कृते सुतनु ! पाण्डुरयं कपोलः ।'[1]

अनुभयनिष्ठत्वे यथा—मालतीमाधवे नन्दनस्य मालत्याम् ।

'पश्चादुभयनिष्ठत्वेऽपि प्रथममेकनिष्ठत्वे रतेराभासत्वम्' इति श्रीमल्लोचनकाराः ।

तत्रोदाहरणं यथा—रत्नावल्यां सागरिकाया अन्योन्यसंदर्शनात्प्राग्वत्सराजे रतिः ।

प्रतिनायकनिष्ठत्वे यथा—हैयग्रीववधे[2] हयग्रीवस्य जलक्रीडावर्णने ।

अधमपात्रगतत्वे यथा—

'जघनस्थलनद्धपत्रवल्ली गिरिमल्लीकुसुमानि कापि भिल्ली ।
अवचित्य गिरौ पुरो निषण्णा स्वकचानुत्कचयांचकार भर्त्रा ॥'

तिर्यगादिगतत्वे यथा—

'[3]मल्लीमतल्लीषु वनान्तरेषु वल्ल्यन्तरे वल्लभमाह्वयन्ती ।
चञ्चद्विपञ्चीकलनादभङ्गीसंगीतमङ्गीकुरुते स्म भृङ्गी ॥'

आदिशब्दात्तापसादयः ।

---

गाय स्तवः, अथ च स्वप्रियत्वं सूचितम् । अत्र श्रीकृष्णस्य संबन्धित्वेन गोप्यास्तदनुरागोऽनुचित इति भावः ॥ 'स्वामी निःश्वसितेऽप्यसूयति—' इत्यादि ( ११६ पृ. ) परनायिकोदाहरणं तु न शृङ्गाराभासः । तथात्वे शृङ्गारे परनायकोदाहरणमनर्थकं स्यादिति ध्येयम् ॥ **जघनेति** । गिरिमल्लीकुसुमानि कुटजपुष्पाणि । उत्कचयांचकार बन्धयामास ॥ **मल्लीति** । मल्लीभिः प्रशस्तेषु वनान्तरेषु वनमध्येषु । वल्ल्यन्तरे स्वाधिष्ठितलताभिन्नलतायां वर्तमानम् । सुरतार्थमाह्वयन्ती । चञ्चत् प्रवाहवच्चिरवच्छिन्नं विपञ्चीकलनादभङ्ग्या वीणासूक्ष्ममधुरनादसादृश्येन विशिष्टं यत्संगीतं तदङ्गीकुरुते स्म स्मरोद्दीपनोपकरणं कुरुते स्म । आदिशब्दात् 'तिर्यगादिगतत्वे' इत्यत्रादिपदात् ॥

---

1. पाण्डुरिति । इह कपोलपाण्डिमवर्णनेनानुरागो दर्शितः । स च बहुनायकविषयत्वादनुचितः ॥

2. हयग्रीवेति । हयग्रीवाख्यो दैत्यो विष्णुना हत इति कथाश्रिते काश्मीरकभर्तृमेण्ठप्रणीते महाकाव्ये ॥

3. मल्लीति । वनान्तरेषु मल्लीमतल्लीषु । प्रशस्तमल्लीष्वित्यर्थः । ( वर्तमाना ) भृङ्गी वल्ल्यन्तरे ( वर्तमानं ) वल्लभं भृङ्गमाह्वयन्ती सतीति योजना रमणीया ॥

रौद्राभासो यथा—

'रक्तोत्फुल्लविशाललोलनयनः कम्पोत्तराङ्गो मुहु-
र्मुक्त्वा कर्णमपेतभीर्धृतधनुर्बाणो हरेः पश्यतः ।
आध्मातः कटुकोक्तिभिः स्वमसकृद्दोर्विक्रमं कीर्तय-
न्नंसास्फोटपटुर्युधिष्ठिरमसौ हन्तुं प्रविष्टोऽर्जुनः ॥'

भयानकाभासो यथा—

'अशक्नुवन्सोढुमधीरलोचनः सहस्ररश्मेरिव यस्य दर्शनम् ।
प्रविश्य हेमाद्रिगुहागृहान्तरं निनाय बिभ्यद्दिवसानि कौशिकः ॥'

स्त्रीनीचविषयमेव हि भयं रसप्रकृतिः । एवमन्यत्र ।

**भावाभासो लज्जादिके तु वेश्यादिविषये स्यात् ॥ २६६ ॥**

स्पष्टम् ।

**भावस्य शान्तावुदये संधिमिश्रितयोः क्रमात् ।**
**[1]भावस्य शान्तिरुदयः संधिः शबलता मता ॥ २६७ ॥**

---

**रक्तोत्फुल्लेति** । कर्णं सूतपुत्रं प्रतिशूरम् । 'हरेः' इत्यनादरे षष्ठी । पश्यन्तं कृष्णमनादृत्येत्यर्थः । आध्मातो दग्धः । 'कटुकोक्तिभिः' इत्यत्र 'अनलैः' इति रूपकं व्यङ्ग्यम् । स्वं स्वकीयं स्कन्धस्य करेणाघातोंऽसास्फोटस्तत्र पटुः । तत्कारीत्यर्थः । अत्र ज्येष्ठभ्रातरि गुरौ क्रोधोऽनुचितः ॥ **अशक्नुवन्निति** । यस्य रावणस्य । कौशिक इन्द्रः पेचकश्च । अत्रानौचित्यं दर्शयति—**स्त्रीति** । **भावाभास इति** । प्रथमादिपदेन चिन्तादीनां द्वितीयादिपदेनाननुरागिण्यादीनां ग्रहणम् । यथा—'[2]राकासुधाकरमुखी तरलायताक्षी सा स्मेरयौवनतरङ्गितविभ्र-

---

**1. भावस्येति** । भावस्य शान्तिर्नाशः । स चोत्पत्तिकालावच्छिन्न एव । उदय उत्पत्तिः । संधिरन्योन्यानभिभूतयोरन्योन्याभिभावनयोग्ययोः सामानाधिकरण्यम्, तच्च एकदेशवृत्तित्वविशिष्टैककालवृत्तित्वरूपम् । शबलता बाध्यबाधकभावापन्नानामुदासीनानां वा भावानां व्यामिश्रणम् । एकचमत्कृतिजनकज्ञानगोचरत्वमिति यावत् । इति रसगङ्गाधरकृतः ॥

**2. राकेति** । सीतामुद्दिश्य रावणस्योक्तिः सा सीता 'अस्ति' इति शेषः । तत् तस्मात् अनुपेक्षणीये गुणत्वात् किं करोमि तल्लाभाय किमाचरामि । तया सह मैत्री क्रियतां तत्राह—विदधे कथमिति । अत्र सीताविषये मैत्रीं कथं केनोपायेन विदधे करोमि । मैत्रीकरणे न कश्चिदुपाय इत्यर्थः । एवं सति तया मम स्वीकृतिर्ममायमिति बुद्धिविषयीकरणं तस्य व्यतिकरे संबन्धे अभ्युपायो हेतुः क इव । अत्र इवशब्दः संभावनायाम् । इह चिन्ताख्यव्यभिचारिभावस्याननुरक्तनायिकाविषयतया आभासत्वमिति भावाभासोदाहरणत्वम् ॥

क्रमेण यथा—

'सुतनु! जहिहि कोपं पश्य पादानतं मां
न खलु तव कदाचित्कोप एवंविधोऽभूत्।
इति निगदति नाथे [1]तिर्यगामीलिताक्ष्या
नयनजलमनल्पं मुक्तमुक्तं न किंचित्॥'

अत्र बाष्पमोचनेनेर्ष्याख्यसंचारिभावस्य शमः।

'चरणपतनप्रत्याख्यानात्प्रसादपराङ्मुखे
[2]निभृतकितवाचारेत्युक्त्वा रुषा परुषीकृते।
व्रजति रमणे निःश्वस्योच्चैः स्तनस्थितहस्तया
नयनसलिलच्छन्ना दृष्टिः सखीषु निवेशिता॥'

---

माङ्गी। तत्किं करोमि विदधे कथमत्र मैत्रीं तत्स्वीकृतिव्यतिकरे क इवाभ्युपायः॥' अत्र नायिकायाः स्वीकारोपायचिन्तयानुरागाभावो व्यज्यते। अत्र चिन्ता अनुचिता। एवं नृपादिविषयरतेः शात्रवादिविषयत्वेऽप्यनौचित्यम्॥ भावशान्त्यादिमाह—**भावस्येति**। एतत्सप्तम्यन्तपदेनान्वेति। भावस्य व्यभिचारिणः। शान्त्यादावास्वाद्ये सति भावशान्त्यादिनामकाव्यात्मा भवतीत्यर्थः। **शान्तिर्वि**रुद्धसामग्रीबलात्प्रशमावस्था। **उदयः** स्वसामग्रीमाहात्म्येनोद्गमावस्था। **संधिर्वि**रुभयसामग्रीयोगेन परस्परविमर्दः। स च परस्परविमर्दयोरेकनाशे चान्योत्पत्तिरित्येवंरूपः। केचित्तु—'विरुद्धयोरेकस्मिन्नेकदैवावच्छेदकभेदेन स्थितिः संधिः' इत्याहुः। तन्न। वक्ष्यमाणोदाहरणासंगतिप्रसङ्गात्तत्रावच्छेदकानुपपत्तेः। अनुपस्थितस्यापि लक्षणादेरवच्छेदकत्वं कल्प्यमिति चेत्, एकदेत्यसंगतेः। **मिश्रितं** मिश्रणं, तच्च पूर्वपूर्वस्य वाध्यत्वेन उत्तरोत्तरस्य वाधकत्वेनैकत्र काव्ये निबन्धनम्। वाध्यत्वं च विरोधिसामग्रीस्थगितपरिपुष्टिकत्वम्। वाधकत्वं च विरोधि। अस्मिन्मते दन्त्यवान् सबलशब्दः। बलपरिपुष्टिप्रतिबन्धकत्वम्। भावशान्तावेकस्यैव नाशः। उदये एकस्यैवोत्पत्तिः। संधौ द्वयोरेव मुहुर्विनाशोत्पत्ती। शबलतायां बहूनां विनाशोत्पत्ती। इति विशेषः। केचित्तु—'भावानामुत्तरोत्तरबलवत्त्वं शबलता, बलवत्तत्समूहो वा' इत्याहुः। तन्न। वक्ष्यमाणोदाहरणे हि द्वयोर्द्वयोर्भावयोरुत्तरस्यैव बलवत्त्वं न तु यावतामुत्तरेषाम्॥ भावशान्तिमुदाहरति—**सुतन्विति**। अनल्पं बहुतरम्। 'प्रशम इति व्यज्यते' इति शेषः। अत्र पादपतनरूपप्रसादसामग्र्या ईर्ष्यायाः प्रशमः स्वदते॥ भावोदयमाह—**चरणपतनेति**। चरणपतनस्य प्रत्याख्यानाच्चरणप्रक्षेपादिना निराकरणात्। पराङ्मुखे प्रसादरूपफलविमुखे। परुषीकृते स्नेहहीने कृते। **स्तनस्थितहस्तयेति** स्तनमध्ये हस्तनिवेशनेन हृदय मा स्फुटेति हृदया-

---

1. तिर्यगिति। तिर्यक् यथा स्यात्तथा आमीलिते अक्षिणी यया तथाभूतया॥
2. निभृतेति। निभृतकितवाचार सहसानुपलक्षितविटाचरणेति तदर्थः॥

अत्र विषादस्योदयः ।

'नयनयुगासेचनकं मानसवृत्त्यापि दुष्प्रापम् ।

रूपमिदं मदिराक्ष्या मदयति हृदयं दुनोति च मे ॥'

अत्र हर्षविषादयोः संधिः ।

'[1]क्वाकार्यं, शशलक्ष्मणः क च कुलं, भूयो[2]ऽपि दृश्येत सा,

दोषाणां प्रशमाय मे[3] श्रुतमहो, कोपेऽपि कान्तं मुखम् ।

किं वक्ष्यन्त्यपकल्मषाः [4]कृतधियः, स्वप्नेऽपि सा दुर्लभा

चेतः स्वास्थ्यमुपैहि, कः खलु युवा धन्योऽधरं धास्यति ॥'

---

श्वास इति भावः । अत्र नायकप्रत्याख्यानरूपसामग्र्या विषादः स्वदते ॥ भाव-संधिमाह—**नयनेति** । नयनयुगस्यासेचनकमतितृप्तिजनकम् । 'तदासेचनकं तृप्तेर्नास्त्यन्तो यस्य दर्शनात्' इत्यमरः । [5]मदिरः खञ्जनः । मदयति आनन्दयति । दुनोति संतापयति । अत्रैकस्यैव कामिनीरूपस्यात्युत्कृष्टत्वेन आनन्दस्योपभोगाप्रयोजकत्वेन विषादस्य जनकत्वम् । अत्युत्कृष्टत्वज्ञानकाले आनन्द उपभोगाप्रयोजकत्वज्ञानकाले विषादः । विरुद्धयोरपि तयोरेकस्मिन्समावेशः काललाघवेन संसर्गप्रतिभासः ॥ भावशबलतामाह—**क्वाकार्यमिति** । उर्वशीविरहात्स्वमरणमुपक्रम्य पश्चान्निवर्तमानस्य पुरूरवस उक्तिरियम् । अकार्यं स्त्रिया सह मरणम् । शशलक्ष्मणश्चन्द्रस्य । सा उर्वशी । मे मम श्रुतमधीतम् । मुखमिति तस्या इति शेषः । धास्यति पास्यति । कुलमित्यन्तेन चन्द्रकुले स्त्रीविरहादात्महननमकार्यमित्येवंरूपविचाररूपो

---

1. क्वाकार्यमिति । इह क्वद्वयेन सहानवस्थानप्रतिपादनेनात्यन्तानौचित्यं प्रकाश्यते ।

2. अपीति । अपिना संभावनोत्कटता द्योत्यते ॥

3. मे इति । आकरे 'नः' इत्येव पाठो दृश्यते, स एव ज्यायान् । बहुवचनेन स्वोत्कर्षलाभात् ॥

4. कृतधिय इति । कृते सदाचारे अथवा कृते महात्मभिराचरिते पुण्यकर्मणि धीर्येषां ते ॥

5. मदिर इति । मदिरा दृष्टिविशेष इत्युचितम् । तदुक्तं संगीतकलिकायाम्—'सौष्ठवेन परित्यक्ता स्मेरापाङ्गमनोहरा । वेपमानान्तरा दृष्टिर्मदिरा परिकीर्तिता ॥' इति । हरविजयटीकायां काव्यप्रकाशपूर्तिकृद्भिरलकराजानकैरप्युक्तम्—'आघूर्णमानमध्या या क्षामा चाञ्चिततारका । दृष्टिर्विकसितापाङ्गा मदिरा तरुणे मदे ॥' इति । मदिरे अक्षिणी यस्यास्तस्या इत्येवं व्याख्येयम् । एतेन 'मदिराक्षि मदाननार्पितम्—' इति रघुवंशश्लोकव्याख्याने माद्यत्यनयेति मदिरा लोकप्रसिद्धा । तथापि 'नार्यो मदिरलोचनाः' इत्यादिप्रयोगदर्शनान्माद्यत्याभ्यामिति मदिरे अक्षिणी यस्या इति मल्लिनाथोक्तिरपि न हृद्या । मदिरः खञ्जन इति स्वीकारेऽपि मदिरस्येव अक्षिणी यस्या इत्यर्थो न युक्तः, किंतु मदिरवत् इति । एवमपि नाक्षिणि लक्षणा शङ्क्या । 'नेत्रे खञ्जनगञ्जने' इत्यादिप्रयोगादिति दिक् ॥

अत्र वितर्कौत्सुक्यमतिस्मरणशङ्कादैन्यधृतिचिन्तानां शबलता ॥

(अत्र मूलकारिकाः=(२६७ ।) पूर्वाभिः सह (२९० ।) उदाहरणश्लोकाः=(१४३ ।) पूर्वैः सह ( १५८ । )

इति साहित्यदर्पणे रसादिनिरूपणो नाम तृतीयः परिच्छेदः ।

---

वितर्कः । सेत्यन्तेनौत्सुक्यम् । श्रुतमित्यन्तेन सर्वथा तदनुरागो दोषायैवेत्यर्थनिर्धारणरूपा मतिः । मुखमित्यन्तेन मुखस्य कमनीयत्वस्मरणम् । कृतधिय इत्यन्तेन शङ्का । दुर्लभेत्यन्तेन स्वानौजस्यरूपं दैन्यम् । उपैहीत्यन्तेन धृतिः । धास्यतीत्यन्तेन चिन्ता व्यङ्ग्या । अत्र द्वयोर्द्वयोर्भावस्य पूर्वस्य प्रशमाङ्गस्य वाध्यत्वम् । उत्तरस्य विप्रलम्भाङ्गस्य वाधकत्वम् । चिन्तायां विश्रान्तेस्तदङ्गकस्य विप्रलम्भशृङ्गारस्य शान्तापेक्षया परिपोषः तस्याप्यन्तरान्तरा प्रशमोदयादेकान्तमभिलाषस्य नास्वाद्यत्वमिति खण्डरसत्वमित्यवधेयम् । उभयाङ्गस्य भावसमूहस्य वाध्यवाधकभावो मुख्यत्वेनास्वाद्यत इति भावशबलताया एव प्रधानत्वमिति ॥

इति श्रीरामचरणतर्कवागीशभट्टाचार्यविरचितायां साहित्यदर्पणविवृतौ

तृतीयः प्रकाशः ।



## चतुर्थः परिच्छेदः ।

अथ काव्यभेदमाह—

**काव्यं ध्वनिर्गुणीभूतव्यङ्ग्यं चेति द्विधा मतम् ।**

तत्र—

**वाच्यातिशयिनि[1] व्यङ्ग्ये ध्वनिस्तत्काव्यमुत्तमम् ॥ १ ॥**

---

काव्यस्वरूपं निरूप्य विभागमाह—**काव्यमिति** । व्यङ्ग्य इति सतीत्यर्थः । ध्वन्यते व्यंज्यतेऽस्मिन्वाक्यार्थसमुदाये । गुणीभूतव्यङ्ग्येऽप्युक्तव्युत्पत्तिसंभवेऽपि ध्वनिपदस्य निरुक्तरूढिसापेक्षत्वान्न तत्र व्यवहारः । वस्तुतस्तु ध्वन्यत इति ध्वनी रसादिः । ध्वनतीति ध्वनिः शब्दादिगता शक्तिः । ध्वननं ध्वनी रसादिप्रतीतिः ।

---

1. वाच्येति । वाच्याद् अभिधावृत्तिप्रतिपाद्याद् अर्थाद् व्यङ्ग्ये व्यञ्जनावृत्तिप्रतिपाद्येऽर्थे अतिशयिनि अधिकचमत्कारजनके सति उत्तमं काव्यम् । तद् ध्वनिः । 'उच्यते' इति शेषः । तदुक्तं राजानकानन्दवर्धनाचार्यैः—'प्रथमे हि विद्वांसो वैयाकरणाः । व्याकरणमूलत्वात्सर्वविद्यानाम् । ते च श्रूयमाणेषु वर्णेषु ध्वनिरिति व्यवहरन्ति' इति । 'श्रोत्रशष्कुलीं संतानेनागता अन्त्याः शब्दाः श्रूयन्त' इति प्रक्रियायां शब्दाः श्रूयमाणा इत्युक्तम् । तेषां घण्टानुरणनरूपत्वं तावदस्ति । ते च ध्वनिशब्देनोक्ताः । यदाह भगवान्भर्तृहरिः—'यः संयोगवियोगाभ्यां करणैरुपजायते । स स्फोटः शब्दजः शब्दो ध्वनिरित्युच्यते बुधैः ॥' एवं घण्टादिनिर्ह्रादस्थानीयोऽनुरणनात्मोपलक्षितो व्यङ्ग्योऽप्यर्थो ध्वनिरिति व्यवहृतः । इत्येष प्रकारोऽव्यक्तशब्दानामेव वर्तते । व्यक्तशब्दानां तथा श्रूयमाणा ये वर्णा नादशब्दवाच्या अन्त्यबुद्धिनिर्ग्राह्याः स्फोटाभिव्यञ्जकास्ते ध्वनिशब्देनोक्ताः । यदाह भगवान्स एव—'प्रत्ययैरनुपाख्येयैर्ग्रहणानुग्रहैस्तथा । ध्वनिप्रकाशिते शब्दे स्वरूपमवधार्यते ॥' इति । तेन व्यञ्जकौ शब्दार्थावपीह ध्वनिशब्देनोक्तौ । किं च वर्णेषु तावन्मात्रपरिमाणेष्वपि सत्सु । यथोक्तम्—'अल्पीयसापि यत्नेन शब्दमुच्चारितं मतिः । यदि वा नैव गृह्णाति वर्णं वा सकलं स्फुटम् ॥' इति । तेषु तावत्स्वेषु श्रूयमाणेषु वक्तुर्योऽन्यो द्रुतविलम्बितादिवृत्तिभेदात्मा प्रसिद्धादुच्चारणादिव्यापारादभिव्यक्तः स ध्वनिरुक्तः । यदाह स एव—'शब्दस्योर्ध्वमभिव्यक्तेर्वृत्तिभेदास्तु वैकृताः । ध्वनयः समुपोहन्ते स्फोटात्मा नैव भिद्यते ॥' इति व्याचख्युराचार्याभिनवगुप्तपादाः । अयं निष्कर्षः—पटादिभिर्वर्ण-

---

१. 'ध्वन्यतेऽस्मिन्निति शब्दार्थसमुदाय इत्यर्थः । अत्र सप्तम्यर्थो वृत्तित्वम् । तच्च व्यञ्जनाजन्यबोधरूपस्य ध्वननपदार्थस्यैकदेशे व्यञ्जनायामन्वेति । तथा च यद्वृत्तिव्यञ्जनाजन्यबोधविषयो रसादिः ध्वनिरित्यर्थः । वस्तुतस्तु—ध्वनति व्यञ्जनया रसादीन्प्रत्याययतीति ध्वनिः । शब्दार्थसमुदाय इत्यर्थः । एवं ध्वन्यतेऽसाविति व्युत्पत्त्या रसादिरपि एवं ध्वननं ध्वनिरिति व्यञ्जनाजन्यबोधोऽपि । एवं ध्वन्यतेऽनयेति व्युत्पत्त्या ध्वनिरित्यवधेयम् । वस्त्वलंकारध्वन्योः काव्यघटकत्वाभावेऽपि काव्योत्कर्षतया तद्व्यञ्जकशब्दार्थयोर्ध्वनित्वमवगन्तव्यम् । अन्यथा वक्ष्यमाणध्वनिकाव्यप्रकारसंख्यानुपपत्तेः गुणीभूतव्यङ्ग्येऽप्युक्तव्युत्पत्तिसंभवेऽपि ध्वनिपदस्य निरुक्तरूढिसापेक्षत्वान्न तत्र व्यवहारः ।' इति क्वाचित्कः पाठः ।

[1]वाच्यादधिकचमत्कारिणि व्यङ्ग्यार्थे ध्वन्यतेऽस्मिन्निति व्युत्पत्त्या ध्वनिर्नामोत्तमं काव्यम् ।

**भेदौ ध्वनेरपि द्वावुदीरितौ लक्षणाभिधामूलौ ।**
**[1]अविवक्षितवाच्योऽन्यो वि[2]वक्षितान्यपरवाच्यश्च ॥ २ ॥**

[2]तत्राविवक्षितवाच्यो नाम लक्षणामूलो ध्वनिः । लक्षणामूलत्वादेवात्र वाच्यमविवक्षितं बाधितस्वरूपम् । विवक्षितान्यपरवाच्यस्त्वभिधामूलः । अत एवात्र वाच्यं विवक्षितम् । अन्यपरं व्यङ्ग्यनिष्ठम् ।

अत्र हि वाच्योऽर्थः स्वरूपं प्रकाशयन्नेव व्यङ्ग्यार्थस्य प्रकाशकः । यथा—प्रदीपो घटस्य । अभिधामूलस्य बहुविषयतया पश्चान्निर्देशः ।

---

इति व्युत्पत्तिभेदाद् ध्वनिपदार्थभेदो बोध्यः । [3]काव्यात्मभूतस्य ध्वनेर्भेदेनैव ध्वनिकाव्यप्रभेदानाह—**भेदाविति** । इह यद्यपि वस्त्वलंकारध्वनीनां काव्यात्मत्वं नाङ्गीकृतं तथापि रसादिप्रकर्षकत्वेनैव तेषां काव्यात्मत्वमित्यभिप्रायेण तत्साधारणं ध्वनिप्रभेदनिरूपणं प्रक्रमत इति भावः । **लक्षणाभिधामूलाविति** । लक्षणामूलोऽभिधामूलश्चेत्यर्थः । तयोः परिचायकावाह—**अविवक्षितेति** । 'आद्यः' इति शेषः । अन्योऽभिधामूलः । अभिधामूल इति ध्वनिरित्यनुषज्यते । अत एव अभिधामूलत्वादेव । वाच्यार्थस्य व्यङ्ग्यपरत्वमुपपादयति—**अत्र हीति** । वाच्यार्थस्य स्वोपस्थितिद्वारा शाब्दबोधं प्रति कारणत्वमित्यभिप्रायेणेदम् । **पश्चान्निर्देश इति** । तथा च लक्षणामूलध्वनेरल्पविषयत्वात्सूचीकटाहन्यायेन प्रथमं निर्देश इति भावः ।

---

समुदायरूपैः क्षणिकैः पदैः स्फोटरूपो नित्यः शब्दो व्यज्यते, तेन चाभिव्यक्तेनार्थः प्रतीयत इति तादृशस्य प्रधानीभूतस्फोटव्यञ्जकस्य वर्णसमुदायरूपस्य पटादिशब्दस्य ध्वनिरिति संज्ञेति वैयाकरणानां सिद्धान्तसरणिः । ततस्तन्मतानुसारिभिरन्यैः प्रधानीभूतव्यङ्ग्यव्यञ्जकत्वसाधर्म्याद्गुणीभूतवाच्यं यद्व्यङ्ग्यं तद्व्यञ्जनक्षमस्य शब्दार्थयुगलरूपस्योत्तमकाव्यस्य ध्वनिरिति संज्ञा विहिता । तदुक्तं ध्वनिकारैः—'यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ । व्यङ्ग्यः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः ॥' इति ॥

1. अविवक्षितेति । अविवक्षितमनुपयुक्तमन्वयायोग्यं वा वाच्यं वाच्योऽर्थो यस्मिन् सः ॥

2. विवक्षितेति । विवक्षितं वाच्यतावच्छेदकरूपेणान्वयबोधविषयः । अन्यपरं व्यङ्ग्योपसर्जनीभूतं च वाच्यं वाच्योऽर्थो यत्र तादृशः ॥

---

१. 'वाच्यात्—' इति फक्किका नास्ति ग-पुस्तके. २. 'तत्र—' इत्यादिः '—पश्चान्निर्देशः ।' इत्यन्तः पाठो ग-पुस्तके नास्ति. ३. 'काव्य—' इत्यादिः 'इति भावः' इत्यन्तः पाठः पुस्तकान्तरे नास्ति.

अविवक्षितवाच्यस्य भेदावाह—

**अर्थान्तरं संक्रमिते वाच्येऽत्यन्तं तिरस्कृते ।**
**अविवक्षितवाच्योऽपि ध्वनिर्द्वैविध्यमृच्छति ॥ ३ ॥**

[1]अविवक्षितवाच्यो नाम ध्वनिर[1]र्थान्तरसंक्रमितवाच्योऽ[2]त्यन्ततिरस्कृतवाच्यश्चेति द्विविधः । यत्र स्वयमनुपयुज्यमानो मुख्योऽर्थः स्वविशेषरूपेऽर्थान्तरे परिणमति, तत्र मुख्यार्थस्य स्वविशेषरूपार्थान्तरसंक्रमितत्वादर्थान्तरसंक्रमितवाच्यत्वम् ।

यथा—

'कदली कदली, करभः करभः, करिराजकरः करिराजकरः ।
भुवनत्रितयेऽपि बिभर्ति तुलामिदमूरुयुगं न चमूरुदृशः ॥'

अत्र द्वितीयकदल्यादिशब्दाः पौनरुक्त्यभिया सामान्यकदल्यादिरूपे मुख्यार्थे बाधिता जाड्यादिगुणविशिष्टकदल्यादिरूपमर्थं बोधयन्ति । जाड्याद्यतिशयश्च व्यङ्ग्यः ।

---

अविवक्षितवाच्यस्येति ध्वनेरिति शेषः । **तत्रेति** । 'प्रकृतान्वये' इति शेषः । स्वयं मुख्यतावच्छेदकरूपेण स्वविशेषरूपे स्वकीयमुख्यतावच्छेदकव्याप्यधर्मे परिणमति विशेष्यतया भासते । अर्थान्तरे संक्रमितत्वाद् विशेष्यतया भासमानत्वात् । एतेन मुख्यार्थस्य मुख्यतावच्छेदकरूपेण प्रकृतान्वयानुपयोगित्वं बाधस्तस्यैव विशेषणान्तररूपेण बोध इतीयमुपादानलक्षणेति सूचितम् । **कदलीति** । 'मणिबन्धादाकनिष्ठं करस्य करभो बहिः' इत्यमरः । चमूरुर्मृगविशेषः । **जाड्यादिति** । जाड्यं शैत्यम् । यद्यपि शैत्यं पयस्येव तथापि तस्य परम्परया कदलीवृत्तित्वमवगन्तव्यम् । आदिना ह्रस्वत्वकर्कशत्वयोर्ग्रहणम् । नच शैत्यादीनामन्यत्रापि सत्त्वात्कथं कदलीत्यादिव्याप्यत्वमिति वाच्यम् । शैत्यादिविशेषस्यैवात्र विवक्षितत्वात् । **जाड्याद्यतिशयश्चेति** । व्यङ्ग्यो लक्षणप्रयोजनबोधविषयः सर्वत्रैव मुख्यार्थस्याभेदः संबन्धः । एवं च कदल्यतिशीता करभोऽतिह्रस्वः करिराजकरोऽतिकर्कश इति हेतोश्चमूरुदृश इदमीदृशमूरुयुगं भुवनत्रितयेऽपि तुलां सादृश्यं न बिभर्तीत्यर्थः । यत्र तु कदल्यादौ सादृश्यं संभाव्यते तदतिशैत्यादिनापकृष्टत्वमिति सुतरां भुवनत्रितये तुला नास्तीति भावः । अत्र व्यतिरेकालंकारो व्यङ्ग्यः । यत्र पुनरिति शब्द इति शेषः ।

---

1. अर्थान्तरेति । अर्थान्तरे उपयोगिनि लक्ष्यतावच्छेदके संक्रमितमाश्रयत्वेन परिणतं वाच्यं यत्र तादृशः ॥

2. अत्यन्तेति । अत्यन्ततिरस्कृतं न केनापि रूपेणान्वयप्रविष्टं वाच्यं यत्र तादृशः ॥

---

१. 'अविवक्षित–' इत्यादिः '–तिरस्कृतत्वाज्जहत्स्वार्था ।' इत्यन्तः पाठो ग-पुस्तके नास्ति.

यत्र पुनः स्वार्थं सर्वथा परित्यजन्नर्थान्तरे परिणमति, तत्र मुख्यार्थस्यात्यन्ततिरस्कृतत्वादत्यन्ततिरस्कृतवाच्यत्वम् ।

यथा—

निःश्वासान्ध[1] इवादर्शश्चन्द्रमा न प्रकाशते ।

अत्रान्धशब्दो मुख्यार्थे बाधितेऽप्रकाशरूपमर्थं बोधयति । अप्रकाशातिशयश्च व्यङ्ग्यः । अन्धत्वाप्रकाशत्वयोः सामान्यविशेषभावाभावान्नार्थान्तरसंक्रमितवाच्यत्वम् ।

यथा—

भम धम्मिअ वीसत्थो, सो सुणओ अज्ज मारिओ देण ।
गोलाणइकच्छकुडङ्गवासिणा दरिअसीहेण[2] ॥

---

सर्वथेति । मुख्यतावच्छेदकस्यैव त्यागो नतु मुख्यस्य, अत्र तूभयोरिति भावः । **अर्थान्तरे** मुख्यार्थभिन्ने परिणमति लक्षणया वर्तते । **अत्यन्ततिरस्कृतत्वात्** सर्वथा बाध्यत्वात् ॥ **निःश्वासान्ध इति** । निःश्वासेनान्धोऽप्रकाश आदर्शो दर्पण इवेत्यर्थः । मुख्यार्थे दृष्टिहीनरूपे प्रकाशश्चाकचक्यं तद्रहितः । अत्र चाक्षुषज्ञानाजनकत्वरूपैकधर्मवत्त्वं मुख्यलक्ष्ययोः संबन्धः । **सामान्यविशेषभावाभावादिति** । मुख्यार्थतावच्छेदकलक्ष्यतावच्छेदकयोः सामान्यविशेषभाव एवार्थान्तरसंक्रमितवाच्यत्वं भवति । यथा—'त्वामस्मि वच्मि—' इत्यादौ । नच 'यस्य मित्राणि मित्राणि शत्रवः शत्रवस्तथा । अनुकम्प्योऽनुकम्प्यश्च स जातः स च जीवति ॥' इत्यादौ **काव्यप्रकाशकारदत्तोदाहरणे** मित्रत्वादीनां मुख्यतावच्छेदकानां लक्ष्यतावच्छेदकैराश्वस्तत्वनियन्त्रणीयत्वस्नेहपात्रत्वैः सह सामान्यविशेषभावाभावात्कथमुक्तनियम इति वाच्यम् । आश्वस्तत्वादिविशेषस्यैवात्र विवक्षितत्वात् । ननु 'भम धम्मिअ—' इत्यादौ विपरीतलक्षणासत्त्वेनात्यन्ततिरस्कृतवाच्यध्वनेरिदमुदाहरणं भवितुमर्हतीति विप्रतिपद्यमानं प्रत्याह—**भम धम्मिअ इति** । 'भ्रम धार्मिक विश्वस्तः स श्वाद्य मारितस्तेन ।

---

1. निःश्वासेति । हेमन्तवर्णने पञ्चवट्यां रामस्योक्तिरियम् । एतत्पूर्वार्धस्तु—'रविसंक्रान्तसौभाग्यस्तुषारावृतमण्डलः ।' इति ॥

2. अत्र दारुणतरानितरान् दक्षप्रभृतीन् प्रसिद्धतद्व्यापारानपास्य यदेतत् करिकलभकुम्भनिर्भेदैकहेवाकिनः केसरिणः कौलेयकवधाभिधानमौचित्यैकनिकेतनस्य कवेस्तत्र चिरं चिन्तयन्तोऽप्यभिप्रायं न विद्मः । नहि दृप्ततया यत्किंचनकारिणोऽन्यस्यापि स्वजातिसमुचितं चरितमपहायाप्रसिद्धमेव किमपि रसभङ्गभीरवः कवयो वर्णयितुमाद्रियन्ते, किमुत जगद्विदितव्यापारस्य केसरिणः । अनौचित्यनिबन्धो हि परं रसभङ्गकारणं कवयो वदन्ति । तस्मात् 'दरिअरिक्खेण' इत्यत्र पाठः श्रेयान् । इत्याचार्यमहिमभट्टः ।

अत्र 'भ्रम धार्मिक—' इत्यतो भ्रमणस्य विधिः प्रकृतेऽनुपयुज्यमानतया भ्रमणनिषेधे पर्यवस्यतीति विपरीतलक्षणाशङ्का न कार्या। यत्र खलु विधिनिषेधावुत्पत्स्यमानावेव निषेधविध्योः पर्यवस्यतस्तत्रैव तदवसरः। यत्र पुनः प्रकरणादिपर्यालोचनेन विधिनिषेधयोर्निषेधविधी अवगम्येते तत्र ध्वनित्वमेव।

तदुक्तम्—

> 'क्वचिद्बाध्यतया ख्यातिः क्वचित्ख्यातस्य बाधनम्।
> पूर्वत्र लक्षणैव स्यादुत्तरत्राभिधैव तु॥'

अत्राद्ये मुख्यार्थस्यार्थान्तरे संक्रमणं प्रवेशः, न तु तिरोभावः। अत एवात्राजहत्स्वार्था लक्षणा। द्वितीये तु स्वार्थस्यात्यन्तं तिरस्कृतत्वाज्जहत्स्वार्था।

**विवक्षिताभिधेयोऽपि द्विभेदः प्रथमं मतः।**
**असंलक्ष्यक्रमो[1] यत्र व्यङ्ग्यो लक्ष्यक्रमस्तथा॥ ४॥**

वि[3]वक्षितान्यपरवाच्योऽपि ध्वनिर[1]संलक्ष्यक्रमव्यङ्ग्यः संलक्ष्यक्रमव्यङ्ग्यश्चेति द्विविधः।

---

गोदावरीकच्छकुञ्जवासिना दृप्तसिंहेन॥' इति संस्कृतम्। आश्रमस्थायाः कुलटाया गोदावरीकुञ्जरूपे संकेतस्थाने प्रत्यहं पुष्पावचयेन कृतसंकेतभङ्गं स्वप्रेरितकुक्कुरोपद्रवेणाप्यनिवृत्तं धार्मिकं प्रति तस्या एव दिनान्तरे उक्तिरियम्। गोदा गोदावरी। यो दिनान्तरे त्वामुद्वेजयति स श्वा गोदावरीतीरनिकुञ्जवासिना दृप्तसिंहेन मारित इत्यन्वयः। **प्रकृते** तात्पर्यविषयीभूतस्वैरविहारे। **उत्पत्स्यमानौ** उत्पत्स्यमानावन्वयबोधौ। अन्वयबोधात्प्रागित्यर्थः। **तदवसरो** विपरीतलक्षणावसरः। एवं चात्र लक्षणामूलध्वनेरवसरो नास्तीत्यर्थः। **ध्वनित्वम**भिधामूलध्वनित्वम्॥ **बाध्यतया** विपरीतार्थपर्यवसन्नतया **ख्याति**रन्वयबोधः। **ख्यातस्या**न्वयबोधविषयीभूतस्य **बाधनं** बाधोदयाद्विपरीतार्थपर्यवसानम्। **लक्षणा** लक्षणामूलो ध्वनिः। **अभिधा** अभिधामूलो ध्वनिः। **अत्र** लक्षणामूलध्वनौ। आद्येऽर्थान्तरसंक्रमितवाच्ये। **द्वितीये**ऽत्यन्ततिरस्कृतवाच्ये जहत्स्वार्था लक्षणेत्यनुषज्यते॥ **प्रथमम्**इति। पश्चादस्यापरे भेदा वक्तव्या इति भावः। **यत्र** ध्वनौ। **लक्ष्यक्रम** इति। व्यङ्ग्य

---

1. **असंलक्ष्येति**। सम्यङ् न लक्षयितुं शक्यः क्रमः पौर्वापर्यं यस्य तादृशो व्यङ्ग्यो यस्मिन्सः। स्फुटे प्रकरणे झटिति प्रतीतेषु विभावानुभावव्यभिचारिषु सहृदयधुरीणेन

---

१. 'क्रमव्यङ्ग्यः' ग. २. 'लक्ष्यव्यङ्ग्यक्रमः परः' ग. ३. ग-पुस्तके तु 'विवक्षित—' इत्यादिः 'द्विविधः' इत्यन्तः पाठो नास्ति.

तत्राद्यो रसभावादिरेक एवात्र गण्यते ।
एकोऽपि भेदोऽनन्तत्वात्संख्येयस्तस्य नैव यत् ॥ ५ ॥

उक्तस्वरूपो भावादिरसंलक्ष्यक्रमव्यङ्ग्यः । अत्र व्यङ्ग्यप्रतीतेर्वि-भावादिप्रतीतिकारणकत्वात्क्रमोऽवश्यमस्ति किंतूत्पलपत्रशतव्यतिभेदव-लाघवान्न संलक्ष्यते । एषु रसादिषु च एकस्यापि भेदस्यानन्तत्वात्सं-ख्यातुमशक्यत्वादसंलक्ष्यक्रमव्यङ्ग्यध्वनिर्नाम काव्यमेकभेदमेवोक्तम् । तथाहि—एकस्यैव 'शृङ्गारस्यैकोऽपि संभोगरूपो भेदः परस्परालिङ्गना-धरपानचुम्बनादिभेदात्प्रत्येकं च विभावादिवैचित्र्यात्संख्यातुमशक्यः, का गणना सर्वेषाम् ।

शब्दार्थोभयशक्त्युत्थे व्यङ्ग्येऽनुस्वानसंनिभे ।
ध्वनिर्लक्ष्यक्रमव्यङ्ग्यस्त्रिविधः कथितो बुधैः ॥ ६ ॥

---

इत्यन्वयः ॥ आद्योऽसंलक्ष्यक्रमव्यङ्ग्यः । आदिना रसाभासादिग्रहणम् । एकप्रका-रत्वे हेतुमाह—एकोऽपीति । अनन्तत्वादतिबहुलत्वात् संख्येयः संख्यातुं शक्यः । तस्य रसभावादेर्मेलनेन । भेदनं व्यतिभेदः । लाघवाच्छीघ्रोत्पन्नत्वात् 'स' इति शेषः । एषु च रसभावादिषु च । अनन्तत्वादिति । संख्यातुमशक्यत्वा-दित्यत्र हेतुः । उक्तमर्थं विशेषाख्यानेन द्रढयति—तथाहीति । विभावादीनां वैचित्र्याद् वैलक्षण्याचेत्यन्वयः ॥ लक्ष्यक्रमव्यङ्ग्यध्वनिमाह—शब्देति । शब्दस्या-र्थस्य तदुभयस्य च शक्तेरुत्तिष्ठति आविर्भवति यत्तस्मिन् । अनुस्वानः प्रति-

---

प्रमात्रा सूक्ष्मेणैव कालेन प्रतीयत इति हेतुहेतुमतोः पौर्वापर्यक्रमस्यासंलक्षणादसंलक्ष्यक्रमो व्यपदिश्यते । यत्र तु विचारवेद्यं प्रकरणम्, उन्नेया वा विभावादयस्तत्र सामग्रीविल-म्बाधीनं चमत्कृतेर्मान्थर्यमिति संलक्ष्यक्रमोऽप्येष भवति ॥

1. शब्देति । ननु शब्दशक्त्या यत्रार्थान्तरं प्रकाशते स यदि ध्वनेः प्रकारस्तर्हि श्लेषस्य विषय एवापहृतः स्यादित्यत्राह ध्वनिकारः—'आक्षिप्त एवालंकारः शब्दशक्त्या प्रकाशते । यस्मिन्ननुक्तः शब्देन शब्दशक्त्युद्भवो हि सः ॥' यस्मादलंकारो न वस्तुमात्रं यस्मिन्काव्ये प्रकाशते स एव शब्दशक्त्युद्भवो ध्वनिः । वस्तुद्वये च शब्दशक्त्या प्रकाश्यमाने श्लेषः । यथा—'येन ध्वस्तमनोभवेन—'(४८९ पृ.]इत्यादौ । नन्वलंकारान्तरप्रतिभायामपि श्लेषव्यपदेशो भवतीति दर्शितं भट्टोद्भटेन तत्पुनरपि शब्दशक्तिमूलो ध्वनिर्निरवकाश इत्याशङ्क्य 'आक्षिप्तः' इत्युक्तम् । शब्दशक्त्या साक्षादलंकारान्तरप्रतिभा यथा—'तस्या विनापि हारेण निसर्गादेव हारिणौ । जनयामासतुः कस्य विस्मयं न पयोधरौ ॥' अत्र

---

१. ग-पुस्तके तु 'उक्तस्वरूपः—' इत्यादिः सर्वेषाम्—' इत्यन्तः पाठो नास्ति. २. 'विभावादिति' इति पुस्तकान्तरे.

क्रमलक्ष्यत्वादेवानुरणनरूपो यो व्यङ्ग्यस्तस्य शब्दशक्त्युद्भवत्वेन, अर्थशक्त्युद्भवत्वेन शब्दार्थशक्त्युद्भवत्वेन च त्रैविध्यात्संलक्ष्यक्रमव्यङ्ग्यनाम्नो ध्वनेः काव्यस्यापि त्रैविध्यम् ।

तत्र—

वस्त्वलंकाररूपत्वाच्छब्दशक्त्युद्भवो द्विधा ।

---

ध्वनिः । तस्य खलु जनकीभूतशब्दोत्तरजायमानत्वरूपक्रमो लक्ष्यते तत्संनिभे तत्तुल्ये व्यङ्ग्ये सतीत्यर्थः । क्रमस्य व्यङ्ग्यप्रतीतिपौर्वापर्यस्य लक्ष्यत्वात् स्फुटप्रतीयमानत्वात् । अनुरणनरूपः प्रतिध्वनितुल्यः । वस्त्वलंकाररूपत्वा-

---

शृङ्गारव्यभिचारी विसयाख्यो भावः साक्षाद्विरोधालंकारश्च प्रतिभासत इति विरोधच्छायानुग्राहिणः श्लेषस्यायं विषयः । न त्वनुस्वानोपमव्यङ्ग्यस्य ध्वनेः । यत्र तु सामर्थ्याक्षिप्तं सदलंकारान्तरं शब्दशक्त्या प्रकाशते स सर्व एव ध्वनेर्विषयः । यथा हर्षचरिते—'कदाचित्कुसुमसमययुगमुपसंहरन्नजृम्भत ग्रीष्माभिधानः संफुल्लमल्लिकाधवलाट्टहासो महाकालः ।' अत्र ऋतुवर्णनप्रस्तावनियन्त्रिता अभिधाशक्तयः । अतएव 'अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसी' इति न्यायमपाकुर्वन्तो महाकालप्रभृतयः शब्दा एकमेवार्थमभिधाय कृतकृत्याः । तदनन्तरमर्थावगतिः शब्दशक्तिमूलाद् ध्वननव्यापारादेव । तत्र केचिन्मन्यन्ते—यत एतेषां शब्दानां पूर्वमर्थान्तरेऽभिधान्तरं दृष्टं ततस्तथाविधेष्वर्थान्तरे दृष्टतदभिधाशक्तेरेव प्रतिपत्तिर्नियन्त्रिताभिधाशक्तिकेभ्य एतेभ्यः प्रतिपत्तिर्ध्वननव्यापारादेवेति शब्दशक्तिमूलत्वं व्यङ्ग्यात्मत्वं चेत्यविरुद्धम् । अन्ये तु—साभिधैव द्वितीयार्थसामग्र्यं ग्रीष्मस्य भीषणदेवताविशेषसादृश्यात्मकं सहकारित्वेन यतोऽवलम्बते ततो ध्वननव्यापाररूपोच्यते इति । एके तु—शब्दश्लेषे तावद्भेदे सति शब्दार्थश्लेषेऽपि शक्तिभेदाच्छब्दभेद इति दर्शने द्वितीयः शब्दस्तत्रानीयते । स च कदाचिदभिधाव्यापाराद् यथोभयोत्तरदानाय 'श्वेतो धावति—अलम्बुसानां याता' इति प्रश्नोत्तरादौ । वा तत्र शब्दान्तरबलादपि तदर्थान्तरं प्रतिपन्नं प्रतीयमानमूलत्वात्प्रतीयमानमेव युक्तमिति । इतरे तु—संफुल्लमल्लिका एव धवलाट्टहासोऽस्येति व्याख्यानाश्रयणे तदर्थसामर्थ्यं तेन द्वितीयाभिधैव प्रतिप्रसूयते । ततश्च द्वितीयोऽर्थोऽभिधीयत एव न ध्वन्यते । तदनन्तरं तु तस्य द्वितीयार्थश्च प्रतिपन्नस्य प्रथमार्थेन प्राकरणिकेन साकं या रूपणा तावद्भात्येव न चान्यतः शब्दादिति सा ध्वननव्यापारात् । तत्राभिधाशक्तेः कस्याश्चिदप्यनाशङ्कनीयत्वात् । तस्यां च द्वितीया शब्दशक्तिर्मूलम् । तया विना तस्या रूपणाया अनुत्थानात् । अत एवालंकारध्वनिरयमिति युक्तम् । इत्यादिस्थलेषु शब्दशक्त्या प्रकाशमाने सत्यप्राकरणिकेऽर्थान्तरे वाक्यस्यासंबद्धार्थाभिधायित्वं मा प्रसाङ्क्षीदित्यप्राकरणिकप्राकरणिकार्थयोरुपमानोपमेयभावः कल्पयितव्यः सामर्थ्यादित्याक्षिप्तोऽयं श्लेषो न शब्दोपारूढ इति भिन्न एव श्लेषादनुस्वानोपमव्यङ्ग्यस्य ध्वनेर्विषय इत्याहुः ॥

---

१. 'क्रम–' इत्यादिः 'त्रैविध्यम्' इत्यन्तः पाठो ग-पुस्तके नास्ति.

अलंकारशब्दस्य पृथगुपादानादनलंकारं वस्तुमात्रं गृह्यते । तत्र वस्तुरूपशब्दशक्त्युद्भवो व्यङ्ग्यो यथा—

पन्थिअ ! ण एत्थ सत्थरमत्थि मणं पत्थरत्थले गामे ।
उण्णअ पओहरं पेक्खिऊण जइ वससि ता वससु ॥

अत्र सत्थरादिशब्दशक्त्या यद्युपभोगक्षमोऽसि तदास्स्वेति वस्तु व्यज्यते ।

अलंकाररूपो यथा—'दुर्गालङ्घितविग्रहः—' इत्यादौ ( ६२ पृ. ) ।

अत्र प्राकरणिकस्योमानाममहादेवीवल्लभभानुदेवनामनृपतेर्वर्णने द्विती-

---

दिति । 'व्यङ्ग्यस्य' इति शेषः । अनलंकारमिति । अलंकारशब्दोऽत्र धर्मपरः । तेन न विद्यते अलंकारो यत्रेति बहुव्रीहिः । तत्पुरुषसमासे क्लीवत्वं न स्यात् । 'शेषतत्पुरुषद्वन्द्वावन्त्यस्थपदलिङ्गकौ' इत्यनुशासनेन पुंस्त्वप्रसक्तेः ॥ पन्थिअ इति । 'पथिक नात्र स्रस्तरमस्ति मनाक्प्रस्तरस्थले ग्रामे । उन्नतपयोधरं प्रेक्ष्य यदि वससि तद्वस ॥' इति संस्कृतम् । निवासार्थिनं पथिकं प्रति स्वयं दूत्या उक्तिरियम् । स्रस्तरं शयनीयकटः मनागल्पमपि तन्नास्ति । प्रस्तर एव वयं स्वपिम इति दर्शयति—प्रस्तरस्थल इति । पयोधरं मेघम् । तत्तदा निवासोपयुक्तं शयनीयकटादिकमत्र नास्त्येव । मेघप्रतिरुद्धगतिकतया यदि वससि तद्वसेत्यापाततः प्रतीयते । तस्य व्यङ्ग्यमाह—अत्रेति । सत्थरादीत्यादिना पत्थरत्थलपओहरशब्दयोर्ग्रहणम् । परदारगमननिषेधकशास्त्रार्थकं सत्थरपदं प्राकृतश्लिष्टम् । प्रस्तरे स्त्रीजनं संभोगार्थं गृह्णातीत्येवमर्थकं प्रस्तरस्थलपदं संस्कृतश्लिष्टम् । स्तनार्थकमपि पओहरपदमुभयोः श्लिष्टम् । एषां शक्त्या सामर्थ्येन परम्परयापि । शब्दशक्त्युद्भवो यथा—'शनिरशनिश्च तमुच्चैर्निहन्ति, कुप्यसि नरेन्द्र यस्मै त्वम् । यत्र प्रसीदसि पुनः, स भात्युदारोऽनुदारश्च ॥' शनिर्ग्रहोऽशनिर्वज्रं च तमुच्चैर्निहन्ति । अनुदारोऽनुमतदारः । तत्राशनिशब्दशक्त्या शनिविरुद्धे व्यञ्जिते तद्द्वारा विरुद्धावपि त्वदनुवर्तनार्थमेकं कार्यं कुरुत इति वस्तु व्यज्यते । उत्तरार्धे तु विरोधाभास एव । यद्वा सोऽनुदारोऽपि त्वदनुवृत्त्या उदारो भवतीत्यर्थः ॥ अलंकाररूप इति । 'शब्दश-

---

1. अत्रेति । प्रस्तराणां तत्त्वेनाध्यवसितानां मूर्खाणां स्थले तन्मयेऽत्र ग्रामे सत्थरं शास्त्रं कामशास्त्रमित्यर्थः । यद्वा सत्थरं शास्त्रं मनाक् किंचिदपि नास्ति, किं पुनः साहित्यम् । तस्मादिङ्गिताभिज्ञविरहान्निःशङ्कमुन्नतमनुपभुक्तं पयोधरं स्तनं तादृशोद्दीपकं मेघं च प्रेक्ष्य यद्युपभोगक्षमोऽसि तदा आस्स्वेति । प्रस्तरस्थल इत्यनेन शय्यापेक्षापि नास्तीति ध्वन्यते । अत्र शब्दशक्तिमूलत्वं परिवृत्त्यसहनानार्थशब्दप्रयोगादवसेयमिति व्यङ्ग्यार्थः ॥

---

१. 'अलंकार—' इत्यादिः 'उपचर्यते' इत्यन्तः पाठो ग-पुस्तके नास्ति. २. 'समासः' इति पुस्तकान्तरे. ३. 'तत्पुरुषे' इति पुस्तकान्तरे.

यार्थसूचितमप्राकरणिकस्य पार्वतीवल्लभस्य वर्णनमसंबद्धं मा प्रसाङ्क्षीदितीश्वरभानुदेवयोरुपमानोपमेयभावः कल्प्यते। तदत्र 'उमावल्लभ उमावल्लभ इव' इत्युपमालंकारो व्यङ्ग्यः।

यथा वा—

अमितः समितः प्राप्तैरुत्कर्षैर्हर्षद[1]! प्रभो!।
अहितः सहितः साधुयशोभिरसतामसि॥

अत्रामित इत्यादावपिशब्दाभावाद्विरोधाभासो व्यङ्ग्यः। व्यङ्ग्यस्यालंकार्यत्वेऽपि ब्राह्मणश्रमणन्यायादलंकारत्वमुपचर्यते।

**वस्तु वालंकृतिर्वापि द्विधार्थः संभवी[2] स्वतः॥ ७॥**
**कवेः प्रौढोक्तिसिद्धो[3] वा तन्निबद्धस्य वेति षट्।**

---

त्त्युद्भवो व्यङ्ग्यः' इत्यनुषज्यते। **मा प्रसाङ्क्षीदिति**। प्रसक्तं मा भूदित्यर्थः॥ शब्दशक्तिमूलमलंकारान्तरमाह—**यथा वेति**। **असित इति**। हे प्रभो, त्वमसतामहितः। समिद्युद्धं ततः प्राप्तैरुत्कर्षैरमितोऽपर्याप्तः। साधुयशोभिः सहितः। व्यङ्ग्यमाह—**असित इति**। अमितो मितशून्यः समितो मितयुक्तश्चेति विरोधः। विरोधाभासस्य वाच्यत्वे पदयोः समानविभक्तिकत्वमपिशब्दसत्त्वं चापेक्षितं तदभावादेवात्र व्यङ्ग्यत्वमित्याह—**अपिशब्दाभावादिति**। एतदुपलक्षणम्। समानविभक्तिकत्वाभावाच्चेत्यपि द्रष्टव्यम्। ननु रसस्य प्रकर्षतयोपमादेर्यदा गौणत्वं तदैवालंकारत्वं वक्ष्यते। व्यङ्ग्यत्वेनास्वाद्यतया मुख्यत्वात्कथमलंकारत्वमित्याह—**व्यङ्ग्यस्यालंकार्यत्वेऽपीति**। श्रमणः संन्यासी तस्य तद्दशायां ब्राह्मणत्वाभावेऽपि यथा दशान्तरीयं ब्राह्मणत्वमादाय तथा व्यपदेशस्तथात्रापि वाच्यतादशीयमलंकारत्वमादाय तथा व्यपदेश इति भावः। अर्थशक्त्युद्भवं व्यङ्ग्यमाह—**वस्तु इति**। द्विविधोऽर्थः पुनस्त्रैविध्येन षट्प्रकारो भवतीत्याह—**संभवीति**। स्वतःसंभवीत्यन्वयः। तन्निबद्धस्य कविवर्णितस्य वक्तुः। 'प्रौढोक्तिसिद्धः' इत्यनुषज्यते। **षट्** षट्प्रकारः।

---

1. **हर्षदेति**। शत्रुमित्रयोर्हर्षं द्यति ददाति चेति हर्षद, शत्रुहर्षखण्डक मित्रहर्षदायकेत्यर्थः। अत्र पदाभङ्गेऽपि विरोधः। अमितः परिमाणवर्जितः, अथ च समितः परिमाणसहितः। यद्वा अमितः मितं मानं तद्रहितः, अथ च मानसहितः। अहितः हितरहितः, अथ च सहितः हितसहित इति॥

2. **संभवीति**। य औचित्येन बहिरपि संभाव्यमानसद्भावः, न केवलं भणितिवशेनैवाभिनिष्पन्नशरीरः॥

3. **प्रौढोक्तीति**। प्रौढोक्तिसिद्धः, बहिरसन्नपि वक्तृप्रतिभामात्रेण तथा कल्पितः।

---

१. 'विरोधः' इति पुस्तकान्तरे नास्ति.

**षड्भिस्तैर्व्यज्यमानस्तु वस्त्वलंकाररूपकः ॥ ८ ॥**
**अर्थशक्त्युद्भवो व्यङ्ग्यो याति द्वादशभेदताम् ।**

[1]स्वतःसंभवी, औचित्याद्बहिरपि संभाव्यमानः । प्रौढोक्त्या सिद्धः, न त्वौचित्येन ।

तत्र क्रमेण यथा—

दृष्टिं हे प्रतिवेशिनि! क्षणमिहाप्यस्मद्गृहे दास्यसि
प्रायेणास्य शिशोः पिता[1] न विरसाः कौपीरपः पास्यति ।
एकाकिन्यपि यामि सत्वरमितः स्रोत[2]स्तमालाकुलं
नीरन्ध्रास्तनुमालिखन्तु जरठच्छेदा नलग्रन्थयः ॥

अत्र स्वतःसंभविना वस्तुना तत्[2]प्रतिपादिकाया भाविपरपुरुषोपभोगज-नखक्षतादिगोपनरूपं वस्तुमात्रं व्यज्यते ।

---

स्वतःसंभविपदार्थं व्याचष्टे—**स्वत इति** । **औचित्याद्** याथार्थ्याद् **बहिरपि** तादृशशब्दातिरिक्तप्रमाणेनापि । **संभाव्यमानः** प्रतीयमानः । रूपकालंकारे रूप्यरूपकयोरभेदस्यालीकत्वेपि तयोः सादृश्यस्यापि लोकप्रसिद्धत्वे स्वतःसंभवित्वम् । अतएव 'अधरोम्लानकमलदलम्' इति रूपकं स्वतःसंभवितया काव्यप्रकाशे उक्तम् । धम्मिल्ले नवमल्लिकासमुदय इति सादृश्याप्रसिद्ध्या प्रौढोक्तिसिद्धं रूपकमुदाहरिष्यति । **प्रौढोक्त्या** वर्णनमात्रेण सिद्धो निष्पन्नवत्प्रतीयमानः । अत्र स्वतःसंभविवस्तुव्यङ्ग्यवस्त्वाह—**दृष्टिमिति** । कस्याश्चित्कुलटाया उक्तिरियम् । इह अस्मद्गृहेऽपीत्यपेरन्वयः । स्वगृहे चेति तदर्थः । **कौपीः** कूपभवाः । अत उक्तकारणात् । **नीरन्ध्रा** निरवकाशाः । घना इत्यर्थः । **तनुं** मम शरीरमा**लिखन्तु** खण्डयन्तु । **जरठः** कठिनः **छेदो**ऽग्रभागो येषां ते । नलस्य ग्रन्थयः पर्वाणि ॥ व्यङ्ग्यमाह—**अनेनेति** । वाक्यार्थेनेत्यर्थः । **तत्प्रतिपादिकायास्तस्य** वाक्यार्थस्य वक्त्र्याः । अयं

---

'अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि' इति न्यायादिति भावः । अयमर्थः—व्यञ्जकोऽर्थस्त्रिविधः । स्वतःसंभवी, कविप्रौढोक्तिसिद्धः, कविनिबद्धनायकादिवक्तृप्रौढोक्तिसिद्धश्च । स त्रिविधोऽपि वस्तुमात्रमलंकृतिर्वेति षड्विधः । षण्णां व्यङ्ग्यमपि प्रत्येकं वस्तु वा अलंकृतिर्वेति द्वादश भेदाः ॥

1. **पितेति** । अस्य शिशोः पिता । मत्स्वामीत्यर्थः ॥

2. **स्रोत इति** । तमालाकुलं तमालवनवेष्टितं स्रोतः स्वतोऽम्बुसरणम् । एतेन कूपसलिलापेक्षया स्रोतःसलिलस्योत्कृष्टता प्रतिपाद्यते ॥

---

१. ग-पुस्तके तु 'स्वतःसंभवी—' इत्यादिः '—न तु रूप्यादीनामित्यलंकृतेरेव मुख्यत्वम्' इत्यन्तो ग्रन्थो न दृश्यते. २. 'प्रतिपादिकायाः' क-पुस्तके नास्ति.

दिशि मन्दायते तेजो दक्षिणस्यां रवेरपि ।
तस्यामेव रघोः पाण्ड्याः प्रतापं न विषेहिरे ॥

अत्र स्वतःसंभविना वस्तुना रवितेजसो रघुप्रतापोऽधिक इति व्यतिरेकालंकारो व्यज्यते ।

आपतन्तममुं दूरादूरीकृतपराक्रमः ।
बलोऽवलोकयामास मातङ्गमिव केसरी ॥

अत्रोपमालंकारेण स्वतःसंभविना व्यञ्जकार्थेन[1] बलदेवः क्षणेनैव वेणुदारिणः[1] क्षयं करिष्यतीति वस्तु व्यज्यते ।

गाढकान्तदशनक्षतव्यथासंकटादरिवधूजनस्य यः ।
ओष्ठविद्रुमदलान्यमोचयन्निर्दशन्युधि रुषा निजाधरम् ॥

अत्र स्वतःसंभविना विरोधालंकारेणाधरो निर्दष्टः शत्रवो व्यापादिताश्चेति समुच्चयालंकारो व्यङ्ग्यः ।

---

वाक्यार्थो लोकप्रसिद्ध एव ॥ स्वतःसंभविवस्तुव्यङ्ग्यालंकारमाह—**दिशीति** । मन्दायते मृदूभवति । एवकारोऽप्यर्थे । उपमानादुपमेयस्याधिक्यं न्यूनत्वं वा व्यतिरेकस्तस्य व्यङ्ग्यत्वम् । प्रकृतोपयोगिप्रकर्षनिकर्षयोरन्यतरस्य बोधाभिप्रायेण प्रयुक्तधर्मस्य तत्प्रकारत्वासंभवेन तद्बोधानुपपत्त्या निरुक्तधर्मव्यञ्जयकारणमुखेन तद्बोधोपपत्तौ भवति । दिशीत्यादौ रवितेजसो मार्दवयुक्तो यो निकर्षस्तस्यासह्यत्वप्रयुक्तरघुप्रतापगतप्रकर्षनिरूपकत्वाभावात्प्रकृतानुपयोगितया मार्दवव्यङ्ग्यसह्यत्वेन प्रकृतोपयोगिनिकर्षप्रत्यायनाद् व्यतिरेकस्य व्यङ्ग्यत्वम् ॥ स्वतःसंभव्यलंकारव्यङ्ग्यं वस्त्वाह—**आपतन्तमिति** । अभिमुखमायान्तमित्यर्थः । **अमुं** वेणुदारिणम् । **ऊरीकृतपराक्रमः** स्वीकृतविक्रमः । कृतयुद्धप्रतिज्ञ इति यावत् । **बलो** बलदेवः । विपुलविक्रमत्वेन बलस्य केसरिसादृश्यं मदान्धत्वेन वेणुदारिणो मातङ्गसादृश्यं लोकप्रसिद्धमेव ॥ स्वतःसंभव्यलंकारव्यङ्ग्यमलंकारमाह—**गाढेति** । गाढकान्तदशनक्षतजन्यव्यथैव संकटो विपत् तस्मात् । ओष्ठा एव विद्रुमस्य प्रवालस्य दलानि खण्डानि । क्रोधेन निजाधरं निर्दश्य निहते शत्रौ तद्वधूनां कान्तकर्तव्यो रतिकालीनोऽधरदंशो निवर्तत इत्यर्थः । अधरस्य निर्दशनेन व्यथाया उत्पत्तिरेव न तु मोचनमित्यापाततो विरोधः । आश्रयभेदे त्वविरोध एव । **व्यापादिता** मारिताः । 'धुनोति चासिं तनुते च कीर्तिम्' इत्यादावेकाधिकरणे चैष दृश्यत इति वक्ष्यमाणवदत्र कार्यकारणकालनियमविपर्ययरूपातिशयोक्तिमूलं क्रियायौगपद्यं समुच्चयः ।

---

1. **वेणुदारिण इति** । वेणुदारिसंज्ञको बाणासुरतनयः ॥

---

1. 'व्यञ्जक' इति नास्ति क-पुस्तके.

'सज्जेहि[1] सुरहिमासो ण दाव[2] अप्पेइ जुअइजणलक्खमुहे[3] ।
अहिणवसहआरमुहे णवपल्लवपत्तले अणङ्गस्स सरे ॥'

अत्र वसन्तः शरकारः, कामो धन्वी, युवतयो लक्ष्यम्, पुष्पाणि शरा इति कविप्रौढोक्तिसिद्धं वस्तु प्रकाशीभवन्मदनविजृम्भणरूपं वस्तु व्यनक्ति ।

'रजनीषु विमलभानोः करजालेन प्रकाशितं वीर ! ।
धवलयति भुवनमण्डलमखिलं तव कीर्तिसंततिः सततम् ॥'

अत्र कविप्रौढोक्तिसिद्धेन वस्तुना कीर्तिसंततेश्चन्द्रकरजालादधिक[4]कालप्रकाशकत्वेन व्यतिरेकालंकारो व्यङ्ग्यः ।

'दशाननकिरीटेभ्यस्तत्क्षणं राक्षसश्रियः ।
मणिव्याजेन पर्यस्ताः पृथिव्यामश्रुबिन्दवः ॥'

---

निर्दशन्निति वर्तमाननिर्देशात्तत्कालीनमोचनेन तद्धेतुशत्रुव्यापादनस्यापि तत्कालीनत्वलाभः । कार्यकारणयोः शत्रुव्यापादनाधरदंशनयोः समकालत्वं तु बाधितमप्याहार्यप्रतीतिविषय एव शीघ्रकारिताव्यञ्जनमित्यवधेयम् । अत्र समुच्चयार्थकचकाराद्यभावेन शत्रुव्यापादनक्रियया व्यङ्ग्यत्वेन समुच्चयस्य व्यङ्ग्यत्वम् ॥ कविप्रौढोक्तिसिद्धवस्तुव्यङ्ग्यं वस्त्वाह—सज्जेहीति[1] । 'सज्जयति सुरभिमासो न तावदर्पयति युवतिजनलक्ष्यमुखान् । अभिनवसहकारमुखान्नवपल्लवपत्रलाननङ्गस्य शरान् ॥' इति संस्कृतम् । सुरभिमासश्चैत्रः । अभिनवो नवमुकुलितः सहकारोऽतिसौरभाम्रो मुखमादिर्येषां तान् । नवपल्लव एव पत्रं पक्षस्तल्लान्ति गृह्णन्ति तान् ॥ प्रकाशीभवत् सिद्धवद्भासमानम् । विजृम्भणं विशेषेण वर्धनम् । अत्र वसन्तादीनां शरकारत्वादिकमलीकम् ॥ कविप्रौढोक्तिसिद्धवस्तुव्यङ्ग्यमलंकारमाह—रजनीष्विति । विमलभानोः शुभ्रकिरणस्य चन्द्रस्येत्यर्थः । सततं रात्रिंदिवम् । अत्र यशसा निखिलभवनधवलीकरणमलीकमपि कविप्रौढोक्तिसिद्धम् । अखिलमित्यनेनाधिकदेशप्रकाशत्वं च बोध्यम् । [5]रात्रिंदिवप्रकाशस्यापि रात्रिप्रकाशकत्वमस्तीति तस्य निकर्षकारणत्वासंभवात्तद्व्यङ्ग्येन रात्रिमात्रप्रकाशकत्वेन निकर्षप्रत्यायनाद् व्यतिरेकस्य व्यङ्ग्यत्वम् ॥ कविप्रौढोक्तिसिद्धालंकारव्यङ्ग्यं वस्त्वाह—दशाननेति । यस्मिन् क्षणे श्रीरामः पृथिव्यामवतीर्णस्तत्क्षणं व्याप्येत्यर्थः । पर्यस्ताः पतिताः । प्रकृतानां मणीनां प्रतिषेधेना-

---

1. सज्जेहीति । अत्र वसन्तोऽचेतनोऽनङ्गस्य सखा सज्जयति न केवलं तावदर्पयतीत्येवंविधया समर्पयितव्यवस्त्वर्पणकुशलयोक्त्या सहकारोद्भेदिनी वसन्तदशा यत उक्ता अतो ध्वन्यमानं मन्मथोन्माथस्यारम्भं क्रमेण गाढगाढीभविष्यन्तं व्यनक्ति । अन्यथा वसन्ते सपल्लवसहकारोद्गम इति वस्तुमात्रं न व्यञ्जकं स्यात् ॥

---

१. 'इ' क-घ. २. 'आपणे ई' क-घ ३. 'सहे' क-घ. ४. 'काल' इति नास्ति क-पुस्तके.
५. 'रात्रिंदिव—' इत्यादिः 'व्यङ्ग्यत्वम्' इत्यन्तः पाठः पुस्तकान्तरे नास्ति.

अथ गद्यकाव्यानि । तत्र गद्यम्—

वृत्तगन्धोज्झितं गद्यं मुक्तकं वृत्तगन्धि च ॥ ३३० ॥
भवेदुत्कलिकाप्रायं चूर्णकं च चतुर्विधम् ।
आद्यं समासरहितं वृत्तभागयुतं परम् ॥ ३३१॥
अन्यद्दीर्घसमासाढ्यं तुर्यं चाल्पसमासकम् ।

मुक्तकं यथा—'गुरुर्वचसि पृथुरुरसि—' इत्यादि ।

वृत्तगन्धि यथा मम—'समरकण्डूलनिबिडभुजदण्डकुण्डलीकृतकोदण्डशिञ्जिनीटंकारोज्जागरितवैरिनगर—' इत्यादि ।

अत्र 'कुण्डलीकृतकोदण्ड—' इत्यनुष्टुब्वृत्तस्य पादः, 'समरकण्डूल' इति च प्रथमाक्षरद्वयरहितस्तस्यैव पादः ।

उत्कलिकाप्रायं यथा ममैव—'अणिसविसुमरणिसिदसरविसरविदलिदसमरपरिगदपवरपरबल—' इत्यादि ।

चूर्णकं यथा मम—'गुणरत्नसागर जगदेकनागर कामिनीमदन जनरञ्जन' इत्यादि ।

कथायां सरसं वस्तु गद्यैरेव विनिर्मितम् ॥ ३३२ ॥
क्वचिदत्र भवेदार्या क्वचिद्वक्त्रापवक्त्रके ।
आदौ पद्यैर्नमस्कारः खलादेर्वृत्तकीर्तनम् ॥ ३३३ ॥

यथा—कादम्बर्यादिः ।

आख्यायिका कथावत्स्यात्कवेर्वंशा[1]नुकीर्तनम् ।
अस्यामन्यकवीनां च वृत्तं पद्यं क्वचित्क्वचित् ॥ ३३४ ॥

---

स एव कोष एव ॥ वृत्तस्य गन्धेन लवेनापि उज्झितं श्रव्यकाव्यं गद्यम् । आद्यं मुक्तकम् । वृत्तस्य छन्दसो भागः पादः, परं वृत्तगन्धि । अन्यदुत्कलिकाप्रायम् । तुर्यं चूर्णकम् ॥ अणिस इति । 'अनिशविस्मरनिशितशरविसरविदलितसमरपरिगतप्रवरपरबल—' इति संस्कृतम् ॥ गद्यकाव्यप्रभेदयोः कथाख्यायिकयोर्विशेषमाह—कथायामिति । पद्यानां विशेषमाह—क्वचिदिति । वक्त्रापवक्त्रके छन्दोविशेषौ । 'पद्यैः' इत्युभयत्र संबध्यते ॥ आख्यायिकामाह—आख्यायिकेति । कथावदिति । यथा कथायां पद्यैर्नमस्कारखलवृत्तकीर्तनसरसवस्तुवर्णनास्तथात्रापीत्यर्थः । विशेषमाह—कवेरिति । अस्यामाख्यायिकायाम् । वृत्तं

---

१. 'आदि' घ.

कथांशानां व्यवच्छेद आश्वास इति बध्यते ।
[1]आर्यावक्त्रापवक्त्राणां छन्दसा येन केनचित् ॥ ३३५ ॥
अन्यापदेशेनाश्वासमुखे भाव्यर्थसूचनम् ।

यथा—हर्षचरितादिः ।

'अपि त्वनियमो दृष्टस्तत्राप्यन्यैरुदीरणात् ।' इति दण्ड्याचार्यवचनात्केचित् 'आख्यायिका नायकेनैव निबद्धव्या' इत्याहुः, तदयुक्तम् । आख्यानादयश्च कथाख्यायिकयोरेवान्तर्भावान्न पृथगुक्ताः । यदुक्तं दण्डिनैव—

'अत्रैवान्तर्भविष्यन्ति शेषाश्चाख्यानजातयः ।' इति ।

एषामुदाहरणम्—पञ्चतन्त्रादि ।

अथ गद्यपद्यमयानि—

[2]गद्यपद्यमयं काव्यं चम्पूरित्यभिधीयते ॥ ३३६ ॥

[3]यथा—देशराजचरितम् ।

गद्यपद्यमयी राजस्तुतिर्बिरुदमुच्यते ।

यथा—विरुदमणिमाला ।

करम्भकं तु भाषाभिर्विविधाभिर्विनिर्मितम् ॥ ३३७ ॥

यथा मम—षोडशभाषामयी प्रशस्तिरत्नावली ।

---

चरित्रम् ॥ दण्ड्याचार्यवचनादिति हेतुः 'तदयुक्तम्' इत्यत्रान्वेति ॥ एषामाख्यायिकादीनाम् ॥ गद्यपद्यमयानि श्रव्यकाव्यानीत्यर्थः ॥ भेदाः श्रव्यकाव्यविशेषाः । उद्देशमात्रप्रसिद्धत्वात् नाममात्रेण ख्यातत्वात् । तथा च तेषां संज्ञयैव भिन्नत्वम्, न तु वस्तुत इति भावः ॥

इति श्रीरामचरणतर्कवागीशभट्टाचार्यविरचितायां साहित्यदर्पणविवृतौ
षष्ठः प्रकाशः ।

---

1. आर्यावक्त्रेति । आर्यावक्त्रापवक्त्राणां मध्ये ॥

2. गद्येति । काव्यं चात्र समस्तलक्षणाक्रान्तमवधेयम् । लक्षणसंकोचे तु काव्यभेदवदिहाप्युपादेयतातारतम्यं स्यात् । कथांशविच्छेदास्तूच्छ्वाससंज्ञकाः स्तवकसंज्ञका वा भवन्ति ॥

3. यथेति । यथा वा नलचम्प्वादि ॥

[1]एवमन्येऽपि भेदा उद्देशमात्रप्रसिद्धत्वादुक्तभेदानतिक्रमाच्च न पृथग्लक्षिताः ॥

(अत्र मूलकारिका=३३७ पूर्वाभिः सह ६४६ उदाहरणश्लोकाः=११४ पूर्वैः सह ३२१।)

इति साहित्यदर्पणे दृश्यश्रव्यकाव्यनिरूपणो नाम षष्ठः परिच्छेदः ।

---

1. एवमिति । 'येन केनापि तालेन गद्यपद्यसमन्वितम् । जयेत्युपक्रमं मालिन्यादिप्रासविच्चित्रितम् ॥ तदुदाहरणं नाम्ना विभक्त्यष्टाङ्गसंयुतम् । संबोधनविभक्त्या यत्प्रचुरं पद्यपूर्वकम् ॥ विमुक्तपुनराकृष्टशब्दः स्याच्चक्रवालकम् । आद्यन्तपद्यसंयुक्ता संस्कृतप्राकृतात्मिका ॥ अष्टभिर्वा चतुर्भिर्वा वाक्यैः स्कन्धसमन्विता । प्रतिस्कन्धं भिन्नवाक्यरीतिर्देवनृपोन्विता ॥ सर्वतो देवशब्दादिरेषा भोगावली मता । वर्ण्यनामाङ्कविरुदवर्णनप्रचुरोज्वला ॥ वाक्याडम्बरसंयुक्ता कथिता विरुदावली । ताराणां संख्यया पद्यैर्युक्ता तारावली मता ॥ विश्वेषां संख्यया पद्यैर्युक्ता विश्वावली मता । रत्नानां संख्यया पद्यैर्युक्ता रत्नावली मता ॥ पद्यैश्च पञ्चभिर्युक्ता प्रोक्ता पञ्चाननावली ॥' इत्यादयः कविकर्मभेदास्तत्र तत्रोपलभ्यन्ते । ते नातिचमत्काराधायकत्वाद् ग्रन्थकृतोपेक्षिताः । प्रायेण कविकर्मणो द्विविधः परिपाको भवति । तथा चोक्तम्—'अर्थगम्भीरिमा पाकः स द्वेधा कविसंमतः । द्राक्षापाको नारिकेलपाकश्च प्रस्फुटान्तरौ ॥ द्राक्षापाकः स कथितो बहिरन्तःस्फुरद्रसः । स नारिकेलपाकः स्यादन्तर्गूढरसोदयः ॥' इति ॥



## सप्तमः परिच्छेदः ।

इह [1]हि प्रथमतः काव्ये दोषगुणरीत्यलंकाराणामवस्थितिक्रमो दर्शितः । संप्रति के त इत्यपेक्षायामुद्देशक्रमप्राप्तानां दोषाणां स्वरूपमाह—

**रसापकर्षका दोषास्—**

---

काव्यं निरूप्य तदीयदोषादीन्निरूपयँस्तस्य प्रकृतत्वं दोषनिरूपणस्य प्राथमिकत्वं चोपपादयति—**इह हीति । प्रथमतो** दोषादिनिरूपणात्प्राक् **काव्ये** काव्यलक्षणे रीतेश्छन्दोऽनुरोधेन पश्चान्निर्देशेऽपि वक्ष्यमाणयुक्त्या अलंकारनिरूपणात्प्रागेव तां निरूपयिष्यतीति तस्या अलंकारात्प्रागिह निर्देशः । **ते** दोषादयः । 'हेयहानिपूर्वकमुपादेयोपादानमिति सूचयितुं दोषनिरूपणस्य प्राथमिकत्वम्' इत्यपरे । दोषाणां सामान्यलक्षणमाह-**रसापकर्षका इति** । अत्रोक्तयुक्त्या ( २० पृ. ) रसपदेन विभावादयोऽप्युच्यन्ते । तदपकर्षकस्यापि दोषत्वेनोदाहरिष्यमाणत्वात् । दूषयति काव्यमिति दोषपदेन दुःश्रवत्वादिरुच्यते । भावसाधनेन तु काव्यापकर्ष एव । काव्यापकर्षश्च त्रिधा—रसादिप्रतीतिप्रतिबन्धः, रसादिप्रकर्षप्रतीतिप्रतिबन्धः, रसादिप्रतीतिविलम्बनं च । तच्च दोषविशेषोदाहरणेष्ववधेयम् । नन्वेतल्लक्षणं श्रुतिदुष्टापुष्टार्थत्वादावव्याप्तं तस्य शब्दार्थदोषत्वेन रसापकर्षकत्वाभावादत आह—

---

1. दोषा इति । अत्रेदं तत्त्वम्—उद्देश्यप्रतीतिविघातलक्षणो दोष इति तत्सामान्यलक्षणम् । उद्देश्या च प्रतीती रसवत्यविलम्बितानपकृष्टरसविषया च नीरसे त्वविलम्बिता चमत्कारिणी चार्थविषया । तथा च तादृशप्रतीतिविघातकत्वं सर्वेषामविशिष्टम् । यतो दुष्टेषु क्वचिद्रसस्याप्रतीतिरेव, क्वचित्प्रतीयमानस्यापकर्षः, क्वचित्तु विलम्बः । एवं नीरसे क्वचिदर्थस्य मुख्यभूतस्याप्रतीतिरेव, क्वचिद्विलम्बेन प्रतीतिः, क्वचिदचमत्कारित्वमित्युद्देश्यप्रतीत्यनुत्पादो व्यक्त एव । तद्विघातकता च कस्यचित्साक्षात् । यथा—रसदोषाणाम् । कस्यचित्परम्परया । यथा—शब्दार्थदोषाणाम् । तेष्वपि कस्यचिदर्थोपस्थितेरभावात् । यथा—असमर्थत्वादेः । कस्यचिद्विलम्बात् । यथा—निहतार्थत्वादेः । कस्यचिद्वाक्यार्थबोधाभावात् । यथा—च्युतसंस्कारत्वादेः । कस्यचित्तत्र विलम्बात् । यथा—क्लिष्टत्वादेः । कस्यचित्सहृदयवैमुख्यव्यग्रताद्यापादनेन । यथा—निरर्थकत्वादेः । कस्यचिद्विरोध्युपस्थापनेन विपरीतोपस्थापनेन वा । यथा—विरुद्धमतिकारित्वादेरित्याद्यूहनीयम् । विघातकत्वं च कस्यचित् ज्ञातस्य । यथा—व्याहतत्वादेः । कस्यचित्स्वरूपसत एव । यथा—निहतार्थत्वादेः । स चायं द्विविधः—नित्योऽनित्यश्च । तत्रानुकरणादन्येन प्रकारेण समाधातुमशक्यो नित्यः । यथा—च्युतसंस्कारत्वादिः । अन्यादृशस्त्वनित्यः । यथा—अप्रयुक्तत्वादिः । यद्वा सर्वदैव हेयो नित्यः । यथा—च्युतसंस्कारत्वादिः । तदन्योऽनित्यः । यथा—शृङ्गारादौ हेयमपि दुःश्रवत्वं रौद्रादावुपादेयमेव ॥

---

[1] 'हि' घ-पुस्तके नास्ति.

अस्यार्थः प्रागेव स्फुटीकृतः ।

तद्विशेषानाह—

ते पुनः पञ्चधा मताः ।

पदे तदंशे वाक्येऽर्थे संभवन्ति रसेऽपि यत् ॥ १ ॥

स्पष्टम्[१] ।

तत्र—

दुःश्रवत्रिविधाश्लीलानुचितार्थाप्रयुक्तताः ।
ग्राम्या[२]प्रतीतसंदिग्धनेयार्थनिहतार्थताः ॥ २ ॥
अवाचकत्वं क्लिष्टत्वं विरुद्धमतिकारिता ।
अविमृष्टविधेयांशभावश्च पदवाक्ययोः ॥ ३ ॥
दोषाः केचिद्भवन्त्येषु पदांशेऽपि पदे परे[३] ।
निरर्थकासमर्थत्वे च्युतसंस्कारता तथा ॥ ४ ॥

परुषवर्णतया श्रुतिदुःखावहत्वं दुःश्रवत्वम् ।

यथा—

'[1]कार्तार्थ्यं यातु तन्वङ्गी कदानङ्गवशंवदा ॥'

---

अस्यार्थ इति । प्रागेव प्रथमपरिच्छेद एव । श्रुतिदुष्टत्वादेः शब्दार्थापकर्षकद्वारेण रसापकर्षत्वमिति नाव्याप्तिरिति भावः ॥ **तद्विशेषान्** दोषविभागान् । **ते** दोषाः । तदंशे ॥ पदांशे दोषविशेषान्निर्दिशति—**दुःश्रव इति** । अयं भावप्रधानो निर्देशः । दुःश्रवत्रिविधाश्लीलेति समस्तपाठे भावप्रत्ययस्य सर्वत्रान्वयः । एषूक्तदोषेषु ॥ उद्देशक्रमेण दुःश्रवत्वादिलक्षणं सोदाहरणमाह—**परुषेति** । केषांचित्स्पष्टत्वादुदाहरणस्यैव दर्शनम् । 'श्रुतिपतितमात्रं यद्वैरस्यमावहति तत्पदं सर्वथा न देयमिति प्रथमं तदुपन्यासः' इत्यन्ये । परुषवर्णता वर्णानां पारुष्यं गुणपरिच्छेदे व्यक्तीभविष्यति । श्रोतॄणां श्रोत्रावच्छेदेन दुःखजनकत्वं श्रुतिदुःखावहम् । श्रुतिपतितं सद्दुःखावहं श्रुतिदुःखावहम्, तत्त्वं वा । **कार्तार्थ्यमिति** । अत्र तथयो रेफयोर्योगेन पारुष्यम् । तत्प्रयुक्तं पदस्य दुःश्रवत्वं स्वाश्रयपदसंबन्धित्वेन प्रत्यासन्नस्य शृङ्गाररसस्य प्रकर्षप्रतीतिं प्रतिबध्नाति । इदमेव 'श्रुतिकटु' इत्यभिधीयते । नन्वेतत्पदांशपारुष्यमेव न तु पदपारुष्यमिति चेत् । वाक्यघटकद्वित्रादिपद-

---

1. **कार्तार्थ्यमिति** । 'अनङ्गमङ्गलगृहापाङ्गभङ्गितरङ्गितैः । आलिङ्गितः स तन्वङ्ग्या कार्तार्थ्यं लभते कदा ॥' इति प्रकाशोदाहरणानुरूपम् ॥

---

१. 'स्पष्टम्' घ-पुस्तके नास्ति. २. 'ग्राम्यः' क. ३. 'परम्' क-ख-ग-घ.

अश्लीलत्वं[1] व्रीडाजुगुप्सामङ्गलव्यञ्जकत्वात्त्रिविधम् ।

क्रमेणोदाहरणम्—

'दृप्तारिविजये राजन्साधनं सुमहत्तव ॥'

'प्रससार शनैर्वायुर्विनाशे तन्वि! ते तदा ॥'

अत्र साधन-वायु-विनाश-शब्दा अश्लीलाः ।

'शूरा अमरतां यान्ति पशुभूता रणाध्वरे ॥

अत्र पशुपदं[3] कातर्यमभिव्यनक्तीत्यनुचितार्थत्वम् ।

---

पारुष्यप्रयुक्तवाक्यदुःश्रवत्ववत्पदघटकद्वित्रादिवर्णपारुष्यप्रयुक्तपददुःश्रवत्वस्य स्वीकारात् । असभ्यार्थान्तरव्यञ्जकमश्लीलं[2] तस्य भावस्तत्ता । पदांशाश्लीलत्वं तु असभ्यस्मृतिहेतुत्वमेव । **जुगुप्सा** घृणा । **अमङ्गलममङ्गलाशङ्का** । व्यञ्जकत्वमिह जनकत्वमेव ॥ **अत्रेति** । सैन्ये प्रयुक्तः साधनशब्दो मेढ्रव्यञ्जकतया श्रोतुर्लज्जाजननेन राजविषयरतिभावस्य, समीरणे प्रयुक्तो वायुशब्दः पायुवायुव्यञ्जकतया श्रोतुर्जुगुप्साजननेन, अदर्शने प्रयुक्तो विनाशशब्दश्च मृत्युव्यञ्जकतया अमङ्गलाशङ्काजननेन, शृङ्गारस्य प्रकर्षप्रतिबन्धकः ॥ **अनुचितार्थत्वं** क्वचिद्वाच्यार्थदोषप्रतिपादकत्वेन, क्वचिदर्थासंभवेन, क्वचिदसत्समर्थकत्वेन । तत्राद्यमाह— **शूरा इति** । पशुभूताश्छेद्यस्वरूपाः । अत्र वाच्यार्थस्य शूरस्य कातर्यं दोषः ।

---

1. अश्लीलत्वमिति । श्रियं सहृदयवशीकरणसंपत्तिं लातीति । 'आतोऽनुपसर्गे—' इति कः । तद्भिन्नम् । कपिलादित्वाल्लत्वम् ॥

2. अत्रेति । अश्लीलार्थोपस्थित्या श्रोतुर्वैमुख्यमिह दूषकताबीजम् । येषां पुनः शिवलिङ्ग-सुभगा-भगिनी-ब्रह्माण्डादिशब्दानां विवक्षितार्थस्य प्रसिद्धतयाश्लीलार्थो नोपतिष्ठते न तेषु दुष्टत्वमित्यतिरोहितं विदाम् ॥ अत्र "साधनं सुमहद् यस्य यन्नान्यस्यावलोक्यते । तस्य धीशालिनः कोऽन्यः सहेतारालितां भ्रुवम् ॥" 'लीलातामरसाहतोऽन्यवनितानिःशङ्कदष्टाधरः कश्चित्केसरदूषितेक्षण इव व्यामील्य नेत्रे स्थितः । मुग्धा कुड्मलिताननेन ददती वायुं स्थिता तत्र सा भ्रान्त्या धूर्ततयाथवानतिमृते तेनानिशं चुम्बिता ॥' 'मृदुपवनविभिन्नो मत्प्रियाया विनाशाद् घनरुचिरकलापो निःसपत्नोऽद्य जातः । रतिविगलितबन्धे केशपाशे सुकेश्याः स्रजि कुसुमसनाथे कं हरेदेष बर्हो ॥" इति प्रकाशोदाहरणानां दूष्यांशाः संगृहीताः ॥

3. पशुपदमिति । अत्र शौर्ये प्रतिपाद्ये पदान्तरानपेक्षमेव पशुपदं कातर्यमभिव्यनक्ति, पशुपदार्थे कातर्यस्य दर्शनात् । विरुद्धमतिकृत्तु पदान्तरसापेक्षं तथेति तस्माद्भेदः ॥ अत्र "तपस्विभिर्या सुचिरेण लभ्यते प्रयत्नतः सत्रिभिरिष्यते च या । प्रयान्ति तामाशु गतिं यशस्विनो रणाश्वमेधे पशुतामुपागताः ॥" इति प्रकाशोदाहरणांशः परावर्तितः ॥

---

१. 'त्रिधा' घ. २. 'असत्य' इति पुस्तकान्तरे. ३. 'व्यञ्जक' इति नास्ति पुस्तकान्तरे.

अप्रयुक्तत्वं तथाप्रसिद्धावपि कविभिरनादृतत्वम् । यथा—

'भाति पद्मः सरोवरे ॥'

अत्र पद्म[1]शब्दः पुंलिङ्गः ।

ग्राम्यत्वं यथा—

'कटिस्ते हरते मनः ॥'

अत्र कटि[2]शब्दो ग्राम्यः ।

अप्रतीतत्वमेकदेशमात्रप्रसिद्धत्वम् । यथा—

'योगेन दलिताशयः ॥'

अत्र योग[3]शास्त्र एव वासनार्थ आशयशब्दः ।

---

तस्य व्यञ्जकत्वात्पशुपदस्यानुचितार्थत्वम् । द्वितीयं यथा—'प्रज्वलज्जलधारावन्निप्रतन्ति शरास्तव ।' अत्र प्रज्वलदिति पदमनुचितार्थम् । तृतीयं यथा—'दिवाकराद्रक्षति यो गुहासु लीनं दिवाभीतमिवान्धकारम् । क्षुद्रेऽपि नूनं शरणं प्रपन्ने ममत्वमुच्चैः शिरसामतीव ॥' अत्रासद्भूतस्यान्धकारभयस्य समर्थकं द्वितीयार्धमनुचितार्थम् । एवमन्यदपि ज्ञेयम् ॥ **तथाप्रसिद्धावपि** तेन रूपेण प्रसिद्धिसत्त्वेऽपि ॥ **पुंलिङ्ग इति** । 'अप्रयुक्तः' इति शेषः ॥ हालिकसाधारणप्रसिद्धार्थकशब्दो **ग्राम्यः कटिरिति** । अत्र शृङ्गारस्य गूढत्वकृतचारुत्वाभावात्प्रकर्षप्रतीतिप्रतिरोधः ॥ **योगेन** प्रकृतिपुरुषयोर्भेदचिन्तनेन दलितः खण्डित आशयो वासना यस्य सः । आशयशब्दोऽप्रतीत इति शेषः । अत्र योगशास्त्रानुशीलिनामाशयपदार्थानभिज्ञानां योगिविषयभावबोधविलम्बकरत्वम**प्रतीतत्वम्** ॥ प्रकरणाद्यभावेन

---

1. पद्मेति । 'वा पुंसि पद्मम्' इत्यनेनाम्नातोऽपि पुंलिङ्गः पद्मशब्दः कविभिर्न क्वापि प्रयुक्तः । अत्र दूषकताबीजं तु तादृशकविसमयलङ्घनप्रयोजनानुसंधानव्यग्रतया मुख्यार्थविच्छित्तिः । यमकादिप्रयोजनसत्त्वे तु नायं दोषः, अन्यत्राप्रयुज्यमानस्यापि तदर्थं कविभिः प्रयोगस्य दर्शनेन व्यग्रताभावादिति ॥

2. कटीति । अत्रेदं तत्त्वम्—श्रोणीनितम्बादिकमेव विदग्धैः प्रयुज्यते, कटिपदं त्वविदग्धमात्रप्रयोज्यमिति ग्राम्यम् । पदं त्रिविधम्—ग्राम्यं नागरमुपनागरं च । विदग्धमात्रप्रसिद्धं नागरम्, ग्राम्यकक्षातिक्रान्तमप्राप्तनागरभावमुपनागरम्, नागरोपनागरे विहाय ग्राम्यशब्दप्रयोगाद्वक्तुरवैदग्ध्योन्नयनेनात्र दौष्ट्यम् । अत एव विदूषकादावधमे वक्तरि न दोषत्वम्, तस्य तथैवौचित्येन वैरस्याभावात् ॥ अत्र प्रकाशे संपूर्णश्लोकस्त्वेवम्—'राकाविभावरीकान्तसंक्रान्तद्युति ते मुखम् । तपनीयशिलाशोभा कटिश्च हरते मनः ॥'

3. योगशास्त्र इति । 'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः' इति पातञ्जलसूत्रे ( १।२४ ) वासनार्थक आशयशब्दः प्रयुक्तः । वासना चात्र संसारनिदानं मिथ्याज्ञानजन्यः संस्कारविशेषः । दूषकताबीजं तु तच्छास्त्रानभिज्ञस्य तादृशा-

'आशीः परम्परां वन्द्यां कर्णे कृत्वा कृपां कुरु ॥'

अत्र वन्द्यामिति किं वन्दीभूतायामुत वन्दनीयामिति संदेहः ।

नेयार्थत्वं रूढिप्रयोजनाभावादशक्तिकृतं लक्ष्यार्थप्रकाशनम् ।

यथा—

'कमले चरणाघातं मुखं सुमुखि ! तेऽकरोत् ।

अत्र चरणाघातेन निर्जितत्वं लक्ष्यम् ।

---

श्लेषादिनार्थजनकः शब्दः संदिग्धः । **आशीरिति** । कर्णे कृत्वा श्रुत्वा । **अत्रेति** । वन्द्यामिति पदस्य संदिग्धत्वं शाब्दबोधविलम्बेन राजविषयरतिभावबोधस्य विलम्बकृत् ॥ **अशक्तिकृतं** कवेरसामर्थ्यप्रयुक्तम् । असामर्थ्यमत्राव्युत्पत्तिः ॥ **चरणाघातेन** चरणाघातपदेन **निर्जितत्वं** पराभवः । मुखस्य चरणासंभवात्तदाघातस्याप्यसंभव इत्यन्वयानुपपत्तिः । स्वजन्यचरणाघातपराभवः[1] स्वजन्यवृत्तिपराभवत्ववत्वं मुख्यलक्ष्ययोः संबन्धः । अत्र रूढिप्रयोजनव्यतिरेकनिश्चयेन कवेरशक्तिनिश्चयः ततो लक्ष्योपस्थितिः ततः शाब्दबोध इति तद्विलम्बेनैव रसबोधविलम्बनमत्र दूषकतावीजम् । केचित्तु—'निर्जितत्वातिशयस्य प्रयोजनस्यैवोपस्थितेरत्र कथं नेयार्थम्' इति चेत् । न । रूढिप्रयोजनाभावपदस्य मुख्यार्थसंबन्धग्रहाभावोपलक्षणपरतया प्रकृते तत एव नेयार्थत्वाभ्युपगमात् । केचित्तु—'पद्मनिर्जितत्वं हि शोभयैव जनितं न तु चरणाघातेनेति तयोर्जन्यजनकभावसंबन्धाभावः' इत्याहुः । तन्न । अत्र हि लक्षणाजन्यबोधानन्तरं सादृश्यप्रतीतिरेवानुभवसिद्धा, न तु निर्जितत्वातिशयप्रतीतिः । तात्पर्याभावात्, मुख्यलक्ष्ययोरुपदर्शितसंबन्धसंभवाच्च । न चात्र सादृश्यप्रतीतिरेव प्रयोजनमिति वाच्यम्, वक्त्रादिवैशिष्ट्यसचिवयार्थव्य-

---

र्थानुपस्थितिः । अत एव यत्र तच्छास्त्राभिज्ञ एव प्रतिपाद्यः स्वयमेव वा परामर्शस्तत्र न दोषत्वम् । अत्र 'सम्यग्ज्ञानमहाज्योतिर्दलिताशयताजुषः । विधीयमानमप्येतन्न भवेत्कर्मबन्धनम् ॥' इति प्रकाशोदाहरणमुपजीव्यम् ॥

1. **वन्द्यामिति** । संदेहो वक्तृतात्पर्यसंशयः बवयोरभेदबुद्धिमूलकः । वन्द्यामित्यानुपूर्व्या उभयसाधारणतया विनिगमनाभावादर्थद्वयसरणे वक्तृतात्पर्यसंदेहः । दूषकताबीजमुद्देश्यनिश्चयाभावः । अतो यत्र संदेह एवोद्देश्यस्तत्र यत्र च वाच्यादिमहिम्ना प्रकरणादिवशेन वा निश्चयस्तत्र चादोषत्वमिति गोविन्दठक्कुराः ॥ अत्र पूर्वार्धं त्वेतत्—'आलिङ्गितस्तत्रभवान् संपराये जयश्रिया' ॥

2. **नेयार्थत्वमिति** । नेयो न्यायराहित्येन स्वेच्छया कल्पनीयोऽर्थो यस्य तत्त्वम् । 'निरूढा लक्षणाः काश्चित्सामर्थ्यादभिधानवत् । क्रियन्ते सांप्रतं काश्चित्काश्चिन्नैव त्वशक्तितः ॥' इति भाट्टनयेन रूढिप्रयोजनाभ्यां विना प्रतिषिद्धा या लक्षणा तद्विषयत्वमित्यर्थः ॥

---

1. 'स्वजन्यचरणाघातपराभवः' इति पुस्तकान्तरे नास्ति.

निहतार्थत्वमुभयार्थस्य शब्दस्याप्रसिद्धेऽर्थे प्रयोगः । यथा—

'यमुनाशम्बरमम्बरं व्यतानीत् ॥'

शम्बरशब्दो दैत्ये प्रसिद्धः । इह तु जले निहतार्थः ।

'गीतेषु कर्णमादत्ते ॥'

[1]अत्राङ्-पूर्वो दाञ्-धातुर्दानार्थेऽवाचकः ।

यथा वा—

'[2]दिनं मे त्वयि संप्राप्ते ध्वान्तच्छन्नापि यामिनी ॥'

अत्र दिनमिति प्रकाशमयार्थेऽवाचकम् ।

---

ञ्जनयैव तस्य जननात् । लक्षणाप्रयोजनस्य तु लक्षणामूलव्यञ्जनाजन्यत्वनियमात्, सादृश्यस्य च लक्ष्यार्थतद्वृत्तिधर्मान्यतरसंबन्धत्वाभावात्, प्रयोजनस्य तदन्यतरवृत्तित्वनियमात् ॥ **उभयार्थस्य** प्रसिद्धाप्रसिद्धोभयवाचिनः ॥ **यमुनाशम्बरं** यमुनाजलं **व्यतानीद्** व्याप्तवत् ॥ **दैत्ये** दैत्यविशेषे । अत्र विलम्बेन पदार्थोपस्थापकत्वं यमुनाविषयरतिभावबोधविलम्बकृत् ॥ **आङ्पूर्व इति** । न च 'दा' धातोर्दानेऽभिधासत्त्वेन कथमवाचकत्वमिति वाच्यम् । धात्वर्थबाधकोपसर्गरहित-'दा' धातोरेव दानेऽभिधाकल्पनात् ॥ एतदस्वीकारे तूदाहरणान्तरमाह—**यथा वेति । दिनमिति** । दिनपदस्य सूर्यावच्छिन्नयामचतुष्टयेऽभिधा । अत्र शृङ्गारप्रतीतिविलम्बनं दूषकताबीजम् । रूढ्यादिसत्त्वे लाक्षणिकपदप्रयोगेऽवाचकत्वं तदसत्त्वे नेयार्थत्वमिति भेदः । निरूढलक्षणादौ शाब्दबोधविलम्बाभावान्न रसादिबोधविलम्बनमिति नास्यावसर इत्यवधेयम् । 'हा धिक् सा किल तामसी शशिमुखी दृष्टा मया यत्र सा तद्विच्छेदरुजान्धकारितमिदं दग्धं दिनं कल्पितम् ।' इत्यादौ प्रकाशमये दिनपदप्रयोगदर्शनाद्रूढिः प्रकाशातिशयप्रतीतिः प्रयोजनं वा । एवमन्यत्रापि बोध्यम् । केचित्तु—'भ्रमोन्नायकसत्त्वेऽवाचकत्वं तदसत्त्वे नेयार्थत्वम्' इति वदन्ति । तन्न । दिनमित्यादौ दिनपदस्य प्रकाशमयेऽर्थे अभिधाभ्रमजनकस्याभावाद् 'वचोबाणत्वमागता' इत्यादिवक्ष्यमाणनेयार्थोदाहरणे भ्रमोन्नायकसत्त्वेऽप्यवाचक-

---

1. **निहतार्थत्वमिति** । निहतः प्रसिद्धेनाविवक्षितेनार्थेनाप्रसिद्धतया व्यवहितो विवक्षितोऽर्थो यस्य तत्त्वम् । अविवक्षितप्रसिद्धार्थप्रत्ययव्यवधानेन विवक्षिताप्रसिद्धार्थबोधकत्वमिति भावः ॥

2. **दिनमिति** । 'हा धिक् सा किल तामसी शशिमुखी दृष्टा मया यत्र सा तद्विच्छेदरुजान्धकारितमिदं दग्धं दिनं कल्पितम् । किं कुर्मः कुशले सदैव विधुरो धाता न चेत्तत्कथं तादृग्यामवतीमयो भवति मे नो जीवलोकोऽधुना ॥' इति प्रकाशानुरूपम् ॥

---

1. 'अत्र' घपुस्तके नास्ति.

क्लिष्टत्वम[1]र्थप्रतीतेर्व्यवहितत्वम्। [1]यथा—

'क्षीरोदजावसतिजन्मभुवः प्रसन्नाः ॥'

अत्र क्षीरोदजा लक्ष्मीस्तस्या वसतिः पद्मं तस्य जन्मभुवो जलानि।

'भूतयेऽस्तु भवानीशः ॥'

अत्र [2]भवानीशशब्दो भवान्याः पत्यन्तरप्रतीतिकारित्वाद्विरुद्धमतिकृत्

[3]अविमृष्टविधेयांशत्वं यथा—

'स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः ॥' (७ पृ.)

---

त्वानङ्गीकाराच्च ॥ **अर्थप्रतीतेः** पदार्थोपस्थितेर्व्यवहितत्वं व्यवधानेन जनकत्वम्। पदक्लिष्टत्वस्य समासगतत्वेनैव दोषत्वं वक्ष्यते। समासेऽन्वितान्वयलभ्यी[4]नतिप्रसक्तविशेष्यतावच्छेदककल्पनेन विलम्बो हि व्यवधानम्। वाक्यक्लिष्टत्वस्थले त्वासत्तिकल्पनेन विलम्बः ॥ **क्षीरोदजेति**। अत्रान्वितान्वयलभ्यानां क्षीरोदजात्व-क्षीरोदजावसतित्व-क्षीरोदजावसतिजन्मस्थानत्वानां व्याप्यानि लक्ष्मीत्वपद्मत्व-जलत्वानि प्रकृतोपयोगित्वप्रतिसंधानेन कल्पनीयानि, ततः शाब्दबोध इति रसादिबोधविलम्बनमत्र दूषकताबीजम् ॥ **भूतय इति**। भवस्य पत्नी भवानी तस्या ईशः पतिः। अत्र देवविषयकरतिभावप्रकर्षबोधप्रतिरोधः ॥ **अविमृष्टेति**। अविमृष्टः प्राधान्येनानिर्दिष्टो विधेयांशो यत्र तत्त्वम्। पदार्थानां मध्ये विधेयांशस्योपादेयत्वेन प्राधान्यम्। तस्य च प्राधान्येन निर्देश एवोचितः। तद्विपर्ययश्च क्वचित्समासेन क्वचिदुद्देश्यविधेयपदयोः पौर्वापर्यविपर्ययेण। तत्राद्ये पददोषत्वं

---

1. अर्थेति। अर्थस्य विवक्षितस्यान्वितविशेषस्य या प्रतीतिः प्रतिपत्तिस्तस्या व्यवहितत्वं विलम्बितत्वम्। निहतार्थत्वादौ तु शक्यतावच्छेदकरूपेण प्रकृतपदार्थोपस्थितिरेव व्यवहितेति ततो भेदः ॥

2. भवानीशेति। अत्र भवस्य पत्नीत्यर्थे 'पुंयोगात्–' इत्यादिना व्युत्पादितो भवानीशब्द इति। भवानीशशब्दो देवदत्तपत्न्याः पतिरितिवद् भवान्याः पत्यन्तरे प्रतीतिमुत्पादयतीति। केचित्तु भवानीशब्देनापर्णात्वप्रकारक एव बोधः, अन्यथा भवानीशब्देन 'अपर्णा पार्वती दुर्गा–' इत्यादीनां पर्यायत्वं न स्यात्। योगस्तु पङ्कजातिशब्दवत्साधुत्वार्थः। एवं च भवानीशब्दोऽपर्णात्वविशिष्टे रूढ इति नात्र दोष इत्याहुः ॥ अत्र 'न त्रस्तं यदि नाम भूतकरुणासंतानशान्तात्मनस्तेन व्यारुजता धनुर्भगवतो देवाद्भवानीपतेः। तत्पुत्रस्तु मदान्धतारकवधाद्विश्वस्य दत्तोत्सवः स्कन्दः स्कन्द इव प्रियोऽहमथवा शिष्यः कथं विस्मृतः ॥' इति प्रकाशोदाहरणमुपजीव्यम् ॥

---

१. 'यथा' घ-पुस्तके नास्ति. २. 'विरुद्धमवगमयति' घ. ३. 'अवि–' इत्यादि 'यथा' इत्यन्तं क-घ-पुस्तकयोर्नास्ति. ४. 'अन्वितान्वयलभ्यानां विशेष्यतावच्छेदककल्पनेन' इति पुस्तकान्तरे.

अत्र [1]वृथात्वं विधेयम्, तच्च समासे गुणीभावादनुवाद्यत्वप्रतीतिकृत् । यथा वा—

'रक्षांस्यपि पुरः स्थातुमलं रामानुजस्य मे ॥'

अत्र रामस्येति वा[2]च्यम् । यथा वा—

'आसमुद्रक्षितीशानाम् ॥'

अत्रासमुद्रमिति वाच्यम् । यथा वा—

'यत्र ते पतति सुभ्रु! कटाक्षः षष्ठबाण इव पञ्चशरस्य ॥'

अत्र षष्ठ इवेत्युत्प्रेक्ष्यम् । यथा वा—

'अमुक्ता भवता नाथ मुहूर्तमपि सा पुरा ॥'

[3]अत्रामुक्तेत्यत्र नञः प्रसज्यप्रतिषेधत्वमिति विधेयत्वमेवोचितम् । यदाहुः—

'अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता ।
प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ् ॥'

---

द्वितीये वाक्यदोषता । **अनुवाद्यत्वमुद्देश्यत्वम्** । **अलं** समर्थानि । अत्र काकुस्वरवशादसमर्थत्वं व्यज्यते । राक्षसविनाशे रामसंबन्धित्वस्यैवोपयोगित्वमिति तस्यैवोपादेयत्वमिति भावः ॥ **आसमुद्रेत्ति** । रघुवंशाधिकारस्य समुद्रपर्यन्तत्वमुपादेयम् ॥ **उत्प्रेक्ष्यमुत्प्रेक्षितुं** योग्यम् ॥ नञ्समासगतमविमृष्टविधेयांशत्वमाह–**अमुक्तेति** । **प्रसज्यप्रतिषेधत्वमिति** । विधेरप्रधानत्वादिति भावः । **विधेयत्वमिति** । 'तदर्थस्य' इति शेषः ॥ **अप्राधान्यमिति** । यत्र वाक्ये **विधेः** पदार्थान्तरस्य **अप्राधान्यमुद्देश्यतया** अमुख्यत्वम्, **प्रतिषेधे** नञर्थे **प्रधानता** विधेयतया मुख्यत्वम् । **यत्र** यदर्थे **क्रियया** समभिव्याहृत-

---

1. वृथात्वमिति । अयमाशयः—'अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेत्' इत्यभियुक्तोक्त्या 'उद्देश्यविधेयताशालिबोधे विधेयवाचकप्राग्वर्त्युद्देश्यवाचकपदजन्योपस्थितिः कारणमित्यभिप्रायवत्या अनुवाद्यविधेययोः पौर्वापर्यभावस्य नियमितत्वात्प्रकृते उच्छूनत्वमात्रस्यानुवादो योग्यः, न तु वृथात्वविशेषितस्य । एवं च वृथात्वं समासे गुणीभूतं विधेयत्वेन विवक्षितं न प्रतीयत इत्यर्थः । किंचोद्देश्यं विधेयं च यदि पृथक्पदाभ्यामुपतिष्ठते तदा प्राप्तमुद्दिश्याप्राप्तं विधीयते 'पर्वतो वह्निमान्' इतिवत्, न तु समासे । अन्यथा वह्निमत्पर्वत इत्यभिधानापत्तेः ॥

2. वाच्यमिति । वक्तुं योग्यम् ॥

3. अत्रेति । 'अमुक्ता' इत्यत्र नञः प्रसज्यप्रतिषेधार्थकतया 'न मुक्ता' इत्यसमस्तेन नञा निषेधो विधेयः, न तु समस्तेन ॥ अत्र 'आनन्दसिन्धुरतिचापलशालिचित्तसंदाननैकसदनं क्षणमप्यमुक्ता । या सर्वदैव भवता तदुदन्तचिन्ता तान्तिं तनोति तव संप्रति धिग्धिगस्मान् ॥' इति प्रकाशोदाहरणं तनूकृतम् ॥

यथा—

'नवजलधरः संनद्धोऽयं न दृप्तनिशाचरः ॥'

उक्तोदाहरणे [1]तु तत्पुरुषसमासे गुणीभावे नञः पर्युदासतया निषेधस्य विधेयतयानवगमः । यदाहुः—

---

पदार्थतावच्छेदकेन सह संबन्धस्तत्र वाक्ये **असौ नञ्** । प्रसज्यप्रतिषेध इत्यर्थः ॥ उदाहरति—**यथेति** । **नवजलधर इति** । गन्धर्वेणोर्वश्यां हृतायां पुरूरवसस्तद्विरहे नवजलधरादौ निशाचरत्वादिप्रतीतिवर्णनमिदम् । अयं संनद्धो न नवजलधरः, दृप्तनिशाचर इति । अयं नवजलधरत्वाभाववानित्यर्थः । अत्रेदंपदार्थस्य उद्देश्यत्वम्, नञर्थस्याभावस्य विधेयत्वम्, समभिव्याहृतपदार्थतावच्छेदकेन सह नञर्थस्य संबन्धः । न च विधेर्भावपदार्थस्येति व्याख्येयम् । अभावो न जातिमानित्याद्यसंग्रहापत्तेः । **क्रिययेति** । यथाश्रुतार्थविवक्षणे तु 'अयं न पाकवान्' इत्याद्यसंग्रहेऽप्युक्तोदाहरणाद्यसंग्रहप्रसङ्गः । न च नञर्थस्य क्रियान्वयित्वाभावेनोक्तोदाहरणादौ नञः प्रसज्यप्रतिषेधत्वमेव नास्तीति वाच्यम् । तत्र विधेर्विधेयत्वाभावेन पर्युदासत्वासंभवात्तृतीयप्रकारानभिधानाच्च प्रसज्यप्रतिषेधत्वस्यैवावश्यं वाच्यत्वात् । अत एवाव्ययीभावसमासप्रकरणे **गोपीचन्द्रेणोक्तम्**—'धर्माभावे प्रसज्यप्रतिषेधो माभूत्', 'ब्राह्मणोऽयं न भवति', 'ब्राह्मणत्वं धर्मोऽत्र निषिध्यते' इति । 'मुनिरधनः' इत्यादौ समासलुप्तविद्यमानादिपदार्थैकदेशे नञर्थस्य संबन्धः । वस्तुतस्तु 'घटो गेहे न चत्वरे', 'धनं चैत्रस्य न मैत्रस्य' इत्यादौ विभक्त्यर्थेन सह नञर्थस्यान्वयेऽपि प्रसज्यप्रतिषेधत्वं वाच्यम् । नञर्थस्य विधेयत्वेनैव तत्स्वीकारात्क्रियान्वयित्वस्यानियतत्वाच्च । एवं च 'घटो न पटः' इत्यादावुत्तरपदार्थेन पटादिना नञर्थस्य भेदस्य संबन्धसत्त्वेऽपि विधेयतामात्रेण प्रसज्यप्रतिषेधत्वम् । न चात्रपटत्वाभाव एव विधेयः, न तु पटभेद इति वाच्यम् । पटभेदस्यापि विधेयत्वेन नञर्थस्य विधेयत्वेनैव तत्स्वीकारात्क्रियान्वयित्वस्यानित्यत्वाच्च बाधकाभावात् । न च भेदबोधकस्य नञो नित्यसमासविधानमेव बाधकमिति वाच्यम् । यजतिषु 'ये यजामहं ( कुर्वीत ) करोति नानुयाजेषु' इत्यादौ व्यभिचारदर्शनात्कालापानां नित्यसमासविधानस्यायुक्तत्वात् । नित्यसमासवादिमतेऽपि 'अयमब्राह्मणः' इत्यादौ ब्राह्मणभेदस्य विधेयत्वमवश्यं वाच्यम् । न चात्रापि ब्राह्मणत्वाभाववानित्येवार्थ इति वाच्यम् । समस्यमानपदार्थयोरन्वयाभावे तत्पुरुषानङ्गीकारात् । नन्वेवं प्रकृते किमनुपपन्नमित्यत आह—**उक्तोदाहरणे त्विति** । अमुक्तेत्यादावित्यर्थः । **पर्युदासतया** पर्युदासवदनुवाद्यत्वप्रतीतिकारितया । **अनवगमो**

---

1. नवजलधर इति । 'सुरधनुरिदं दूराकृष्टं न तस्य शरासनम् । अयमपि पटुर्धारासारो न बाणपरम्परा कनकनिकषस्निग्धा विद्युत्प्रिया न ममोर्वशी॥' इति शिष्टं पादत्रयम् ॥

---

[1] 'तु' घ-पुस्तके नास्ति.

'प्रधानत्वं विधेर्यत्र प्रतिषेधेऽप्रधानता ।
पर्युदासः स विज्ञेयो, यत्रोत्तरपदेन नञ् ॥'

तेन—

'जुगोपात्मानमत्रस्तो भेजे धर्ममनातुरः ।
अगृध्नुराददे सोऽर्थानसक्तः सुखमन्वभूत् ॥'

अत्रात्रस्ततायनूद्यात्मगोपनाद्येव विधेयमिति नञः पर्युदासतया गुणीभावो युक्तः ।

ननु 'अश्राद्धभोजी[1] ब्राह्मणः' 'असूर्यंपश्या[2] राजदाराः' इत्यादिवत् 'अमुक्ता' इत्यत्रापि प्रसज्यप्रतिषेधो भवतीति चेत् । न । अत्रापि यदि भोजनादिरूपक्रियांशेन नञः संबन्धः स्यात्तदैव तत्र प्रसज्यप्रतिषेधत्वं वक्तुं शक्यम् । न च तथा । विशेष्यतया प्रधानेन तद्भोज्यर्थेन कर्त्रंशेनैव नञः संबन्धात् । यदाहुः—

---

विधेयताया न स्पष्टावगमः । यथाश्रुतार्थत्वेऽत्र नञः प्रसज्यप्रतिषेधत्वमिति प्रागुक्तेन सह विरोधः स्यात् । विधेर्विधेयत्वाभावे पर्युदासासंगतिश्च स्यात् । पर्युदासस्यानुवाद्यत्वमुपपादयति—**यदाहुरिति** । **यत्र** वाक्ये **विधेः** पदार्थान्तरस्य **प्रधानत्वं** विधेयतया मुख्यत्वं **प्रतिषेधे** नञर्थे**ऽप्रधानता** उद्देश्यतावच्छेदकतया अमुख्यत्वम् । **यत्र** यदर्थे **उत्तरपदेन** उत्तरपदार्थेन सह संबन्धस्तत्र वाक्ये **स** नञ् **पर्युदासो** विज्ञेय इत्यर्थः । 'रात्रौ श्राद्धं न कुर्वीत' इत्यादौ न रात्राविति योजनया रात्रावित्यस्योत्तरपदत्वमुपपन्नम् ॥ उदाहरति—**तेनेति** । **जुगोप** पाल्यामास । **अगृध्नुस्**तृष्णाशून्यः । **स** दिलीपः । **असक्तो**ऽनासक्तः । **अत्रस्तादि** त्रस्तभिन्नत्वादि । **अनूद्य** उद्देश्यतावच्छेदकीकृत्य । तत्पुरुषसमासेनात्यन्ताभावानभिधानात् त्रस्तत्वाभावादेरत्र नोद्देश्यतावच्छेदकत्वमित्यवगन्तव्यम् । एवं च नञः प्रसज्यप्रतिषेधत्वं पर्युदासत्वं च विधेयोद्देश्यभावविवक्षाधीनम्, नतु नियतम् । **गुणीभावो** गौणार्थप्रतिपादकत्वम् ॥ **नन्वश्राद्धभोजीति** । समस्तेनापि नञा भोजनाद्यभावविधेयत्वस्य स्पष्टावगमे कथमविमृष्टविधेयांशत्वमिति भावः । **तद्भोज्यर्थेन** श्राद्धभोज्यादिरूपार्थेन । **कर्त्रंशेनैवेति** । भोजनार्थाद्यंशेन तत्संबन्धस्वीकारे णिन्याद्यर्थस्य कर्तुरनन्वयापत्तेः । कृदुपस्थापितस्य कर्तुर्धात्वर्थेनैवान्वयस्य

---

1. अश्राद्धेति । 'न श्राद्धं भुङ्क्ते' इति वाक्यं कृत्वा नञः श्राद्धशब्देनासमर्थसमासं विधायाश्राद्धशब्द उपपदे णिनिः कर्तव्यः । न तु णिन्यन्तेन समासो विधेयः ॥

2. असूर्यमिति । सूर्यं न पश्यन्तीति विग्रहः । आदिपदेनापुनर्गेयाः श्लोका इति ज्ञेयम् ॥

'श्राद्धभोजनशीलो हि यतः कर्ता प्रतीयते ।
न तद्भोजनमात्रं तु कर्तरीनेर्विधानतः ॥' इति ।[1]

'अमुक्ता' इत्यत्र तु क्रिययैव सह संबन्ध इति दोष एव । एते च क्लिष्टत्वादयः समासगता एव पददोषाः ।

वाक्ये दुःश्रवत्वं यथा—

'स्मरार्त्यन्धः कदा लप्स्ये कार्तार्थ्यं विरहे तव ॥'
कृतप्रवृत्तिरन्यार्थे कविर्वान्तं समश्नुते ॥

अत्र जुगुप्साव्यञ्जिकाश्लीलता ।

'उद्यत्कमललौहित्यैर्वक्त्राभिर्भूषिता तनुः ॥'[2]

अत्र कमललौहित्यं पद्मरागः । वक्त्राभिर्वामाभिः । इति नेयार्थता ।

---

व्युत्पत्तिसिद्धत्वात् । अतः श्राद्धभोजिपदात्तद्भोजनमात्रं श्राद्धभोजनमात्रं प्रतीयत इत्यनुषङ्गः । **क्रिययैव सह संबन्ध इति** । भवत्कर्तृकमोचनाभावप्रतीतिबोधस्यानुभवसिद्धत्वादिति भावः । **दोष एव** अविमृष्टविधेयांशत्वमेव । एतन्मते समस्यमानपदार्थैकदेशे नञर्थान्वयेऽपि समासस्वीकारः । यदि पुनः क्तप्रत्ययार्थस्य कर्मणोऽन्वयापत्त्या क्रियया सह नञर्थस्य संबन्धमनङ्गीकृत्य मोचनकर्मणैव संबन्धः स्वीक्रियते, तदा पुनरयमब्राह्मण इत्यादिवदत्रापि मोचनकर्मपदस्यैव विधेयत्वं बोध्यम् । किं तु नञः समस्ततया तस्य न स्पष्टावगम इत्यविमृष्टविधेयांशत्वमित्यवगन्तव्यम् । अत्रापि रसादिप्रतीतिविलम्बनं दूषकताबीजम् । **एते चेति** । आदिपदाद् विरुद्धमतिकारित्वविधेयाविमर्शयोर्ग्रहणम् । विना समासं तेषामसंभवादिति भावः ॥ संप्रति वाक्यदुःश्रवत्वादीनुदाहरति—**वाक्य इति** । **स्मरार्त्यन्ध इति** । अत्रानेकपदस्य परुषवर्णघटितत्वाद्वाक्यदुःश्रवत्वम् । वाक्यगतं **व्रीडाव्यञ्जकाश्लीलत्वं** यथा—'न साधनोन्नतिर्या स्यात्कलत्रारतिदायिनी ।' जुगुप्साव्यञ्जकाश्लीलत्वमुदाहरति—**कृतप्रवृत्तिरिति** । **अन्यार्थे** अन्यकविवर्णितवाक्यार्थे **कृतप्रवृत्तिः** कृतकाव्यबन्धः । अत्र वान्तप्रवृत्तिशब्दौ जुगुप्साव्यञ्जकौ । अमङ्गलाश्लीलत्वं वाक्यगतं यथा—'पितृवसतिमहं प्रयामि तां सह परिवारजनेन, यत्र मे । भवति सपदि पावकान्वये हृदयमशेषितशोकशल्यकम् ॥' अत्र पितृवसतिपावकशब्दौ जनकवेश्मपवित्रकारिवाचकौ श्मशानतद्वह्निरूपामङ्गलव्यञ्जकौ—**अनुचितार्थत्वं** यथा—'कुविन्द ! त्वं तावत्पटयसि गुणग्राममभितो

---

1. इनेरिति ॥ णिनिप्रत्ययविधायकं तु 'व्रते' इति सूत्रम् । व्रते गम्यमाने सुबन्त उपपदे धातोर्णिनिः प्रत्ययो भवतीति तद्वृत्तिः ॥

2. उद्यदिति ॥ उद्यत्कमललौहित्यैरिति करणे तृतीया ॥

यशो गायन्त्येते दिशिदिशि च नग्नास्तव विभो! । शरज्ज्योत्स्नागौरस्फुटविकटसर्वाङ्गसुभगा तथापि त्वत्कीर्तिर्भ्रमति विगताच्छादनमिह ॥' नग्नाः स्तुतिपाठकाः, पक्षे दिगम्बराः । अत्र कुविन्दादिशब्दोऽर्थान्तरं प्रतिपादयन्स्तुत्यस्य तिरस्कारं व्यनक्तीत्यनुचितार्थत्वम् । **अप्रयुक्तत्वं** यथा—'स रातु वो दुश्च्यवनो भावुकानां परम्पराम् । अनेडमूकताद्यैश्च द्यतु दोषैरसंमतान् ॥' अत्र 'रा' धातुर्दाने, दुश्च्यवन इन्द्रे, भावुकं मङ्गले, अनेडमूको मूकबधिरे, 'दो' धातुः खण्डने प्रसिद्धा अपि कविभिरनादृतत्वादप्रयुक्ताः । 'अनुत्तमं पश्य' इत्यत्रानुत्तमपदस्योत्तमवाचकत्ववदनेडमूकपदस्यात्रैडमूकवाचकत्वम् । **ग्राम्यत्वं** यथा—'ताम्बूलभृतगल्लोऽयं भल्लं जल्पति मानुषः । करोति खादनं पानं सदैव च यथा तथा ॥' गल्लः कपोलः । भल्लं भद्रम् । अत्र गल्लभल्लमानुषखादनपानशब्दा ग्राम्याः । **अप्रतीतत्वं** यथा—'तस्याधिमात्रोपायस्य तीव्रसंवेगिताजुषः । दृढभूमिः प्रियप्राप्तौ यत्नः स फलितः सखे! ॥' अधिमात्रनामा क्रियाविशेषः उपायो यस्य । संवेगिता समाधिविशेषः । दृढभूमिर्दृढाभ्यासदायी । प्रियप्राप्तौ तत्त्वज्ञानलाभे । अत्राधिमात्रादयः शब्दा योगशास्त्रमात्रप्रयुक्तत्वादप्रतीताः । **संदिग्धत्वं** यथा—'सुरालयोल्लासकरः प्राप्तपर्याप्तकम्पनः । मार्गणप्रवणो भास्वद्भूतिरेष विलोक्यताम् ॥' अत्र सुराकम्पनमार्गणभूतिशब्दाः, किं देवसेनाशरविभूत्यर्थाः, किं वा मदिराकम्पनपर्यटनभस्मार्था इति संदेहः ॥ **नेयार्थत्वमाह—उद्यदिति** । अत्र हि उत्पूर्वस्येण्धातोरुदयगिरिशिखरारोहणमुख्यार्थस्य पद्मरागे बाधात्तज्जन्यप्रकाशे लक्षणा । अत्र रूढिसत्त्वेऽपि पद्मरागप्रकाशस्योदयाजन्यत्वान्मुख्यार्थयोगाभावान्नेयार्थत्वमवगन्तव्यम् । अन्यदपि नेयार्थत्वमुपपादयति—**अत्रेति** । पद्मरागपदस्य परिवृत्त्यसहत्वात्कमलपदस्य पद्मशब्दे, लौहित्यपदस्य च रागशब्दे, वक्रापदस्य वामाशब्दे लक्षणा । लक्षितैः पद्मादिभिः पदैरभिधया पद्मरागवामानामुपस्थितिः । यथा–द्विरेफपदेन बहुव्रीहिलक्षणयोपस्थापिताद्रेफद्वययुक्तभ्रमरपदादभिधयैव भृङ्गोपस्थितिरत्र रूढिरस्ति । प्रकृते तु रूढिप्रयोजनाभावान्नेयार्थत्वम् । इयमेव लक्षितलक्षणेत्युच्यते । न च लक्षणाद्वयाभावात् कथमियं लक्षितलक्षणेति वाच्यम् । यत्र लक्षिताच्छब्दादर्थाभिधानं तत्रैव लक्षितलक्षणायाः परिभाषितत्वात् । ननु द्विरेफपदस्य रेफद्वययुक्तभ्रमरशब्द एवार्थस्तथा सति द्विरेफं पश्येत्यादौ द्वितीयार्थकर्मताया भृङ्गेणान्वयः । तथाहि प्रकृत्यर्थान्वितस्वार्थबोधकत्वं प्रत्ययानामिति नियमादिति चेत् । न । प्रकृत्यर्थाभिन्नत्वेनाध्यासितस्यापि प्रकृत्यर्थत्वात् । अत एव मुखचन्द्रं पश्येत्यादौ चन्द्राभिन्नत्वेनाध्यासिते मुखे कर्मताया अन्वयः । तथा हि द्विरेफशब्दाद्भ्रमरशब्दस्य, द्वितीयातश्च कर्मतायाः, लक्षितभ्रमरशब्दाद् भृङ्गस्य चोपस्थितौ भृङ्गे भ्रमरशब्दाभेदं कर्मतां चावगाहमान आंशिकाध्यारोपरूपो बोधो जायते । शब्दतदर्थयोरभेदारोपश्च 'हिरण्यपूर्वं कशिपुं प्रचक्षते' इत्यादौ दृष्टः । नैयायिकास्तु—'द्विरेफपदस्य भ्रमरशब्दे[1] एका लक्षणा, लक्षितभ्रमरशब्दवाच्यत्वसंबन्धेन भृङ्गे चापरा लक्षणा, ततश्च

1. 'शब्द' पुस्तकान्तरे नास्ति.

'धम्मिल्लस्य न कस्य प्रेक्ष्य निकामं कुरङ्गशावाक्ष्याः ।
रज्यत्यपूर्वबन्धव्युत्पत्तेर्मानसं शोभाम् ॥'

अत्र धम्मिल्लस्य शोभां प्रेक्ष्य कस्य मानसं न रज्यतीति संबन्धः क्लिष्टः ।

'न्यक्कारो ह्ययमेव मे यत्' ( ७ पृ. ) इति ।

अत्र चायमेव न्यक्कार इति न्यक्कारस्य विधेयत्वं विवक्षितम् । तच्च शब्दरचनावैपरीत्येन गुणीभूतम् । रचना च पदद्वयस्य विपरीतेति वाक्यदोषः ।

'आनन्दयति ते नेत्रे योऽसौ सुभ्रु ! समागतः ॥'

इत्यादिषु 'यत्तदोर्नित्यः संबन्धः' इति न्यायादुपक्रान्तस्य यच्छब्दस्य

---

प्रकृत्यर्थे भृङ्गे कर्मतान्वयबोधः' इत्याहुः । तन्न । सकृदुच्चरितशब्दादावृत्तिं विना क्रमिकबोधाननुभवात्, अजनितान्वयावबोधस्य शब्दस्यावृत्त्यभावात्, आवृत्तौ च द्वितीयाया अप्यावृत्तौ प्रथमोक्तद्वितीयया अन्वयानुपपत्तेः । अस्मदुक्तरीतेः मुखचन्द्रं पश्येत्यत्रावश्यमाश्रयणीयत्वाच्चेत्यास्तां विस्तरः ॥ **निहतार्थं** यथा— 'सायकसहायबाहोर्मकरध्वजनियमितक्षमाधिपतेः । अब्जरुचिभासुरस्ते भातितरामवनिप ! श्लोकः ॥' अत्र सायकमकरध्वजक्षमाब्जश्लोकशब्दाः शरकामक्षान्तिपद्मयशःसु प्रसिद्धा अप्रसिद्धेषु खड्गाब्धिभूमिचन्द्रयशःसु प्रयुक्ताः ॥ **अवाचकत्वं** यथा—'नमन्नृपतिमण्डलीमुकुटचन्द्रिकादुर्दिनस्फुरच्चरणपल्लवप्रतिपदोक्तदोःसंपदा । अनेन ससृजेतरां तुरगमेधमुक्तभ्रमत्तुरङ्गखुरचन्द्रकप्रकरदन्तुरा मेदिनी ॥' अत्र चन्द्रिकाशब्दः किरणसामान्ये, दुर्दिनशब्दश्छन्नमात्रे । स्फुरच्छब्दश्चरणसमृद्धाववाचकः ॥ **क्लिष्टत्वमाह–धम्मिल्लस्येति** । अपूर्वा बन्धस्य व्युत्पत्तिर्नैपुण्यं यस्याः ॥ **विरुद्धमतिकारित्वं** यथा–'श्रितक्षमा रक्तभुवः शिवालिङ्गितमूर्तयः । विग्रहक्षपणेनाद्य शेरते ते गतासुखाः ॥' गतासुखा गतदुःखाः । पक्षे गतानि असवः खानि इन्द्रियाणि च येषां ते तथा । अत्र क्षमादिगुणयुक्ताः सुखमासते इति विवक्षिते हता इति विरुद्धार्थप्रतीतिः ॥ **अविमृष्टविधेयांशत्वमाह–न्यक्कार इति** । **तच्चेति** । 'अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेत्' इति न्यायादिति भावः ॥ उदाहरणान्तरमाह–**आनन्दयतीति** । **नित्यः संबन्ध इति** । अवश्यमन्योन्यापेक्षितत्वमित्यर्थः । स च संबन्धः शाब्द आर्थश्च भवति । द्वयोरुपादाने शाब्दः, उभयोरनुपादाने आर्थः । क्रमेणोदाहरिष्यति । **उपक्रान्तस्य** अनुवाद्यत्वबोध-

---

1. **यत्तदोरिति** । तत्पदप्रतिपाद्यतया वक्तृबुद्धिविषय उद्देश्यो यत्पदार्थः, यत्पदप्रतिपाद्यतया वक्तृबुद्धिविषयो विधेयभूतस्तत्पदार्थ इति वैयाकरणाः ॥

---

१. 'एकतरोपादाने शाब्दार्थः' इति पुस्तकान्तरेऽधिकम्.

निराकाङ्क्षत्वप्रतिपत्तये तच्छब्दसमानार्थतया प्रतिपाद्यमाना इदमेत-ददःशब्दा विधेया एव भवितुं युक्ताः। अत्र तु यच्छब्दनिकटस्थतया अनुवाद्यत्वप्रतीतिकृत्। तच्छब्दस्यापि यच्छब्दनिकटस्थितस्य प्रसिद्ध-परामर्शित्वमात्रम्। यथा—

'यः स ते नयनानन्दकरः सुभ्रु! स आगतः॥'

यच्छब्दव्यवधानेन स्थितास्तु निराकाङ्क्षत्वमवगमयन्ति। यथा—

'आनन्दयति ते नेत्रे योऽधुनासौ समागतः॥'

एवमिदमादिशब्दोपादानेऽपि। यत्र च यत्तदोरेकस्यार्थत्वं संभवति, तत्रैकस्योपादानेऽपि निराकाङ्क्षत्वप्रतीतिरिति न क्षतिः। तथाहि यच्छब्दस्योत्तरवाक्यगतत्वेनोपादाने सामर्थ्यात् पूर्ववाक्ये तच्छब्दस्या-र्थत्वम्। यथा—

'आत्मा जानाति यत्पापम्॥'

---

कस्य। **प्रतिपाद्यमानाः** प्रयुज्यमाना विधेया विधेयत्वबोधकाः। नन्वत्र किं बाधकमत आह—**अत्र त्विति**। उक्तोदाहरणे त्वित्यर्थः। **प्रसिद्धपरामर्शित्व-मात्रं** प्रसिद्धबोधकत्वमेव, न तु विधेयत्वबोधनेन निराकाङ्क्षत्वबोधकप्रतिपादकत्वम्। तदुक्तम्—'ख्यातार्थमनुभूतार्थं प्रक्रान्तार्थं च तत्पदम्। यत्पदापेक्षया हीनं न विधेयत्वबोधकृत्॥' इति। यत्र तु प्रसिद्धादिपरामर्शिनोऽपि तच्छब्दस्य यत्पदेन संबन्धः संभवति तत्र विधेयत्वप्रतीतिकारित्वमस्त्येव। क्रमेण यथा—'करबदरस-दृशमखिलं भुवनतलं यत्प्रसादतः कवयः। पश्यन्ति सूक्ष्ममतयः सा जयति सर-स्वती देवी॥', 'यदङ्गलावण्यमनङ्गभङ्गदं यदाननं निन्दति बिम्बमैन्दवम्। मम क्षणं मुञ्चति मानसं न या विहाय तां हन्त न शान्तिरस्ति मे॥', 'रसैः कथा यस्य सुधावधीरिणी नलः स भूजानिरभूद्गुणाद्भुतः॥' **स्थिता इति**। तदादयः शब्दा इत्यनुषज्यन्ते। **आर्थत्वमर्थवशलभ्यत्वम्**। **सामर्थ्यात्** परस्पराकाङ्क्षा-नैयत्यात्। एतेनोत्तरवाक्यस्थं यत्पदं तत्पदनिराकाङ्क्षमिति हेयम्॥ **आत्मेति**।

---

1. अत्र त्विति। अयमाशयः—'योऽसौ' इति पदद्वयमुद्देश्यविधेयार्थकतया विवक्षित-मपि न चैतत्तत्प्रतिपादकम्। यच्छब्दसांनिध्येन प्रयुज्यमानस्यादसो यच्छब्दार्थगतप्रसिद्धि-बोधकतयोद्देश्यकोटिप्रविष्टार्थकत्वात्। यथा 'यः स ते—' इत्युदाहृतौ तच्छब्दो यच्छब्दसां-निध्याद्यदर्थविशेषणतया प्रसिद्धार्थमभिदधदुद्देश्यवाक्य एव प्रविशति, न तु विधेयवाक्य इति तात्पर्यम्॥

एवम्—

'यं[1] सर्वशैलाः परिकल्प्य वत्सं मेरौ स्थिते दोग्धरि दोहदक्षे।

भास्वन्ति रत्नानि महौषधीश्च—'

इत्यादावपि।

तच्छब्दस्य प्रक्रान्तप्रसिद्धानुभूतार्थत्वे[2] यच्छब्दस्यार्थत्वम्।

क्रमेण यथा—

'स हत्वा वालिनं वीरस्तत्पदे चिरकाङ्क्षिते।

धातोः स्थान इवादेशं[3] सुग्रीवं संन्यवेशयत्॥'

'स वः शशिकलामौलिस्तादात्म्यायोपकल्पताम्॥'

'तामिन्दुसुन्दरमुखीं हृदि चिन्तयामि॥'

यत्र च यच्छब्दनिकटस्थितानामपीदमादिशब्दानां भिन्नलिङ्गविभक्तित्वं तत्रापि निराकाङ्क्षत्वमेव। क्रमेण यथा—

'विभाति मृगशावाक्षी येदं भुवनभूषणम्॥'

'इन्दुर्विभाति यस्तेन दग्धाः पथिकयोषितः॥'

---

तदात्मा जानाति यत्पापमस्ति इत्यर्थः॥ **यमिति**। स हिमालयोऽस्तीति पूर्ववाक्ये तच्छब्दस्यार्थत्वम्। उत्तरवाक्यस्थयत्पदस्य पूर्ववाक्यस्थतत्पदेन शाब्दः संबन्धोऽपि। यथा—'अन्यास्ता गुणरत्नरोहणभुवः' इत्यादि। एवं पूर्ववाक्यस्थयत्पदस्योत्तरवाक्ये प्रतीयमानतत्पदापेक्षा यथा—'यस्त्वां विसृजते मर्त्य आत्मानं प्रियमीश्वरम्। विपर्ययेन्द्रियार्थार्थं विषमत्त्यमृतं त्यजेत्॥' **स हत्वेति**। यः सुग्रीवप्रियकारीत्यर्थतोऽवगम्यते॥ **स व इति**। यः शिवो लोके पूज्यते इत्यर्थः॥ **तामिति**। या रूपलावण्यपूर्णेत्यर्थतोऽवगम्यते। एवमेव **चण्डीदासादयः**। तेषामयमाशयः—प्रक्रान्तादिपरामर्शकस्य तत्पदस्य यत्पदनिराकाङ्क्षत्वे 'यत्तदोर्नित्यः संबन्धः' इति नियमभङ्गश्च स्यात्। एवं च 'यत्पदापेक्षया हीनम्' इति प्रागुक्तं तूत्थिताकाङ्क्षविरहपरम्, 'स हत्वा' इत्यादौ स क इत्युत्थाप्याकाङ्क्षयैव संगतिरिति नियमे तु यत्पदसंनिहितत्वेन यत्पदप्रसिद्धार्थकं तत्पदं तद्भेदो निवे-

---

1. यमिति। 'पृथूपदिष्टां दुदुहुर्धरित्रीम्' इति चरमचरणम्॥

2. प्रक्रान्तेति। प्रक्रान्तः पूर्वप्रतीतिविषयः, प्रसिद्धो लोकविख्यातः, अनुभूतोऽनुभावविषयोऽर्थो विषयस्तथाभूते॥

3. आदेशमिति। स्थान्यर्थाभिधानसमर्थमिति भावः॥

---

१. 'संबन्धित्वेन' इति पुस्तकान्तरे.

क्वचिदनुपात्तयोर्द्वयोरपि सामर्थ्यादवगमः । यथा—

'न मे शमयिता कोऽपि भारस्येत्युर्वि! मा शुचः ।
नन्दस्य भवने कोऽपि बालोऽस्त्यद्भुतपौरुषः ॥'

अत्र योऽस्ति, स ते भारस्य शमयितेति बुध्यते ।

'यद्यद्विरहदुःखं मे तत्को वापहरिष्यति ॥'

इत्यत्रैको यच्छब्दः साकाङ्क्ष इति न वाच्यम् । तथाहि—यद्यदित्यनेन केनचिद्रूपेण स्थितं सर्वात्मकं वस्तु विवक्षितम् । तथाभूतस्य तस्य तच्छब्देन परामर्शः । एवमन्येषामपि वाक्यगतत्वेनोदाहरणं बोध्यम् ।

पदांशे दुःश्रवत्वं यथा—

'तद्गच्छ सिद्ध्यै कुरु देवकार्यम् ॥'
'धातुमत्तां गिरिर्धत्ते ॥'

---

शनीय इति ॥ **द्वयोर्य**त्तत्पदयोः । **सामर्थ्या**दाकाङ्क्षातः ॥ ननु यत्र पूर्ववाक्ये यत्पदद्वयं तत्र कथमेकतत्पदेन निराकाङ्क्षत्वप्रतीतिः । तत्र तत्पदद्वयस्यैव वक्तुं योग्यत्वात् । यथा—'यं यं कामयते कामं तं तमाप्नोति लीलया' इति । अत आह—**यद्यदिति । एक इति ।** उत्तरवाक्ये एकतत्पदप्रयोगो[१]ऽर्ह इति भावः ॥ **सर्वात्मकमिति ।** विरहदुःखत्वेन सामान्येन सर्वं विरहदुःखमित्यर्थः ॥ **तथाभूतस्य** विरहदुःखत्वावच्छिन्नस्य । तथा च वीप्साया वक्तृतात्पर्यमेव नियामकम् । सामान्यरूपेण उपस्थापने वक्तृतात्पर्ये सति न तत्पदे वीप्सा । तत्तद्व्यक्तित्वेन उपस्थापने तात्पर्ये सति तत्पदे वीप्सा । क्वचित्तु तत्पदे एव वीप्सा, न तु यत्पदे । यथा—'ते ते सत्पुरुषाः परार्थघटकाः स्वार्थस्य बाधेन ये ॥' **एवमिति ।** अन्येषामनुचितार्थत्वादीनाम् । तच्च मया दर्शितमेव ॥ **'दोषाः** केचिद्भवन्त्येषु

---

1. यद्यदिति । परमार्थस्तु यद्यदिति न पदद्वयम् । किंतु 'नित्यवीप्सयोः' इति सूत्रेण वीप्सायां यदो द्वित्वापन्नोऽयमादेशः । एवं चादेशिनैकेन यत्पदेन तत्पदेन च द्वाभ्यामप्येकेनैव रूपेण दुःखपरामर्शः । आदेशस्तु साकल्येनान्वये तात्पर्यग्राहक इति यत्पदीयेनैव तेन संबन्धभानोपपत्तौ न तत्पदेऽपि वीप्साद्योतको द्वित्वापन्न आदेशः । यत्र तु तत्पदेऽपि वीप्सा तत्र न यत्पदेऽप्यादेशः । किं तूभाभ्यां रूपद्वयेन सर्वोपस्थानमिति तत्त्वम् ॥

2. सिद्ध्या इति । अत्र 'सिद्ध्यै' इति चतुर्थ्यन्तपदैकदेशः श्रुतिकटुः ॥ अत्र 'अर्थोयमर्थान्तरलभ्य एव । अपेक्षते प्रत्ययमङ्गलब्ध्यै बीजाङ्कुरः प्रागुदयादिवाम्भः ॥' इत्यवशिष्टा पादत्रयी ॥

---

१. 'प्रयोगात्' पुस्तकान्तरे.

अत्र मत्ताशब्दः[1] क्षीबार्थे निहतः ।

'वर्ण्यते किं महासेनो विजेयो यस्य तारकः ॥'

अत्र विजेय[2] इति कृत्यप्रत्ययः क्तप्रत्ययार्थेऽवाचकः ।

'पाणिः पल्लवपेलवः ॥'

पेलव[3]शब्दस्याद्याक्षरे अश्लीले ।

'संग्रामे निहताः शूरा वचोवाणत्वमागताः ॥'

अत्र वचःशब्दस्य गीःशब्दवाचकत्वे नेयार्थत्वम् । तथा तत्रैव बाण-स्थाने शरेति पाठे । अत्र पदद्वयमपि न परिवृत्तिसहम् । जलध्यादौ[4]

---

पदांशेऽपि पदे परे' इति यदुक्तम्, तदुदाहरणमाह—तद्वच्छेति ॥ **अश्लीले इति** । व्रीडाव्यञ्जके ॥ **जुगुप्साव्यञ्जकं** यथा—'पूयते' इति अत्र पूयशब्दः । **अमङ्गलव्यञ्जकं** यथा—'अभिप्रेतः' इति । अत्र प्रेतशब्दः ॥ **वचोवाणत्वं** गीर्वाणत्वम् । **गीःशब्दवाचकत्वे इति** । लक्षणया गीःशब्दप्रतिपादकत्वे इत्यर्थः । **तथा** नेयार्थत्वम् । **तत्रैव** गीर्वाणशब्द एव । **परिवृत्तिसहं** श्रुतश-

---

1. मत्तेति । अत्र धातुमतो भावो धातुमत्तेति पदैकदेशेन क्षीबार्थेन मत्ताशब्देन मतुबर्थो निहन्यते । अत्र 'यश्चाप्सरोविभ्रममण्डनानां संपादयित्रीं शिखरैर्बिभर्ति । बलाहकच्छेद-विभक्तरागामकालसंध्यामिव धातुमत्ताम् ॥' इति तनूकृतम् ॥

2. विजेय इति । 'अर्हे कृत्यतृचश्च' इति सूत्रेणार्हार्थे 'अचो यत्' इति सूत्रेण विहितः कृत्यसंज्ञो यत्प्रत्ययो भूतत्वरूपे क्तप्रत्ययार्थेऽवाचकः ॥ अत्र 'चापाचार्यस्त्रिपुर-विजयी कार्तिकेयो विजेयः शस्त्रन्यस्तः सदनमुदधिर्भूरियं हन्तकारः । अस्त्येवैतत् किमु कृतवता रेणुकाकण्ठबाधां बद्धस्पर्धस्तव परशुना लज्जते चन्द्रहासः ॥' इत्युपजीव्यम् ॥

3. पेलवेति । 'पेल' इति वर्णद्वयं लाटभाषायां वृषणरूपगुह्याङ्गप्रत्यायकतया व्रीडा-दायीति प्रकाशव्याख्यातारः ॥ अत्र 'अतिपेलवमतिपरिमितवर्णं लघुतरमुदाहरति शठः । परमार्थतः सहृदयं वहति पुनः कालकूटघटितमिव ॥' इति प्रकाशोदाहरणं शरणम् ॥

4. जलध्यादाविति । तथा चोक्तमरिसिंहेन—'जलदादिषु पूर्वपदे सरोजमुख्येषु चोत्तरपदेषु । सरपतिसमेषु चोभयपदेषु पर्यायपरिवृत्तिः ॥ इति परिवृत्तिसहा ये योगात्ते यौगिकाः शब्दाः । परिवृत्त्यसहा ये तु मिश्रा गीर्वाणतुल्यास्ते ॥' योगरूढिमन्तो गीर्वाणादिमिश्रशब्दाः परिवृत्तिं न सहन्त इत्यर्थः ॥ अत्र वचोवाणेत्युदाहरणम् 'किमु-च्यतेऽस्य भूपालमौलिमालामहामणेः । सुदुर्लभं वचोबाणैस्तेजो यस्य विभाव्यते' इत्येतदनुरूपम् । वचोबाणाः गीर्वाणाः बवयोरभेदात् ॥

तूत्तरपदम्, वाडवानलादौ पूर्वपदम्। [1]एवमन्येऽपि यथासंभवं पदांश-दोषा ज्ञेयाः। निरर्थकत्वादीनां त्रयाणां च पदमात्रगतत्वेनैव लक्ष्ये संभवः। [1]क्रमतो यथा—

'मुञ्च मानं [2]हि मानिनि॥'

अत्र हिशब्दो वृत्तपूरणमात्रप्रयोजनः।

'कुञ्जं हन्ति कृशोदरी॥'

अत्र [3]हन्तीति गमनार्थे पठितमपि न तत्र समर्थम्।

'[4]गाण्डीवी कनकशिलानिभं भुजाभ्या-
माजघ्ने विषमविलोचनस्य वक्षः॥'

'आङो यमहनः', 'स्वाङ्गकर्मकाच्च' इत्यनुशासनबलादाङ्पूर्वस्य हनः स्वाङ्गकर्मकस्यैवात्मनेपदं नियमितम्। इह तु तल्लङ्घितमिति व्याकरणलक्षणहीनत्वात् च्युतसंस्कारत्वम्।

नन्वत्र 'आजघ्ने' इति पदस्य स्वतो न दुष्टता, अपि तु पदान्तरा-पेक्षयैव। इत्यस्य वाक्यदोषता। मैवम्। तथाहि गुणदोषालंकाराणां

---

ब्दपरित्यागेन तत्पर्यायशब्दान्तरदानेऽपि तदर्थबोधकम्॥ **उत्तरपदमिति**। न परिवृत्तिसहमित्यनुषङ्गः। एवमग्रेऽपि॥ **एवमिति**। 'प्रकटितम्' इत्यादौ कटिशब्दो ग्राम्यः। 'संभवन्ति रसेऽपि यत्' इति यदुक्तं तदुदाहर्तुमाह—**निरर्थकत्वादीनामिति**। आदिना असमर्थत्वच्युतसंस्कारयोर्ग्रहणम्॥ **अत्र** गमनार्थे न समर्थं न प्रतिपत्तिक्षमम्॥ **तल्लङ्घितमिति**। अनुशासनमन्यथाकृत-

---

1. एवमन्येऽपीति। 'कस्मिन्कर्मणि सामर्थ्यमस्य नोत्तपतेतराम्। अयं साधुचर-स्तस्मादञ्जलिर्बध्यतामिह॥' इत्यादौ पदैकदेशे संदिग्धत्वमनुसंधेयम्। तथाहि—इह सा-धुचरपदस्य चरेत्येकदेशः पूर्वं साधुरित्यर्थे 'भूतपूर्वे चरट्' इति सूत्रेण व्युत्पादितः। अथवा साधुषु चरतीत्यर्थे 'चरेष्टः' इत्यनेनेति प्रकरणाद्यभावे वक्तृतात्पर्यसंदेहः॥

2. हीति। अत्र 'उत्फुल्लकमलकेसर–' (३५२ पृ.) इति प्रकाशोदाहरणं द्रष्टव्यम्॥

3. हन्तीति। अत्र 'तीर्थान्तरेषु स्नानेन समुपार्जितसत्कृतिः। सुरस्रोतस्विनीमेष हन्ति संप्रति सादरम्॥' इत्युपजीव्यम्॥

4. गाण्डीवीति। 'उन्मज्जन्मकर इवामरापगाया वेगेन प्रतिमुखमेत्य बाणनद्याः।' इत्येतत्पूर्वार्धम्॥

---

१. 'क्रमतः' घ-पुस्तके नास्ति.

शब्दार्थगतत्वेन व्यवस्थितेस्तदन्वयव्यतिरेकानुविधायित्वं हेतुः । इह तु दोषस्य 'आजघ्ने' इति पदमात्रस्यैवान्वयव्यतिरेकानुविधायित्वम् । पदान्तराणां परिवर्तनेऽपि तस्य तादवस्थ्यादिति पददोषत्वमेव । तथा यथेहात्मनेपदस्य परिवृत्तावपि न पददोषः, तथा हन्प्रकृतेरपीति न पदांशदोषः ।

एवं 'पद्मः'[1] इत्यत्राप्रयुक्तस्य पदगतत्वं बोध्यम् । एवं प्राकृतादिव्याकरणलक्षणहानावपि च्युतसंस्कारत्वमूह्यम् ।

इह तु शब्दानां सर्वथा प्रयोगाभावेऽसमर्थत्वम्[1] । विरलप्रयोगे निहतार्थत्वम् । निहतार्थत्वमनेकार्थशब्दविषयम् । अप्रतीतत्वं त्वेकार्थस्यापि शब्दस्य सार्वत्रिकप्रयोगविरहः । अप्रयुक्तत्वमेकार्थशब्दविषयम् । असमर्थत्वमनेकार्थशब्दविषयम् । असमर्थत्वे हन्त्यादयो[2] गमनार्थे पठिताः । अवाचकत्वे दिनादयः प्रकाशमयाद्यर्थे, न तथेति परस्परभेदः । एवं पददोषसजातीया वाक्यदोषा[3] उक्ताः, संप्रति तद्विजातीया उच्यन्ते ।

---

मित्यर्थः ॥ **एवं पद्म इति** । **अप्रयुक्तस्य** अप्रयुक्तत्वस्य पदगतत्वं न तु पदांशगतत्वम् ॥ इदानीं केषांचिद्दोषाणां परस्परभेदं दर्शयति—**इह त्विति** । **सर्वथेति** । यत्र ज्ञापकं नास्ति तत्रैव प्रयोगाभावः । ज्ञापकसत्वे तु प्रयोगोऽस्त्येव । यथा—हनधातोर्गतौ जङ्घापद्धतिरित्यादिप्रयोगः । अत्र यनलोपपच्छब्दौ ज्ञापकौ । कुटिलं गम्यतेऽनया इति जङ्घा[2] । पद्भ्यां (हन्यते) गम्यतेऽत्रेति पद्धतिः । एतदर्थमेव हनधातोर्गतौ पाठः । केचित्तु—'पुनः पुनः गम्यतेऽनया' इति यनो वाक्यं कुर्वन्ति । तन्न । गत्यर्थधातोरत्यर्थे पौनःपुन्ये च यन् प्राप्त्यभावात् ॥ **विरलेति** । श्लेषादौ प्रयोगो न त्वन्यत्र । एतेनासमर्थत्वनिहतार्थयोर्भेदो दर्शितः ॥ निहतार्थत्वाप्रतीतत्वयोर्भेदमाह—**निहतार्थत्वमिति** ॥ अप्रयुक्तत्वासमर्थयोर्भेदमाह—**अप्रयुक्तत्वमिति** । असमर्थत्वावाचकत्वयोर्भेदमाह—**असमर्थत्वे इति** । न तथा पठिताः ॥ **तद्विजातीयाः** पददोषविजातीया वाक्यदोशा उच्यन्ते इत्यनुषङ्गेणान्वयः ॥

---

1. **पद्म इति** । नायमेकान्ततः पुंलिङ्गेऽप्रयुक्तः । तथा च **गोवर्धनः**—'घटितपलाशकपाटं दिशि दिशि सुखिनो हि शेरते पद्माः । उज्जागरेण कैरव कति शक्या रक्षितुं लक्ष्मीः ॥' अतः 'यथायं दारुणाचारः सर्वदैव विभाव्यते । तथा मन्ये दैवतोऽस्य पिशाचो राक्षसोऽथवा ॥' इति प्रकाशोदाहरणमेव वरम् ॥

2. **जङ्घेति** । जङ्घन्यत इति जङ्घा । हन्तेर्यङ्लुगन्तात्–'अन्येभ्योऽपि' इति डः ।

---

१. 'भावात्' क. २. 'अपि' इत्यधिकं घ-पुस्तके. ३. 'वाक्ये' घ.

वर्णानां प्रतिकूलत्वं, लुप्ताहतविसर्गते ।
अधिकन्यूनकथितपदताहतवृत्तता ॥ ५ ॥
पतत्प्रकर्षता, संधौ विश्लेषाश्लीलकष्टताः ।
अर्धान्तरैकपदता समाप्तपुनरात्तता ॥ ६ ॥
अभवन्मतसंबन्धाक्रमामतपरार्थताः ।
वाच्यस्यानभिधानं च भग्नप्रक्रमता तथा ॥ ७ ॥
त्यागः प्रसिद्धेरस्थाने न्यासः पदसमासयोः ।
संकीर्णता गर्भितता दोषाः स्युर्वाक्यमात्रगाः ॥ ८ ॥

वर्णानां रसानुगुण्यविपरीतत्वं **प्रतिकूलत्वम्** । यथा मम—

'ओवट्टइ उल्लट्टइ सअणे कहिंपि मोट्टाअइ णो परिहट्टइ । (१)
हिअएण फिट्टइ लज्जाइ खुट्टइ दिहीए सा ॥' (१)

अत्र टकाराः शृङ्गाररसपरिपन्थिनः केवलं शक्तिप्रदर्शनाय निबद्धाः । एषां चैकद्वित्रिचतुःप्रयोगे न तादृग्रसभङ्ग इति न दोषः ।

---

**लुप्तेति** । लुप्तविसर्गता, आहतविसर्गता च । एवमधिकपदता, न्यूनपदता, कथितपदता च ॥ **संधाविति** । संधिविश्लेषः संध्यश्लीलता संधिकष्टता च ॥ **रसानुगुण्यविपरीतत्वं** च प्रकृतरसविरोधिरसगतगुणव्यञ्जकत्वेन ॥ **ओवट्टइ इति** । 'उद्वर्तयति उल्लोटयति शयने कुत्रापि मोट्टायितयति नो परिघट्टयति । हृदयेन स्फिटयति लज्जया खुट्टयति धृतेः सा ॥' इति संस्कृतम् । विप्रलम्भवर्णनमिदम् । उद्वर्तयति देहमुत्तानीकरोति । उल्लोटयति पार्श्वपरिवृत्तिं[2] करोति । मोट्टायितभावं न करोति । स्फिटयति भ्रश्यति । खुट्टयति कुण्ठिता भवति । **शृङ्गाररसपरिपन्थिनः** शृङ्गारविरुद्धवीरबीभत्सरौद्रगतौजोगुणव्यञ्जकत्वेन शृङ्गारप्रकर्षबोधप्रतिबन्धकाः । **एषां** प्रतिकूलवर्णानाम्, तादृग्वर्णप्रतिकूलत्वनिबन्धनो **रसभङ्गः** रसप्रकर्षबोधप्रतिबन्धः । दुःश्रवत्वनिबन्धनस्तु वर्तत एव । अत एव 'निर्वर्ण्य पत्युर्मुखम्' इत्यत्र (२३ पृ.) रेफयुक्तस्य वर्णत्रयस्य सत्त्वेऽपि नायं दोषः । दुःश्रवत्वं तु वर्तत एव । ननूक्तोदाहरणे दुःश्रवत्वमेव दोष इति चेदुदाहरणान्तरं बोध्यम् । यथा—'वृन्दारकप्रकरमद्य करोम्यशङ्कमानन्दयामि मुनिवृन्दममन्दमङ्ग । भङ्गं भुजङ्गमगणस्य भयं नयामि त्वामन्तकातिथिमसन्तमहं विधाय ॥' रावणं प्रति श्रीरामस्यो-

---

1. 'ओवट्टइ–' इति । आकारनिश्चयमन्तरेण छन्दोभेदस्यानिर्णये प्राकृतव्याकरणबलेनापि संशोधयितुमसांप्रतमेतत्सांप्रतम् ॥

---

१. 'प्रयोगेण' घ. २. 'परिवर्तनम्' इति पुस्तकान्तरे.

'गता निशा इमा बाले ॥'

अत्र लुप्तविसर्गाः । आहता ओत्वं प्राप्ता विसर्गा यत्र । यथा—

'धीरो वरो नरो याति ॥'

'पल्लवाकृतिरक्तोष्ठी ॥'

अत्राकृतिपदमधिकम् । एवम्—

'सदाशिवं नौमि पिनाकपाणिम् ॥'

इति विशेषणमधिकम् ।

'[1]कुर्यां हरस्यापि पिनाकपाणेः' इति ॥

अत्र [1]तु [2]पिनाकपाणिपदं विशेषप्रतिपत्त्यर्थमु[3]पात्तमिति युक्तमेव ।

यथा वा—

'[2]वाचमुवाच कौत्सः ॥'

अत्र वाचमित्यधिकम् । उवाचेत्यनेनैव गतार्थत्वात् ।

---

क्तिरियम् । अत्र माधुर्यव्यञ्जकवर्णप्राचुर्यं वीररसस्य परिपन्थि ॥ **गता इति** । द्वयमपि बहुशः पात एव दोषः । विसर्गस्थितिबाहुल्ये दुःश्रवत्वमेव । यथा— 'स्मरः खरः खलः कान्तः' इति ॥ अधिकमनुपयुक्तार्थं पदं यत्र तत्त्वम् । **अत्राकृतिपदमिति** । शिलापुत्रस्य शरीरमितिवत् पल्लवाकृतेः पल्लवानतिरिक्तत्वादाकृतिपदमनुपयुक्तार्थमिति भावः । अन्ये तु 'आकृतिः संस्थानं तत्र संयोगस्वरूपमेव तत्र रक्तत्वस्य बाधादधिकपदम्' इत्याहुः । तन्न । बाधे अभवन्मतयोगत्वस्यैव प्रसक्तेः, न त्वधिकपदत्वस्य 'प्रभातवाता इति कम्पिताकृतिः' इत्यादिप्रयोगादाकृतिशब्दस्य शरीरवाचकत्वाच्च । अन्यथा तत्र संयोगकल्पनानुपपत्तेः, इत्यपरे ॥ **कुर्यामिति** । पिनाकपाणेरपि धैर्यच्युतिकरणेनात्मनः शौर्यातिशयः प्रतिपादितः ॥ **वाचमिति** । यथा—'देवं यजति' 'गन्धं जिघ्रति' इत्यादौ संभेदेनान्यतरवैयर्थ्यमिति न्यायेन यजादेः पूजाग्रहणमात्रार्थता, तथात्रापि वचधातोरुच्चारणमात्रार्थत्वम्, न तु वचनोच्चारणार्थत्वम् । अन्यथा पौनरुक्त्यं स्यात् । एवं च तादृशकल्पनमेवात्र शाब्दबोधविलम्बनकृदिति दोषत्वमस्य । **गतार्थत्वादिति** । वच-

---

1. कुर्यामिति । 'तव प्रसादात्कुसुमायुधोऽपि सहायमेकं मधुमेव लब्ध्वा । कुर्यां हरस्यापि पिनाकपाणेर्धैर्यच्युतिं के मम धन्विनोऽन्ये ॥' इति समस्तम् ॥

2. वाचमिति । 'अथोष्ट्रवामीशतवाहितार्थं प्रजेश्वरं प्रीतमना महर्षिः । स्पृशन्करेणानतपूर्वकायं संप्रस्थितो वाचमुवाच कौत्सः ॥' इति समस्तम् ॥

---

१. 'तु' क-पुस्तके नास्ति. २. 'पिनाकपाणिपदं' ख-ग-घ-पुस्तके नास्ति. ३. 'उपात्तत्वात्' घ.

क्वचित्तु विशेषणदानार्थं तत्प्रयोगो युज्यते । यथा—

'उवाच मधुरां वाचम्' इति ॥

केचित्त्वाहुः—यत्र विशेषणस्यापि क्रियाविशेषणत्वं संभवति तत्रापि तत्प्रयोगो न घटते । यथा—

'उवाच मधुरं धीमान्' इति ॥

'यदि मय्यर्पिता दृष्टिः किं ममेन्द्रतया तदा ॥'

अत्र त्वयेति पदं न्यूनम् ।

'रतिलीलाश्रमं भिन्ते सलीलमनिलो वहन् ॥'

लीलाशब्दः पुनरुक्तः । एवम्—

'[1]जक्षुर्बिसं धृतविकासिबिसप्रसूनाः ॥'

अत्र बिसशब्दस्य धृतपरिस्फुटतत्प्रसूना इति सर्वनाम्नैव परामर्शो युक्तः ।

---

धातुनैव वागुच्चारणस्य प्रतिपादनाद्वाचमित्यस्य प्रयोगोऽनुपयुक्त एव प्रत्युतार्थान्तरकल्पना[1]कर इति भावः ॥ न्यूनमुपादेयमप्यनुपात्तं पदं वाचकपदं यत्र तच्चेत्यर्थः । वाचकेति विशेषणाद्वाच्यानभिधानादस्य भेदो दर्शितः । तस्य द्योतकपदानभिधानस्वरूपत्वात् । केचित्तु—'अध्याहारपूरणीयं पदं न्यूनपदम् । वाच्यानभिधाने त्वध्याहारस्यैवासंभवादनयोर्भेदः । तथाहि—'व्यतिक्रमलवं कं मे वीक्ष्य वामाक्षि ! कुप्यसि' इत्यत्र व्यतिक्रमलवयोः समाससत्त्वेऽध्याहार्यापिकारेणापि व्यतिक्रमीयस्थलभागसमुच्चयस्यासंभवात् । किं तु वस्त्वन्तरस्यैव समुच्चयात्' इत्याहुः । तन्न । 'गुणशतमपि दोषः कश्चिदेकोऽतिवृद्धः क्षपयति यदि नान्यस्तद्विरोधी गुणोऽस्ति' इत्यादौ गुणशतयोः समासत्वेऽप्यधिकारेणैकद्व्यादिगुणसमुच्चयदर्शनात् । कथितमर्थपौनरुक्त्याभावेऽपि द्विरुपात्तं पदं यत्र तत्त्वम् । एकस्यैवार्थस्यैकशब्देन द्विरुपादाने किमिदं पदं नानार्थत्वेनार्थान्तरबोधकम्, उत तस्यैवार्थस्य प्रतिपादकमिति प्रतिसंधानप्रसङ्गे शाब्द-

---

1. जक्षुरिति । 'सस्नुः पयः पपुरनेनिजुरम्बराणि जक्षुर्बिसं धृतविकासिबिसप्रसूनाः । सैन्याः श्रियामनुपभोगनिरर्थकत्वदोषप्रवादममृजन्नगनिम्नगानाम् ॥' इति ॥

---

१. 'कल्पनान्तरः' इति पुस्तकान्तरे.

हतवृत्तं लक्षणानुसरणेऽप्यश्रव्यं रसानुगुणमप्राप्तगुरुभावान्तलघु च । क्रमेण यथा—

---

बोधविलम्बनं दूषकताबीजमत्र बोध्यम् ॥ हतवृत्तस्य त्रैविध्यमाह—हतमिति ।

---

1. अश्रव्यमिति । इह केषांचन वृत्तानां श्रव्यत्वाश्रव्यत्वज्ञप्तये कतिचन नियमाः प्रदर्श्यन्ते—'समासैर्लघुवृत्तानामसमासैर्महीयसाम् । शोभा भवति भव्यानामुपयोगवशेन वा ॥ अनुष्टुप्छन्दसां भेदे कैश्चित्सामान्यलक्षणम् । यदुक्तं पञ्चमं कुर्याल्लघु षष्ठं तथा गुरु ॥ तत्राप्यनियमो दृष्टः प्रबन्धे महतामपि । तस्मादव्यभिचारेण श्रव्यतैव गरीयसी ॥' यथा—'तदन्वये शुद्धिमति' इति कालिदासोक्तौ । 'उपजातिविकल्पानां सिद्धो यद्यपि संकरः । तथापि प्रथमं कुर्यात्पूर्वपादाक्षरं लघु ॥ गुर्वक्षरेण संरुद्धं ग्रन्थियुक्तमिवाग्रतः । करोति प्रथमं स्थूलं किंचित्कर्णकदर्थनाम् ॥' यथा—'अस्त्युत्तरस्याम्' इत्यत्र । 'त्र्यक्षरैस्त्र्यक्षरैरेव च्छेदैराभाति दोधकम् । अतोऽल्पैरधिकैर्वापि यतिं तालमिवोज्झति ॥ शत्रन्ताक्षरसंयोगैः किंचित्कार्कश्यकारिभिः । अन्ते विसर्जनीयैश्च शालिनी याति दीप्तताम् ॥ विसर्गयुक्तैः पादान्तैर्विराजति रथोद्धता । कलापरिचयैर्याता लटभेव प्रगल्भताम् ॥ साकाराद्यैर्विसर्गान्तैः सर्वपादैः सविभ्रमा । स्वागता स्वागता भाति कविकर्मविलासिनी ॥ द्रुततालल्यैरेव व्यक्तं रूक्षाक्षरैः पदैः । प्रनर्तयति यच्चित्तं तच्चोटकमभीप्सितम् ॥ असमस्तपदैः पादसंधिविच्छेदसुन्दरम् । सर्वपादैर्विसर्गान्तैर्वंशस्थं यात्यनर्घताम् ॥ प्रारम्भे द्रुतविन्यासं पर्यन्तेषु विलम्बितम् । विच्छित्त्या सर्वपादानां भाति द्रुतविलम्बितम् ॥ आकारमन्थरैः प्रायः पादे पादेऽक्षरैस्त्रिभिः । शेषाक्षरैर्द्रुततरैः प्रहर्षाय प्रहर्षिणी ॥ वसन्ततिलकस्याग्रे साकारे प्रथमाक्षरे । ओजसा जायते कान्तिः सविकासविलासिनी ॥' यथा रत्नाकरस्य—'कण्ठश्रियं कुवलयस्तबकाभिरामदामानुकारिविकटच्छविकालकूटाम् । बिभ्रत्सुखानि दिशतादुपहारपीतधूपोत्थधूममलिनामिव धूर्जटिर्वः ॥' 'आकारेऽपि कृते पूर्वं बन्धेऽल्पपदपेशले । वसन्ततिलकं धत्ते निर्ग्रन्थि रमणीयताम् ॥ विसर्गहीनपर्यन्ता मालिनी न विराजते । चमरी छिन्नपुच्छेव वल्लीवालूनपल्लवा ॥ द्वितीयार्धे समस्ताभ्यां पादाभ्यां मालिनी वरा । प्रथमार्धे समस्ताभ्यां पादाभ्यामवरा मता ॥ प्रथमं व्यक्षरैश्छेदैस्ततस्त्रिचतुरक्षरैः । पञ्चाक्षरैश्च पर्यन्ते नर्कुटं याति चारुताम् ॥' यथा वीरदेवस्य—'तत्र शतपत्रपत्रमृदुताम्रजलश्चरणश्चलकलहंसनूपुरवरध्वनिना मुखरः । महिषमहासुरस्य शिरसि प्रसभं निहितः कनकमहीधरेन्द्रगुरुतां कथमम्ब ! गतः ॥' 'असमासैः पदैर्भाति पृथ्वी पृथ्वी पृथग्स्थितैः । समासग्रन्थिभिः सैव याति संकोचखर्वताम् ॥' पृथक्पदा यथा मम—'दवीयसि मनोहरा व्यतिकरे तु दुःखप्रदा मनागपि निषेविता हृदयकम्पलीलावहाः । अनन्तपदरोधिकास्तुहिनवृष्टयः केवलं कदाचन करालतां दधति यत्र कायस्थवत् ॥' यत्र बदरिकाश्रमे । 'पृथ्वी साकारगम्भीरैरोजःसर्जिभिरक्षरैः । समासग्रन्थियुक्तापि याति प्रत्युत दीर्घताम् ॥' यथा—'महाप्रलयमारुत–' इत्यादि । 'त्वरातरलविच्छेदैर्विभाति हरिणीपदैः । मन्थरैर्ग्रन्थिबद्धेव याति निःस्पन्दसंगताम् ॥ त्रिषु पादेषु विश्रान्तविलासैर्ललितापदैः । अन्ते

---

१. 'हतं' घ.

'हन्त संततमेतस्या हृदयं भिन्ते मनोभवः कुपितः ॥'

'अयि मयि मानिनि! मा कुरु मानम् ॥'

इदं वृत्तं हास्यरसस्यैवानुकूलम्।

'विकसितसहकारभारहारिपरिमल एष समागतो वसन्तः ॥'

यत्पादान्ते लघोरपि गुरुभाव उक्तस्तत्सर्वत्र द्वितीयचतुर्थपाद-

---

अप्राप्तगुरुभावमन्तलघु यत्र तत् ॥ **हन्तेति** । अत्र प्रथमद्वितीयगणौ भकारसकारौ, अनयोः सांनिध्यमश्रव्यं तच्च सभ्यानामनुभवसिद्धम् ॥ **गुरुभाव उक्त इति** । 'सानुस्वारश्च दीर्घश्च विसर्गी च गुरुर्भवेत् । वर्णः संयोगपूर्वश्च तथा पादा-

---

तरङ्गितगतिर्हरिणी हारिणीतराम् ॥ शिखरिण्याः समारोहात्सहजैवौजसः स्थितिः । सैव लुप्तविसर्गान्तैः प्रयात्यत्यन्तमुन्नतिम् ॥ शिखरिण्याः पदैश्छिन्नैः स्वरूपं परिहीयते । मुक्तालताया निःसूत्रमुक्तैर्मुक्ताफलैरिव ॥ मन्थराक्रान्तविस्रब्धैश्चतुर्भिः प्रथमाक्षरैः । मध्यषट्केऽतिचतुरे मन्दाक्रान्ता विराजते ॥' यथा—'ब्रह्मावर्तं जनपदमधः—' इत्यादि । 'साकाराद्यक्षरैः पादपर्यन्तैः सविसर्गकैः । शार्दूलक्रीडितं धत्ते तेजोजीवितमूर्जितम् ॥ विसर्जनीयस्योत्वेन पदैर्निम्नोन्नतैरिव । शार्दूलक्रीडितं याति पाठे सायासतामिव ॥ विच्छिन्नपादं पूर्वार्धे द्वितीयार्धे समासवत् । शार्दूलक्रीडितं भाति विपरीतमतोऽधमम् ॥ आद्यन्तयोर्गुणोत्कर्षैकान्त्या सर्वातिशायिनोः । शार्दूलक्रीडितं धत्ते मध्ये तद्गौरवोन्नतिम् ॥' यथा—'गाहन्तां महिषाः—' इत्यादि । 'आद्यन्ताकारविरहात्पर्यन्ते चाविसर्गतः । शार्दूलक्रीडितं स्वस्य रूपं नैवोपलभ्यते ॥' यथा—'यस्त्वन्नेत्रसमानकान्ति—' इत्यादि । 'सुकुमाररसस्यात्र रक्षायै वृत्तमुद्धतम् । वाक्पाकेनैव गलितं कविना नीतमल्पताम् ॥ आकारगुरुयुक्तादिपर्यन्तान्तविसर्गिणी । असंस्यूतविरामा च राजते स्रग्धरातराम् ॥ आद्यन्ताकारविरहाद्बन्धदोषः स्फुटोऽपि यः । अविलुप्तैर्विसर्गान्तैः स्रग्धरायां समीहते ॥' इत्यादि सहृदयानुभवसिद्धम् ॥

2. **रसानुगुणमिति** । केषांचन वृत्तानां रसानुगुण्यं प्रदर्श्यते—'आरम्भे सर्गबन्धस्य कथाविस्तरसंग्रहे । शमोपदेशवृत्तान्ते सन्तः शंसन्त्यनुष्टुभम् ॥ शृङ्गारालम्बनोदारनायिकारूपवर्णनम् । वसन्तादि तदङ्गं च सच्छायमुपजातिभिः ॥ रथोद्धता विभावेषु भव्या चन्द्रोदयादिषु । षाड्गुण्यप्रगुणा नीतिर्वंशस्थेन विराजते ॥ वसन्ततिलकं भाति संकरे वीररौद्रयोः । कुर्यात्सर्गस्य पर्यन्ते मालिनीं द्रुततालवत् ॥ उपपन्नपरिच्छेदकाले शिखरिणी वरा । औदार्यरुचिरौचित्यविचारे हरिणी मता ॥ साक्षेपक्रोधधिक्कारे परं पृथ्वी भरक्षमा । प्रावृट्प्रवासव्यसने मन्दाक्रान्ता विराजते ॥ शौर्यस्तवे नृपादीनां शार्दूलक्रीडितं मतम् । सावेगपवनादीनां वर्णने स्रग्धरा वरा ॥ दोधकतोटकनर्कुटयुक्तं मुक्तकमेव विराजति सूक्तम् । निर्विषयस्तु रसादिषु तेषां निर्नियमश्च सदा विनियोगः ॥' इति ॥

1. **विकसितेति** । 'विकसितसहकारतारहारिपरिमलगुञ्जितपुञ्जितद्विरेफः । नवकिसलयचारुचामरश्रीर्हरति मुनेरपि मानसं वसन्तः ॥' इति प्रकाशोदाहरणानुरूपम् ॥

---

१. 'वत' क. २. 'संदत' क. ३. 'भावं' इति पुस्तकान्तरे नास्ति.

विषयम्। प्रथमतृतीयपादविषयं तु वसन्ततिलकादेरेव[1]। अत्र 'प्रमुदितसौरभ आगतो वसन्तः' इति पाठो युक्तः। यथा वा—

'अन्यास्ता गुणरत्नरोहणभुवो धन्या मृदन्यैव सा
संभाराः खलु तेऽन्य एव विधिना यैरेष सृष्टो युवा।
श्रीमत्कान्तिजुषां द्विषां करतलात्स्त्रीणां नितम्बस्थला-
द्दृष्टे यत्र पतन्ति मूढमनसामस्त्राणि वस्त्राणि च॥'

अत्र वस्त्राणि चेति बन्धस्य श्लथत्वश्रुतिः। 'वस्त्राण्यपि' इति पाठे तु दार्ढ्यमिति न दोषः। 'इदमप्राप्तगुरुभावान्तलघु' इति काव्यप्रकाशकारः। वस्तुतस्तु 'लक्षणानुसरणेऽप्यश्रव्यम्' इत्यन्ये।

'प्रोज्ज्वलज्ज्वलनज्वालाविकटोरुसटाछटः।
श्वासक्षिप्तकुलक्ष्माभृत्पातु वो नरकेसरी॥'

---

न्तगोऽपि वा॥' इत्यादिनेति शेषः॥ **द्वितीयचतुर्थपादेति**। इह प्रथमपादान्तस्य गुरुत्वाप्राप्तेर्दोष इति भावः॥ पतत्प्रकर्षत्वं च द्विविधम्, बन्धस्य पूर्वापेक्षया उत्तरोत्तरत्र शैथिल्यादनुप्रासपाताच्च निकर्षविशेषः। तदुक्तम्—'पतत्प्रकर्षं बन्धस्य शैथिल्यादुत्तरोत्तरम्। पूर्वानुसारतः कोऽपि निकर्षो यत्र जायते॥' इति। क्रमेणोदाहरति—**अन्यास्ता इति**। गुणरत्नस्य रोहणभुवो जन्मस्थानानि। मृच्छरीरारम्भकपृथिवीसंभारा उपकरणानि। अन्ये विलक्षणाः। यैरिति प्रागुक्तत्रितयपरामर्शः। 'क्वचिल्लिङ्गविभक्त्योः' इत्यनुशासनाद् यत्पदस्य परिलिङ्गवचनग्राहित्वम्। अन्यथा तत्पदत्रयाकाङ्क्षापूरणं न स्यात्। यत्र यूनि दृष्टे सति द्विषां करतलादस्त्राणि, स्त्रीणां नितम्बस्थलाद्वस्त्राणि च पतन्तीत्यर्थः। श्रीमदित्यादि मूढेत्यादि च विशेषणमुभयेषाम्। मोहश्चैकत्र भयेन, अन्यत्र कामेन॥ **लक्षणानुसरणेऽपि** चतुर्थपादान्तस्य लघोर्गुरुत्वप्रापकशासनत्वेऽपि॥ सटा सिंहशिरोरुहः। छटा समूहः॥ **क्रमेणेति**। प्रथमपादे संयुक्तवर्णत्रयेण चानुप्रास इत्यत्यन्तमुत्कृष्टः। द्वितीयपादे टकारत्रयेणैवेति तदपेक्षयापकृष्टः। तृतीयपादे तु क्षकारद्वयेनैवेति ततोऽप्यपकृष्टः। चतुर्थपादे मृदुवर्णद्वयेनैवेति सर्वापकृष्ट इत्यर्थः। अत्र

---

1. वसन्ततिलकादेरिति। आदिपदेनेन्द्रवज्रोपेन्द्रवज्रयोः संग्रहः। एवंप्रायेषु वृत्तेषु प्रथमतृतीयपादावसाने लघुवर्णसद्भावेऽपि श्रव्यता नापचीयते। अत एवोक्तम्—'न पादान्तलघोर्गुरुत्वं च सर्वत्र।' इति। पादान्तलघोर्गुरुत्वं प्रयोक्तव्यं न सर्वत्र न सर्वस्मिन्वृत्त इति तदर्थः॥

---

1. 'तिलकादौ' क-ख.

अत्र क्रमेणानुप्रासप्रकर्षः पतितः ।

'दलिते उत्पले एते अक्षिणी अमलाङ्गि ! ते ॥'

ऐवंविधसंधिविश्लेषस्यासकृत्प्रयोग एव दोषः । अनुशासनमुल्लङ्घ्य वृत्तभङ्गमात्रेण संधिविश्लेषस्य तु सकृदपि । यथा—

'वासवाशामुखे भाति इन्दुश्चन्दनबिन्दुवत् ॥'

'²चलण्डामरचेष्टितः' इति ॥

अत्र संधौ जुगुप्साव्यञ्जकमश्लीलत्वम् ।

'³उर्व्यसावत्र तर्वाली मर्वन्ते चार्ववस्थितिः ॥'

---

चतुर्थपादस्य शैथिल्येनापि निकर्षो बोध्यः ॥ विसंधिकमुदाहरति—**दलिते इति** । विकसिते इत्यर्थः ॥ **एवंविधेति** । अनुशासनसिद्धेत्यर्थः ॥ **सकृदपीति** । सकृत्प्रयोगेऽपि दोष इत्यन्वयः ॥ वासवाशामुखे पूर्वदिशि । अत्र 'नित्यं संहितैकपदवत् पादेष्वर्धान्तवर्जम्' इत्यनुशासनात् पद्ये संधेर्नित्यत्वमिति तल्लङ्घनाद्दोष इत्यर्थः ॥ **चलन्निति** । 'वेगादुड्डीय गगने चलण्डामरचेष्टितः । अयमुड्डीयते पक्षी ततोऽत्रैव रुचिं कुरु ॥' चलन् यथा स्यात्तथेत्यर्थः । डामरमुद्भटं चेष्टितं यस्य सः । **अत्रेति** । चलण्डामरेत्यर्थः । संधावुत्पन्नलण्डाशब्दस्यापभ्रंशविधया पुंव्यञ्जनव्यञ्जकत्वाज्जुगुप्सा । 'रुचिं कुरु' इत्यत्र स्त्रीगुह्याङ्गव्यञ्जकचिङ्कुशब्दोत्पत्त्या व्रीडा । अमङ्गलाश्लीलसंधिस्तु 'भजते ध्रुवमृतम्' इत्यत्र बोध्यः । ऋतं सत्यं भजत इति संधिवशादमङ्गलम् ॥ **उर्व्यसाविति** । उर्वी महती तर्वाली वृक्षश्रेणी मर्वन्ते निर्जलभूम्यन्ते । चारुरवस्थितिर्यस्याः सा । अर्धान्तरे भिन्नवाक्यघटितपद्यार्धे एकमेव पदं यस्य । अत्र षष्ठ्यर्थो घटकत्वम्, तथा च यद्घटकमेकमेव पदं भिन्नवाक्यघटितपद्यार्धे वर्तते तत्त्वम् । तच्चोत्तरार्धादौ पूर्वार्धान्ते च संभवति । तत्रा-

---

1. एवंविधेति । प्रगृह्यादिहेतुकस्येत्यर्थः । तत्र प्रगृह्यहेतुको विश्लेषः 'दलिते उत्पले—' इत्यत्र दर्शित एव । असिद्धिहेतुकः 'तत उदित उदारहारहारिद्युतिरुच्चै रुदयाचलादिवेन्दुः । निजवंश उदात्तकान्तकान्तिर्बत मुक्तामणिवच्चकास्त्यनर्घः ॥' इत्यादौ द्रष्टव्यः । अत्र हि 'लोपः शाकल्यस्य' इति सूत्रेण विहितस्यापि लोपस्य 'आद्गुणः' इत्यनेन प्राप्तं गुणं प्रति 'पूर्वत्रासिद्धम्' इत्यनेनासिद्धिविधानादसिद्धिहेतुकोऽयं विश्लेषः । इह बन्धशैथिल्यमेव दुष्टिबीजम् ॥

2. चलन्निति । 'वेगादुड्डीय गगने चलण्डामरचेष्टितः । अयमुत्तपते पत्री ततोत्रैव रुचिं कुरु ॥' इति शेषः ॥

3. उर्वीति । 'नात्रर्जु युज्यते गन्तुं शिरो नमय तन्मनाक् ॥' इत्युत्तरार्धम् ॥

अत्र संधौ कष्टत्वम् ।

'इन्दुर्विभाति कर्पूरगौरैर्धवलयन्करैः ।
जगन्मा कुरु तन्वङ्गि! मानं पादानते प्रिये ॥'

अत्र जगदिति प्रथमार्धे पठितुमुचितम् ।

'नाशयन्तो घनध्वान्तं तापयन्तो वियोगिनः ।
पतन्ति शशिनः पादा भासयन्तः क्षमातलम् ॥'

अत्र चतुर्थपादो वाक्यसमाप्तावपि पुनरात्तः ।

**अभवन्मतसंबन्धो** यथा—

'या जयश्रीर्मनोजस्य यया जगदलंकृतम् ।
यामेणाक्षीं विना प्राणा विफला मे कुतोऽद्य सा ॥'

अत्र यच्छब्दनिर्दिष्टानां वाक्यानां परस्परनिरपेक्षत्वात्तदेकान्तःपातिनैणाक्षीशब्देनान्येषां संबन्धः कवेरभिमतो नोपपद्यत एव ।

'यां विनामी वृथा प्राणा एणाक्षी सा कुतोऽद्य मे ॥'

इति तच्छब्दनिर्दिष्टवाक्यान्तःपातित्वे तु सर्वैरपि यच्छब्दनिर्दिष्टवाक्यैः संबन्धो घटते । यथा वा—

'ईक्षसे यत्कटाक्षेण तदा धन्वी मनोभवः ।'

---

यमुदाहरति—**इन्दुरिति** । अन्वयं यथा—'जगत्प्रकाशयन्निन्दुः करैः शुभ्रैर्विभाति मा । मानमायतनेत्रान्ते! कुरु पादानते प्रिये ॥' अत्रमेतिपदमुत्तरार्धे पठितुमुचितम् । अत्रार्थान्तरोक्तपदस्य यथायथमुत्तरत्र पूर्वत्र वा वाक्ये निराकाङ्क्षत्वप्रतिसंधानेन शाब्दबोधविलम्बनमेव दूषकताबीजम् ॥ [1]समाप्तमन्वयबोधजननान्निराकाङ्क्षमपि विशेष्यं पुनर्विशेषणान्तराकाङ्क्षया उक्तं यत्र तत्त्वम् । तदुदाहरति-**नाशयन्त इति** । अत्राकाङ्क्षान्तरकल्पनेन शाब्दबोधविलम्बनं दूषकताबीजम् । **अभवन्न**-संभवन्मत इष्टः संबन्धो यत्र तत्त्वम् । विवक्षितान्वयासंभव इति यावत् । स च क्वचिन्निराकाङ्क्षतया क्वचिद्योग्यतया ॥ **या जयश्रीरिति** । कुतः कुत्र ॥ **अन्येषां** यत्पदानाम् ॥ **नोपपद्यते इति** । भिन्नविभक्तिकत्वादित्यर्थः । अत्र यामेणाक्षीमित्यन्वयो निराकाङ्क्षत्वादसंभवः । विभक्तिविपरिणामेनात्रान्वयः संभवतीत्यसंतोषादाह—**यथा वेति** । **अत्रेति** । यदिति पदं न कालार्थकं तदेति तु कालार्थकम्, तयोरभेदान्वयो योग्यताविरहान्न संभवतीति भावः । ननु यदित्यव्ययं यदर्थकम-

---

१. 'समाप्त-' इत्यादिः '-बीजम् ।' इत्यन्तः पाठः पुस्तकान्तरे नास्ति.

अत्र यदित्यस्य तदेत्यनेन संबन्धो न घटते । 'ईक्षसे चेत्' इति तु युक्तः पाठः । यथा वा—

'ज्योत्स्नाचयः पयःपूरस्तारकाः कैरवाणि च ।
रा[1]जति व्योमका[2]साररराजहंसः सुधाकरः ॥'

अ[3]त्र व्योमकासारशब्दस्य समासे गुणीभावात्तदर्थस्य न[4] सर्वैः[5] संयोगः। विधेयाविमर्शे[6] यदेवाविमृष्टं तदेव दुष्टम् । इह तु प्रधानस्य कासारपदार्थस्य प्राधान्येनाप्रतीतेः सर्वोऽपि पयःपूरादिपदार्थस्तदङ्गतया न प्रतीयते, इति सर्ववाक्यार्थविरोधावभासः । इत्युभयोर्भेदः ।

'अनेन च्छिन्दता मातुः कण्ठं परशुना तव ।
बद्धस्पर्द्धः कृपाणोऽयं लज्जते मम भार्गव! ॥'

अत्र भार्गवनिन्दायां प्रयुक्तस्य मातृकण्ठच्छेदनस्य[7] परशुना सह संबन्धो न युक्त इति प्राच्याः । परशुनिन्दामुखेन भार्गवनिन्दाधिक्यमेव वैदग्ध्यं द्योतयतीत्याधुनिकाः ।

अक्रमता यथा—

'समय एव करोति बलाबलं प्रणिगदन्त इतीव शरीरिणाम् ।
शरदि हंसरवाः परुषीकृतस्वरमयूरमयू रमणीयताम् ॥'

---

प्यस्ति, तथापि तदेत्यस्यान्वयः संभवतीत्यरुचेराह—**यथा वेति** ॥ कासारः सरः । अत्र वाक्यत्रय एव कासारशब्दस्य योगः कवेरभिमतः स तावत् समभिव्याहारविशेषरूपाकाङ्क्षाविरहान्न घटते इत्याह—**अत्रेति** । गुणीभावाद्विशेषणत्वेनान्विततया विश्लेषाभावात् । तदर्थस्य कासारशब्दस्य सर्वैः पयःपूरादिभिः । व्यो ( म्नि सरसि ) इति तु युक्तः पाठः ॥ विधेयाविमर्शस्य भेदं दर्शयति—**विधेयेति** । **भार्गवनि**न्दायामिति प्रतिपाद्यायामित्यर्थः । **मातृकण्ठच्छेदनस्य** मातृकण्ठच्छेदनकर्तृत्वस्य । परशौ छेदनस्य करणत्वमेव न तु कर्तृत्वम् । यद्वा परशौ मातुरित्यस्य संबन्धाभावादवशिष्टस्य संवन्धो न संभवति । **प्राच्याः** प्राचीनाः । **आधुनिका इति** । अयमाशयः—तवेत्यनुषक्तेन मातुरित्यस्य संबन्धः स्थाली पचतीतिवत्[8] करणस्यापि कर्तृत्वारोपः । परशोरारोपितेनापि स्त्रीवधकर्तृत्वेन पातकं संभाव्यते, तव तु मुख्येनैव मातृवधकर्तृत्वेन सुतरामतिपातकमिति । अस्य शाब्दबोधविघटकत्वं दूषकताबीजम् ॥ **अक्रमतेति** । अविद्यमान स्वार्थान्वितार्थकपदप्रत्यासत्तिरूप-

---

१. 'राजते' क-ख. २. 'कासारे राजहंसः' घ. ३. 'राजति' घ. ४. 'न' नास्ति. क-घ-पुस्तकयोः. ५. 'सर्वैः कः' क; 'क' इति नास्ति घ-पुस्तके. ६. 'मर्शे तु' क-ख. ७. 'छेदनकर्तृत्वस्य' घ. ८. 'इत्यादिवत्' पुस्तकान्तरे.

अत्र परामृश्यमानवाक्यानन्तरमेवेतिशब्दोपयोगो युज्यते, न तु प्रणिगदन्त इत्यनन्तरम् । एवम्—

'द्वयं गतं संप्रति शोचनीयतां समागमप्रार्थनया कपालिनः ।
कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी ॥'

अत्र त्वमित्यनन्तरमेव चकारो युक्तः ।

**अमतपरार्थता यथा—**

'राममन्मथशरेण ताडिता—'( १५३ पृ. ) इत्यादि ।

अत्र शृङ्गाररसस्य व्यञ्जको द्वितीयोऽर्थः प्रकृतरसविरोधित्वादनिष्टः ।

**वाच्यस्यानभिधानं यथा—**

'व्यतिक्रमलवं कं मे वीक्ष्य वामाक्षि! कुप्यसि ॥'

अत्र व्यतिक्रमलवमपीत्यपिरवश्यं वक्तव्यो नोक्तः । न्यूनपदत्वे वाचकपदस्यैव न्यूनता विवक्षिता । अपेस्तु न तथात्वमित्यनयोर्भेदः । एवमन्यत्रापि । यथा वा—

'चरणानतकान्तायास्तन्वि! कोपस्तथापि ते ॥'

अत्र चरणानतकान्तासीति वाच्यम् ।

---

क्रमो यत्र तत्त्वमित्यर्थः । वाचकपदस्योक्तक्रमाभावेऽस्थलस्थपदत्वम्, इदं तु तदितरपदस्यैवेति ततोऽस्य भेदः ॥ **समय इति** । परुषीकृतस्वरमयूरं यथा स्यात्तथा रमणीयतां ययुः । प्राप्तवन्त इत्यर्थः ॥ **द्वयमिति** । शिवप्राप्त्यर्थं तपस्यन्तीं पार्वतीं प्रति ब्रह्मचारिरूपधारिणः शिवस्योक्तिरियम् । कपालिशिवस्य **कलावतश्चन्द्रस्य नेत्रकौमुदी** नयनानन्दजनिका । अस्य प्रत्यासत्तिकल्पनेन शाब्दबोधविलम्बनं दूषकताबीजम् ॥ **अमतः** प्रकृतविरुद्धः प्रकृतरसविरोधिरसव्यञ्जकः व्यञ्जकः **परः** श्लेषादिना प्रतीयमानो द्वितीयोऽर्थो यत्र तत्त्वम् ॥ **रामेति** । व्याख्यातमिदं प्राक् ( १५३ पृ. ) **प्रकृतेति** । प्रकृतो बीभत्सरसस्तद्विरोधित्वात्तद्विरोधिशृङ्गारव्यञ्जकत्वात् । अस्य प्रकृतरसापकर्षकत्वं दूषकताबीजम् ॥ **वाच्यस्यावश्यं वक्तव्यस्यानभिधानम्** ॥ न्यूनपदत्वादस्य भेदं दर्शयति—**न्यूनेति** । न तथात्वं न च वाचकत्वम् । पदान्तरप्रत्यासत्तिं विना स्वार्थबोधनासामर्थ्यादित्यर्थः । न्यूनपदत्वे वाचकत्वाविवक्षायां पुनरुक्तोदाहरणं तस्यैवेत्युदाहरणान्तरमाह—**यथा वेति** । **अत्र चरणेति** । तथापीत्यस्य भिन्नवाक्यार्थसापेक्षत्वादिति भावः । पूर्वत्रापेरध्याहारेण

---

१. 'पिनाकिनः' इति बहुत्र.

भग्नप्रक्रमता यथा—

'एवमुक्तो मन्त्रिमुख्यै रावणः प्रत्यभाषत ॥'

अत्र वचधातुना प्रक्रान्तं प्रतिवचनमपि तेनैव वक्तुमुचितम् । तेन 'रावणः प्रत्यवोचत' इति पाठो युक्तः । एवं च सति न कथितपदत्व-दोषः । तस्योद्देश्यप्रतिनिर्देश्यव्यतिरिक्तविषयकत्वात् । इह हि वचन-प्रतिवचनयोरुद्देश्यप्रतिनिर्देशत्वम् । यथा—

'उदेति सविता ताम्रस्ताम्र एवास्तमेति च ॥'

इत्यत्र हि यदि पदान्तरेण स एवार्थः प्रतिपाद्यते तदान्योऽर्थ इव प्रतिभासमानः प्रतीतिं स्थगयति ।

---

शाब्दबोधविलम्बनम्, उत्तरत्र तथापीत्यन्वयेन शाब्दबोधविलम्बनं दूषकताबीजम् ॥

**भग्नप्रक्रमतेति** । भग्नो विच्छिन्नः प्रक्रमः प्रस्तावो यस्य तत्त्वम् । प्रस्तावश्चात्रा-काङ्क्षितप्रकारकोऽर्थः । यद्येन प्रकारेण प्राङ्निर्दिष्टं तस्य तत्प्रकारेणानुक्तिरेव भङ्गः । तथा च प्रत्युत्थिताकाङ्क्षविषयीकृतेन प्रकारेण पश्चादनुक्तिः क्रमभङ्ग इति फलितम् । **एवमुक्त इति** । अत्रैवमुक्तमिति साकाङ्क्षवाक्येनोत्थापिता प्रतिवचनस्याकाङ्क्षा, सा च पूर्वोक्तशब्दविशिष्टमेव प्रतिवचनं विषयीकरोति । अत्र आकाङ्क्षिताया वचधा-तुरूपप्रकृतेः प्रकारस्य भाषधातुनिर्देशाद्भङ्गः । **तेनैव वक्तुमुचितमिति** । तथा सति प्रथमोत्थापिताकाङ्क्षापूरणं भवतीति भावः । ननु 'प्रत्यवोचत' इति पाठे कथि-तपदत्वदोषप्रसङ्ग इत्यत आह—**एवं च सतीति** । एवं सतीत्यर्थः । **तस्य** कथितपदत्वस्य । उद्देश्यप्रतिनिर्देश्यभावे तु कथितपदत्वं गुण एव । तदुक्तम्—'प्र-क्रमस्यान्यथाभावे स एव तु महान्गुणः' इति । स एव कथितपदत्वदोष एव ॥ उद्देश्यप्रतिनिर्देश्यभावश्च त्रिविधः । एकविधेयार्थमुद्दिष्टस्य विधेयान्तरे प्रतिनिर्देश इत्येकः । यथा—**उदेतीति** । अत्रोदयकालीनताम्रत्वविधावुद्दिष्टस्य सवितुरस्तम-यकालीनताम्रत्वविधावुद्देश्यतया प्रतिनिर्देशः । एकोद्देशेन विहितस्योद्देश्यान्तरे विधेयतया प्रतिनिर्देश इत्यपरः । यथा—**एवमुक्त इति** । अत्र मन्त्रिमुख्योद्देशेन

---

1. उद्देश्येति । उद्देश्यः प्राक्प्रत्यायित एव प्रतिनिर्देश्यः पुनः प्रत्याय्यो यत्र तस्मात् व्यतिरिक्तो विषयो यस्य तथा । पूर्वापरयोरेकरूपत्वप्रतिपत्तये यत्र प्राङ्निर्दिष्टस्यार्थस्य तेन शब्देन तेन च रूपेण पुनर्निर्देश्यावश्यकत्वं तदतिरिक्तस्थले कथितपदत्वदोषः । इह त्वभेदबोधनार्थं पुनरुक्तिरुत्कर्षावहा । अयमेवार्थः 'उदेति सविता—' इति दृष्टान्तभूतो-दाहरणेन विशदीकृतः । एतदुत्तरार्धं तु 'संपत्तौ च विपत्तौ च महतामेकरूपता ॥' इति ॥

2. पदान्तरेणेति । 'रक्त एवास्तमेति च' इत्याकारेण ॥

---

१. '–विषयत्वम्' घ. २. 'इह हि–' इत्यादिः '–निर्देशत्वम् ।' इत्यन्तः पाठो घ-पुस्तके नास्ति. ३. 'हि' घ-पुस्तके नास्ति.

यथा वा—

'ते हिमालयमामन्त्र्य पुनः प्रेक्ष्य च शूलिनम् ।
सिद्धं चास्मै निवेद्यार्थं तद्विसृष्टाः खमुद्ययुः ॥'

अत्र 'अस्मै' इतीदमा प्रक्रान्तस्य तेनैव तत्समानाभ्यामेतददःशब्दाभ्यां वा परामर्शो युक्तो न तच्छब्देन । यथा वा—

'उदन्वच्छिन्ना भूः स च पतिरपां योजनशतम् ।'

अत्र 'मिता भूः पत्यापां स च पतिरपाम्' इति युक्तः पाठः ।

एवम्—

'यशोऽधिगन्तुं सुखलिप्सया वा मनुष्यसंख्यामतिवर्तितुं वा ।
निरुत्सुकानामभियोगभाजां समुत्सुकेवाङ्कमुपैति सिद्धिः ॥'

---

विहितस्य वचनस्य रावणोद्देशेन विधेयतया प्रतिनिर्देशः । प्रतिवचनेऽपि वचनत्वसत्त्वादेकत्वम् । एतदेव दर्शयति—**इह हीति** । एकोद्देशेन विहितस्य विधेयान्तरे उद्देश्यतया प्रतिनिर्देश इति तृतीयः । यथा–'मिता भूः पत्यापां स च पतिरपां योजनशतम्' इति । अत्र पृथिव्युद्देशेन विहितस्यापां पत्युर्योजनशतविधावुद्देश्यतया प्रतिनिर्देशः । **चण्डीदासास्तु**—'उद्देश्योऽनूद्यः स एव प्रतिनिर्देश्यः प्रतीतिमान्थर्यपरिहारार्थं पुनरभिधेयो यत्र स तथोक्तः' इत्याहुः । तेषामयमाशयः—उद्देश्यपदं प्राङ्निर्दिष्टोद्देश्यविधेयान्यतरपरम्, प्रतिनिर्देश्यपदं च चरमनिर्दिष्टोद्देश्यविधेयान्यतरपरम् । तथा सति सर्वं समञ्जसम् । उद्देश्यप्रतिनिर्देश्यभावे एकशब्दस्य पुनः प्रयोगे दोषाभावमुदाहरणदर्शनेन प्रमाणयति—**उदेतीति** । अत्र ताम्रपर्यायरक्तशब्ददाने भग्नप्रक्रमत्वं प्रदर्श्य तस्य दूषकताबीजं प्रदर्शयति–**अत्र हीति** । **अन्योऽर्थ इवेति** । 'न सोऽस्ति प्रत्ययो लोके यत्र शब्दो न भासते' इति नियमात्ताम्ररक्तशब्दरूपविशेषणभेदादन्यार्थवद्भासमानत्वम् । तथा सति 'संपत्तौ च विपत्तौ च महतामेकरूपता' इत्युत्तरार्धस्य शाब्दबोधविलम्बनमिति भावः ॥ सर्वनामपदस्य प्रक्रमभङ्गं दर्शयति—**ते हिमालयमामन्त्र्येति** । यद्यपि सर्वनाम्ना प्रतिनिर्देशे दोषो नास्तीति प्रसिद्धम्, तथाप्यनुभवबलेनासर्वनामनिर्दिष्टस्य सर्वनाम्ना प्रतिनिर्देशे तद्बोध्यम्, सर्वनामनिर्दिष्टस्य नेति बोध्यम् । **इदमा** इदंशब्देन । **तेनैव** इदमैव । **समानाभ्यां** समानार्थाभ्याम् । एतदादिशब्दत्रयस्य समानार्थकत्वं सुप्रसिद्धमिति शब्दभेदेऽपि, न तु तद्दूषणावकाश इति भावः । उद्देश्यप्रतिनिर्देश्यभावस्य तृतीयं प्रकारं दर्शयति—**उदन्वदिति** । उदन्वच्छिन्ना समुद्रपरिच्छिन्ना ॥ **मनुष्यसंख्यां** सामान्यमनुष्येषु गण-

---

1. उदन्वदिति । '—सदा पान्थः पूषा गगनपरिमाणं गणयति । इति प्रायो भावाः स्फुरदवधि मुद्रामुकुलिताः सतां प्रज्ञोन्मेषः पुनरयमसीमा विजयते ॥' इत्यवशिष्टम् ॥

---

१. इतोऽग्रे 'न सोऽस्ति प्रत्ययो लोके यत्र कालो न भासते' इत्यधिकं पुस्तकान्तरे.

अत्र 'सुखमीहितुम्' इत्युचितम् । अत्राद्ययोः प्रकृतिविषयः प्रक्रमभेदः । तृतीये पर्यायविषयः, चतुर्थे प्रत्ययविषयः । एवमन्यत्रापि ।

प्रसिद्धित्यागो यथा—

'घोरो वारिमुचां रवः ॥'

अत्र मेघानां गर्जितमेव प्रसिद्धम् ।

यदाहुः—

'मञ्जीरादिषु रणितप्रायं पक्षिषु तु कूजितप्रभृति ।
स्तनितमणितादि सुरते मेघादिषु गर्जितप्रमुखम् ॥' इत्यादि ।

अस्थानस्थपदता यथा—

'तीर्थे तदीये गजसेतुबन्धात्प्रतीपगामुत्तरतोऽस्य गङ्गाम् ।
अयत्नबालव्यजनीबभूवुर्हंसा नभोलङ्घनलोलपक्षाः ॥'

---

नाम् । **अतिवर्तितुमतिक्रमितुम्** । **निरुत्सुकानामनुत्कण्ठितचित्तानाम्** । **अभियोगः** उद्योगः । अत्रेच्छार्थकतुमुन्प्रत्ययेनोपक्रमस्य तत्समानार्थकसन्प्रत्ययेन भङ्गः । यशोऽधिगमनोद्देशेन विहिताया इच्छायाः सुखलोभोद्देशेनापि विधेयतया निर्देशः ॥ दर्शितोदाहरणानां विशेषमाह—**अत्राद्ययोरिति** । एषूदाहरणेषु आद्ययोः 'एवमुक्तः' इति 'ते हिमालयम्' इत्येतयोः । तृतीये 'उदन्वच्छिन्ना' इत्यादौ । चतुर्थे 'यशोऽधिगन्तुम्' इत्यादौ ॥ **एवमन्यत्रेति** । कारकोपसर्गादावपि प्रक्रमभङ्गो बोद्धव्य इत्यर्थः । तत्र कारकविषयो यथा—'गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु । विश्रब्धैः क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले विश्रामं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः ॥' अत्र प्रत्ययोक्तकर्तृकारकोपक्रमस्य क्रियतामित्यत्र भङ्गः । कर्मकारकस्योक्तत्वात् । परे तु कर्तृकारकाणां प्रथमोपक्रमस्य वराहपतिभिरिति तृतीयायां भेदः । 'विश्रब्धा रचयन्तु शूकरवरा मुस्ताक्षतिं पल्वले' इति युक्तः पाठः । उपसर्गविषयो यथा—'चपलाचपलास्वेव नापत्सु विकलो भवेत् । विपत्सु धीरता यस्य भाजनं स हि संपदः ॥' चपलाचपलासु विद्युच्चञ्चलासु । अत्रापत्स्वित्यत्र आङुपसर्गोपक्रमस्य विपत्स्वित्यत्र वेरुपादानाद्भङ्गः ॥ **मेघानामिति** । मेघानां शब्दे गर्जितमेव गर्जितादिशब्द एव, तत्परित्यागाद्रसादिप्रकर्षबोधप्रतिरोधः ॥ प्रसिद्धमाह—**मञ्जीरादिष्विति** । आदिना रसनादीनां ग्रहणम् । **रणितप्रायमिति** । प्रायशब्द आद्यर्थः । तेन शिञ्जितादीनां ग्रहणम् । मञ्जीरादिशब्देषु रणितादिशब्दः प्रयोक्तव्यः । एवमग्रेऽपि । मेघादिष्वित्यादिना हस्त्यादिपरिग्रहः । प्रमुखमित्यनेन रसितादिग्रहणम् । एवं भ्रमरादिषु गुञ्जितादि, मण्डूकादिषु रवादि, हयेषु हेषि-

अत्र तदीयपदात्पूर्वं गङ्गामित्यस्य पाठो युक्तः । एवम्—

'हिताॅन्न यः संश्रृणुते स किंप्रभुः ॥'

अत्र संश्रृणुत इत्यतः पूर्वं नञः स्थितिरुचिता ।

अत्र च पदमात्रस्यास्थाने निवेशेऽपि सर्वमेव वाक्यं विवक्षितार्थप्रत्यायने मन्थरमिति वाक्यदोषता । एवमन्यत्रापि । इह केऽप्याहुः—'पदशब्देन वाचकमेव प्रायो निगद्यते, न च नञो वाचकता, निर्विवादास्वातन्त्र्येणार्थबोधनविरहात्' इति । यथा—'द्वयं गतम्–' (४०७ पृ.) इत्यादौ त्वमित्यनन्तरं चकारानुपादानादक्रमता तथात्रापीति ।

अस्थानस्थसमासता यथा—

'अद्यापि स्तनशैलदुर्गविषमे सीमन्तिनीनां हृदि
स्थातुं वाञ्छति मान एष धिगिति क्रोधादिवालोहितः ।
प्रोद्यद्दूरतरप्रसारितकरः कर्षत्यसौ तत्क्षणा-
स्फुल्लत्कैरवकोषनिःसरदलिश्रेणीकृपाणं शशी ॥'

अत्र कोपिन उक्तौ समासो न कृतः, कवेरुक्तौ कृतः ।

---

तादि, हस्तिषु बृंहितादि । एवमन्यदपि बोद्धव्यम् ॥ **तदीये** गङ्गासंबन्धिनि ॥ ननु पदमात्रस्यास्थानस्थितिः पददोष एव, कथमस्य वाक्यदोषत्वमत आह—**अत्र पदमात्रस्येति** । सर्वा औदुम्बरी ताम्रप्रतिमा वेष्टयितव्येतिवत् सर्वपदमत्रावयवसमुदायपरम् । **मन्थरं** विलम्बसहम् ॥ **स्वातन्त्र्येण** पदान्तरसमभिव्याहारविरहेण (तद्रसगुण) **विरहादिति** । इतिशब्दो हेतौ । तद्रसगुणव्यञ्जकस्य समासस्य तद्रसाव्यञ्जकस्थानपातोऽस्थानस्थसमासत्वम् ॥ **अद्यापीति** । संध्याकाले स्फुटतः कैरवकोरकान्निःसरतामलीनां श्रेणीरूपं कृपाणं शशी कर्षति । कोषपदश्लेषात् कुड्मलस्य खड्गपिधानत्वं व्यङ्ग्यम् । कीदृशः । दूरे प्रसारितः करो रश्मिरेव करो हस्तो यस्य सः । किमर्थं कृपाणकर्षणमित्यत्राह—**अद्यापीति** । ममोदयकालेऽपीत्यर्थः । अन्यदा त्विदमाश्रित्य तिष्ठतु, ममोदये सत्यपि स्थातुं वाञ्छति, तन्मां धिगिति क्रोधादिवालोहितः । **कोपिन** उत्प्रेक्षितक्रोधस्य शशिनो दीर्घसमासो हि रौद्ररसव्यञ्जकस्तद्वर्णनस्थानं क्रुद्धस्योक्तिर्न तु कवेरुक्तिरिति भावः ॥ अत्र

---

1. हितादिति । 'स किं सखा साधु न शास्ति योऽधिपं हितान्न यः संश्रृणुते स किंप्रभुः । सदानुकूलेषु हि कुर्वते रतिं नृपेष्वमात्येषु च सर्वसंपदः ॥' इति समस्तम् ॥

---

१. 'वाचक एव प्रयोगः' घ. २. 'ताम्रप्रतिमा' इति पुस्तकान्तरे नास्ति. ३. 'तद्रसगुण' इति पुस्तकान्तरे नास्ति. ४. 'अत्र रसगुण–' इति पुस्तकान्तरे पाठः.

वाक्यान्तरपदानां वाक्यान्तरेऽनुप्रवेशः संकीर्णत्वम् । यथा—

'चन्द्रं मुञ्च कुरङ्गाक्षि ! पश्य मानं नभोऽङ्गने ॥'

अत्र नभोऽङ्गने चन्द्रं पश्य मानं मुञ्चेति युक्तम् ।

'क्लिष्टत्वमेकवाक्यविषयम्' इत्यस्माद्भिन्नम् ।

वाक्यान्तरे वाक्यान्तरानुप्रवेशो गर्भितता । यथा—

'रमणे चरणप्रान्ते प्रणतिप्रवणेऽधुना ।
वदामि सखि ! ते तत्त्वं कदाचिन्नोचिताः क्रुधः ॥'

अर्थदोषानाह—

अपुष्टदुष्क्रमग्राम्यव्याहताश्लीलकष्टताः ।
अनवीकृतनिर्हेतुप्रकाशितविरुद्धताः ॥ ९ ॥
संदिग्धपुनरुक्तत्वे ख्यातिविद्याविरुद्धते ।
साकाङ्क्षता सहचरभिन्नताऽस्थानयुक्तता ॥ १० ॥
अविशेषे विशेषश्चानियमे नियमस्तथा ।
तयोर्विपर्ययौ विध्यनुवादायुक्तते तथा ॥ ११ ॥
निर्मुक्तपुनरुक्तत्वमर्थदोषाः प्रकीर्तिताः ।

तद्विपर्ययो विशेषेऽविशेषो नियमेऽनियमः । अत्रापुष्टत्वं मुख्यानुपकारित्वम् । यथा—

'विलोक्य वितते व्योम्नि विधुं मुञ्च रुषं प्रिये ! ॥'

अत्र विततशब्दो मानत्यागं प्रति न किंचिदुपकुरुते । अधिकपद-

---

नभोऽङ्गन इति ॥ नन्वत्र व्यवहितान्वयत्वात्क्लिष्टत्वमेवेदमित्यत आह—क्लिष्टत्वमिति । संकीर्णत्वं तु वाक्यद्वयविषयमिति, अस्मात् संकीर्णात् तस्य भेद इत्यर्थः ॥ प्रणतिप्रवणे प्रणामपरायणे कान्ते कदाचिदपि क्रुधो नोचिताः । अधुना प्रणतिसमये पुनः सुतरां नोचिता इति । तत्त्वं हितं सारं तेऽहं वदामीत्यन्वयः । अनयोः प्रत्यासत्त्यभावेन शाब्दबोधो न जायत इति शाब्दबोधविघटकत्वं दूषकताबीजम् ॥ उद्देशक्रमप्राप्तानर्थदोषान्निरूपयति—अपुष्टेति । ख्यातिविरुद्धता, विद्याविरुद्धता च । तयोरविशेषविशेषानियमनियमयोः । विपर्ययौ विशेषाविशेषनियमानियमौ । विध्ययुक्तता, अनुवादायुक्तता च मुख्यार्थंतेति विशेषणादीनां पर्यवसितार्थो उत्कर्षकत्वमित्यर्थः ॥ विततशब्द इति । स्वार्थबोधद्वारेति शेषः । एतदुपलक्षणम् । व्योमवृत्तित्वमपि विशेषणमपुष्टम् । स्मरोद्दीपकत्वेन प्रसिद्धस्य चन्द्रस्य दर्शनमेव मानत्यागस्य मुख्यार्थस्य उपकारि, न तु तस्य व्योमवृत्तित्वं व्योम्नो वित-

त्वे पदार्थान्वयप्रतीतेः समकालमेव बाधप्रतिभासः, इह तु पश्चादिति विशेषः ।

दुष्क्रमता यथा—

'[1]देहि मे वाजिनं राजन्! गजेन्द्रं वा मदालसम् ॥'

अत्र गजेन्द्रस्य प्रथमं याचनमुचितम् ।

'[2]स्वपिहि त्वं समीपे मे स्वपिम्येवाधुना प्रिये ॥'

अत्रार्थो ग्राम्यः ।

कस्यचित्प्रागुत्कर्षमपकर्षं वाभिधाय पश्चात्तदन्यप्रतिपादनं व्याहतत्वम् । यथा—

'[3]हरन्ति हृदयं यूनां न नवेन्दुकलादयः ।
वीक्ष्यते यैरियं तन्वी लोकलोचनचन्द्रिका ॥'

---

तत्वं वा, नन्वेवं पदद्वयमत्राधिकमित्यधिकपदत्वमेवात्र दोषः किमपुष्टत्वस्य दोषत्वस्वीकारेणेत्यतोऽस्य भेदं दर्शयति—**अधिकेति** । बाधप्रतिभासः मुख्यार्थोपकारविरहप्रत्ययः ॥ **दुष्क्रमतेति** । 'प्राग्वाच्य उच्यते पश्चात्पश्चाद्वाच्योऽथवाग्रतः । कविना शक्तिवैकल्याद्योऽर्थस्तं दुष्क्रमं विदुः ॥' इत्युक्तलक्षणा दुष्क्रमता ॥ **अत्रेति** । बहुमूल्यं वस्तु प्रथमं याच्यते तदप्राप्तिसंभावनायामल्पमूल्यं वस्तु याच्यते इति याचनक्रमः । तदभावादत्र दुष्क्रमत्वम् । अनयोरर्थस्यापुष्टत्वदुष्क्रमत्वप्रतिसंधानेन रसादिप्रतीतिविलम्बनमेव दूषकताबीजम् । एवमग्रेऽपि यथायथं ज्ञेयम् ॥ ग्राम्यत्वमुदाहरति—**स्वपिहीति** । 'स ग्राम्यः स्वरिरंसायां पामरैर्यत्र कथ्यते । वैदग्ध्यवक्रिमलयं हित्वैव वनितादिषु ॥' लयः संबन्धः । इत्युक्तलक्षणा ग्राम्यता ॥ **कस्यचिदिति** । प्रतिपादितोत्कर्षस्यापकर्षप्रतिपादनं प्रतिपादितापकर्षस्योत्कर्षप्रतिपादनं व्याहतत्वम् । तत्र प्रथमं यथा—'कान्ते! तव मुखाम्भोजं सुतरां हृदयंगमम् । जितानि येन पद्मानि वसन्ति सलिले सदा ॥' अत्र मुखे पद्मत्वारोपणेनोत्कर्षकथनम् । पश्चान्मुखेन पराभवादपकर्षकथनम् । द्वितीयमाह—**हरन्तीति** । अत्रेन्दुकलायाः प्रागपकर्षाभिधानं पश्चान्नायिकाया उत्कर्षार्थं चन्द्रकलाकिरणरूप-

---

1. देहीति । 'भूपालरत्न! निर्दैन्यप्रदानप्रथितोत्सव! । विश्राणय तुरङ्गं मे मातङ्गं वा मदालसम् ॥' इत्येतदनुरूपम् ॥

2. स्वपिहीति । 'स्वपिति यावदयं निकटे जनः स्वपिमि तावदहं किमपैति ते । तदपि सांप्रतमाहर कूर्परं त्वरितमूरुमुदञ्चय कुञ्चितम् ॥' इत्येतन्निपीडनम् ॥

3. हरन्तीति । 'जगति जयिनस्ते ते भावा नवेन्दुकलादयः प्रकृतिमधुराः सन्त्येवान्ये मनो मदयन्ति ये । मम तु यदियं याता लोके विलोचनचन्द्रिका नयनविषयं जन्मन्येकः स एव महोत्सवः ॥' इत्येतन्निष्पीडनम् ॥

अत्र येषामिन्दुकला नानन्दहेतुस्तेषामेवानन्दाय तन्व्याश्चन्द्रिकात्वारोपः ।

'हन्तुमेव प्रवृत्तस्य स्तब्धस्य विवरैषिणः ।
यथाशु जायते पातो न यथा पुनरुन्नतिः ॥'

अत्रार्थोऽश्लीलः ।

'वर्षत्येतदहर्पतिर्न तु घनो धामस्थमच्छं पयः
सत्यं सा सवितुः सुता सुरसरित्पूरो यया प्लावितः ।
व्यासस्योक्तिषु विश्वसित्यपि न कः श्रद्धा न कस्य श्रुतौ
न प्रत्येति तथापि मुग्धहरिणी भास्वन्मरीचिष्वपः ॥'

अत्र यस्मात्सूर्याद्वृष्टेर्यमुनायाश्च प्रभवस्तस्मात्तयोर्जलमपि सूर्यप्रभ-

---

चन्द्रिकात्वमारोपितम् ॥ अश्लीलत्वमाह—**हन्तुमेवेति** । हन्तुं शत्रुं मारयितुम् । स्तब्धस्य अनम्रक्षेपकुण्ठस्य विवेकरहितस्य वा । विवरैषिणः परच्छिद्राभिलाषिणः । पातोऽभिभवः । उन्नतिर्जयः । अर्थान्तरं तु—हननं वात्स्यायनादिप्रसिद्धं निर्घातादि । स्तब्धस्यादृढलिङ्गस्य । विवरं योनिच्छिद्रं तद्गामिनः । पातो रत्युत्तरं नम्रता । उन्नतिः पुनरुद्गमः । अत्र प्रकरणाद्बोधविशेषो लक्ष्यते । अदृढलिङ्गरूपद्वितीयार्थस्त्वर्थवशादेवेत्यर्थदोषत्वमस्य ॥ **अश्लील इति** । पुंव्यञ्जकप्रकाशकत्वादिति शेषः । इदं व्रीडाव्यञ्जकं, जुगुप्सामङ्गलव्यञ्जकयोरुदाहरणमूह्यम् ॥ कष्टत्वमाह—**वर्षत्येतदिति** । आसत्त्यादिसत्त्वेऽपि विलम्बबोध्यत्वं कष्टत्वम् । विलम्बबीजं तु तात्पर्यग्राहकाभावः । अहर्पतिः सूर्यः । घनानां जलाधारत्वमात्रम्, न तु वृष्टिकर्तृत्वम् । धामस्थं चन्द्रमण्डलस्थम् । सुरसरिद्गङ्गा तस्याः पूरो जलप्रवाहः । प्लावितो वर्धितः । उक्तमर्थं प्रमाणयति—**व्यासस्येति** । व्यासस्योक्तिषु पुराणेषु । तथापि सूर्यकिरणानां जलप्रत्ययहेतुत्वस्योचितत्वेऽपि । मुग्धेति जलप्रत्ययाभावे हेतुः । भास्वन्मरीचिषु सूर्यकिरणेषु । तथा च विष्णुपुराणम्—'विवस्वानष्टभिर्मासैरादायापो रसात्मिकाः । वर्षत्यम्बु ततस्तस्मादन्नादप्यखिलं जगत् ॥ विवस्वानंशुभिस्तीक्ष्णैरादाय जगतो जलम् । सोमं पुष्यत्यथेन्दुश्च वायुनाडीमयैर्दिवि ॥ नालैर्विक्षिपतेऽभ्रेषु धूमाग्न्यनिलमूर्तिषु । न भ्रश्यन्ति ततस्तेभ्यो जलान्यभ्राणि तान्यतः ॥ अभ्रस्थाः प्रपतन्त्यापो वायुना समुदीरिताः ॥ संस्कारं कालजनितं मैत्रमासाद्य निर्मलाः ॥' इति । 'आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः' इति श्रुतिरपि । 'सूर्यस्य पत्नी संज्ञाभूत्तनया विश्वकर्मणः । मनुर्यमो यमी चैव तदपत्यानि वै मुने ! ॥' इति विष्णुपुराणम् । यमी यमुना ॥ कष्टत्वमुपपादयति—**अत्रेति** । तयोर्वृष्टियमुनयोः वाक्येन सूर्यस्य वृष्टियमुनाहेतुत्वमेव प्रतिपाद्यते । तस्मादित्या-

---

1. यथेति । 'पतनं जायतेऽवश्यं कृच्छ्रेण पुनरुन्नतिः' भामहालंकारे पाठः ॥

त्वम् । ततश्च सूर्यमरीचीनां जलप्रत्ययहेतुत्वमुचितम् । तथापि मृगी भ्रान्तत्वात्तत्र जलप्रत्ययं न करोति । अयं प्रस्तुतोऽप्यर्थो दुर्बोधः, दूरे चास्मत्प्रस्तुतार्थबोध इति **कष्टार्थत्वम्** ।

'सदा चरति खे भानुः सदा वहति मारुतः ।
सदा धत्ते भुवं शेषः सदा धीरोऽविकत्थनः ॥'

अत्र सदेत्यनवीकृतत्वम् । अत्रास्य पदस्य पर्यायान्तरेणोपादानेऽपि यदि नान्यद्विच्छित्त्यन्तरं तदास्य दोषस्य सद्भाव इति कथितपदत्वाद्भेदः ।

नवीकृतत्वं यथा—

'भानुः सकृद्युक्ततुरङ्ग एव रात्रिंदिवं गन्धवहः प्रयाति ।
बिभर्ति शेषः सततं धरित्रीं षष्ठांशवृत्तेरपि धर्म एषः ॥' इति ।

'गृहीतं येनासीः परिभवभयान्नोचितमपि
प्रभावाद्यस्याभून्न खलु तव कश्चिन्न विषयः ।
परित्यक्तं तेन त्वमपि सुतशोकान्न तु भया-
द्विमोक्ष्ये शस्त्र ! त्वामहमपि यतः स्वस्ति भवते ॥'

अत्र द्वितीयशस्त्रमोचने हेतुर्नोक्त इति **निर्हेतुत्वम्** ।

---

यर्थस्तु तात्पर्यवशात्प्रतीयते । तस्य तात्पर्यस्य ग्राहकाभावाद्विलम्ब इति भावः । **अस्मत्प्रस्तुतार्थबोधः** मद्विधानां प्रस्तुतार्थबोधः । 'तस्मात्' इति पाठे व्यक्त एवार्थः । मुग्धनायिकाया नायकात्स्वाभीष्टलाभप्रत्ययः प्रस्तुतः । अत्र तात्पर्यप्रतिसंधानविलम्बेन शाब्दबोधविलम्बनं दूषकताबीजम् ॥ अनवीकृतत्वमाह—**सदेति** । बहुशः प्रतिपादनीयार्थस्य भङ्गीपरावृत्तिं विना एकयैव भङ्ग्या प्रतिपाद्यत्वं तत्त्वम् ॥ अविकत्थनोऽनात्मश्लाघाकरः । अत्रैकशब्देन बहुशः प्रतिपादनीयोऽर्थः पुरातनवद्भासमानो रसादेरपकर्षकः ॥ ननु कथितपदत्वादस्य को भेद इत्यत आह—**अत्रास्येति** । अस्यानवीकृतार्थबोधकस्य । उपादानेऽपीत्यपिना तच्छब्दोपादाने च । **अन्यत्** पूर्वपदविभक्तिसमासादिप्रतिपादितभिन्नं विच्छित्त्यन्तरं विभक्तिसमासादिप्रतिपादितार्थविशेषः । **अस्य** अनवीकृतत्वस्य । तथा चोक्तविच्छित्तिविशेषसद्भाव एव कथितपदत्वदोषः ॥ नवीकृतत्वग्रहं विना अनवीकृतत्वप्रतीतिर्न जायते इति नवीकृतत्वमाह—**नवीकृतत्वमिति** । भङ्ग्यन्तरेण प्रतिपादने नूतनवद्भासमानमित्यर्थः । **षष्ठांशवृत्ते** राज्ञः । एष सदा युक्ततुरङ्गत्वादिरूपः ॥ निर्हेतुत्वमुदाहरति—**गृहीतमिति** । हेत्वाकाङ्क्षासत्त्वे तदनभिधानं तत्त्वम् । कर्णं प्रति क्रोधात्त्यज्यमानमस्त्रं संबुध्य अश्वत्थाम्न उक्तिरियम् । हे शस्त्र, येन मम द्रुपदरूपशत्रुपरिभवभयान्नोचितमपि ब्राह्मणजात्यनुचितमपि त्वं गृहीतमासीः । यस्य मम पितुः

'कुमारस्ते नराधीश ! श्रियं समधिगच्छतु ॥'

अत्र 'त्वं म्रियस्व' इति विरुद्धार्थप्रकाशनात्प्रकाशितविरुद्धत्वम् ।

'अचला अबला वा स्युः सेव्या ब्रूत मनीषिणः ? ॥'

अत्र प्रकरणाभावाच्छान्तशृङ्गारिणोः को वक्तेति निश्चयाभावात्संदिग्धत्वम् ।

'सहसा विदधीत न क्रियामविवेकः परमापदां पदम् ।
वृणुते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव संपदः ॥'

अत्र द्वितीयार्धं व्यतिरेकेण द्वितीयपादस्यैवार्थ इति पुनरुक्तता ।

प्रसिद्धिविरुद्धता यथा—

'ततश्चचार समरे शितशूलधरो हरिः ॥'

अत्र हरेः शूलं लोकेऽप्रसिद्धम् । यथा वा—

'पादाघातादशोकस्ते संजाताङ्कुरकण्टकः ॥'

---

प्रभावात्तव विषयः कश्चिन्न नाभूत्, अपि तु सर्व एव । तेन मम पित्रा सुतशोकान्मृतत्वेन मिथ्याश्रुतस्य मम शोकात् त्वं परित्यक्तमसि, भयात्तु न । अहमपि त्वां विमोक्ष्ये त्यक्ष्यामि । यतो मोक्षणाद्भवते स्वस्तीत्यर्थः । अत्र हेतोरप्रसिद्धत्वेनाकाङ्क्षा ॥ प्रकाशितविरुद्धत्वमाह—**कुमार इति** । प्रकाशितं परिलोचनया व्यञ्जितं विरुद्धं प्रकृतविरुद्धं येन तत्त्वम् । **अत्रेति** । राज्ञो मङ्गलं प्रकृतं मरणं तु तद्विरुद्धम् । अत्रार्थेन विरुद्धार्थव्यञ्जनमनुचितार्थत्वे पदेनेति ततो भेदः ॥ संदिग्धत्वमुदाहरति—**अचला इति** । वक्त्रभिप्रेतव्यङ्ग्यार्थस्य तत्तात्पर्यविषयत्वसंदेहात्संदेहविषयत्वं तत्त्वम् । मनीषिण इति संबोधनम् । अचलसेवाया वक्तुरभिमतत्वे शान्तः । अबलासेवायास्तु शृङ्गारो व्यङ्ग्यः । अनयोरेकतरस्मिंस्तात्पर्यनिश्चयाभावाद्रसनिश्चयप्रतिबन्धः । **शान्तशृङ्गारिणो**रिति निर्धारणे षष्ठी सप्तमी वा ॥ पुनरुक्तत्वमुदाहरति—**सहसेति** । पदं कारणम् । वृणुते प्राप्नुवन्ति । विमृश्यकारिणं विचार्यकर्तारम् । द्वितीयार्धं द्वितीयार्धार्थः, व्यतिरेकेण वैपरीत्येन । यथा—अधर्मो दुःखसाधनमित्युक्ते धर्मस्य सुखसाधनत्वमुपलभ्यते तथात्रापीति भावः ॥ ख्यातिविरुद्धतामुदाहरति—**प्रसिद्धीति** । लोककविसंप्रदायवैपरीत्यं तत्त्वम् ॥ **शितेति** । शोणिते-

---

1. अचलेति । 'मात्सर्यमुत्सार्य विचार्य कार्यमार्याः समर्यादमुदाहरन्तु । सेव्या नितम्बाः किमु भूधराणामुत स्मरस्मेरविलासिनीनाम् ॥' इत्येतदुपजीव्यम् ॥

---

१. 'वक्तोक्तिनिश्चयाभावात्' क.

अत्र पादाघातादशोकेषु पुष्पमेव जायत इति प्रसिद्धं न त्वङ्कुर इति कविसमयख्यातिविरुद्धता ।

'अधरे करजक्षतं मृगाक्ष्याः ॥'

अत्र शृङ्गार (काम) शास्त्रविरुद्धत्वाद्विद्याविरुद्धता । एवमन्यशास्त्रविरुद्धत्वमपि ।

'ऐशस्य धनुषो भङ्गं क्षत्रस्य च समुन्नतिम् ।
स्त्रीरत्नं च कथं नाम मृष्यते भार्गवोऽधुना ॥'

अत्र स्त्रीरत्नमुपेक्षितुमित्याकाङ्क्षता ।

'सज्जनो दुर्गतौ मग्नः कामिनी गलितस्तनी ।
खलः पूज्यः समज्यायां तापाय मम चेतसः ॥'

अत्र सज्जनः कामिनी च शोभनौ तत्सहचरः खलोऽशोभन इति सहचरभिन्नत्वम् ।

---

त्यर्थः ॥ ते कामिन्याः । अङ्कुर एव कण्टको रोमोद्गमः ॥ **कविसमयः** कविसंप्रदायसिद्धान्तः ॥ विद्याविरुद्धतामाह—**अधर इति** । करजक्षतं नखघातः ॥ साकाङ्क्षतामाह—**ऐशस्येति** । शिवसंबन्धिन इत्यर्थः । मृष्यते न द्वेष्टि ॥ **अत्रेति** । द्वेषयोग्य एवमुक्तिरुपपद्यते, स्त्रीरत्नं च न द्वेषयोग्यम्, इत्यतस्तदुपेक्षायां द्वेषयोग्यतायामाकाङ्क्षेत्यत आह—**उपेक्षितुमितीति** । ननु न्यूनपदत्वादस्य को विशेष इति चेत्तत्र शब्दाध्याहारः, इह त्वर्थाध्याहार इति विशेषः । वस्तुतस्तु—अनन्वयित्वभ्रमेण प्रयुक्तस्य पदार्थस्यानुपपत्तिपदार्थसाकाङ्क्षत्वं तत्त्वम् । न्यूनपदे तु नेदृशो भ्रमः ॥ सहचरभिन्नतामाह—**सज्जन इति** । उत्कृष्टैः सह निकृष्टस्य निकृष्टैः सह उत्कृष्टस्य चैकान्वयित्वेन निर्देशस्तत्त्वम् । तत्राद्यं यथा—**सज्जन इति** । समज्यायां सभायाम् ॥ द्वितीयं यथा—'दुष्टसङ्गेन दौःशील्यं व्यसनेन तथा विपत् । अपथ्यचर्यया व्याधिर्विद्याभ्यासेन वर्धते ॥' तत्र दौःशील्यविपद्व्याधयो हेयत्वान्निकृष्टाः । विद्योपादेयत्वादुत्कृष्टा ॥ अस्थानयुक्ततामाह—**आज्ञेति** । अनुपयुक्तस्थाने समापितवाक्यार्थत्वमस्थानयुक्तता । तच्च द्विविधम्—वाक्यार्थस्याधिकोपयोगे समापनम्, समापनोपयोगे चाधिक्यम् । तदुक्तम्—'युक्ताधिक्ये विसर्गः स्यादाधिक्यं च समापने । अर्थे प्रकल्पिते यत्र सोऽस्थाने स्यात्समुज्झितः ॥' इति । तत्राद्यं यथा—'मातुलो माधवो यस्य पिता यस्य धनंजयः । स शेते समरे श्रीमानभिमन्युर्महाबलः ॥' अत्र 'नियतिः केन बाध्यते' इत्यधिकं वक्तुं योग्यम् ॥

---

१. 'अनन्वयित्वभ्रमेण' इति पुस्तकान्तरे.

'आज्ञा शक्रशिखामणिप्रणयिनी शास्त्राणि चक्षुर्नवं
भक्तिर्भूतपतौ पिनाकिनि पदं लङ्केति दिव्या पुरी ।
उत्पत्तिर्द्रुहिणान्वये च तदहो नेदृग्वरो लभ्यते
स्याच्चेदेष न रावणः क्व नु पुनः सर्वत्र सर्वे गुणाः ॥'

अत्र न रावण इत्येतावतैव समाप्यम् ।

'हीरकाणां निधेरस्य सिन्धोः किं वर्णयामहे ॥'

अत्र रत्नानां निधेरित्यविशेष एव वाच्यः ।

'आवर्त एव नाभिस्ते नेत्रे नीलसरोरुहे ।
भङ्गाश्च वलयस्तेन त्वं लावण्याम्बुवापिका ॥'

अत्रावर्त एवेति नियमो न वाच्यः ।

---

द्वितीयमुदाहरति—आज्ञेति । रावणपुरोहितेन रावणार्थं सीताप्रार्थने कृते जनकपुरोहितस्य शतानन्दस्य रावणस्य प्रशंसापूर्वकमुपेक्षाबीजप्रदर्शनमिदम् । पञ्चसु वाक्येषु यस्येति बोध्यम् । प्रणयिनी सहचरी । शक्रेण शिरोमणिरिव रावणाज्ञा धार्यत इत्यन्वयः । एतेनास्य वीरत्वं सूचितम् । तच्च स्त्रीणाम[न]भिमतम् । शास्त्राण्येव नवमधिकं चक्षुः । शास्त्रदृष्ट्या कर्मकरणात् । एतेन धीमत्त्वं सूचितम् । 'युवा धीमाञ्जनप्रियः' इत्यनेन वरगुणत्वेनास्योक्तत्वात् । भूतानामीश्वरे पिनाकिनि शिवे । एतेन संपदैश्वर्यप्रजाभोगित्वं सूचितम् । संपदादीनां शिवसेवाफलत्वेनोक्तत्वात् । तेन धनवत्त्वमपि वरगुणो लभ्यते । 'माता वरयते वित्तं पिता वरयते कुलम् । कन्या वरयते रूपं मिष्टान्नमितरे जनाः ॥' इति । मिष्टान्नं जनप्रियम् । पदं स्थानम् । द्रुहिणस्य ब्रह्मणोऽन्वये कुले । एतेन सत्कुलजातत्वं वरगुणः सूचितः ॥ उपेक्षाबीजमाह—स्याच्चेदेषेति । रावयति पीडनेन लोकान् आतुरान् करोतीति रावणः । एष यदि दुर्वृत्तत्वेन ख्यातनामा न स्यात्तदेदृग्वरो न लभ्यत इति । एतेन जनप्रियत्वस्य वरगुणस्य वैकल्यं दर्शितम् । वरगुणवत्त्वं कुत्रापि नास्तीति आह—क्वन्विति । कुत्र जगति सर्वत्र पुरुषे सर्वे वरगुणाः सन्ति । न कुत्रापीत्यर्थः । अत्र पुंसां प्रातिस्विकरूपेण सर्वगुणाभाववत्त्वं यावत्त्वेन तु सर्वगुणसद्भाव एव । यद्वा सर्वेषु पुरुषेषु मध्ये कुत्र पुरुषे सर्वे वरगुणाः । न कुत्रापीत्यर्थः । एतच्च न रावणोपेक्षाबीजमित्येतत्पर्यन्तमस्थानं तत्र वाक्यार्थसमापनमयुक्तमित्याह—अत्रेति । सामान्येन वक्तव्ये विशेषाभिधानमविशेषे विशेषस्तमुदाहरति—हीरकाणामिति । अनियमेन वक्तव्ये नियमाभिधानमनियमे नियमः । तमुदाहरति—आवर्त एवेति । भङ्गास्तरङ्गाः । वलयस्त्रि-

---

१. 'तरङ्गा' घ.

'यान्ति नीलनिचोलिन्यो रजनीष्वभिसारिकाः ॥'

अत्र तमिस्रास्विति रजनीविशेषो वाच्यः ।

'आपातसुरसे भोगे निमग्नाः किं न कुर्वते ॥'

अत्र आपातमेवेति नियमो वाच्यः ।

ननु वाच्यस्यानभिधाने 'व्यतिक्रमलवं–' (४०७ पृ.) इत्यादावपेरभावः, इह चैवकारस्येति कोऽनयोर्भेदः । अत्राह—'नियमस्य वचनमेव पृथग्भूतं नियमपरिवृत्तेर्विषयः' इति । तन्न । तथा सत्यपि द्वयोः शब्दार्थदोषतायां नियामकाभावात् । तत्का गतिरिति चेत्, 'व्यतिक्रमलवम्' इत्यादौ शब्दोच्चारणानन्तरमेव दोषप्रतिभासः । इह त्वर्थप्रत्ययानन्तरमिति भेदः । एवं च शब्दपरिवृत्तिसहत्वासहत्वाभ्यां पूर्वैराहतोऽपि शब्दार्थदोषविभाग एवं पर्यवस्यति—यो दोषः शब्दपरिवृत्त्यसहः स शब्ददोष एव । यश्च पदार्थान्वयप्रतीतिपूर्वबोध्यः सोऽपि शब्ददोषः । यश्चार्थप्रतीत्यनन्तरं बोध्यः सोऽर्थाश्रय इति । एवं चानियमपरिवृत्तित्वादेरप्यधिकपदत्वादेर्भेदो बोद्धव्यः । अमतपरार्थत्वे तु 'राममन्मथशरेण–' इत्यादौ (१५३ पृ.) नियमेन वाक्यव्यापित्वाभिप्रायाद्वाक्यदोषता । अश्लीलत्वादौ तु न नियमेन वाक्यव्यापित्वम् ।

---

वल्यः ॥ विशेषवक्तव्ये सामान्येनाभिधानं विशेषेऽविशेषः । तमुदाहरति—**यान्तीति** । नीलनिचोलिन्यो नीलप्रच्छदपटावृताः । तस्मिस्रासु तमोयुक्तरात्रिषु । ज्योत्स्नीष्वभिसारिकाणां शुक्लपटावरणमेवोचितम् ॥ नियमो निर्धारणं तेन वक्तव्ये अनियमेनाभिधानं नियमानियमः । तमुदाहरति—**आपातेति** । भोगे विषयोपभोगे निमग्ना एकान्तमासक्ताः ॥ वाच्यानभिधानान्नियमपरिवृत्तेर्भेदं निरूपयितुमाह—**नन्विति** । पृथग्भूतं विशेषः । एवं च नियमद्योतकपदानभिधानं नियमपरिवृत्तिस्तदितरद्योतकपदानभिधानं तु वाच्यानभिधानस्य विषय इति भेदः ॥ गतिः सिद्धान्तः । निरुक्तभेदे प्राचीनस्वरसमप्याह—**एवं चेति** । **पर्यवस्यतीति** । परिवृत्तिः पर्यायशब्दान्तरदानं स्वार्थबोधेन निवृत्तिश्चेति भावः ॥ नन्वेवममतपरार्थत्वादौ पदार्थबोधानन्तरमेव दोषप्रतिभासादर्थदोषत्वमेव, कथं वाक्यदोषत्वमत आह—**अमतेति** । नियमेन वाक्यव्यापित्वात् वाक्यान्वयव्यतिरेकानुविधायित्वात् ॥ **अश्लीलत्वादौ त्विति** । 'हन्तुम्' इत्यादावर्थाश्लीलत्वे हनधात्वादेः पारिभाषिकनिर्घातादिबोधकत्वं नियमतो नोपपद्यते परं तु समभिव्याहारवशात्तात्पर्यपर्यालोचनया तदर्थकत्वकल्पनेनेति भावः ॥ विधेयतापर्याप्त्ययोग्ये तात्पर्यारोपणं विध्ययु-

'आनन्दितस्वपक्षोऽसौ परपक्षान्हनिष्यति ॥'

अत्र परपक्षं हत्वा स्वपक्षमानन्दयिष्यतीति विधेयम् ।

'चण्डीशचूडाभरण! चन्द्र! लोकतमोपह! ।
विरहिप्राणहरण! कदर्थय न मां वृथा ॥'

अत्र विरहिण उक्तौ तृतीयपादस्यार्थो नानुवाद्यः ।

'लग्नं रागावृताङ्ग्या सुदृढमिह ययैवासियष्ट्यारिकण्ठे
मातङ्गानामपीहोपरि परपुरुषैर्या च दृष्टा पतन्ती ।
तत्सक्तोऽयं न किंचिद्गणयति विदितं तेऽस्तु तेनास्मि दत्ता
भृत्येभ्यः श्रीनियोगाद्गदितुमिति गतेवाम्बुधिं यस्य कीर्तिः ॥'

अत्र विदितं तेऽस्त्वित्यनेन समापितमपि वचनं तेनेत्यादि पुनरुपात्तम् ।

अथ रसदोषानाह—

**रसस्योक्तिः स्वशब्देन स्थायिसंचारिणोरपि ॥ १२ ॥**
**परिपन्थिरसाङ्गस्य विभावादेः परिग्रहः ।**
**आक्षेपः कल्पितः कृच्छ्रादनुभावविभावयोः ॥ १३ ॥**
**अकाण्डे प्रथनच्छेदौ तथा दीप्तिः पुनः पुनः ।**
**अङ्गिनोऽननुसंधानमनङ्गस्य च कीर्तनम् ॥ १४ ॥**

---

क्तता । तामुदाहरति—आनन्दितेति । अत्रेति । परपक्षहननस्वपक्षानन्दनयोर्द्वयोरपि विधेयत्वेऽपि परपक्षहननानन्तरमेव स्वपक्षानन्दनविधावेव विधेयतात्पर्याप्तिरुचिता, परपक्षहननविधौ तत्करणाद्दोषः ॥ नन्वत्र विधेयाविमर्श एव दोष इति चेत् 'आनन्दयति पक्षं स्वं परपक्षं हनिष्यति' इति पाठपरिवर्तनेनास्योदाहरणं वेदितव्यम् ॥ अनुवाद्यविशेषणस्य विधिविरोधित्वमनुवादायुक्तता । तामुदाहरति—चण्डीशेति । नानुवाद्यः अनुवाद्यविशेषणत्वेन नोपादेयः विरहिणा स्वकदर्थनस्य वृथात्वे विधीयमाने विरहिप्राणहरस्य अनुवाद्यचन्द्रविशेषणस्य तद्विधिविरोधत्वादिति भावः ॥ आकाङ्क्षितस्य कारकस्य क्रियान्वयेन समाप्तावपि पुनस्तत्कारकोपादानं निर्मुक्तपुनरुक्तत्वम् । समाप्तपुनरुक्तत्वं तु विशेष्यानुषङ्ग एव इत्यनयोर्भेदः । उदाहरति—लग्नमिति । रागेण रक्तेन आवृतं लिप्तमङ्गं यस्यास्तया, अथ च रागेण सुरतेच्छया आवृतं स्तब्धं शरीरं यस्यास्तया । मातङ्गानां हस्तिनाम्, अथ च कामशास्त्रोक्तपुरुषविशेषाणाम् । परपुरुषैः शत्रुभिः, स्वामिभिन्नैश्च । तत्सक्तस्तादृशासिलतासक्तः । अत्रेति । गणयतीति पर्यन्तस्य कर्मकारकस्य विदितक्रियान्वयेन समाप्तावपि तेनासीत्यादेः पुनरुपादानादिति भावः ॥ स्थायिसंचारिणोरिति । स्वशब्देनोक्तिरित्यनुषक्तेनान्वेति । अकाण्डे अकाले । प्रथना-

अतिविस्तृतिरङ्गस्य प्रकृतीनां विपर्ययः ।
अर्थानौचित्यमन्यच्च दोषा रसगता मताः ।

रसस्य स्वशब्दो रसशब्दः शृङ्गारादिशब्दश्च । क्रमेण यथा—

'तामुद्वीक्ष्य[1] कुरङ्गाक्षीं रसो नः कोऽप्यजायत ॥'

'चन्द्रमण्डलमालोक्य[2] शृङ्गारे मग्नमन्तरम् ॥'

स्थायिभावस्य स्वशब्दवाच्यं यथा—

'अजायत रतिस्तस्यास्त्वयि लोचनगोचरे ॥'

व्यभिचारिणः स्वशब्दवाच्यत्वं यथा—

'जाता लज्जावती मुग्धा प्रियस्य परिचुम्बने ॥'

अत्र प्रथमे पादे 'आसीन्मुकुलिताक्षी सा' इति लज्जाया अनुभावमुखेन कथने युक्तः पाठः ।

'मानं मा कुरु तन्वङ्गि! ज्ञात्वा यौवनमस्थिरम् ॥'

अत्र यौवनास्थैर्यनिवेदनं शृङ्गाररसस्य परिपन्थिनः शान्तरसस्याङ्गं शान्तस्यैव च विभाव इति शृङ्गारे तत्परिग्रहो न युक्तः ।

'धवलयति शिशिररोचिषि भुवनतलं लोकलोचनानन्दे ।
ईषत्क्षिप्तकटाक्षा स्मेरमुखी सा निरीक्ष्यतां तन्वी ॥'

अत्र रसस्योद्दीपनालम्बनविभावावनुभावपर्यवसायिनौ स्थिताविति कष्टकल्पना ।

---

दित्रयं रसस्यैव । **प्रकृतीनां** नायकोचितधर्माणां **विपर्ययो**ऽन्यथावर्णनम् । इदमेकमनौचित्यम् । अन्यत्प्रकृतिविपर्ययभिन्नम् ॥ **कोऽप्यनिर्वचनीयस्वभावः** ॥ **व्यभिचारिणः** स्वातन्त्र्येणोपादान एव स्वशब्दवाच्यत्वं दोषः, रसव्यञ्जनार्थमुपादाने तु न दोषः । यथा लज्जानम्रमुखीति, श्रमविवृतमुखे च । **स्वशब्दवाच्यत्वं** रसादिप्रकर्षबोधप्रतिबन्धकम् ॥ विरोधिरसाङ्गपरिग्रहमुदाहरति—**मानमिति** । **शान्तस्यैव चेति** । चशब्दो हेतौ । **विभाव** उद्दीपनविभावः । **तत्परिग्रहो** यौवनस्थैर्यनिवेदनवर्णनम् ॥ अनुभावस्य कष्टाक्षेपमाह—**धवलयतीति** । शिशिररोचिषि चन्द्रे. यातिप्रयत्नेनाप्यभग्नमाना सेत्यर्थः । **अत्रेति** । आलम्बनं

---

1. तामिति । 'तामनङ्गजयमङ्गलश्रियं किंचिदुच्चभुजमूललोकिताम् । नेत्रयोः कृतवतोऽस्य गोचरे कोऽप्यजायत रसो निरन्तरः ॥' इति प्रकाशोदाहरणस्य चूर्णम् ॥

2. चन्द्रेति । 'आलोक्य कोमलकपोलतलाभिषिक्तव्यक्तानुरागसुभगामभिराममूर्तिम् । पश्यैष बाल्यमतिवृत्य विवर्तमानः शृङ्गारसीमनि तरङ्गितमातनोति ॥' इति प्रकाशोदाहरणोपजीव्यम् ॥

'परिहरति रतिं मतिं लुनीते स्खलतितरां परिवर्तते च भूयः ।
इति बत विषमा दशास्य देहं परिभवति प्रसभं किमत्र कुर्मः ॥'

अत्र रतिपरिहारादीनां करुणादावपि संभवात्कामिनीरूपो विभावः कृच्छ्रादाक्षेप्यः ।

अकाण्डे प्रथनं यथा—वेणीसंहारे द्वितीयेऽङ्के प्रवर्तमानानेकवीरसंक्षये काले दुर्योधनस्य भानुमत्या सह शृङ्गारप्रथनम् । छेदो यथा—वीरचरिते राघवभार्गवयोर्धाराधिरूढेऽन्योन्यसंरम्भे कङ्कणमोचनाय[1] गच्छामीति राघवस्योक्तिः ।

पुनः पुनर्दीप्तिर्यथा—कुमारसंभवे रतिविलापे ।

अङ्गिनोऽननुसंधानं यथा—रत्नावल्यां चतुर्थेऽङ्के बाभ्रव्यागमने[2] सागरिकाया विस्मृतिः ।

---

नायिका । उद्दीपनविभावाश्चन्द्रकटाक्षमोक्षमन्दहासाः । एषां बहुत्वेऽप्युद्दीपनविभावत्वेनैकत्वमिति द्विवचनोपपत्तिः । **अनुभावपर्यवसायिनौ** प्रणिधानेनानुभावस्य नायकचक्षुःप्रसारणस्य बोधकौ । नायकस्य शृङ्गारित्वनिश्चायकाभावाद्रत्यनुभावस्य नायिकायां चक्षुःप्रसारणस्य कष्टकल्पनया आक्षेपः । नायकस्याशृङ्गारित्वे दर्शनाभावस्यापि संभवात् तादृशसमये तादृशनायिकायां मुनेरपि प्रायो मनःक्षोभो भवतीत्यौत्सर्गिकमेव चक्षुःप्रसारणमिति कष्टकल्पना ॥ विभावस्य कष्टकल्पनमाह—**परिहरतीति** । अत्रायमिति कर्तृपदमूह्यम् । **रतिं** वस्त्वन्तराभिलाषम् । **स्खलतितरां** भूमौ भृशं पतति । **परिवर्तते** पार्श्वपरिवृत्तिं करोति । **विषमा** दुष्प्रतीकारा । **दशा** अवस्था ॥ **कृच्छ्रादाक्षेप्य इति** । प्रकरणादिप्रतिसंधानमेवात्र कृच्छ्रम् ॥ **प्रवर्तमानः** स्वपुत्रादिरूपानेकवीराणां संक्षयो यत्र तस्मिन् ॥ **धाराधिरूढे** आरब्धे ॥ **रतिविलाप इति** । 'विललाप विकीर्णमूर्धजा' इत्युपक्रम्य धारावाहिककरुणरसे प्रवर्तिते पुनर्मधोरागमने 'तमवेक्ष्य रुरोद सा भृशं स्तनसंबाधमुरो जघान सा' इत्यादिना तदुद्दीपनं कृतम् ॥ **अङ्गिनः** प्रधानस्य ॥ **बाभ्रव्यागमन इति** । सागरिकायाः पितृगृहादा-

---

1. **कङ्कणमोचनायेति** । कङ्कणमोचनं विवाहदशमदिनोत्सवः । अकाण्डे तथाकथनं व्याजनिर्गमनप्रत्यायकत्वाद् रामभद्रस्यावीरत्वपर्यवसायीति ।

2. **बाभ्रव्यागमन इति** । बाभ्रव्यागमने विजयवर्मवृत्ताकर्णनाहितमनसा राज्ञा सागरिकाया नाममात्रस्याप्यग्रहणाद्विस्मृतिः । तेन नाटिकाप्रतिपाद्यः शृङ्गाररसो विच्छिन्नप्राय इति दोषः ॥

---

१. 'संग्रामे' घ. २. 'मोक्ष' इति पुस्तकान्तरे नास्ति.

अनङ्गस्य कीर्तनं यथा—कर्पूरमञ्जर्यां राजनायिकयोः स्वयं कृतं वसन्तस्य वर्णनमनादृत्य बन्दिवर्णितस्य प्रशंसनम्[1] ।

अङ्गस्यातिविस्तृतिर्यथा—किराते सुराङ्गनाविलासादिः ।

प्रकृतयो दिव्या अदिव्या दिव्यादिव्याश्चेति[1] । तेषां धीरोदात्ता-दिता[2] । तेषामप्युत्तमाधममध्यमत्वम् । तेषु च यो यथाभूतस्तस्यायथा-वर्णने प्रकृतिविपर्ययो दोषः । यथा—धीरोदात्तस्य रामस्य धीरोद्धतव-च्छद्मना वालिवधः । यथा वा—कुमारसंभवे उत्तमदेवतयोः पार्वती-परमेश्वरयोः संभोगशृङ्गारवर्णनम्[2] । 'इदं पित्रोः संभोगवर्णनमिवात्य-न्तमनुचितम्' इत्याहुः ।

अन्यदनौचित्यं देशकालादीनामन्यथा यद्वर्णनम् । तथा सति हि काव्यस्यासत्यताप्रतिभासेन विनेयानामुन्मुखीकारासंभवः ।

---

गतः कञ्चुकी बाभ्रव्यः ॥ **अनङ्गस्य** रसानुपकारकस्य ॥ **अङ्गस्या**प्रधानस्य ॥ **प्रकृ-तिविपर्ययमुदाहर्तुं प्रकृतीराह—प्रकृतय इति** । नायका इत्यर्थः । दिव्या देवा-सुरयक्षगन्धर्वराक्षसादयः । अदिव्यास्तदितरे मानुषादयः । दिव्यादिव्याः प्रागे-वोक्ताः ( २७३ ) । **तेषां** दिव्यादिनायकानां धीरोदात्तादिता । उत्तममध्यमाध-मत्वमपि प्रकृतिरित्यर्थः । दिव्यादीनामनुचितवर्णनं प्रकृतिविपर्ययस्तज्ज्ञापनाय तेषा-मुचितं वर्णनीयं वर्णयामि । यथा—'रतिस्तथैव हासश्च शोक आश्चर्यमेव च । दिव्यानामुचितं वर्ण्यमदिव्योत्तमनेतृवत् ॥ किं तु संभोगशृङ्गारो वर्ण्यो नोत्तमदे-वयोः । सद्यः फलप्रदः क्रोधो भ्रुकुट्यादिविवर्जितः ॥ उत्साहः स्वर्गपातालगत्य-ब्धिलङ्घनादिषु । दिव्यानामेव नेतॄणां वर्ण्यते ह्युचितं बुधैः ॥ ख्यातं लोकपुरा-णादौ यच्चान्यत्स्यादबाधितम् । वर्णनीयमदिव्यानामन्येषां तूभयं बुधैः ॥ पूज्यादौ तु तत्रभवन्भगवन्निति चोच्यते । भट्टारकेति राजादौ परमेशेति नोच्यते ॥ इत्या-द्युचितमेतेषां विरुद्धं दूषणं भवेत् ॥' अन्येषां दिव्यादिव्यानामुभयं दिव्यसाधर्म्य-मदिव्यसाधर्म्यं चोचितमित्यर्थः । यथा—अर्जुनस्य स्वःपातालादिलङ्घनोत्साहः भ्रुकुट्यादिरहितः क्रोधश्च ॥ **देशकालादीनामिति** । देशोऽद्रिवनराष्ट्रादिः, कालो रात्रिदिनर्तवः, तदनौचित्यम् । क्रमेण यथा—'कर्पूरपादपामर्शी सुरभिर्म-

---

1. **प्रशंसनमिति** । 'जइ किल णिवेदिदं बन्दीही' इत्यादिना विदूषकोक्तिपर्यन्तेन संदर्भेण वन्दिवर्णितस्य वसन्तस्य वर्णनं प्रकृतरसानुपयोगित्वादनुचितम् ॥

2. **संभोगेति** । रसगङ्गाधरेऽप्युक्तम्—'जयदेवादिभिस्तु गीतगोविन्दादिप्रबन्धेषु सकलसहृदयसंमतोऽयं समयो मदोन्मत्तमतङ्गजैरिव भिन्न इति न तन्निदर्शनेनेदानींतनेन तथा वर्णयितुं सांप्रतम् ।' इति ॥

---

१. 'श्च' क. २. 'धीरोदात्तादिभावः' क.

**एभ्यः पृथगलंकारदोषाणां नैव संभवः ॥ १५ ॥**

लयानिलः । कलिङ्गवनसंभूता मृगप्राया मतङ्गजाः ॥ चोलाः कालागुरुश्यामाः कावेरीतीरभूमयः ॥' अत्र मलये कर्पूरवृक्षस्य कलिङ्गवने हस्त्युत्पत्तेश्चोलेषु कालागुरूणामसंभवादनौचित्यम् ॥ 'पद्मिनी नक्तमुन्निद्रा स्फुटत्यह्नि कुमुद्वती। मधुरुत्फुल्लनिचुलो निदाघो मेघदुर्दिनः ॥ श्रव्यहंसगिरो वर्षाः शरदो मत्तबर्हिणः। हेमन्तो निर्मलादित्यः शिशिरः श्लाघ्यचन्दनः ॥' आदिपदेन लोकजातिवयःप्रभृतीनां ग्रहणम् ॥ 'चराचराणां भूतानां प्रवृत्तिर्लोकसंज्ञिता' । तदनौचित्यं यथा—'आधूतकेसरो हस्ती तिग्मशृङ्गस्तुरङ्गमः । गुरुसारोऽयमेरण्डो निःसारः खदिरद्रुमः ॥' इत्याद्यनौचित्यस्य न केवलं रसापकर्षकत्वं दूषकताबीजम्, काव्यस्य प्रवृत्तिनिवृत्त्युपदेशपरत्वव्याघातकत्वमपीत्याह—**तथा सतीति**। अयथावर्णने सतीत्यर्थः। **असत्यताप्रतिभासेन** अप्रामाण्यप्रतिपत्त्या । **विनेयानां** धर्मादिजिज्ञासूनाम्। काव्याध्ययने प्रवृत्तिरुन्**मुखीकारः** ॥ नन्वसादृश्यादीनामलंकारदोषाणां परम्परया रसापकर्षकत्वेन काव्यदोषत्वसंभवात्काव्यदोषाणां पञ्चविधत्वमनुपपन्नम्, अतस्तानुक्तदोषेषु यथायथमन्तर्भावयति—**एभ्य इति** । निरुक्तकाव्यदोषेभ्य इत्यर्थः । **पृथग्**भिन्नानाम् । तथा चोक्तदोषेष्वेवासादृश्यादीनामन्तर्भाव इति

---

1. एभ्य इति । अत्रेयं दोषदिक्—

(१) दुःश्रवत्वम्='कार्तार्थ्य–' (२) अश्लीलत्वम् (त्रिविधम्)='दृप्तारि–'। 'प्रससार–' (३) अनुचितार्थत्वम्='शूरा–' (४) अप्रयुक्तत्वम्='भाति–' (५) ग्राम्यत्वम्='कटिः–' (६) अप्रतीतत्वम्='योगेन–' (७) संदिग्धत्वम्='आशीः–' (८) नेयार्थत्वम्='कमले–' (९) निहतार्थत्वम्='यमुना–' (१०) अवाचकत्वम्='गीतेषु–' (११) क्लिष्टत्वम्='क्षीरोद–' (१२) विरुद्धमतिकारित्वम्='भूतये–' (१३) अविमृष्टविधेयांशत्वम्='स्वर्गग्रामटिका–' (१४) निरर्थकत्वम्='मुञ्च मानं–' (१५) असमर्थत्वम्='कुञ्जं हन्ति–' (१६) च्युतसंस्कारत्वम्='गाण्डीवी–' ॥

अत्र दुःश्रवत्वादयस्त्रयोदश पददोषाः, वाक्यदोषाः । क्लिष्टत्वादयस्त्रयः समासगता एव पददोषाः। निरर्थकत्वादयस्त्रयस्तु पदमात्रवृत्तय इति। एवं दुःश्रवत्वादयो यथासंभवं पदांशवृत्तयोऽपि ॥

(१) प्रतिकूलवर्णत्वम्='ओवट्टइ–' (२) लुप्तविसर्गत्वम्='गता निशा–' (३) आहतविसर्गत्वम्='धीरो वरो–' (४) अधिकपदत्वम्='पल्लवाकृति–' (५) न्यूनपदत्वम्='यदि मय्यर्पिता–' (६) कथितपदत्वं (पुनरुक्तत्वम्)='रतिलीला–' (७) हतवृत्तत्वम्='हन्त–' (८) पतत्प्रकर्षत्वम्='प्रोज्वल–' (९) संधिविश्लेषत्वम्='दलिते उत्पले–' (१०) संध्यश्लीलत्वम्='चलण्डा–' (११) संधिकष्टत्वम्='उर्व्यसा–' (१२) अर्धान्तरैकपदत्वम्='इन्दु–' (१३) समाप्तपुनरात्तत्वम्='नाशयन्तो–' (१४) अभवन्मतसंबन्धत्वम्='या जयश्रीः–' (१५)

एभ्य उक्तदोषेभ्यः । तथाहि—उपमायामसादृश्यासंभवयोरुपमानस्य जातिप्रमाणगतन्यूनत्वाधिकत्वयोरर्थान्तरन्यासे उत्प्रेक्षितार्थसमर्थने चानुचितार्थत्वम् । क्रमेण यथा—

'ग्रथ्नामि काव्यशशिनं विततार्थरश्मिम् ॥'

---

भावः ॥ अन्तर्भावप्रकारमाह—**तथा हीति** । उपमायामसादृश्यासंभवयोरनुचितार्थत्वं पर्यवस्यतीत्यध्याहृतेनान्वयः । एवमग्रेऽपि । साधारणधर्माप्रसिद्धिरसादृश्यम् । उपमानाप्रसिद्धिरसंभवः ॥ **ग्रथ्नामीति** । आनुपूर्व्या निवेशयामीत्यर्थः ॥ काव्यं शशीवेत्युपमाने समासः । एवमग्रेपि । न चात्र रूपकसंभवोऽपीति वाच्यम् । तस्यापि सादृश्यमूलकत्वेन तत्रापि तद्दोषतादवस्थ्यात् । अत्र काव्यशशिनोरर्थरश्म्योश्च कश्चित्साधारणो धर्मो न प्रसिद्धः । काव्यशशिनोराह्लादकत्वरूपैकधर्मसंभवेऽप्यर्थरश्म्योर्न तादृशधर्मः संभवतीत्यवधेयम् ॥ उपमानासंभव-

---

अक्रमत्वम्='समय एव–' (१६) अमतपरार्थत्वम्='राममन्मथ–' (१७) अनभिहितवाच्यत्वम्='व्यतिक्रम–' (१८) भग्नप्रक्रमत्वम्='एवमुक्तो–' (१९) प्रसिद्धित्यागत्वम्='घोरो–' (२०) अस्थानस्थपदत्वम्='तीर्थे–' (२१) अस्थानस्थसमासत्वम्='अद्यापि–' (२२) संकीर्णत्वम्='चन्द्रं मुञ्च–' (२३) गर्भितत्वम्='रमणे–' ॥

एते प्रतिकूलवर्णत्वादयस्त्रयोविंशतिर्दोषा वाक्यमात्रगता इति ॥

(१) अपुष्टत्वम्='विलोक्य–' (२) दुष्क्रमत्वम्='देहि–' (३) ग्राम्यत्वम्='स्वपिहि–' (४) व्याहतत्वम्–'हरन्ति–' (५) अश्लीलत्वम्='हन्तुमेव–' (६) कष्टत्वम्='वर्षत्येत–' (७) अनवीकृतत्वम्='सदा चरति–' (८) निर्हेतुत्वम्='गृहीतं–' (९) प्रकाशितविरुद्धत्वम्='कुमारस्ते–' (१०) संदिग्धत्वम्='अचला–' (११) पुनरुक्तत्वम्='सहसा–' (१२) प्रसिद्धिविरुद्धत्वम्='ततश्चचार–' (१३) विद्याविरुद्धत्वम्='अधरे–' (१४) साकाङ्क्षत्वम्='ऐशस्य–' (१५) सहचरभिन्नत्वम्='सज्जनो–' (१६) अस्थानयुक्तत्वम्='आज्ञा–' (१७) अविशेषविशेषत्वम्='हीरकाणां–' (१८) अनियमनियमत्वम्='आवर्त एव–' (१९) विशेषाविशेषत्वम्='यान्ति–' (२०) नियमानियमत्वम्='आपात' (२१) विध्ययुक्तत्वम्='आनन्दित–' (२२) अनुवादायुक्तत्वम्='चण्डीश–' (२३) निर्मुक्तपुनरुक्तत्वम्='लग्नं–' ॥

एतेऽपुष्टत्वादयस्त्रयोविंशतिरर्थदोषाः ॥

(१) रसशब्दोक्तिः । (२) स्थायिशब्दोक्तिः । (३) व्यभिचारिशब्दोक्तिः । (४) प्रतिकूलविभावादिग्रहः । (५) अनुभावकष्टाक्षेपः । (६) विभावकष्टाक्षेपः । (७) अकाण्डप्रथनम् । (८) अकाण्डच्छेदः । (९) पुनःपुनर्दीप्तिः । (१०) अङ्ग्यननुसंधानम् । (११) अनङ्गाभिधानम् । (१२) अङ्गातिविस्तृतिः । (१३) प्रकृतिविपर्ययः (१४) अर्थानौचित्यम् ।

एते चतुर्दश रसदोषाः ॥

'प्रज्वलज्जलधारावन्निपतन्ति शरास्तव ॥'

'चण्डाल इव राजासौ संग्रामेऽधिकसाहसः ॥'

'कर्पूरखण्ड इव राजति चन्द्रबिम्बम् ॥'

'हरवन्नीलकण्ठोऽयं विराजति शिखावलः ॥'

'स्तनावद्रिसमानौ ते ॥'

'दिवाकराद्रक्षति यो गुहासु लीनं दिवाभीतमिवान्धकारम् ।
क्षुद्रेऽपि नूनं शरणं प्रपन्ने ममत्वमुच्चैःशिरसामतीव ॥'

एवमादिषूत्प्रेक्षितार्थस्यासंभूततयैव प्रतिभासनं स्वरूपमित्यनुचितमेव तत्समर्थनम् । यमकस्य पादत्रयगतस्याप्रयुक्तत्वं दोषः । यथा—

'सहसाभिजनैः स्निग्धैः सह सा कुंञ्जमन्दिरम्[1] ।
उदिते रजनीनाथे सहसा याति सुन्दरी ॥'

उत्प्रेक्षायां यथाशब्दस्योत्प्रेक्षाद्योतकत्वेऽवाचकत्वम् । यथा—

'एष मूर्तो यथा धर्मः क्षितिपो रक्षति क्षितिम् ।'

एवमनुप्रासे वृत्तिविरुद्धस्य प्रतिकूलवर्णत्वम् । यथा—

'ओवट्टइ उल्लट्टइ—' इत्यादौ । ( ३९८ पृ. )

---

मुदाहरति—**प्रज्वलदिति** । तत्र वह्निकर्मणो ज्वलनस्य जले बाधात्तद्विशिष्टानां तासामसंभवः ॥ उपमानस्य जातिन्यूनत्वमुदाहरति—**चण्डाल इवेति** । अत्र चण्डालपदमुपमेयस्यातिनीचत्वं व्यञ्जयतीत्यनुचितार्थत्वम् ॥ उपमानस्य प्रमाणन्यूनत्वमुदाहरति—**कर्पूरेति** । अत्रोपमेयस्य चन्द्रबिम्बस्यातिक्षुद्रत्वव्यञ्जकं कर्पूरखण्डपदम् ॥ उपमानस्य जात्यधिकत्वमुदाहरति—**हरवदिति** । शिखावलो मयूरः ॥ उपमानस्य प्रमाणाधिकत्वमुदाहरति—**स्तनाविति** । अत्र स्तनयोरतिमहत्त्वव्यञ्जकमद्रिपदमनुचितार्थम् ॥ उत्प्रेक्षितार्थसमर्थनमुदाहरति—**दिवाकरादिति** । उत्प्रेक्षितार्थस्याचेतनान्धकारत्रासस्या[2]**संभूततया** संभावनाविषये वस्तुन्यवृत्तितया **प्रतिभासनं** स्वरूपमारोपणमात्रमनुचितमेवेति **समर्थनं** न मिथ्येत्युपपादनं तच्चासद्भूते वस्तुनि न संभवतीति भावः ॥ **पादत्रयगतस्य** पादत्रयमात्रवृत्तित्वस्य **अप्रयुक्तत्वं** नाम दोषः । स्वरूपमिति पूर्वेणान्वयः ॥ **सहसा** अविचारेण । **सह** सार्धम् । **सा** प्रसिद्धा । **सहसा** हासयुक्ता ॥ **वृत्तिविरुद्धत्वस्य** प्रकृतरसविरोधिरसानुगुणवर्णघटितत्वस्य ॥ **ओवट्टइ इति** । अत्र

---

1. 'कुञ्जमन्दिरे' क. 2. 'असंभूततया—' इत्यादिः '—वृत्तितया' इत्यन्तः पाठः पुस्तकान्तरे नास्ति.

उपमायां च साधारणधर्मस्याधिकन्यूनत्वयोरधिकपदत्वं न्यूनपदत्वं च । क्रमेणोदाहरणम्—

'नयनज्योतिषा भाति शंभुर्भूतिसितद्युतिः ।
विद्युतेव शरन्मेघो नीलवारिदखण्डधृक् ॥'

अत्र भगवतो नीलकण्ठत्वस्याप्रतिपादनाच्चतुर्थपादोऽधिकः ।

'कमलालिङ्गितस्तारहारहारी मुरं द्विषन् ।
विद्युद्विभूषितो नीलजीमूत इव राजते ॥'

अत्रोपमानस्य सबलाकत्वं वाच्यम् ॥

अस्यामेवोपमानोपमेययोर्लिङ्गवचनभेदस्य कालपुरुषविध्यादिभेदस्य च भग्नप्रक्रमत्वम् । क्रमेणोदाहरणम्—

'सुधेव विमलश्चन्द्रः ॥'

'ज्योत्स्ना इव सिता कीर्तिः ॥'

'काप्यभिख्या तयोरासीद्व्रजतोः शुद्धवेषयोः ।
हिमनिर्मुक्तयोर्योगे चित्राचन्द्रमसोरिव ॥'

अत्र तथाभूतचित्राचन्द्रमसोः शोभा न खल्वासीत् । अपि तु सर्वदापि भवति ।

'लतेव राजसे तन्वि! ॥'

अत्र लता राजते, त्वं तु राजसे ।

'चिरं जीवतु ते सूनुर्मार्कण्डेयमुनिर्यथा ॥'

अत्र मार्कण्डेयमुनिर्जीवत्येव न खल्वेतदस्य जीवत्वित्यनेन विधेयम् ।

---

शृङ्गारविरोधिवीराद्यनुगुणटकारघटितत्वमनुप्रासस्य ॥ **भगवतः** शंभोः । **अप्रतिपादनात्** अप्रतियोगात् । तत्प्रयोगे तु तदुपयोगसंभवान्नाधिकत्वम् ॥ **तारहारहारी** शुद्धहारहारी । मुरं द्विषन् श्रीकृष्णः ॥ **वाच्यं** वक्तुं योग्यम् । तदकथनान्न्यूनपदत्वमित्यर्थः । **अस्यामेव** उपमायामेव ॥ **सुधेव विमल इति** । अत्र पुंलिङ्गस्य विमलसुधायामन्वयासंभवाल्लिङ्गव्यत्ययेनान्वयः । एवं च प्रक्रान्तलिङ्गभङ्गः ॥ वचनभेदमाह—**ज्योत्स्ना इवेति** । अत्र वचनव्यत्ययेन प्रक्रान्तवचनभङ्गः । कालभेदमुदाहरति—**कापीति** । अभिख्या शोभा । तयोः सुदक्षिणादिलीपयोः । अत्रोपमानेऽतीतकालस्य बाधाद्वर्तमानोहेनान्वय इति प्रक्रान्तकालभङ्गः ॥ पुरुषभेदमुदाहरति—**लतेवेति** । अत्रोपमाने मध्यमपुरुषान्वयस्य बाधात्प्रथमपुरुषोहेनान्वयमुपपादयति—**लता राजत इति** । अत्र प्रक्रान्तपुरुषभङ्गः ॥ विधिभेदमाह—**चिरमिति** । एतज्जीवनम् । **अस्य** मार्कण्डेयस्य । **विधेयं** विधिविषयः

इह तु यत्र लिङ्गवचनभेदेऽपि न साधारणधर्मस्यान्यथाभावस्तत्र न दोषः। क्रमेणोदाहरणम्—

'मुखं चन्द्र इवाभाति ॥'

'तद्वेशोऽसदृशोऽन्याभिः स्त्रीभिर्मधुरताभृतः।
दधते स्म परां शोभां तदीया विभ्रमा इव ॥'

पूर्वोदाहरणेषूपमानोपमेययोरेकस्यैव साधारणधर्मेणान्वयसिद्धेः प्रक्रान्तस्यार्थस्य स्फुटोऽनिर्वाहः। एवमनुप्रासे वैफल्यस्यापुष्टार्थत्वम्। यथा—

'अनणुरणन्मणिमेखलमविरलशिञ्जानमञ्जुमञ्जीरम्।
परिसरणमरुणचरणे! रणरणकमकारणं कुरुते ॥'

---

अत्रादिपदग्राह्याया अभीष्टाशंसनरूपाया आशिष एव भेदः, न तु प्रेष्यादिर्वाथ. संकल्पभेदोऽथेष्टाभ्युपायता। शब्दव्यापारभेदो वा कार्यभेदोऽथवा विधिः ॥' इत्युक्तपञ्चविधस्य विधेरसंभवात्। विधिभेदस्योदाहरणमेवं बोध्यम्। 'चमूरियं दूरविमुक्तभङ्गा गङ्गेव मे योधमनुप्रयातु। ययारिसज्जा विभटाः प्रकामं नश्यन्त्यधर्मा इव खेदसाध्याः ॥' अत्र गङ्गा प्रयाति, चमूः प्रयातु, इति प्रक्रान्तविधिभङ्गः ॥ **साधारणधर्मस्य** निर्दिश्यमानसामान्यस्य। **अन्यथाभाव** उपमानान्वयानुपयोगित्वम्। **न दोषो** नोपमादोषः। भग्नप्रक्रमत्वस्य तु प्रसक्त्यभावेन तन्निषेधस्यात्र न संभवः ॥ **मुखमिति**। अत्राभातीति उपमानेनाप्यन्वेति ॥ वचनभेदेनापि दोषाभावमाह—**तद्वेश इति**। तस्याः वेशः परां शोभां दधते स्म धारयति स्म। 'दध धारणे' आत्मनेपदी एकवचनान्तः। वेशः कीदृशः। अन्याभिः स्त्रीभिरसदृशोऽसाधारणः। मधुरतया सौन्दर्येण भृतः पूरितः। विभ्रमाः स्मरविलासाः अपि च परां शोभां दधते धारयन्ति। 'डुधाञ् धारणपोषणयोः' बहुवचनान्तः। ते कीदृशाः। अन्याभिः स्त्रीभिरसदृशोऽसाधारणाः। अत्र क्विबन्तः सदृशशब्दो असन्तः। तथा मधुरतां बिभ्रतीति मधुरताभृतः। क्विबन्तस्य जसि रूपम्। अत्रासदृश इत्यादिपदानां श्लेषेणोपमानान्वययोगित्वम् ॥ एतदुदाहरणानां पूर्वोदाहरणापेक्षया वैलक्षण्यं दर्शयितुं पूर्वोदाहरणेषु भग्नप्रक्रमत्वं दर्शयति—**पूर्वेति**। एकस्यैव उपमेयस्यैव ॥ **साधारणधर्मेणान्वयसिद्धेरिति**। योग्यत्वादिति शेषः। **प्रक्रान्तार्थस्य** आकाङ्क्षितसाधारणधर्मस्य। **अनिर्वाहः** उपमानेनान्वयस्यानुपपत्तिः। अयोग्यत्वादिति शेषः। लिङ्गव्यत्ययादिना योग्यसामानाधिकरण्योपपादने प्रथमोत्थापिताकाङ्क्षाविषयीकृतेन प्रकारेण पश्चादनुक्तिरिति भग्नप्रक्रमत्वमिति भावः। अत्रोभयान्वयाभिप्रायेण प्रयुक्तस्यैकतरान्वयसंभवेऽभवन्मतयोगत्वम्' इत्यपरे। अनुप्रासस्य वैफल्यं रसाद्युत्कर्षानाधायकत्वम्। तच्च मुख्यार्थानुपकारित्वरूपापुष्टार्थत्वे पर्यवस्यति ॥ तदुदाहरति—**अनण्विति**। वेश्याविरक्तस्य

---

१. 'सामानाधिकरण्य-' इति पुस्तकान्तरे नास्ति.

एवं समासोक्तौ साधारणविशेषणवशात्परार्थस्य प्रतीतावपि पुनस्तस्य शब्देनोपादानस्याप्रस्तुतप्रशंसायां व्यञ्जनयैव प्रस्तुतार्थावगतेः शब्देन तदभिधानस्य च पुनरुक्तत्वम् । क्रमेणोदाहरणम्—

'अनुरागवन्तमपि लोचनयोर्दधतं वपुः सुखमतापकरम् ।
निरकासयद्रविमपेतवसुं वियदालयादपरदिग्गणिका ॥'

अत्रापरदिगित्येतावतैव तस्या गणिकात्वं प्रतीयते ।

'आहूतेषु विहङ्गमेषु मशको नायान्पुरो वार्यते
मध्ये वा धुरि वा वसंस्तृणमणिर्धत्ते मणीनां धुरम् ।
खद्योतोऽपि न कम्पते प्रचलितुं मध्येऽपि तेजस्विनां
धिक्सामान्यमचेतसं प्रभुमिवानामृष्टतत्त्वान्तरम् ॥'

अत्राचेतसः प्रभोरभिधानमनुचितम् ।

---

वचनमिदम् । हे अरुणचरणे, तव परिसरणं सर्वतो गमनं पुंसां रणरणकं कामचिन्तामकारणं कुरुते । 'चिन्ता रणरणं च तत्' इति कोषः । कीदृशम् । अनणु अनल्पं यथा स्यात्तथा रणन्ती मणिमेखला यत्र । अविरलं घनं शिञ्जानं शब्दायमानं मञ्जु मञ्जीरं यत्र तादृशम् । लघुरेफनकारादिघटितानुप्रासस्य माधुर्यातिशयव्यञ्जनेन शृङ्गारादेरेवोपकारित्वम्, अत्र पुनः पर्यवसितार्थस्य वेश्याविरागस्य न किंचिदुपकारित्वमित्यपुष्टार्थत्वम् ॥ **परार्थस्य** रूपकस्य उपमानस्य वा ॥ **अनुरागवन्तमपीति** । अनुरागो रक्तिमा, प्रेम च । निरकासयद्द्वीपान्तरं प्रापयामास, अथ च दूरीचकार । अपेतवसुं निष्किरणम्, निर्धनं च । अपरदिक् पश्चिमदिक् ॥ **अत्रेति** । यथा रविमित्येतावतैव तस्य भुजङ्गत्वं प्रतीयते तथैवेति भावः ॥ **आहूतेष्विति** । अत्र यत्तदर्थयोराकाङ्क्षया लाभः । तमचेतसं सदसद्विवेचनारूपचेतनारहितं सामान्यं जनं धिक् । अनामृष्टमनाकलितं तत्त्वान्तरं वस्तूनां विशेषो येन तादृशं प्रभुमिवेति । सदसद्विवेचनरहितत्वं दर्शयति— **आहूतेष्विति** । विहङ्गमशब्देनाहूतेषु हंसकोकिलादिषु अहमपि विहायोगमनाद्विहङ्गम इति मत्वा पुर आयान् आगच्छन् मशको येन न वार्यते यस्य धुरि यानमुखे मध्ये वा अर्थादुपस्थितस्य यानस्यैव मध्ये वा वसंस्तृणमणिस्तृणाकर्षको मणिरल्पमणिर्यानशोभाजनकमहामणीनां धुरं साम्यं धत्ते । यानस्य पश्चाद्भागस्तावत्तृणमणेः स्थानं तद्भिन्ने मध्यादौ तद्विन्यासात्तत्स्वामिनोऽविवेचकत्वमिति भावः । 'धूः स्त्री क्लीबे यानमुखम्' इति कोषः । (क्वचित्) 'वध्ये वा धुरि वा वसन्' इति पाठो न रमणीयः । अनन्वयात् । **खद्योतोऽपीति** पुर इत्यनुषज्यते । यस्य पुरः खद्योतोऽपि तेजस्विनामपि मध्ये प्रचलितुं गन्तुं न कम्पते । न बिभेतीत्यर्थः । अत्राप्रस्तुतेन तादृशा सामान्येनैव विशेषस्याचेतनस्य प्रभोरभिव्यक्तिरिति तदभिधानमनुचितमित्य-

एवमनुप्रासे प्रसिद्ध्यभावस्य ख्यातविरुद्धत्वम् । यथा—

'चक्राधिष्ठिततां चक्री गोत्रं गोत्रभिदुच्छ्रितम् ।
वृषं वृषभकेतुश्च प्रायच्छदस्य भूभुजः ॥'

उक्तदोषाणां च क्वचिददोषत्वं क्वचिद्गुणत्वमित्याह—

**वक्तरि क्रोधसंयुक्ते तथा वाच्ये समुद्धते ।**
**रौद्रादौ तु रसेऽत्यन्तं दुःश्रवत्वं गुणो भवेत् ॥ १६ ॥**

एषु चास्वादस्वरूपविशेषात्मकतया मुख्यगुणप्रकर्षोपकारित्वाद्गुण इति व्यपदेशो भाक्तः । क्रमेण यथा—

'तद्विच्छेदकृशस्य कण्ठलुठितप्राणस्य मे निर्दयं
क्रूरः पञ्चशरः शरैरतिशितैर्भिन्दन्मनो निर्भरम् ।
शंभोर्भूतकृपाविधेयमनसः प्रोद्दामनेत्रानल-
ज्वालाजालकरालितः पुनरसावास्तां समस्तात्मना ॥'

---

भिप्रायेणाह—**अत्रेति** ॥ **एवमिति** । **प्रसिद्ध्यभावस्य** अनुप्रासितपदार्थयोर्विवक्षितेऽन्वये लोकतः शास्त्रतो वा प्रसिद्धिविरहस्य ॥ **चक्राधिष्ठिततामिति** । मण्डलाधिकारित्वमित्यर्थः । चक्री विष्णुः । गोत्रं वंशम् । गोत्रभिदिन्द्रः । उच्छ्रितम् उन्नतम् । वृषं पुण्यम् । वृषभकेतुः शिवः । प्रायच्छद्दत्तवान् । अत्र कर्तृकर्मनियमेन स्तुतिरनुप्रासानुबोधेनैव प्रतिपादिता, न पुनः पुराणेतिहासादिषु तथा प्रतीतिरिति प्रसिद्धिविरहः ॥ संप्रति दोषाणां नित्यत्वानित्यत्वप्रतिपत्त्यर्थमनित्यदोषानाह—**उक्तदोषाणामिति** । **क्वचिदिति** । यत्र रसादीनामपकर्षकत्वं प्रकर्षकत्वं च नास्ति तत्रेत्यर्थः । यत्र तु रसादीनामपकर्षकत्वं नास्ति, प्रत्युत प्रकर्षकत्वमेव, तत्र गुणत्वम् ॥ तत्र दोषोद्देशक्रमेण यथासंभवं तान्दर्शयति—**वक्तरीति** । क्रोधसंयुक्ते[१] वक्तरि उद्धते प्रतिपाद्ये च सति दुःश्रवत्वं गुणः । रौद्रादिरसे पुनरत्यन्तं गुण इत्यर्थः । आदिशब्दाद् वीरबीभत्सयोर्ग्रहणम् ॥ ननु गुणानां रसधर्मत्वं त्रिविधत्वं च वक्ष्यति, दुःश्रवत्वादीनां तदुभयाभावात्कथं गुणत्वमित्यत आह—**एषु चेति** । दुःश्रवत्वादिष्वित्यर्थः । **आस्वादानां** रसानां स्वरूपविशेषात्मकाः साधर्म्यविशेषरूपा ये **मुख्यगुणा** माधुर्यादयः तत्कृतो यः **प्रकर्षो** रसाद्युत्कर्षस्तस्योपकारित्वात् अनुकूलत्वात् । व्यपदेशो गौणव्यवहारः ॥ **तद्विच्छेदेति** । भूतेषु जन्तुषु या कृपा तदायत्तमनसा । करालितो दग्धः । असौ पञ्चशरः । समस्तात्मना शर्वशरीरेण पूर्वं भौतिकं शरीरं दग्धम्, इदानीं तस्य लिङ्गशरीरमपि दह्यतामिति भावः । अत्र क्रोधस्यास्वाद्यमानत्वेऽपि प्राकरणिकतया प्रधानत्वेन

---

१. 'युक्तः' क-ख-ग.

अत्र श्रृङ्गारे कुपितो वक्ता ।

'मूर्धव्याधूयमानध्वनदमरधुनीलोलकल्लोलजालो-
द्धूताम्भःक्षोददम्भात्प्रसभमभिनभःक्षिप्तनक्षत्रलक्षम् ।
ऊर्ध्वन्यस्ताङ्घ्रिदण्डभ्रमिभररभसोद्यन्नभस्वत्प्रवेग-
भ्रान्तब्रह्माण्डखण्डं प्रवितरतु शिवं शांभवं ताण्डवं वः ॥'

अत्रोद्धतताण्डवं वाच्यम् । इमे पद्ये मम ।

रौद्रादिरसत्व एतद्धितयापेक्षयापि दुःश्रवत्वमत्यन्तं गुणः । यथा—

'उत्कृत्योत्कृत्य कृत्तिम्—' इत्यादि । ( १९० पृ. )

अत्र बीभत्सो रसः ।

**सुरतारम्भगोष्ठ्यादावश्लीलत्वं तथा पुनः ।**

तथा पुनरिति गुण एव । यथा—

'करिहस्तेन संबाधे प्रविश्यान्तर्विलोडिते ।
उपसर्पन्ध्वजः पुंसः साधनान्तर्विराजते ॥'

---

रतेरास्वाद्यमानत्वाच्छृङ्गारत्वमेव, न तु रौद्रत्वम् । अत एवाह—अत्र श्रृङ्गार इति ॥ वाच्यस्योद्भटत्वे दुःश्रवत्वं गुणमुदाहरति—**मूर्धेति** । मूर्ध्नि व्याधूयमाना कम्पमाना ध्वनन्ती शब्दायमाना या अमरधुनी गङ्गा तस्या लोलं चञ्चलं यत् कल्लोलजालं महातरङ्गसमूहस्तस्मादुद्धूता उत्क्षिप्ता ये अम्भःक्षोदा जलबिन्दवः तेषां दम्भाच्छलात् । अभिनभो नभसि क्षिप्तं नक्षत्रलक्षं तारासमूहो यत्र तत् । ऊर्ध्वं न्यस्तो योऽङ्घ्रिदण्डस्तस्य भ्रमिभरेण भ्रमणातिशयेन यो रभसो वेगस्तस्मादुद्यन् जायमानो यो नभस्वान् वायुस्तस्य प्रवेगेण भ्रान्तं कुलालचक्रवत् भ्रमिमापन्नं ब्रह्माण्डखण्डं यत्र तत् । अत्र ताण्डवस्य लोकसंहारकारित्वादुद्भटत्वम् ॥ **एतद्धितयापेक्षया** क्रुद्धवक्तृसममुद्धतवाच्यापेक्षया । रौद्रे दुःश्रवत्वं यथा मम—'क्षिप्तोऽप्रक्षत्रपक्षे मयि सति सुतरां क्षत्रडिम्भेन शंभोश्चापाचार्यस्य चण्डध्वनि धनुरधुना ध्वंसितं धिक् तितिक्षाम् । संघव्याकुण्ठधारं कठिनमतितरां तस्य कण्ठे कुठारं व्रीडापीडाम्बुराशेः परिभवसरितश्चाद्य पारं प्रपद्ये ॥' अत्र क्रोधस्यास्वाद्यमानतया भार्गवस्य वक्तुः क्रुद्धतया च सुतरां दुःश्रवत्वस्य गुणत्वम् । सर्वथा आस्वादरहिते काव्याभासे दुःश्रवत्वादीनां न दोषत्वम्, न वा गुणत्वम् । काव्यधर्माणां दोषगुणानां तत्राप्रवेशात् ॥ अश्लीलत्वस्य गुणत्वमाह—**सुरतेति** । सुरतस्यारम्भश्चेष्टा यस्यास्ताहशगोष्ठी आदिर्यस्य तत्र ॥ **करिहस्तेनेति** । साधनस्य सेनाया अन्तर्मध्ये प्रविश्योपसर्पन् गच्छन् पुंसो ध्वजः केतुर्विराजिते । कीदृशे । संबाधे नराश्वादिनैबिड्येन दुष्प्रवेशे । प्रवेशोपायमाह—**करिहस्तेनेति** । करिणां हस्तेन शुण्डया विलोडिते विस्फारिते । अत्र पुंलिङ्गस्य व्यञ्जनस्यापि प्रतीत्याश्लीलत्वम् । तथाहि—साधनस्य भगस्यान्तर्मध्ये प्रविश्य उपसर्पन् गतागतं कुर्वन् पुंसो ध्वजो मेहनं विराजते । कीदृशे । संबाधे संकुचिते तत्प्रवेशोपायमाह—**करीति** । करिहस्तेन कामशास्त्रोक्त-

अत्र हि सुरतारम्भगोष्ठ्याम् । 'ताम्बूलदानविधिना विसृजेद्वयस्यां व्यर्थैः पदैः पिशुनयेच्च रहस्यवस्तु' इति कामशास्त्रस्थितिः । आदिश-ब्दाच्छमकथाप्रभृतिषु बोद्धव्यम् ।

**स्यातामदोषौ श्लेषादौ निहतार्थाप्रयुक्तते ॥ १७ ॥**

यथा—

'पर्वतभेदि पवित्रं जैत्रं नरकस्य बहुमतं गहनम् ।
हरिमिव हरिमिव हरिमिव सुरसरिदम्भः पतन्नमत ॥'

अत्रेन्द्रपक्षे पवित्रशब्दो निहतार्थः । सिंहपक्षे मतङ्गशब्दो मातङ्गा-र्थेऽप्रयुक्तः ।

**गुणः स्यादप्रतीतत्वं ज्ञत्वं चेद्वक्तृवाच्ययोः ।**

---

कृत्रिमलिङ्गेन विलोडिते । तच्च संसक्ताग्रतर्जन्यनामिकापृष्ठारूढमध्यमारूपम् । तदु-क्तम्—'तर्जन्यनामिकायुक्ते मध्यमा पृष्ठतो यदि । करिहस्त इति प्रोक्तः कामशा-स्त्रविशारदैः ॥' इदं व्रीडाव्यञ्जकमश्लीलत्वम् । गुणत्वमुपपादयति—**अत्र हीति** । पिशुनयेत् सूचयेत् रहस्यं गोप्यम् । कामशास्त्रस्य स्थितिर्नियमः । रहस्यव्यञ्जनस्य सुरतोद्रेकानुकूलत्वाद्गुणत्वमिति भावः ॥ **शमकथाप्रभृतिष्विति** । प्रभृतिशब्दा-द्वैराग्योत्पादककथाग्रहणम् । तत्र यथा—'उत्तानोच्छूनमण्डूकपाटितोदरसन्निभे । क्लेदिनि स्त्रीव्रणे सक्तिरकृमेः कस्य जायते ॥' अत्र जुगुप्साश्लीलत्वस्य गुणत्वम् । प्रभृतिशब्दात् छद्मकथादीनां ग्रहणम् । छद्मकथा छलोक्तिः । अमङ्गलाश्लीलत्वस्य गुणत्वं छद्मकथायां यथा—'निर्वाणवैरदहनाः' इति । कुरूणाममङ्गलसूचनं नटस्य वचनमिदम् । अत्र प्रशमादयः शब्दा मरणरूपामङ्गलसूचका अपि छद्मोक्तौ गुणा एव ॥ **पर्वतेति** । हे जनाः, पृथिव्यां पतत्सुरसरिदम्भो गङ्गाजलं यूयं नमत । कीदृशम् । पर्वतभेदि हिमालयभेदकरम् । पवित्रं पावनम् । नरकस्य पारलौकि-कदुःखस्य जैत्रं विनाशकम् । बहुभिर्मतं पूजितम् । गहनं महावेगित्वात् दुरवगाहम् । हरिमिव विष्णुमिव । पर्वतभेदी गोवर्धनोद्धारी स चासौ पवि-त्रश्चेति तम् । नरकस्य नरकनाम्नोऽसुरस्य जैत्रं विनाशकं पराजयकरम् । गहनं दुर्बोधतत्त्वम् । हरिमिव इन्द्रमिव । पर्वतानां पक्षच्छेदकत्वात् पर्वतभेदी । पविं वज्रं त्रायते धारयति पवित्रः । स चासौ स चेति तम् । जैत्रं जय-शीलम् । नरकस्य मनुष्यस्य बहुमतं भृशं पूजितम् । गहनं दुर्जयम् । हरिमिव सिंहमिव । 'मृगाणां च मृगेन्द्रोऽहम्' इति स्मरणात् सिंहस्य वन्दनीयत्वम् । पर्व-तभेदी गिरिगह्वरमाश्रयत्वेन सोऽस्यास्तीति । पवित्रो देवरूपत्वात् । नरकस्य मनु-ष्यस्य जैत्रम् । बहून् मतङ्गान् हन्तीति तम् ॥ **ज्ञत्वं** संकेताभिज्ञत्वम् ॥

---

1. अप्रयुक्त इति । यथा वा मदीये दशकण्ठवधे—'वापीषु स्फुटितारविन्दनिचया, गजाङ्घ्रपानप्रियाः, क्रीडाशैलगुहासु मीननयना, वेशेषु वेशाङ्गनाः । उद्देशेषु सरोवरा द्रवबनीकुञ्जेषु शृङ्गारिणो रागं पल्लवयन्ति यत्र नितरां कान्तालिविभ्राजिताः ॥' अत्रा-लिपदं सख्यर्थेऽप्रयुक्तम् ॥

यथा—

'त्वामामनन्ति प्रकृतिं पुरुषार्थप्रवर्तिनीम् ।
त्वद्दर्शनमुदासीनं त्वामेव पुरुषं विदुः ॥'

**स्वयं वापि परामर्शे—**

अप्रतीतत्वं गुण इत्यनुषज्यते । यथा—

'युक्तः कलाभिस्तमसां विवृद्ध्यै क्षीणश्च ताभिः क्षतये य एषाम् ।
शुद्धं निरालम्बपदावलम्बं तमात्मचन्द्रं परिशीलयामि ॥'

**कथितं च पदं पुनः ॥ १८ ॥**

**विहितस्यानुवाद्यत्वे विषादे विस्मये क्रुधि ।**
**दैन्येऽथ लाटानुप्रासेऽनुकम्पायां प्रसादने ॥ १९ ॥**
**अर्थान्तरसंक्रमितवाच्ये हर्षेऽवधारणे ।**

गुण इत्येव । यथा—

'उदेति सविता ताम्रः—' इत्यादि । ( ४०८ पृ. )

अत्र विहितानुवादः ।

'हन्त हन्त गतः कान्तो वसन्ते सखि नागतः ॥'

अत्र विषादः ।

'चित्रं चित्रमनाकाशे कथं सुमुखि चन्द्रमाः ॥'

अत्र विस्मयः ।

'सुनयने नयने निधेहि' इति ॥

अत्र लाटानुप्रासः ।

---

**त्वामिति** । अत्र प्रकृतिपदं प्रधानवाचकं योगशास्त्र एव प्रयोगप्राचुर्येण प्रसिद्धम् । 'प्रधानं प्रकृतिः स्त्रियाम्' इति संकेताभिज्ञत्वे तु गुण एव । एवं पुरुषपदं परमात्मवाचकं योगशास्त्र एव प्रसिद्धम् । 'क्षेत्रज्ञ आत्मा पुरुषः' इति संकेताभिज्ञत्वे तु गुण एव । **युक्त इति** । कलाभिः पृथिव्यादितत्त्वैः । तमसामज्ञानानाम् । ताभिः कलाभिः । एषां तमसाम् । शुद्धं कामादिदोषरहितम् । निरालम्बपदं शिरःस्थाधोमुखकमलकर्णिकामध्यं तदवलम्बं तदाश्रयम् । चन्द्रपक्षे—कलाभिः षोडशभागैः क्षीणो हीनः । तमसां तिमिराणां विवृद्ध्यै यो भवति । यश्च ताभिर्युक्तः एषां तमसां क्षतये भवति । तं शुद्धं शुभ्रप्रकाशम् । निरालम्बपदमाकाशमवलम्बो यस्य तम् । अत्र कलानिरालम्बपदात्मपदानां तत्त्वादिवाचकत्वं योगशास्त्र एव प्रसिद्धम् । आत्ममात्रप्रतीतेरुद्देश्यत्वादस्य गुणवत्त्वम् ॥ **विहितस्येति** । उद्देश्यप्रतिनिर्देश्यस्थले

'नयने तस्यैव नयने च ॥'

इत्यादावर्थान्तरसंक्रमितवाच्यो ध्वनिः । एवमन्यत्रापि ।

**संदिग्धत्वं तथा व्याजस्तुतिपर्यवसायि चेत् ॥ २० ॥**

---

उक्तपदप्रयोगादर्थान्तरप्रतीत्यभावेन झटित्येव शाब्दबोधः, ततो रसादिधीरविलम्बेनैवेत्यत्र कथितपदत्वस्य गुणवत्त्वम् । विषाद इत्याद्युपलक्षणम् । यत्र यत्र द्विरुक्तं पदं लक्षणयार्थान्तरबोधकं तत्रापि कथितपदत्वं गुणः । अत एव वक्ष्यति— **एवमन्यत्रापीति** । तेन 'गृहे गृहे व्यग्रपुरन्ध्रिवर्गम्' इत्यत्र द्विरुक्तं गृहपदं सकले लाक्षणिकं पार्वत्यां सर्वजनानुरागं व्यञ्जयति । 'पीत्वा पीत्वा सुरभिमदिरामादरात्कान्तदत्तां कण्ठं यस्य प्रसितु रभसाद्बाहुपाशद्वयेन । वक्त्रं दन्तव्रणकिणकलङ्काकुलं कारयेन्दुं मत्तानां तु व्रजति गुणतां दातुरापत्प्रदत्वम् ॥' अत्र द्विरुक्तं पीत्वेति पदं पौनःपुन्यलक्षकमत्र रूढिरेव । 'रक्ष रक्ष रघुव्याघ्र भवन्नाथमनाथवत् । घोरदंष्ट्राकरालास्यं रक्षो भक्षति मामिदम् ॥' अत्र रक्षेति द्रुते लाक्षणिकं भयातिशयं व्यञ्जयति । 'याहि याहि सुमुखि प्रियधाम त्राहि कान्तमशरीरशराधेः । बन्धुरेव विपदः प्रतिकारे संदधाति सुतरामुपयोगम् ॥' अत्र याहि याहीति पदं द्रुते लाक्षणिकं त्वरातिशयं व्यञ्जयतीत्यादावपि कथितपदत्वं गुणः । पदानुप्रास एव लाटानुप्रासो वक्ष्यते । तस्य शब्दवैचित्र्यद्वारा रसाद्युपकारकत्वमिति गुणत्वमेव । अर्थान्तरसंक्रमितवाच्यो ध्वनिप्रभेदस्तत्रार्थविशेषव्यञ्जकत्वमिति गुणकत्वम् ॥ **हन्त हन्तेति** । अत्र द्विरुक्तं पदं वाच्यस्य विषादस्यातिशयं व्यञ्जयति ॥ एवं चित्रं चित्रमित्यत्र वाच्यस्य विस्मयातिशयम् । मुखवर्णनमिदम् ॥ क्रुधि यथा—'यातु यातु किमनेन तिष्ठता मुञ्च मुञ्च सखि सादरं वचः । पामरीवदनलोलुपो युवा नैष वेत्ति कुलजाधरासवम्[१] ॥' अत्र द्विरुक्तं पदं समभिव्याहृतपदार्थस्यायोगव्यवच्छेदं लक्षयति क्रोधातिशयं च व्यञ्जयति ॥ क्रोधेनोक्तावप्यर्थान्तराव्यञ्जकत्वात्कथितपदत्वं दोष एव । यथा—'तद्विच्छेदकृशस्य—' ( ४३० पृ. ) इत्यादौ मनःपदम् ॥ दैन्ये यथा—'देहि देहि नृपमेव तु चित्तम् ।' अत्र द्विरुक्तं पदं दानप्रयुक्तिपौनःपुन्यं लक्षयद्दैन्यातिशयं व्यञ्जयति ॥ अनुकम्पायां यथा—'दीन रे वसु गृहाण गृहाण ।' अत्र द्विरुक्तं पदं ग्रहणप्रयुक्तिपौनःपुन्यं लक्षयदनुकम्पातिशयं व्यञ्जयति ॥ प्रसादने यथा—'मुञ्च मुञ्च सखि नेत्रमुद्रणं नाक्षमा मयि पदानते क्षमा ।' **नयने इति** । अत्र द्वितीयनयनपदं भाग्यवत्त्वादिगुणविशिष्टनयनबोधकत्वाद्गुणः ॥ हर्षे यथा—'कथय कथय दूत क्वागतो रामभद्रः ।' यद्वा 'हन्त-हन्तागतः कान्तः श्रीमानथ मदाश्रयम् ।' अवधारणमयोगव्यवच्छेदोऽन्ययोगव्यवच्छेदश्च । तत्रायोगव्यवच्छेदे—'हन्ति हन्ति रिपुं वीरः ।' अन्ययोगव्यवच्छेदे यथा—'तद्वञ्चनाहितमतिर्बहुचाटुगर्भं कार्योन्मुखः खलु जनः कृतकं ब्रवीति । तत्साधवो ननु विदन्ति विदन्ति किंतु कर्तुं वृथा प्रणयमस्य न पारयन्ति ॥'

---

१. 'मुखासवम्' इति पुस्तकान्तरे.

गुण इत्येव । यथा—

'पृथुकार्तस्वरपात्रं भूषितनिःशेषपरिजनं देव ।
विलसत्करेणुगहनं संप्रति सममावयोः सदनम् ॥'

**वैयाकरणमुख्ये तु प्रतिपाद्येऽथ वक्तरि ।**
**कष्टत्वं दुःश्रवत्वं वा—**

गुण इत्येव । यथा—

'[1]दीधीवेवीट्[1]समः कश्चिद्गुणवृद्ध्योरभाजनम् ।
क्विप्प्रत्ययनिभः कश्चिद्यत्र संनिहिते न ते ॥'

अत्रार्थः कष्टः । वैयाकरणश्च वक्ता । एवमस्य प्रतिपाद्यत्वेऽपि ।

---

अत्र 'विदन्ति' इति द्वितीयं पदं साधव एव विदन्तीत्यन्ययोगव्यवच्छेदपरम् । अयोगव्यवच्छेदस्तु नञ्द्वयेनैव प्रतीयते ॥ **पृथुकार्तेति** । राज्ञि दरिद्रस्योक्तिरियम् । हे देव, संप्रत्यावयोः सदनं गृहं समम् । त्वत्तो धनलाभे तु मद्गृहमनेवंभावात्पश्चात्समं न भविष्यतीत्यर्थः । पृथूनि कार्तस्वरस्य सुवर्णस्य पात्राणि यत्र । भूषिताः रत्नाद्यलंकारमण्डिताः निःशेषपरिजना यत्र । विलसन्तीभिः करेणुभिर्गहनं दुर्गमं राजसदनमीदृशम् । दरिद्रसदनं तु—पृथुकानां शिशूनां क्षुधया आर्तस्वरस्य पात्रम् । भुवि उषिताः सुप्ताः निःशेषपरिजना यत्र । शयनास्तरणाभावात् । तथा बिले गर्ते कुत्सितसतां मूषिकपिपीलिकादीनां रेणुभिर्गहनं व्याप्तम् । कुत्सायां कः । अत्र विशेषणपदानां संदेहयोग्यत्वेऽपि व्याजस्तुतिपर्यवसानात् गुणवत्त्वम् ॥ **वैयाकरणमुख्ये** । वैयाकरणादौ । आदिपदाच्छुष्कतर्कादिपरिग्रहः ॥ वैयाकरणे वक्तरि कष्टत्वं गुणमुदाहरति–**दीधीवेवीडिति** । कश्चिज्जनो गुणवृद्ध्योः शौर्याभ्युदययोरभाजनमनाश्रयः । दीधीवेवीधातुभ्यामिडागमेन च समः । तेषां व्याकरणे गुणवृद्धिनिषेधात् । कश्चिज्जनः क्विप्प्रत्ययनिभो विनष्ट एव । अत्र ते गुणवृद्धी न संनिहिते न स्तः । अत्र दीधीवेवीटां गुणवृद्धिनिषेधानभिज्ञानां क्विप्प्रत्ययस्य सर्वलोपित्वानभिज्ञानां च झटिति प्रतीतिर्न भवतीत्यर्थस्य कष्टत्वम् । एतदेवाह—**अत्रेति** ॥ **एवमिति** । अस्य वैयाकरणस्य । यथा—'आत्मनेपदसंयोगियजिकर्ता गुरो भवान् ।' आत्मनः स्वर्गार्थं यागं करोषीत्यर्थः कष्टः ॥ वैयाकरणे

---

1. दीधीति । धातुपक्षे–'अदेङ् गुणः,' 'वृद्धिरादैच्' इति सूत्राभ्यां परिभाषिते गुणवृद्धी । तयोरभाजनम् । 'दीधीवेवीटाम्' इत्यनेन गुणवृद्धिनिषेधविधानात् । प्रत्ययपक्षे—क्विप्प्रत्ययः 'वेरपृक्तस्य' इत्यनेन लुप्यते । यस्मिन्संनिहिते पुरोवर्तिनि 'क्ङिति च' इति निषेधाद् गुणवृद्धी न स्याताम् ॥

---

१. 'देधीङ्वेवीङ्समः' क.

'अत्रासार्षमुपाध्यायं त्वामहं न कदाचन ॥'

अत्र दुःश्रवत्वम् । वैयाकरणो वाच्यः । एवमस्य वक्तृत्वेऽपि ।

**ग्राम्यत्वमधमोक्तिषु ॥ २१ ॥**

गुण इत्येव । यथा मम—

'एसो ससहरबिम्बो दीसइ हेअङ्गवीणपिण्डो व्व ।
एदे अस्ससमोहा पडन्ति आसासु दुद्धधार व्व ॥'

इयं विदूषकोक्तिः ।

**निर्हेतुता तु ख्यातोऽर्थे दोषतां नैव गच्छति ।**

यथा—

'संप्रति संध्यासमयश्चक्रद्वन्द्वानि विघटयति ।'

**कवीनां समये ख्याते गुणः ख्यातविरुद्धता ॥ २२ ॥**

---

वाच्ये दुःश्रवत्वं गुणमुदाहरति—**अत्रासार्षमिति** । 'अत्रातार्प्सम्' इति क्वचित् पाठः । **अस्य** वैयाकरणस्य दुःश्रवत्वं गुण इत्यनुषज्यते । यथा—'सोऽध्यैष्ट वेदां-स्त्रिदशानयष्ट' इति ॥ शुष्कतार्किकवक्तृत्वे कष्टत्वं गुणो यथा—'न्यायानुमानविगुणं कुयशस्ते महीपते । हेत्वाभासवदुद्भाव्यं विदुषो याति निग्रहम् ॥' अत्र पञ्चावयव-न्यायप्रयोगे दुष्टहेतुप्रयोगे वादिनिग्रहकर इत्यर्थः । एतदनभिज्ञानां कष्टः । एवम-न्यस्य बोध्यत्वे बोध्यम् । **अधमोक्तिषु** अविदग्धवाक्येषु ॥ **एसो ससेति** । 'एष शशधरबिम्बो दृश्यते हैयंगवीनपिण्ड इव । एते चांशुसमूहाः पतन्त्याशासु दुग्धधारा इव ॥' इति संस्कृतम् । अत्र दुग्धपदं ग्राम्यमपि वक्तुरधमत्वप्रतीतिकर-त्वाद्गुण एव ॥ 'मुग्धादुग्धधिया–' इत्यादावनुप्रासविशेषादौ ग्राम्यत्वस्यादो-षत्वं बोध्यम् ॥ **संप्रतीति** । संध्यायां चक्रवाकद्वन्द्वस्य विघटनं सुप्रसिद्धमिति

---

1. **अत्रासार्षमिति** । 'यदा त्वामहमद्राक्षं पदविद्याविशारदम् । उपाध्यायं तदा-सार्षं समस्राक्षं च संमदम् ॥' इति प्रकाशे ॥

2. **समय इति** । समयः संप्रदायः । स च त्रिविधः । तथा चोक्तम्—'असतोऽपि निबन्धेन सतामप्यनिबन्धनात् । नियमस्य पुरस्कारात्संप्रदायस्त्रिधा कवेः ॥' असतो निब-न्धनं यथा—'रत्नानि यत्र तत्रादौ हंसाद्यल्पजलाशये । जलेभाद्ये नभोनद्यामम्भोजाद्यं नदी-ष्वपि ॥ तिमिरस्य तथा मुष्टिग्राह्यत्वं सूचिभेद्यता । शुक्लत्वं कीर्तिपुण्यादौ कार्ष्ण्यं चाकी-र्त्यघादिषु ॥ प्रतापे रक्ततोष्णत्वे रक्तत्वं क्रोधरागयोः । ज्योत्स्नापानं चकोराणां शैवालं सर्ववारिषु ॥ केसराशोकयोः स्त्रीणां गण्डूषात्पादघाततः । मासान्तरेऽपि पुष्पाणि रोमा-लित्रिवलिः स्त्रियाम् ॥' सतामप्यनिबन्धनं यथा—'वसन्ते मालतीपुष्पं फलपुष्पे च चन्दने । कामिदन्तेषु कुन्दानां कुड्मलेषु च रक्तता । नारीणां श्यामता प्रातः स्तनयो-र्यच्च वा ह्रिये ॥' नियमाख्यानं यथा—'हिमवत्येव भूर्जत्वक् चन्दनं मलये परम् । हेमन्तशिशिरौ त्यक्त्वा सर्वदा कमलस्थितिः । सामान्यग्रहणे शौक्ल्यं पुष्पाम्भश्छत्रवा-

कविसमयख्यातानि च—

**मालिन्यं व्योम्नि पापे, यशसि धवलता वर्ण्यते हासकीर्त्यो**
**रक्तौ च क्रोधरागौ, सरिदुदधिगतं पङ्कजेन्दीवरादि ।**
**तोयाधारेऽखिलेऽपि प्रसरति च मरालादिकः पक्षिसङ्घो**
**ज्योत्स्ना पेया चकोरैर्जलधरसमये मानसं यान्ति हंसाः ॥२३॥**

---

न तत्र हेत्वपेक्षा ॥ **कवीनामिति** । समये सिद्धान्ते ॥ **मालिन्यमिति** । तेऽप्याकाशमषीश्यामम् । 'कलङ्कमालिन्यमिषेण चन्द्रमा दधात्यघं पान्थवधूवधोद्भवम् ।' दुर्यशसि च मालिन्यं ज्ञेयम् । यथा—'अमानि तत्तेन निजायशोयुगं द्विफालबद्धाश्चिकुराः शिरःस्थितम् ।' इति । एवमादीन्येषामुदाहरणानि बोध्यानि ।

---

ससाम् । ध्वजचामरहंसानां हारस्य बकभस्मनोः ॥ कृष्णत्वं शैलवृक्षादिमेघवारिधिवीरुधाम् । भिल्लानामसुराणां च धूपपङ्कशिरोरुहाम् ॥ लौहित्यं धातुमाणिक्यजपापल्लवविवस्वताम् । पद्मपल्लवबन्धूकदाडिमीकरजादिषु ॥ पीतत्वं शालिमण्डूकवल्कलेषु परागके । वर्षास्वेव शिखिप्रौढिर्मधावेव पिकध्वनिः ॥' अन्यच्च—'कमलासंपदोः कृष्णहरितोर्नागसर्पयोः । पीतलोहितयोः स्वर्णपरागाग्निशिखादिषु ॥ चन्द्रे शशैणयोः कामध्वजे मकरमत्स्ययोः । दानवासुरदैत्यानामैक्यमेवाभिसंहितम् ॥' अपि च—'चिरंतनस्यापि तथा शिवचन्द्रस्य बालता । मानवा मौलितो वर्ण्या देवाश्चरणतः पुनः ॥ भुवनानि निबध्नीयात्त्रीणि सप्त चतुर्दश । चतस्रोऽष्टौ दशदिशश्चतुरः सप्त चाम्बुधीन् ॥ अष्टादश स्मृता विद्याश्चतस्रश्च चतुर्दश । ये स्थले ते जले जीवा भिन्दन्त्यर्कं रणे मृताः ॥ महत्त्वमादौ सर्गान्ते सूक्ष्मता जगतामपि ॥ शैलादिर्भिद्यते शब्दान्नभः शतधनूपरि (?) ॥ नाम तत्तदुपाधौ स्याच्छंकरो वृषवाहनः । चिह्नत्वे च वृषाङ्कोऽयं ध्वजे सत्त्वाद्वृषध्वजः ॥ शूली न सर्पी गिरिशः शशी न हरिणी विधुः । इन्दुमौलिर्महादेवो गङ्गामौलिर्न तु क्वचित् ॥' अन्यच्च—'श्वेतानि चन्द्र–शक्राश्व–शंभु–भार्गव–नारदाः । हली शेषाहि–शक्रेभौ सिंहसौधशरद्घनाः ॥ सूर्येन्दुकान्त–निर्मोक–मन्दार–द्रु–हिमाद्रयः । हिमहासमृणालानि स्वर्गङ्गेभरदाभ्रकम् ॥ सिकतामृतलोध्राणि गुणकैरवशर्कराः । नीलानि कृष्ण–चन्द्राङ्क–व्यास–राम–धनंजयाः ॥ शनिर्द्रुपदजा काली राजपट्टविदूरजम् । विषाकाशकुहूशस्त्रागुरुपापतमोनिशाः ॥ रसावद्भुतशृङ्गारौ मदतापिच्छराहवः । सीरिचीरं यमो रक्षः कण्ठः खञ्जनकेकिनोः ॥ कृत्या छाया गजाङ्गारखलान्तःकरणादयः । शोणानि च्छत्रधर्मैश्च त्रेता रौद्ररसस्तथा ॥ चकोरकोकिलापारावतनेत्रं कपेर्मुखम् । तेजःसारसमस्तं च भौमकुङ्कुमतक्षकाः ॥ जिह्वेन्द्रगोपखद्योतविद्युत्कुञ्जरबिन्दवः । पीतानि दीपजीवेन्द्रगरुडेश्वरदृग्जटाः ॥ ब्रह्मावीररसस्वर्णकपिद्वापररोचनाः । किञ्जल्कचक्रवाक्याद्या हरितालमनःशिलाः ॥ धूसराणि रजो लूता करभो गृहगोधिका । कपोतमूषकौ दुर्गा काककण्ठखरादयः ॥' इदमुपलक्षणम् । 'हरिताः सूर्यतुरगा बुधो मरकतादयः ।' इत्यपि बोध्यम् । 'द्वैरूप्ये चाप्रसिद्धौ च नियमोऽयमुदाहृतः । अन्यद्वस्तु यथा यत्स्यात्तत्तथैवोपवर्ण्यते ॥' इति ॥

पादाघातादशोको विकसति बकुलो योषितामास्यमद्यै-
र्यूनामङ्गेषु हाराः, स्फुटति च हृदयं विप्रयोगस्य तापैः ।
मौर्वी रोलम्बमाला धनुरथ विशिखाः कौसुमाः पुष्पकेतो-
र्भिन्नं स्यादस्य बाणैर्युवजनहृदयं स्त्रीकटाक्षेण तद्वत् ॥ २४ ॥
अह्न्यम्भोजं, निशायां विकसति कुमुदं, चन्द्रिका शुक्लपक्षे
मेघध्वानेषु नृत्यं भवति च शिखिनां नाप्यशोके फलं स्यात् ।
न स्याज्जाती वसन्ते, न च कुसुमफले गन्धसारद्रुमाणा-
मित्याद्युन्नेयमन्यत्कविसमयगतं सत्कवीनां प्रबन्धे ॥ २५ ॥

एषामुदाहरणान्याकरेषु स्पष्टानि ।

धनुर्ज्यादिषु शब्देषु शब्दास्तु धनुरादयः ।
आरूढत्वादिबोधाय—

यथा—

'पूरिते रोदसी ध्वानैर्धनुर्ज्यास्फालनोद्भवैः ॥'

अत्र ज्याशब्देनापि गतार्थत्वे धनुःशब्देन ज्याया धनुष्यायत्तीकरणं बोध्यते । आदिशब्दात्—

'भाति कर्णावतंसस्ते ॥' अत्र कर्णस्थितत्वबोधनाय कर्णशब्दः । एवं श्रवणकुण्डलशिरःशेखरप्रभृतिः ।

---

यशःकीर्त्योर्भेदः 'खड्गादिप्रभवा कीर्तिर्विद्यादिप्रभवं यशः ।' इति केषांचिद्दर्शनादुपपत्तेः ॥ पादाघातादिति । योषितामित्यनेन संबन्धः । 'पादेन नापैक्षत सुन्दरीणाम्' इत्यादिदर्शनात् । स्फुटति विदीर्णं भवति । रोलम्बमाला भ्रमरश्रेणी । 'अलिपङ्क्तिरनेकशस्त्वया गुणकृत्ये धनुषो नियोजिता' इत्यादिदर्शनात् । धनुरथेत्यथशब्दश्चार्थः । तेन पुष्पकेतोः कामस्य धनुः कौसुमं विशिखाश्च कौसुमा इत्यर्थः । अस्य पुष्पकेतोः ॥ अह्न्यम्भोजमिति । दिनादौ पद्माद्यसत्त्वेऽपि तत्र तत्प्रकाशो वर्णनीयः । चन्द्रिकेति । यत्र रात्रिभागे चन्द्रिका नास्ति तत्रापि वर्णनीयेति भावः । गन्धसारद्रुमाणां चन्दनवृक्षाणाम् । इत्यादीति । तेन सौधादेर्मेघाद्युपरिपर्यन्तगामित्वमत्युच्चत्वव्यञ्जनाय वर्ण्यते ॥ पुनरुक्तस्य गुणत्वमाह—धनुरिति । ज्याशब्देनैव धनुर्गुणबोधाद्धनुःशब्दो निरर्थकोऽपि आरूढत्वबोध-

---

1. भातीति । 'अस्याः कर्णावतंसेन जितं सर्वं विभूषणम् । तथैव शोभतेऽत्यर्थमस्याः श्रवणकुण्डलम् ॥ अपूर्वमधुरामोदप्रमोदितदिशस्ततः । आययुर्भृङ्गमुखराः शिरःशेखरशालिनः ॥' इति प्रकाशे ॥

एवं निरुपपदो मालाशब्दः पुष्पस्रजमेवाभिधत्त इति स्थितावपि 'पुष्पमालाविभाति ते ॥' अत्र पुष्पशब्द उत्कृष्टपुष्पवृद्ध्यै । एवं मुक्ताहार इत्यत्र मुक्ताशब्देनान्यरत्नामिश्रितत्वम् ।

प्रयोक्तव्याः स्थिता अमी ॥

धनुर्ज्यादयः सत्काव्यस्थिता एव निबद्धव्याः, न त्वस्थिता जघनकाञ्चीकरकङ्कणादयः ।

**उक्तावानन्दमग्नादेः स्यान्न्यूनपदता गुणः ।**

यथा—

'गाढालिङ्गनवामनीकृतकुचप्रोद्भिन्नरोमोद्गमा
सान्द्रस्नेहरसातिरेकविगलच्छ्रीमन्नितम्बाम्बरा ।
मा मा मानद माति मामलमिति क्षामाक्षरोल्लापिनी
सुप्ता किं नु मृता नु किं मनसि मे लीना विलीना नु किम् ॥'

अत्र पीडयेति न्यूनम् ।

**क्वचिन्न दोषो न गुणः—**

न्यूनपदत्वमित्येव । यथा—

'तिष्ठेत्कोपवशात्प्रभावपिहिता दीर्घं न सा कुप्यति
स्वर्गायोत्पतिता भवेन्मयि पुनर्भावार्द्रमस्या मनः ।

---

नाद्गुणः । शेखरपदं शिरोभूषणं किरीटं वक्ति ॥ **काव्यस्थिता** महाकविप्रयोगेषु स्थिताः ॥ **जघनेति** । निबद्धव्या इति शेषः ॥ **आनन्दमग्नादे**रित्यादिना दुःखमग्नादेर्ग्रहणम् ॥ **गाढेति** । सख्यो रात्रिवृत्तान्तकथनमिदम् । गाढालिङ्गनेन वामनीकृतकुचा चासौ प्रोद्भिन्नरोमोद्गमा चेति समासः । गाढालिङ्गनवामनीकृतकुचयोः प्रोद्भिन्नो रोमोद्गमो यस्या इति समासो न युक्तः । कुचे रोमोद्गमस्यासंभवात् । सान्द्रस्नेहरसातिरेकेण विगलत् श्रीमतो नितम्बादम्बरं यस्याः सा । हे मानद, मा मां मा पीडय मां मातिपीडय अलं बहुव्यापारेणेति क्षामस्याल्पस्याक्षरस्योल्लापिनी । पीडयेत्यादेरनुक्तत्वादल्पत्वमक्षरस्य । मानदस्य पीडाकरत्वमनुपपन्नमित्यवगमाय तत्पदेन संबोधनम् । एते तावन्निषेधाभासा विधिषु पर्यवसन्नाः । निष्पन्दत्वेन किं सुप्तेति वितर्कचतुष्टयम् । सुप्ता निद्रायिता, अतिनिष्पन्दत्वेन मृतेति, अत्यन्तत्वे लयः, अबहिर्भावे विशेषलयश्च बोध्यः । अत्र पीडयेत्यादियोग्यस्य पदस्य न्यूनता हर्षगलद्विसंमोहप्रकर्षबोधनद्वारा रसं पुष्णातीति गुणवत्त्वम् ॥ **तिष्ठेदिति** । पुरूरवस उक्तिरियम् । सा उर्वशी प्रभावेण पिहिता सती तिष्ठेत् । अथवा प्रभौ मयि कोपवशादपिहिता तिष्ठेत् । नैतत् । यतो दीर्घं न कुप्यति । उत्पतिता उद्गता मयि

तां हर्तुं विबुधद्विषोऽपि न च मे शक्ताः पुरोवर्तिनीं
सा चात्यन्तमगोचरं नयनयोर्जातेति कोऽयं विधिः ॥'

अत्र प्रभावपिहितेति भवेदिति चेत्यनन्तरं 'नैतद्यतः' इति पदानि न्यूनानि । एषां पदानां न्यूनतायामप्येतद्वाक्यव्यङ्ग्यस्य वितर्काख्यव्यभिचारिभावस्योत्कर्षाकरणान्न गुणः । दीर्घं न सेत्यादिवाक्यजन्यया च प्रतिपत्त्या तिष्ठेदित्यादिवाक्यप्रतिपत्तेर्बोधः स्फुटमेवावभासत इति न दोषः ।

**गुणः क्वाप्यधिकं पदम् ॥ २७ ॥**

यथा—

'आचरति दुर्जनो यत्सहसा मनसोऽप्यगोचरानर्थान् ।
तन्न न जाने जाने स्पृशति मनः किं तु नैव निष्ठुरताम् ॥'

अत्र न न जान इत्ययोगव्यवच्छेदे द्वितीयजान इत्यनेन नाहमेव जाने इत्यन्ययोगव्यवच्छेदाद्विच्छित्तिविशेषः ।

**समाप्तपुनरात्तत्वं न दोषो न गुणः क्वचित् ।**

यथा—'अन्यास्ता गुणरत्न–' इत्यादि ( ४०२ पृ. ) ।

अत्र प्रथमार्धेन वाक्यसमाप्तावपि द्वितीयार्धवाक्यं पुनरुपात्तम् ।

---

भावार्द्रं मद्गोचरप्रेमस्तिमितम् । अस्या उर्वश्याः । विबुधद्विषोऽसुराः । इत्थमदृश्यत्वे हेतुर्नास्त्येव किमदृश्येति विस्मयादाह—**सा चेति** । अगोचरमगोचरत्वम् । विधिर्नियतिः प्रकारो वा ॥ अगुणत्वमदोषत्वं चोपपादयति—**एषामिति** ॥ **वाक्यप्रतिपत्तेर्वा**क्यजन्यबोधस्य ॥ ननु द्वितीयजाने इत्यनेनायोगव्यवच्छेद एव प्रतीयते इत्यत आह—**अत्रेति** । इत्यनेन इत्यनेनैवेत्यर्थः । गुणत्वमुपपादयति—**द्वितीय इति** । विच्छित्तिविशेषोऽर्थवैचित्र्यविशेषः प्रतीयत इति । गुणत्वमिति शेषः । अत्र कथितपदलस्यावधारणबोधकत्वाद् 'यद्वञ्चनेन–' इत्यादिप्राक्प्रदर्शितवद् गुणत्वमस्ति । अस्य शुद्धोदाहरणं तु—'याहि माधव याहि केशव मा वद कैतववादम् । तामनुसर सरसीरुहलोचन या तव हरति विषादम् ॥' अत्र माधवकेशवसरसीरुहलोचनपदानामन्यतमेनैवान्वयोपपत्तौ सर्वेषामुपादानमर्थान्तरबोधकत्वाद् गुण एव । तथाहि—माधवपदेन लक्ष्मीपतित्वेऽपि तव वैदग्ध्यं नास्तीति, केशवपदेन वीरत्वेऽपि तव रतिसामर्थ्यं नास्तीति, सरसीरुहलोचनपदेन विलक्षणचक्षुःसत्त्वेऽपि मम रूपलावण्यातिशयं न पश्यसीति व्यज्यते । यथा वा—'कुर्यां हरस्यापि पिनाकपाणेर्धैर्यच्युतिं के मम धन्विनोऽन्ये ॥' अत्र पिनाकपाणेरपीत्यनेनैव प्रकृतान्वयोपपत्तौ हरस्येत्यधिकमपि

एवं च विशेषणमात्रस्य पुनरुपादाने समाप्तपुनरात्तत्वं न वाक्यान्तरस्येति विज्ञेयम् ।

**गर्भितत्वं गुणः क्वापि—**

यथा—

'दिङ्मातङ्गघटाविभक्तचतुराघाटा मही साध्यते
सिद्धा सापि वदन्त एव हि वयं रोमाञ्चिताः पश्यत ।
विप्राय प्रतिपाद्यते किमपरं रामाय तस्मै नमो
यस्मात्प्रादुरभूत्कथाद्भुतमिदं यत्रैव चास्तं गतम् ॥'

अत्र वदन्त एवेत्यादि वाक्यं वाक्यान्तरप्रवेशात् चमत्कारातिशयं पुष्णाति ।

**पतत्प्रकर्षता तथा ॥ २८ ॥**

तथेति क्वचित् गुणः । यथा—'चञ्चद्भुज—'इत्यादि ( ३०२ पृ. ) ।

अत्र चतुर्थपादे सुकुमारार्थतया शब्दाडम्बरत्यागो गुणः ।

**क्वचिदुक्तौ स्वशब्देन न दोषो व्यभिचारिणः ।**
**अनुभावविभावाभ्यां रचना यत्र नोचिता ॥ २९ ॥**

---

हरस्यैव पिनाकसंबन्धेन दुर्जयत्वमिति व्यञ्जकत्वाद् गुणत्वम् । 'नायं भिक्षुर्वैरयुवतिमानो तितिक्षुर्धनुष्मान्राज्ञः पुत्रो नहि नहि जटाजूटभारं दधानः । नायं व्याधो नवगुणधरः पश्य कस्मादकस्मात्पुण्येऽरण्ये नवजलधरश्यामलः कोऽयमेति ॥' अत्र द्वितीयस्य नहीति निपातसमुदायस्य वाचकत्वाभावेन कथितपदस्य न विषयः, किं त्वधिकोऽपि राजपुत्रस्य जटाधारणमत्यन्तासंभवीति व्यञ्जकत्वाद् गुण एव ॥ **न वाक्यान्तरस्येति** । पुनरुपादाने समाप्तपुनरात्तत्वं न दोष इत्यर्थः । **दिङ्मातङ्गेति** । दिङ्मातङ्गसमूहेन विभक्ताः परिच्छिन्नाश्चत्वार आघाटाः सीमा यस्याः सा । साध्यते स्ववशीक्रियते । सिद्धा साधितापि सा मही । विप्राय प्रतिपाद्यत इत्युत्तरेणान्वयः । किमपरमिति वाच्यमिति शेषः । कथैवाद्भुतमाश्चर्यम् । **यत्रैवेति** । तथा च तत्तुल्यो न भूतो न वर्तमानो न भविष्यन्निति भावः ॥ **चमत्कारातिशयमिति** । तेन युद्धवीरदानवीरयोः परिपोषः ॥ **क्वचिदिति** । यत्र पद्यांशे सुकुमारार्थत्वं तत्रेत्यर्थः ॥ इदानीं रसदोषाणां विषयविशेषे यथायथमदोषत्वं गुणत्वं चाह—**क्वचिदिति** । रचना व्यञ्जनम् । विभावा-

यत्रानुभावविभावमुखेन प्रतिपादने विशदप्रतीतिर्नास्ति, यत्र च विभावानुभावकृतपुष्टिराहित्यमेवानुगुणं तत्र व्यभिचारिणः स्वशब्देनोक्तौ न दोषः। यथा—

'औत्सुक्येन कृतत्वरा सहभुवा व्यावर्तमाना ह्रिया
तैस्तैर्बन्धुवधूजनस्य वचनैर्नीताभिमुख्यं पुनः।
दृष्ट्वाग्रे वरमात्तसाध्वसरसा गौरी नवे संगमे
संरोहत्पुलका हरेण हसता श्लिष्टा शिवायास्तु वः॥'

अत्रौत्सुक्यस्य त्वरारूपानुभावमुखेन प्रतिपादने 'संगमे[1] न झटिति प्रतीतिः। त्वराया भयादिनापि 'संभवात्[2]। ह्रियोऽनुभावस्य च व्यावर्तमानस्य कोपादिनापि संभवात्। साध्वसहासयोस्तु विभावादिपरिपोषस्य प्रकृतरसप्रतिकूलप्रायत्वादित्येषां स्वशब्दाभिधानमेव न्याय्यम्।

**संचार्यादेर्विरुद्धस्य बाध्यत्वेन वचो गुणः।**

यथा—'क्वाकार्यं शशलक्ष्मणः क्व च कुलं—' इत्यादि (२०४ पृ.)

अत्र प्रशमाङ्गानां वितर्कमतिशङ्काधृतीनामभिलाषाङ्गौत्सुक्यस्मृतिदैन्यचिन्ताभिस्तिरस्कारः पर्यन्ते चिन्ताप्रधानमास्वादप्रकर्षमाविर्भावयति।

---

विकृतरचनानौचित्यम्। विकल्पयति—**यत्रेति**॥ **औत्सुक्येनेति**। नवे संगमे प्रथमदिवससमागमे हसता हरेण श्लिष्टा गौरी युष्माकं शिवायास्तु। कीदृशी। तद्गृहगमने प्रथमौत्सुक्येन कृतत्वरा, ततश्च सहभुवा सहजया ह्रिया लज्जया व्यावर्तमाना, ततश्च तैस्तैरित्यादि। ततश्चाग्रे वरं स्वामिनं दृष्ट्वा आत्तेत्यादि। साध्वसस्य विभावादिभिः परिपोषे सति रसत्वप्राप्त्या शृङ्गारविरोधित्वं स्यात्। हासस्य तथात्वे प्रधानत्वेन प्रतिपत्तिः स्यात्, न शृङ्गारत्वेनेति भावः॥ परिपन्थिरसविभावादिसंग्रहस्य गुणत्वमाह—**संचार्यादेरिति**। व्यभिचारिभावादेरित्यर्थः। आदिना विभावानुभावग्रहणम्। विरुद्धस्य प्रतिकूलरसाङ्गस्य बाध्यत्वेन प्रतिरुद्धस्वजन्यरसपरिपुष्टिकत्वेन वचोज्ञापनम्॥ **क्वाकार्यमिति**। भावशबलत्वोदाहरणमिदम्॥ गुणत्वमुपपादयति—**अत्रेति**। प्रशमाङ्गानां शान्तरसानुकूलानाम्। अभिलाषाङ्गैः शृङ्गाररसानुकूलैः। तिरस्कारः स्वजन्यरसपरिपोषस्थगनम्। ननु वितर्कादीनामिव औत्सुक्यादीनामपि बाध्यत्वमस्तीति कथं विप्रलम्भस्य परिपुष्टिरित्यत आह—**पर्यन्त इति**। चिन्तायाम्। विश्रान्तौ सत्यामित्यर्थः। चिन्ताप्रधानमबाधितत्वेन मुख्यं कारणं यस्य तादृशमास्वादप्रकर्षं विप्रलम्भशृङ्गारपरिपोषम्। आविर्भाव-

---

१. 'संगमे' घ-पुस्तके नास्ति. २. 'संभवः' घ.

**विरोधिनोऽपि स्मरणे साम्येन वचनेऽपि वा ॥ ३० ॥**
**भवेद्विरोधो नान्योन्यमङ्गिन्यङ्गत्वमाप्तयोः ।**

क्रमेण यथा—'अयं स रसनोत्कर्षी—' इत्यादि (२३९ पृ.)। अत्रालम्बनविच्छेदे[1] रतेरसात्मतया स्मर्यमाणानां तदङ्गानां शोकोद्दीपकतया करुणानुकूलता ।

'सरागया स्रुतघनघर्मतोयया
करहतिध्वनितपृथूरुपीठया ।
मुहुर्मुहुर्दशनविलङ्घितोष्ठया
रुषा नृपाः प्रियतमयेव भेजिरे ॥'

अत्र संभोगशृङ्गारो वर्णनीयवीरव्यभिचारिणः क्रोधस्यानुभावसाम्येन विवक्षितः ।

---

यति करोतीति । तज्ज्ञापनं गुण इति शेषः ॥ विरुद्धरसयोः संपर्को दोष एव । तदुक्तम्—'प्रत्यनीकौ रसौ द्वौ द्वौ तत्संपर्कं विवर्जयेत्' इति । तयोर्विषयविशेषे समावेशमाह—**विरोधिनोऽपीति** । स्मरणे पूर्वानुभूतस्यातीतस्य व्यञ्जनया ज्ञाने । वचने ज्ञापने । अङ्गिनि मुख्यविशेष्ये । एतच्चाङ्गिनीत्युपादानाल्लभ्यते । अन्यथा 'अङ्गत्वमाप्तयोः' इत्यनेनैवाङ्गलाभे तदुपादानमनर्थकं स्यात् । द्विवचनं बहूनामुपलक्षणम् ॥ **अयमिति** । व्याख्यातमिदं गुणीभूतव्यङ्ग्योदाहरणे । अत्र विरुद्धस्यापि शृङ्गारस्य स्मर्यमाणतया करुणेन संपर्को न दोषः ॥ ननु तदानीमपि रतिरस्ति तस्या रसत्वप्राप्तिरविहतैवेति कथं शृङ्गारस्य स्मर्यमाणत्वमत आह—**अत्रेति** । आलम्बनस्य नायकस्य विच्छेदे मरणे अरसात्मतया तदानींतनानुभावाद्यभावेन रसरूपतानापन्नतया स्मर्यमाणानामिति । एतेन शृङ्गारस्यापि स्मरणं दर्शितम् । **तदङ्गानां** रत्यङ्गानाम् । मृतस्योपकारस्मरणं बन्धूनामत्यन्तशोकजनकमिति भावः । साम्येनोक्तौ विरुद्धयोः समावेशमुदाहरति—**सरागयेति** । मुखलौहित्यजनकत्वेन 'रक्तौ च क्रोधरागौ' इति दर्शनाद्वा रुषः सरागत्वोपपत्तिः पक्षे—सानुरागया । कराघातेन ध्वनितं पृथूरुपीठं यत्र क्रोधे सति वीरैरूरुः पीठं वा आहन्यते । पक्षे—कराघातेन ध्वनितं पृथूरुरेव पीठं यया । अतिप्रौढकामाभिर्नायिकाभिः करेणोरुराहन्यत इति कामशास्त्रप्रसिद्धम् । दशनैर्विलङ्घितो निपीडित ओष्ठो यत्र । पक्षे—कान्तदशनेन निपीडित ओष्ठो यस्याः । अत्र शृङ्गारवीरयोः समावेशः । उक्तानुभावानामन्यत्रापि संभवाज्झटिति रुषः प्रतीतिर्न भवतीति तस्याः स्वशब्देनोपादानं न दोषः । प्रकरणादुत्साहस्याबाध्यमानत्वेन वीरत्वं

---

1. '-विच्छेदेन' क-ख-ग.

'एकं ध्याननिमीलनान्मुकुलितप्रायं द्वितीयं पुनः
पार्वत्या वदनाम्बुजस्तनभरे संभोगभावालसम् ।
अन्यद्दूरविकृष्टचापमदनक्रोधानलोद्दीपितं
शंभोर्भिन्नरसं समाधिसमये नेत्रत्रयं पातु वः ॥'

अत्र शान्तश्रृङ्गाररौद्ररसपरिपुष्टा भगवद्विषया रतिः । यथा वा—

'क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोंऽशुकान्तं
गृह्णन्केशेष्वपास्तश्चरणनिपतितो नेक्षितः संभ्रमेण ।
आलिङ्गन्योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः
कामीवार्द्रापराधः स दहतु दुरितं शांभवो वः शराग्निः ॥'

अत्र कविगता भगवद्विषया रतिः प्रधानम् । तस्याः परिपोषकतया भगवतस्त्रिपुरध्वंसं प्रत्युत्साहस्यापरिपुष्टतया रसपदवीमप्राप्ततया भावमात्रस्य करुणोऽङ्गम् । तस्य च कामीवेति साम्यबलादायातः श्रृङ्गारः ।

---

स्थायिनः ॥ क्रोधस्य स्वशब्देनोपादानात्ख्याद्याभावेन न रौद्रत्वमिति भावः ॥ एकस्मिन्नङ्गत्वमाप्तानां रसानां समावेशमुदाहरति—**एकमिति** । नेत्रमित्यर्थः । मुकुलितप्रायं मुद्रितपद्माकारम् । वदनाम्बुजे संभोगश्चुम्बनम्, स्तनभरे संभोग आलिङ्गनादिः, तस्य भावेन अभिप्रायेण अलसं निष्पन्दम् । अन्यल्ललाटनेत्रम् । दूरमत्यन्तं विकृष्टश्चापो येन । यद्वा दूरे विकृष्टश्चापो येन । तस्मिन्मदने यः क्रोधः स एवानलः तेनोद्दीपितमुज्ज्वलितं भिन्नरसम् । विरुद्धबहुरसव्यञ्जकम् । श्रृङ्गारिणोऽपि न समाधिभङ्ग इति श्रृङ्गारस्य परम्परया क्रोधस्य समाधिविघ्ननिवारकत्वेन तत्परिणामिनो रौद्रस्य साक्षादेव देवविषयकरतिपोषकत्वम् ॥ परम्परयाप्यङ्गत्वमाप्तयो रसयोः समावेशमुदाहरति—**क्षिप्त इति** । त्रिपुरदाहे स प्रसिद्धः शंभुसंबन्धी शराग्निः वो युष्माकं दुरितं दहतु । कीदृशः । आसन्नापराधः कामीव साश्रुनेत्रोत्पलाभिः युवतिभिर्हस्तावलग्नः सन् क्षिप्तः । शोकात् क्रोधाच्च तासामस्तु । एवमुत्तरोत्तरक्रियास्वपि कामीति दृष्टान्तः । अंशुकस्यान्तमाददानोऽपि प्रसभं सहसा अभिहतः । केशेषु गृह्णन् अपास्तः । चुम्बनार्थं कामिनः केशग्रहणम् । ससंभ्रमेण भयजन्यत्वरया ईक्षणाभावः । पक्षे—आदरजन्यत्वरया नेक्षितः, किंत्वनादरेणेक्षितः ॥ अङ्गाङ्गिभावमुपपादयति—**अत्रेति** । **प्रधानमिति** । निराकाङ्क्षवाक्यप्रतिपाद्यत्वादिति भावः । तस्या भगवद्विषयरतेः । **परिपोषकतयेति** । 'अङ्गस्य' इति शेषः । **अपरिपुष्टतयेति** । विभावानुभावयोरनुपादानादिति भावः । **रसपदवीं** रसत्वम् । **भावमात्रस्य** उद्बुद्धमात्रस्थायी चेति भावलक्षणाक्रान्तस्य । **करुणोऽङ्गमिति** । दुष्टनिग्रहं प्रति भगवदुत्साहस्यानुभावेन करुणस्थायिभावेन स्त्रीणां शोकेन व्यञ्जनमिति करुणस्याङ्गत्वम् । **कामीवेति** । प्राग्यथा कामुक आचरति स्म तथाद्य शराग्निरिति **साम्यबलात्**सादृश्यानुभवादायातः स्मृतिविषयतां प्राप्तः । **श्रृङ्गार** ईर्ष्यामानाख्यविप्रलम्भः अङ्गमित्यनुषङ्गेणा-

एवं चाविश्रान्तिधामतया करुणस्याप्यङ्गतैवेति द्वयोरपि करुणशृङ्गारयोर्भगवदुत्साहपरिपुष्टतद्विषयरतिभावास्वादप्रकर्षकतया यौगपद्यसद्भावादङ्गत्वेन न विरोधः ।

ननु समूहालम्बनात्मकपूर्णघनानन्दरूपस्य रसस्य तादृशेनेतररसेन कथं विरोधः संभावनीयः । एकवाक्ये निवेशप्रादुर्भावैर्यौगपद्यविर-

---

न्वयः । स्मर्यमाणपूर्वावस्थाया रतेः । करुणस्थायिभावः स्त्रीशोकोद्दीपकतयाङ्गत्वमिति भावः । नन्वत्र स्त्रीशोकस्य वाच्येनानुभावेनाश्रुणा व्यङ्ग्येनोद्दीपनविभावेन झटित्याक्षेपलभ्येन म्रियमाणपत्न्यालम्बनविभावेन परिपुष्टिरिति करुणस्य प्रधानत्वमेव कथमङ्गत्वमत आह—**एवं चेति** । अविश्रान्तिधामतया साकाङ्क्षवाक्यव्यङ्ग्यतया । एवं पदैः सकलपदार्थोपस्थितौ खलेकपोतन्यायेन विशेष्यविशेषणं तत्रापि विशेषणान्तरमिति रीत्या शाब्दबोधे सति व्यङ्ग्यबोधेऽपीयं रीतिरिति भावः । भगवदुत्साहस्तत्र करुणस्तत्रापि शृङ्गारो व्यञ्जनया एकदेवाङ्गितयावगम्यत इत्युक्त्या अवान्तरवाक्यार्थबोधक्रमेण शाब्दबोधपक्षे व्यङ्ग्यार्थबोधस्यापि तद्रीतित्वेन विशिष्टवैशिष्ट्यमिति रीत्या शृङ्गारविशिष्टकरुणबोधे सति करुणविशिष्टभगवदुत्साहबोधः तदनन्तरं भगवदुत्साहविशिष्टभावबोधः क्रमाज्जायत इति मतेन परम्परया प्रधानोपकारमुपपादयति—**द्वयोरपीति** । करुणशृङ्गारयोरिति । अपरिपुष्टतयेति प्रधानस्य भूयस्युपकारे वर्तेत इति प्रथममते स्वपरिपोषकं परिपोषणमात्रं प्रधानस्योपकारः । द्वितीये तु निरुक्तक्रमेण आस्वादातिशयजननमपीति विशेषः । स्थायिभावानामङ्गाङ्गिभावेनैव रसानामङ्गाङ्गिभाव इति काव्यप्रकाशकारः । यद्वा यासां पूर्वं प्राणेश्वरा हस्तधारणादिना प्रसादनपरा आसंस्तासामेवेदानीं शंभुशरस्तत्कर्मणैव तादृशीं दुर्दशां जनयतीति शृङ्गारेण परिपोषितः कविकरुण एव स्वजन्यभगवद्दुष्टनिग्रहोत्साहोद्बोधेन कविगतां भगवद्विषयां रतिं जनयित्वा तामेव सामाजिकानामास्वादकन्दतामुपनयतीति रसयोरेवाङ्गत्वम् ॥ एतन्मते प्रद्वेषमाह—**नन्विति** । **समूहालम्बनात्मकेति** । विभावादिपदार्थसमूहविषयकज्ञानरूपेत्यर्थः । **पूर्णः** समधिकः । **घनः** सुखान्तरतिरोधायकः । [1]अपेरङ्गत्वेनापीत्यग्रेणान्वयेन मतवैलक्षण्यावगमः । **आस्वादप्रकर्षकतयेति** । 'गुणः कृतात्मसंस्कारः प्रधानं प्रतिपद्यते । उपकारे प्रधानस्य तथा भूयसि वर्तते ॥' इति न्यायेनेति भावः । अस्यार्थः —गुणो विशेषणं कृतात्मसंस्कारः स्वविशेषणेन कृतोपकारः प्रधानं पार्यन्तिकविशेष्यं प्रतिपद्यते अन्वेति । तादृशः सन्नेव हि तिरोधायको य आनन्दस्तत्स्वरूपस्येत्यर्थः । एतादृशेन समूहालम्बनात्मकपूर्णघनानन्दरूपेण । **एकवाक्येति** । एकस्मिन्वाक्ये यो निवेशो व्यञ्जकतासंबन्धेन वृत्तिः स च प्रादुर्भावयौगपद्यं च

---

1. **समूहेति**। नानाप्रकारतानिरूपितनानामुख्यविशेष्यताशालिज्ञानं समूहालम्बनम् ।

---

१. 'अपेः' इत्यादिः 'सन्नेव हि' इत्यन्तः पाठः—पुस्तकान्तरे नोपलभ्यते.

हेण परस्परोपमर्दकत्वानुपपत्तेः । नाप्यङ्गाङ्गिभावः द्वयोरपि पूर्णतया स्वातन्त्र्येण विश्रान्तेः । सत्यमुक्तम् । अत एवात्र प्रधानेतरेषु रसेषु स्वातन्त्र्यविश्रमराहित्यात्पूर्णरसभावमात्राच्च विलक्षणतया संचारिरस-नाम्ना व्यपदेशः प्राच्यानाम् । अस्मत्पितामहानुजकविपण्डितमुख्यश्री-चण्डीदासपादानां तु खण्डरसनाम्ना । यदाहुः—

'अङ्गं बाध्योऽथ संसर्गी यद्यङ्गी स्याद्रसान्तरे ।
नास्वाद्यते समग्रं तत्ततः खण्डरसः स्मृतः ॥' इति ।

ननु 'आद्यः करुणवीभत्सरौद्रवीरभयानकैः' इत्युक्तनयेन विरोधि-नोर्वीरशृङ्गारयोः कथमेकत्र

'कपोले जानक्याः करिकलभदन्तद्युतिमुषि
स्मरस्मेरस्फारोड्डमरपुलकं वक्त्रकमलम् ।
मुहुः पश्यञ्शृण्वन्रजनिचरसेनाकलकलं
जटाजूटग्रन्थिं द्रढयति रघूणां परिवृढः ॥'

---

तयोर्विरहेणेत्यर्थः । यद्वा एकवाक्यार्थग्रहेण यौ प्रादुर्भावावुत्पत्ती तयोर्यौगपद्य-विरहेण एककालीनत्वविरहेण उपमर्दकत्वाभावात् परस्परपरिपोषकप्रतिबन्धकत्वा-भावात् । 'राममन्मथ–' इत्यादौ वीभत्सशृङ्गारयोर्न युगपदुत्पत्ती, किं त्वभिधे-यबोधानन्तरं बीभत्सस्य व्यङ्ग्यबोधानन्तरं शृङ्गारस्येति क्रमेणैवेति नानुपपत्तिः । **नापीति** । रसयोरपीति शेषः । **अत एव** उक्तानिर्वाहादेव । प्रधानेतरेषु अङ्गेषु स्वातन्त्र्येत्यादि विलक्षणतयेत्यत्र हेतुः । **भावमात्राच्चेति** । अपरिपुष्टस्थायिभा-वत्वेन भावत्वमभिप्रेत्य प्रधानत्वाभावाद्विलक्षणभावप्रदर्शनं खण्डरसनाम्नेति व्यप-देश इत्यन्वयः । एवं च पूर्णरसयोर्विरोधाद्यसंभवेऽपि खण्डरसपूर्वरसयोस्तद्विरो-धादिसंभवः ॥ **अङ्गमिति** । अङ्गी रसो रसाद्यन्तरे यद्यङ्गम् । अथवा बाध्यो विरुद्धोऽपि स्मरणादिवल्लब्धसमावेशः स्यात् । यदि वा संसर्गी अविरोधी प्रधा-नानुपकारितया स्वातन्त्र्येण मिलितः स्यात्तदा समग्रास्वादाभावात्खण्डरसः स्मृत इत्यर्थः ॥ ननु स्मरणादावेव विरुद्धयोः समावेशः प्रतिप्रसूतस्तदभावात् कथं 'कपोले–' इत्यादौ विरुद्धयोर्वीरशृङ्गारयोः समावेश इत्यभिप्रायेणाह—**नन्वाद्य-**भिप्रायेणाह—**नन्वाद्य इति** । **एकत्रेति** । समावेश इत्यग्रेणान्वयः । **कपोल इति** । वक्त्रकमलं कीदृशम् । कपोलावच्छेदे स्मरेण कामोद्रेकेण स्मेरः प्रकाशमानः स्फारोड्डमरोऽत्युत्कटः पुलको यत्र । कपोलस्य किंचित्पाण्डुत्वेन विमलत्वेन वा करिकलभदन्तोपमा । अत्र शृङ्गारस्य जानक्यालम्बनविभावः, तदीयतादृक्कपोल उद्दीपनविभावः, तन्मुखकमलावलोकनमनुभावः । वीरस्य तु रजनीचरसेना आल-म्बनम्, तदीयकलकलविधानमुद्दीपनविभावः, जटाजूटग्रन्थिदृढीकरणमनुभावः ।

इत्यादौ समावेशः। अत्रोच्यते—इह खलु रसानां विरोधिताया अविरोधितायाश्च त्रिधा व्यवस्था। कयोश्चिदालम्बनैक्येन, कयोश्चिदाश्रयैक्येन, कयोश्चिन्नैरन्तर्येणेति। तत्र वीरशृङ्गारयोरालम्बनैक्येन विरोधः। तथा हास्यरौद्रबीभत्सैः संभोगस्य। वीरकरुणरौद्रादिभिर्विप्रलम्भस्य। (आलम्बनैक्येन) आश्रयैक्येन च वीरभयानकयोः। नैरन्तर्यविभावैक्याभ्यां शान्तशृङ्गारयोः। त्रिधाप्यविरोधो वीरस्याद्भुतरौद्राभ्याम्। शृङ्गारस्याद्भुतेन भयानकस्य बीभत्सेनेति। तेनात्र वीरशृङ्गारयोर्भिन्नालम्बनत्वान्न विरोधः।

एवं च वीरस्य नायकनिष्ठत्वेन भयानकस्य प्रतिनायकनिष्ठत्वेन निबन्धे भिन्नाश्रयत्वेन विरोधः। यश्च नागानन्दे प्रशमाश्रयस्यापि जीमूतवाहनस्य मलयवत्यनुरागो दर्शितः, तत्र[1] 'अहो गीतमहो वादित्रम्' इत्यद्भुतस्यान्तरा निवेशनान्नैरन्तर्याभावान्न शान्तशृङ्गारयोर्विरोधः। एवमन्यदपि ज्ञेयम्। 'पाण्डुक्षामं वदनं—' इत्यादौ (१७२ पृ.) च पाण्डुतादीनामङ्गभावः करुणविप्रलम्भेऽपीति न विरोधः।

**अनुकारे च सर्वेषां दोषाणां नैव दोषता ॥ ३१ ॥**

सर्वेषां दुःश्रवत्वप्रभृतीनाम्। यथा—

'एष दुश्च्यवनं नौमीत्यादि जल्पति कश्चन ॥'

---

वीरस्य निराकाङ्क्षवाक्यव्यङ्ग्यतया प्रधानत्वम् ॥ स्मरणादावालम्बनाश्रयभेदनैरन्तर्याभावेष्वपि विरोधिनोरेकस्मिन्समावेश इति सिद्धान्तमाह—**इह खल्विति**। आश्रयैक्येन नायकैक्येन। **नैरन्तर्येण** अव्यवधानेन ॥ विशिष्य दर्शयति—**तत्रेति**। वीरशृङ्गारयोर्वीरसंभोगयोः। तथा आलम्बनैक्येन संभोगस्येति विरोध इत्यन्वयः। एवमग्रेऽपि। **आश्रयैक्येन चेति**। चकारेण आलम्बनैक्येनेत्यस्य समुच्चयः। वीरस्याद्भुतरौद्राभ्यां सहाविरोध आलम्बनैक्येन आश्रयैक्येन नैरन्तर्येण च भवति। एवं शृङ्गारस्याद्भुतत्वेन। भयानकस्य बीभत्सेन तु नैरन्तर्यमात्रेणाविरोधो ज्ञेयः। वीरशृङ्गारयोरालम्बनभेदेनाविरोधं दर्शयति—**तेनेति**। उक्तनियमेनेत्यर्थः। अत्र 'कपोले—' इत्यत्र। **भिन्नाश्रयत्वेनेति**। उत्साहस्य प्रतिनायकविषयत्वेन नायकैक्येन निबन्धे भिन्नालम्बनत्वेनाविरोधो ज्ञेयः ॥ इदानीं विरुद्धरसीयविभावादिपरिग्रहस्यादोषत्वं दर्शयति—**पाण्डुक्षाममित्यादि**। तथा च विरुद्धरसीयासाधारणाङ्गपरिग्रह एव दोषो न तु साधारणाङ्गपरिग्रह इति भावः ॥ **अनुकारे चेति**।

---

1. तत्रेत्यादि। तथा चोक्तं ध्वनिकृता—'एकाश्रयत्वे निर्दोषो नैरन्तर्ये विरोधवान्। रसान्तरव्यवधिना रसो न्यस्यः सुमेधसा ॥' इति ॥

अत्र दुश्च्यवनशब्दोऽप्रयुक्तः ।

अन्येषामपि दोषाणामित्यौचित्यान्मनीषिभिः ।
अदोषता च गुणता ज्ञेया चानुभयात्मता ॥ ३२ ॥

अनुभयता अदोषगुणता ॥

इति साहित्यदर्पणे दोषनिरूपणो नाम सप्तमः परिच्छेदः ।

'अत्र मूलकारिकाः=३२ । पूर्वाभिः सह' ६७८ । उदाहरणानि=१६६ । पूर्वैः सह ४८७ ।

---

परोक्तशब्दवाक्ययोः कर्मादित्वेनोपादाने चेत्यर्थः । अनुकरणे दुःश्रवस्यादोषत्वं यथा—'मृगचक्षुषमद्राक्षीदित्यादि कथयत्ययम् ।' शब्दस्यानुकरणे च्युतसंस्कारस्यादोषत्वं यथा—'पश्यैष च गवित्याह सुत्रामाणं यजेति च ।' अत्र प्रथमपादे गोशब्दस्य निर्विभक्तिकतया च्युतसंस्कारत्वम् । द्वितीयपादे सुत्रामशब्दोऽप्रयुक्तो न दोषः । दुश्च्यवनशब्दोऽप्रयुक्तो न दोष इति शेषः ॥ अदोषगुणता अदोषत्वं गुणत्वं च रसादेर्निकर्षप्रकर्षबीजत्वाभावादुभयरूपम् ॥

इति श्रीरामचरणतर्कवागीशभट्टाचार्यविरचितायां साहित्यदर्पणविवृतौ सप्तमः प्रकाशः ।



अष्टमः परिच्छेदः।

गुणानाह—

रसस्याङ्गित्वमाप्तस्य धर्माः शौर्यादयो यथा।
गुणाः—

यथा खल्वङ्गित्वमाप्तस्यात्मन उत्कर्षहेतुत्वाच्छौर्यादयो गुणशब्दवाच्याः, तथा काव्येऽङ्गित्वमाप्तस्य रसस्य धर्माः स्वरूपविशेषा माधुर्यादयोऽपि स्वसमर्पकपदसंदर्भस्य काव्यव्यपदेशस्यौपयिकानुगुण्यभाज इत्यर्थः। यथा चैषां रसमात्रस्य धर्मत्वं तथा दर्शितमेव।

---

*काव्यलक्षणकारिकोद्देशक्रमप्राप्तान्गुणान्निरूपयति—**गुणानिति**। रसस्येत्यनेन काव्यशरीरस्य शब्दार्थयोर्व्यवच्छेदः। **अङ्गित्वमाप्तस्येति**। श्लिष्टं यद् यथासंभवं दृष्टान्तदार्ष्टान्तयोर्व्याख्यायते—**यथा खल्विति**। लोके इति पूरणीयम्। आत्मन इति अङ्गित्वमाप्तस्येत्यस्य विशेष्यम्। **काव्ये** कविभणितौ। अङ्गित्वं विभावाद्यङ्गसमुदाययोगेन पूर्णत्वम्। एतेन खण्डरसे माधुर्यादीनामननुभूयमानत्वादसंभव इति सूचितम्। स्वरूपविशेषाः विशेषणप्रभेदाः। माधुर्यादीनामन्यतमस्य काव्यत्वव्यापकतया उत्कर्षहेतुत्वाद् गुणव्यवहारौपयिकं धर्मान्तरमाह—**स्वसमर्पकेति**। स्वं रसस्तस्य **समर्प**को व्यञ्जको यः **पदसंदर्भो** वाक्यं तस्य **काव्यव्यपदेशस्य** काव्यव्यवहारस्य **औपयिक**मुपयोगि यदानुगुण्यमानुकूल्यं तद्भाजः गुणशब्दवाच्या इत्यन्वयः। एतच्च गुणालंकारसंस्कृतयोः शब्दार्थयोः काव्यशब्दोऽयं वर्तत इति प्राचीनमतानुसारेणोक्तम्। स्वमते तु रसवत्त्वमेव काव्यव्यवहारौपयिकम्, न तु गुणत्वम्। यद्वा। रसवत्त्वं काव्यलक्षणम्। व्यवहारबीजं तु गुणालंकारसंस्कृतशब्दार्थत्वमेवेति स्वमतेनैवेदमुक्तम्। एवं च काव्यव्यवहारप्रयोजकत्वे सति रसधर्मवत्त्वं गुणलक्षणम्। रसत्वादिव्यावृत्त्यर्थं सत्यन्तम्, अलंकारव्यावृत्त्यर्थं विशेष्यम्। ननु गुणानां शब्दार्थधर्मत्वं प्राचीनैरुक्तम्, भवता तु कथं रसधर्मत्वमुच्यत इत्यत आह—**यथा चेति**। एषां गुणानाम्। मात्रपदेन शब्दार्थयोर्व्यवच्छेदः। **दर्शितं** दर्शयितुमारब्धम्। माधुर्यादि-

---

* मुद्रितपुस्तके त्वत आरभ्य परिच्छेदान्तं यावद् व्याख्यान्तरायमाणो भूयान्ग्रन्थभेद उपलभ्यते। स चावश्यकत्वादिहाप्युपन्यस्यते—"दोषान्निरूप्य गुणान्निरूपयति—गुणानिति। काव्यलक्षणोद्देशक्रमेणेति शेषः। रसस्य अङ्गित्वं मुख्यत्वम्। एतच्च शब्दार्थयोः काव्यव्यवहारोपयोगित्वात्। शौर्यादय इत्यादिपदाद्विद्याविनयादीनां ग्रहणम्। स्वरूपविशेषाविलक्षणविशेषणानि माधुर्यादयोऽपि गुणशब्दवाच्या इत्यन्वयः। गुणपदस्य व्युत्पत्तिमाह— स्वेति। स्वं स्वकीयो रसः तस्य समर्पको व्यञ्जको यः पदसंदर्भः पदकदम्बविशेषो वाक्यमिति यावत्। तत्काव्यव्यपदेशः काव्यव्यवहारः तस्यौपयिकमुपयोगि

**माधुर्यमोजोऽथ प्रसाद इति ते[1] त्रिधा ॥ १ ॥**

ते गुणाः । तत्र—

**चित्तद्रवीभावमयो ह्लादो माधुर्यमुच्यते ।**

---

स्वरूपनिरूपणेनैवामीषां रसधर्मत्वं व्यक्तीभविष्यतीति भावः ॥ गुणान्विभजते—माधुर्यमिति । चित्तद्रवीभावमय इति स्वार्थे मयट् । ह्लादः सुखसंवलितप्रतीतिः ।

---

यदानुगुण्यमानुकूल्यं तद्भाजः । रसस्यैव काव्यव्यवहारोपयोगित्वं तदुत्कर्षद्वारा गुणानामपि तदित्यवधेयम् । ननु गुणानां वामनादिभिः शब्दार्थधर्मत्वमुक्तम्, किमिति भवता रसमात्रधर्मत्वमुच्यत इत्यत आह—यथा चैषामिति । एषां गुणानाम् । तथेति । काव्यप्रकाशोक्तकाव्यलक्षणदूषणप्रकरणेति 'किंच शब्दार्थयोः सगुणत्वविशेषणमनुपपन्नम्-' इत्यादिना । गुणान्विभजति—माधुर्यमिति । माधुर्यमाह—चित्तेति ।

---

1. ते त्रिधेति । वामनादयस्त्वोजआदीन्दश गुणानाहुः । ते यथा—'पदन्यासस्य गाढत्वं वदन्त्योजः कवीश्वराः । अनेनाधिष्ठिताः प्रायः शब्दाः श्रोत्ररसायनम् ॥ श्लथत्वमोजसा मिश्रं प्रसादं च प्रचक्षते । अनेन न विना सत्यं स्वदते काव्यपद्धतिः ॥ यत्रैकपदवद्भावः पदानां भूयसामपि । अनालक्षितसंधीनां स श्लेषः परमो गुणः ॥ प्रतिपादं प्रतिश्लोकमेकमार्गपरिग्रहः । दुर्बन्धो दुर्विभावश्च समतेति मतो गुणः ॥ आरोहन्त्यवरोहन्ति क्रमेण यतयो हि यत् । समाधिर्नाम स गुणस्तेन पूता सरस्वती ॥ बन्धे पृथक्पदत्वं च माधुर्यमुदितं बुधैः । अनेन हि पदन्यासाः कामं धारा मधुश्च्युतः ॥ यथाहि च्छिद्यते रेखा चतुरं चित्रपण्डितैः । तथैव वागपि प्राज्ञैः समस्तगुणगुम्फिता ॥ बन्धस्याजरठत्वं च सौकुमार्यमुदाहृतम् । एतेन वर्जिता वाचो रूक्षत्वान्न श्रुतिक्षमाः ॥ विकटत्वं च बन्धस्य कथयन्ति ह्युदारताम् । वैचित्र्यं न प्रपद्यन्ते यथा शून्याः पदक्रमाः ॥ पश्चादिव गतिर्वाचः पुरस्तादिव वस्तुनः । यत्रार्थव्यक्तिहेतुत्वात्सोऽर्थव्यक्तिः स्मृतो गुणः ॥ औज्ज्वल्यं कान्तिरित्याहुर्गुणं गुणविशारदाः । पुराणच्चित्रस्थानीयं तेन वन्ध्यं कवेर्वचः ॥' इति । सरस्वतीकण्ठाभरणे तु चतुर्विंशतिर्गुणाः । तत्र दश निरूपिता एव ज्ञेयाः, इतरे तूच्यन्ते—श्लाघ्यविशेषणयोगत्वमुदात्तता । गाढबन्धत्वमौर्जित्यम् । चाटूक्तिसहकारिप्रियतराख्यानत्वं प्रेयः । सुप्तिङ्व्युत्पादनं सुशब्दता । यथा—'तस्याजीवनिरस्तु मातरव मां जीवस्य मा जीवतो भूयाद्वा जनने किमम्ब जनिना जन्तोर्वृथाजीविनः । यस्त्वामेव न वन्दते न यजते नोपैति नालोकते नोपस्तौति न मन्यते न मनुते नाध्येति न ध्यायति ॥' अत्राजीवनिरजननिरित्यादीनां सुबन्तानां वन्दते यजत इत्यादीनां तिङन्तानां च व्युत्पत्तिः सुशब्दता । शब्दानामन्तःसंजल्परूपत्वं सौक्ष्म्यम् । यथा—'केवलं दधति कर्तृवाचिनः प्रत्ययानिह न जातु कर्मणि । धातवः सृजतिसंहृशास्तयः स्तौतिरत्र विपरीतकारकः ॥' अत्र श्रुतावगतवाक्यार्थस्य सृजति संहरति शास्ति स्तूयत इति पदानामन्तःसंजल्परूपेण सूक्ष्मतया सूक्ष्मत्वम् । ध्वनिमत्ता गाम्भीर्यम् । यथा 'मौलौ धारय पुण्डरीकममितं तन्वात्मनो

यत्तु—केनचिदुक्तम्—'माधुर्यं द्रुतिकारणम्' इति तन्न । द्रवीभावस्यास्वादस्वरूपाह्लादाभिन्नत्वेन कार्यत्वाभावात् । द्रवीभावश्च । स्वाभाविकानाविष्टत्वात्मककाठिन्यमन्युक्रोधादिकृतदीप्तत्वविस्मयहासाद्युपहित-

---

'आह्लादकत्वं माधुर्यं शृङ्गारे द्रुतिकारणम्' इति काव्यप्रकाशः । शृङ्गारादिष्वनुभवसिद्धमेवाह्लादजनकत्वं तदेव माधुर्यम् । तस्योत्कर्षाधायकत्वमाह—द्रुतिकारणमिति ॥ एतद्दूषयति—यत्त्विति । तत्कार्यत्वाभावात् माधुर्यजन्यत्वासंभवात् । आह्लादातिरिक्तस्य द्रवीभावस्य निर्वक्तुमशक्यतया आह्लाद एव पर्यवसानम् । एवमाह्लादजनकत्वापेक्षया लघुन आह्लादत्वस्यैव माधुर्यपदशक्यतावच्छेदकत्वमुचितमित्याह्लाद एव माधुर्यपदार्थ इति भावः । ननु द्रवीभावस्तावदाह्लाद एव भवतोच्यते तस्य रसाभिन्नतया रसधर्मत्वं नोपपद्यत इत्यत आह—द्रवीभावश्चेति । काठिन्यादिपरित्यागस्य रसोद्बोधहेतुत्वं दर्शयति—स्वाभाविकेति । मन्युः शोकः, दीप्तत्वं दग्धप्रायत्वम्, रत्यादीत्यादिपदेन शोकप्रशमयो-

---

स्वार्थे मयट् । ह्लाद आनन्दविशेषः । द्रुतिकारणं माधुर्यमिति । काव्यप्रकाशोक्तं लक्षणं दूषयति—यत्त्विति । द्रुतिकारणमाह्लादो माधुर्यमिति । दूषयति—तन्नेति । आस्वादो रसस्य स्वरूपं स्वरूपविशेषश्चित्तनिर्वृतिरूप आह्लादः । कार्यत्वाभावात् निरुक्ताह्लादजन्यत्वायोगात् । द्रवीभावस्य आह्लादजन्यत्वाभावेन आह्लादस्यापि तज्जनकत्वाभाव इति भावः । गूढविषयसंचाराक्षमत्वमनाविष्टत्वम् । मन्युः शोको दैन्यं वा । क्रोधादीत्यादि-

---

विक्रमं चक्राङ्कं वह पादयुग्ममवनीं दोष्णा समभ्युद्धर । लक्ष्मीं भ्रूनिकटे निवेशय भव ज्यायान्दिवोकस्पतेर्विश्रान्तःकरणैकचौर तदपि ज्ञातो हरिः खल्वसि ॥' अत्र नाम्या पुण्डरीकधारणं अपरिमितविक्रमत्वं चक्राङ्कितकरत्वं दंष्ट्रया वसुधोद्धारणं वक्षस्थलनिवेशितलक्ष्मीकत्वमिन्द्रावरजत्वं च ध्वनतीति गाम्भीर्यम् । व्यासेनाभिधानं विस्तरः । समासेनाभिधानं संक्षेपः । यथा—'स मारुतिसमानीतमहौषधिहतव्यथः । लङ्कास्त्रीणां पुनश्चक्रे विलापाचार्यकं शरैः ॥' अत्र कथाविस्तरप्रतिपाद्यस्यार्थस्य प्रकृतसंग्रामरसविच्छेदाशङ्कया श्लोकार्धमात्रेणोक्तत्वात्संक्षेपः । यावदर्थपदत्वं संमितत्वम् । यथा—'केचिद्वस्तुनि नो वाचि केचिद्वाचि न वस्तुनि । वाचि वस्तुनि चाप्यन्ये नान्ये वाचि न वस्तुनि ॥' अत्रार्थस्य पदानां च तुलाविधृतवत्तुल्यत्वेन संमितत्वम् । भावतो वाक्यवृत्तिर्भाविकम् । आरोहावरोहयोः क्रमो गतिः । यथा—'वराहः कल्याणं वितरतु स वो यस्य शशभृत्कलाकोटीकान्तं क्रमविदलदभ्युद्गतिमिया । मिथः संमूर्च्छद्भिश्चतुरुदधिकल्लोलपटलैरनामृष्टं दंष्ट्राशिखरमधिशेते वसुमती ॥' अत्र पूर्वार्धे स्वरस्यारोहादुत्तरार्धे चावरोहाद्गतिः । उपक्रमनिर्वाहो रीतिः । विशिष्टभणितिरुक्तिः । यथा—'कुशलं तस्या जीवति कुशलं पृच्छामि जीवतीत्युक्तम् । पुनरपि तदेव कथयसि मृतां नु कथयामि या श्वसिति ॥' अत्र कुशलं तस्या इति पृष्टे कुशलमकुशलं चेति वक्तव्ये, योऽयं जीवत्याद्युक्तिभङ्ग्या जीवितमात्रशेषताप्रतिपादनप्रकारः स उक्तिसंज्ञः । उक्तिप्रौढपरिपाकः प्रौढिः । यथा—

विक्षेपपरित्यागेन रत्याद्याकारानुविद्धानन्दोद्बोधेन सहृदयचित्तार्द्रप्रायत्वम् ।

तच्च—

**संभोगे करुणे विप्रलम्भे शान्तेऽधिकं क्रमात् ॥ २ ॥**

ग्रहणम् । रत्यादिभिराकारैर्विषयैरनुविद्धः संवलितो य आनन्दोद्बोधो रसास्वादः तेन । एवं च शृङ्गारकरुणशान्तरसोद्बोधानन्तरं जायमानो रत्याद्यविषयकः सहृदयचित्तद्रवीभावरूपः केवलानन्दसंदोहानुभवो माधुर्यं तस्य जनकतासंबन्धेन रससंबन्धितया रसधर्मत्वमक्षतमेवेति भावः । केचित्तु—'रतिशोकप्रशमेषु गुर्जर्यादिरागवृत्तिरिव कश्चिदेको धर्मोऽस्ति स एव माधुर्यं येन सामाजिकानां चित्तं द्रवीभवति । रत्यादीनां रसरूपतया परिणामेन तस्य रसवृत्तित्वम्' इति वदन्ति । तन्न । तत्र तादृशधर्मसत्त्वे मानाभावात् । नच द्रुतिरूपकार्यान्यथानुपपत्त्या तत्कल्पनमिति वाच्यम् । तस्य रसस्वभावेनैव सिद्धत्वात्तदर्थं धर्मान्तरकल्पनानौचित्यात् । गुर्जर्यादौ तु प्रत्यक्षसिद्ध एव तादृशधर्मः । अन्ये तु–'सुश्रवत्वमेव माधुर्यं काव्यधर्मः' इत्याहुः । तन्न । असुश्रवत्वेऽपि काव्ये माधुर्यस्योपलम्भात् ॥ माधुर्यविषयानाह—तच्चेति । माधुर्यं चेत्यर्थः । संभोगापेक्षया करुणे, तदपेक्षया विप्रलम्भे, तदपेक्षया शान्तेऽधिकम् । सातिशयमित्यर्थः । केचित्तु—'करुण' इति विप्रलम्भविशेषणम् । तच्च 'अश्रुपातादयस्तत्र द्रुतत्वाच्चेतसो मताः' इत्यनेन करुणेऽपि चित्तद्रवीभावस्याङ्गीकारेण माधुर्यस्वीकारात् । 'अपसारय घनसारं–' इत्यादौ

---

पदाज्जुगुप्सादिपरिग्रहः । विसयहासादीत्यादिपदेन भयादिपरिग्रहः । उपहितमुपधानं संबन्धस्तदात्मको विक्षेप इत्यर्थः । यद्वा विस्मयादिभिरुपहित उपपादितो विक्षेपो विषयान्तराग्राहित्वम् । रत्यादीत्यादिपदेन हासादीनां ग्रहणम् । रत्यादेराकारः परिणामो ज्ञानं तेनानुविद्धः संवलित आनन्दस्तस्योद्बोधेन रसास्वादेन आर्द्रप्रायत्वं निरतिशयानन्दसान्द्रत्वम् । तच्च स्वविषयकानुभवसंबन्धेनानन्दभागित्वं तच्चानन्द एव पर्यवसन्नमित्यभिप्रायः । केचित्तु—'गुर्जर्यादिरागवृत्तिरिव रसवृत्तिः कश्चिदेको धर्मोऽस्ति स एव द्रुतिरूपाह्लादस्य जनको माधुर्यमुच्यते' इत्याहुः । तन्न । रसस्यैव तादृशाह्लादजनकत्वाङ्गीकारेणैवोपपत्तौ तद्वृत्तिधर्मान्तरकल्पनाया अन्याय्यत्वात् । तच्च माधुर्यं च । अधिकमुत्कर्षातिशयजनकम् । क्रमादिति । संभोगादीनां पूर्वपूर्वमपेक्ष्य उत्तरोत्तरत्र उत्कर्षातिशयजनकत्वमिति भावः । संभोगाभासादिष्वपीति । अपिरेवार्थः । एतस्य माधुर्यस्य । माधुर्यव्यञ्जकान्वर्णादीनाह—मूर्ध्नीति । पुरस्तादित्यर्थः । युक्ता इति । मूर्धस्थवर्गान्त्यसजातीयवर्णा इत्यर्थः । लघू वर्णान्तरयोगराहित्येन लघुप्रयत्नोच्चार्यौ, न तु गुरुविपरीतौ ।

---

'अभ्युद्धृता वसुमती दलितं रिपूरः क्षिप्तक्रमा कवलिता बलिराज्यलक्ष्मीः । अत्रैकजन्मनि कृतं यदनेन यूना जन्मत्रये तदकरोत्पुरुषः पुराणः ॥' इति ॥

संभोगादिशब्दा उपलक्षणानि । तेन संभोगाभासादिष्वप्येतस्य स्थितिर्ज्ञेया ।

मूर्ध्नि वर्गान्त्यवर्णेन युक्ताष्टठडढान्विना ।
रणौ लघू च तद्व्यक्तौ वर्णाः कारणतां गताः ॥ ३ ॥
अवृत्तिरल्पवृत्तिर्वा मधुरा रचना तथा ।

यथा—

'अनङ्गमङ्गलभुवस्तदपाङ्गस्य भङ्गयः ।
जनयन्ति मुहुर्यूनामन्तःसंतापसंततिम् ॥'

यथा वा मम—

'लताकुञ्जं गुञ्जन्मदवदलिपुञ्जं चपलय-
न्समालिङ्गन्नङ्गं द्रुततरमनङ्गं प्रबलयन् ।

---

विप्रलम्भान्तरेऽपि माधुर्योपलम्भाच्च ॥ **एतस्य** माधुर्यस्य ॥ माधुर्यव्यञ्जकान्याह—**मूर्ध्नीति** । वर्गान्त्यवर्णेन स्ववर्गान्त्यवर्णेन । युक्ताः कादयो मान्ता इत्यर्थः । लघू विसर्गवर्णान्तरायुक्तावयुक्तान्तौ च, न तु गुरुविपरीतौ । 'स्वयं हाराकारा गलति जलधारा कुवलयात्'–इत्यादौ । 'अपसारय घनसारं कुरु हारं दूर एव किं कमलैः ।' इत्यादौ दीर्घानुस्वारयोगेन गुरोरपि रेफस्य माधुर्यव्यञ्जकत्वदर्शनात् । केचित्तु—'लघू ह्रस्वान्तौ' इत्याहुः । तन्न । 'सरः खरः खलः कालः–' इत्यादौ 'परस्परस्पर्धिवरः स्वयंवर–' इत्यादौ च रेफस्य ह्रस्वान्तत्वेन माधुर्यव्यञ्जकत्वापत्तेः । 'पुरो रेवापारे गिरिरिति दुरारोहशिखरः–' इत्यादौ ह्रस्वान्तत्वाभावेन माधुर्यव्यञ्जकत्वानुपपत्तेः ॥ **अवृत्तिः** समासाभावः । **अल्पवृत्तिः** रदीर्घसमासः । **मधुरा** दुःश्रवणवर्णाघटितत्वेन मनोरमा । **रचना** पदसंदर्भः । निरुक्तवर्णबहुला बहुतरनिष्ठुराक्षररहिता निःसमासा अल्पसमासा वा सुकुमारार्थप्रतिपादिका माधुर्यव्यञ्जिकेति तात्पर्यार्थः ॥ माधुर्यमुदाहरति—**अनङ्गेति** । अनङ्गस्य मङ्गलभुवो जन्मस्थानानि । तस्या अपाङ्गस्य नेत्रप्रान्तस्य भङ्गयो विक्षेपाः । **लताकुञ्जमिति** । लतापदं सुरभिपुष्पलता बोधकतया सार्थकम् । अवृत्तेर्माधुर्य-

---

* मुद्रितपुस्तके—**मूर्ध्नीति** । अग्रभागे स्वस्ववर्गान्त्यवर्णसहिता इत्यर्थः । यथा–अनङ्गमङ्गलेत्यादि ॥ तथात्वे 'अपसारय घनसारं कुरु हारं'–इति काव्यप्रकाशोक्तं तदुदाहरणमसंगतं स्यात् ॥ 'स्वयं हाराकारा गलति जलधारा कुवलयात्–' इत्यादौ चानुभवसिद्धस्य दीर्घरेफस्य माधुर्यव्यञ्जकत्वस्यापलापप्रसङ्गाच्च । तद्व्यक्तौ माधुर्यव्यञ्जने । अवृत्तिः समासाभावः । अल्पवृत्तिरल्पसमासः । मधुरा मृदुपदानुप्रासादिरम्यिरा रचना । यथा—'मधुरया मधुबोधितमाधवी–' इत्यादि । तथा माधुर्यव्यञ्जिका । अनङ्गेति । कामस्य मङ्गलभुवोऽभिमतसिद्धिस्थानानि तस्या नेत्रप्रान्तस्य भङ्गयो विक्षेपविशेषाः । लतेति । गुञ्जन्तो मधुरं

मरुन्मन्दं मन्दं दलितमरविन्दं तरलय-

न्रजोवृन्दं विन्दन्किरति मकरन्दं दिशि दिशि ॥'

**ओजश्चित्तस्य विस्ताररूपं दीप्तत्वमुच्यते ॥ ४ ॥**

**वीरबीभत्सरौद्रेषु क्रमेणाधिक्यमस्य तु ।**

अस्यौजसः । अत्रापि वीरादिशब्दा उपलक्षणानि । तेन वीराभासादावप्यस्यावस्थितिः[1] ।

**वर्गस्याद्यतृतीयाभ्यां युक्तौ वर्णौ तदन्तिमौ ॥ ५ ॥**

**उपर्यधो द्वयोर्वा सरेफौ[2] टठडढैः सह ।**

**शकारश्च षकारश्च तस्य व्यञ्जकतां गताः ॥ ६ ॥**

---

व्यञ्जकत्वं यथा—'मुद्रितामिन्दुमालोक्य पद्मिनीं पश्य सुन्दरि । हन्त कान्तस्य विच्छेदे मधुरोऽपि न रोचते ॥' सुकुमारार्थप्रतिपादकरचनाया माधुर्यव्यञ्जकत्वं यथा—'उचितं गोपनमनयोः स्तनयोः कनकाद्रिधर्मतस्करयोः । अवमानितविधुमण्डलमुखमण्डलगोपनं किमिति ॥' । ओजोगुणमाह—**ओज इति** । दीप्तत्वमोजः । तत्र दीप्तत्वमाह-**चित्तेति** । उत्साहाद्याकारानुविद्धचमत्कारोद्बोधेन जायमान उत्साहाद्यविषयकचमत्कारोद्बोध इति तदर्थः । केचित्तु—'दीप्तत्वं कटुवर्णश्रवणजन्यश्रोत्रदुःखसंभिन्नसुखविशेषः, स एव चित्तविस्तारः' इत्याहुः । तन्न । अनिष्ठुराक्षरप्रायबन्धव्यज्यमाने वीरादौ तदभावप्रसङ्गात् । 'चित्तविस्ताररूपदीप्तत्वजनकमोजः' इति काव्यप्रकाशः । तन्न । वीरादिभ्य एव जायमानदीप्तत्वस्यैव ओजःस्वीकारेणोपपत्तौ तज्जनकधर्मान्तरकल्पने मानाभावात् । ओजोविषयानाह—**वीरेति** । वीरापेक्षया बीभत्से, तदपेक्षया रौद्रे ओजस आधिक्यमतिशयः । रौद्रवीरे च निष्प्रतिभटमोजः । बीभत्से तु माधुर्यलेशानुविद्धम् । हास्याद्भुतभयानकेषु द्वयोः समावेशो ध्वनिसिद्धान्तसंग्रहोक्तरीत्या ज्ञेय इति चण्डीदासः । एतन्मते बीभत्सापेक्षया रौद्रवीरयोरोजस आधिक्यम् ॥ ओजोव्यञ्जकान्वर्णादीनाह—**वर्गस्येति** । सजातीयस्य विजातीयस्य वेत्यर्थः । तदन्तिमौ वर्गाद्यतृतीययोरन्त्यौ वर्गस्य द्वितीयचतुर्थौ । **सरेफाविति** । द्विवचनं

---

कूजन्तो मदवन्तश्चालिपुञ्जा भ्रमरश्रेणयो यत्र । तच्चपलयन् कम्पयन् । दलितं प्रफुल्लम् । तरलयन् कम्पयन् । रजोवृन्दं परागसमूहम् । विन्दन् गृह्णन् । विकिरति विक्षिपति । मकरन्दं पुष्परसम् । उदाहरणद्वये मूर्धस्थवर्णान्त्यवर्णानामल्पसमासस्य च माधुर्यव्यञ्जकत्वम् । असमासस्य यथा—'मानं विमुञ्च कल्याणि दासं मामनुकम्पय । विजहीहि रुषो रागमधरस्य च कम्पनम् ॥' ओजोगुणमाह—**ओज इति** । चित्तविस्तारो वीरादिरसास्वादेन जायमानो विस्मयविशेषः । अत्रापि ओजोलक्षणेऽपि । तदन्तिमौ वर्गद्वितीयवर्ग-

---

1. स्थितिः' क-ख. 2. 'सरेफः' घ.

**तथा समासो बहुलो घटनौद्धत्यशालिनी ।**

यथा—'चञ्चद्भुज—' इत्यादि ( ३०२ पृ. )

**चित्तं व्याप्नोति यः क्षिप्रं शुष्केन्धनमिवानलः ॥ ७ ॥**

**स प्रसादः समस्तेषु रसेषु रचनासु च ।**

---

प्रामादिकम् । रेफयुक्तस्य यस्यकस्यचिदपि वर्णस्य ओजोव्यञ्जकत्वात् । एतदुपलक्षणम् । माधुर्यव्यञ्जकातिरिक्तो युक्तो विसर्गयुक्तश्च वर्ण ओजोव्यञ्जकः । अत एव 'उत्कृत्योत्कृत्य—' इत्यादौ, 'यो यः पाञ्चालगोत्रे—' इत्यादौ च ओजोव्यञ्जकत्वमक्षतमेव । टादयस्तु केवला अप्योजोव्यञ्जकाः । **समासो बहुल इति ।** ओजोव्यञ्जकवर्णघटितसमासाधिक्यमप्योजोव्यञ्जकमिति पृथगुपादानम् । घटना पदसंदर्भः औद्धत्यशालिनी उद्भटाक्षरबहुला उद्भटार्थप्रतिपादिका च । द्वितीयप्रकारसंग्रहाय एतदुपादानं सार्थकम् । तेन 'आपतन्तममुं दूरादूरीकृतपराक्रमः । बलोऽवलोकयामास मातङ्गमिव केसरी ॥' इत्यादावोजोव्यञ्जकत्वमुपपन्नम् ॥ प्रसादगुणमाह—**चित्तमिति । य इति ।** आस्वाद्यव्यङ्ग्येषु आस्वादाख्यः कश्चिदेको धर्मोऽस्ति येन व्यङ्ग्यानामास्वाद्यत्वं चोपपद्यते । स एव प्रसादाख्यो गुण इत्यर्थः । तदुक्तं **चण्डीदासेन**—'चित्तं यो व्याप्नोति आविष्टं करोति स प्रसादनामा आस्वादात्मा गुणः ।' अनलपक्षे—व्यापनं संयोगानुकूलव्यापारः । गुणपक्षे त्वाह—**व्याप्नोतीति ।** आविष्करोति व्यासङ्गनिराकरणेन निर्मलं करोति । प्रसादपदव्युत्पत्तिलभ्योऽयमर्थः 'आविष्टं करोति' इति पाठे स्वाश्रयनिविष्टं करोतीत्यर्थः ॥ प्रसादविषयानाह— **समस्तेष्विति ।** रसेषु काव्यात्मभूतेषु । तेन भावादीनामपि गुणत्वमुपपद्यते । अन्यथा तत्र काव्यव्यवहारो न स्यात् । **रचनासु चेति ।**

---

चतुर्थौ । द्वयोरुपर्यधश्च सरेफाविति वर्गस्यादितृतीयौ च तदन्तिमौ च । घटना बन्धः । औद्धत्यशालिनी डम्बरा । सा च संयुक्तवर्णबाहुल्येन भवति । चञ्चदिति व्याख्यातमिदं प्राक् । अत्र समासबाहुल्यडम्बरबन्धयोरोजोव्यञ्जकत्वं वर्गस्यादीत्युक्तवर्णस्य । यथा—'अनेन छिन्दता मातुः कण्ठं परशुना तव । बद्धस्पर्धः कृपाणोऽयं लज्जते मम भार्गव ॥' अत्र तृतीयपादे दकारयुक्तौ धकारौ ओजोव्यञ्जकौ । 'विरूढप्रौढविक्रमः' इत्यत्रासंसक्तौ ढकारौ । वस्तुतस्तु माधुर्यव्यञ्जकातिरिक्ता वर्णान्तरसंयुक्ता द्वित्रा अन्येऽपि वर्णा ओजोव्यञ्जकाः । यथा—'समरे भाति संरम्भादुद्यदिनकरद्युतिः । हुताशकुण्डसंकाशलोचनो नृपपुंगवः ॥' अत्र द्वितीयपादे संयुक्तवर्णत्रयमोजोव्यञ्जकम् । ओजोव्यञ्जकाक्षरघटितबहुतरपदसमासस्तादृशाक्षरसंदोहघटितो बन्धश्च ओजोऽतिशयव्यञ्जकौ । 'दीप्तवह्निचयोद्दीप्तनेत्रापीतद्विषद्बलः । चण्डध्वानपरिष्वस्तहस्तिदानोऽस्त्यसौ युधि ॥' 'उद्यदिनकरवक्त्रः प्रज्वलज्ज्वलनेक्षणः । भार्गवो नृपवर्गस्य मृत्युरेष धुरि स्थितः ॥' प्रसादगुणमाह—चित्तमिति । आविष्टमधिकनिविष्टम् । तद्व्यञ्जकाः प्रसादव्यञ्जकाः । रस-

---

१. 'समासबहुलः' घ.

व्याप्नोति, आविष्करोति ।

**शब्दास्तद्व्यञ्जका अर्थबोधकाः श्रुतिमात्रतः ॥ ८ ॥**

यथा—

'सूचीमुखेन सकृदेव कृतव्रणस्त्वं
मुक्ताकलाप लुठसि स्तनयोः प्रियायाः ।
बाणैः स्मरस्य शतशो विनिकृत्तमर्मा
स्वप्नेऽपि तां कथमहं न विलोकयामि ॥'

**एषां शब्दगुणत्वं च गुणवृत्त्योच्यते बुधैः ।**

---

झसम्यर्थौ व्यङ्ग्यः । तेन समस्तरचना व्यङ्ग्येत्यर्थः ॥ ओजोमाधुर्यवदस्य रचनाविशेषो व्यञ्जको नास्ति, किंतु झटित्यर्थसमर्पकपदघटिता रचनैव व्यञ्जिकेति प्रतिपादयितुमाह—शब्दा इति । तद्व्यञ्जकाः प्रसादव्यञ्जकाः । ननु गुणानां रसधर्मत्वस्वीकारे प्राचीनसंमतशब्दार्थधर्मत्वमेषां कथमुत्पद्यत इत्यत आह—एषामिति । माधुर्यादीनामित्यर्थः । शब्दगुणत्वं शब्दार्थधर्मत्वम् । गुणवृत्त्या आश्रयरसव्यञ्जकत्वरूपपरम्परासंबन्धेन । बुधैर्वामनादिभिः । शौर्यादेरात्मधर्मस्य यथा शरीरवृत्तित्वं यथा वा स्थूलत्वादेः शरीरधर्मस्य आत्मवृत्तित्वं परम्परासंबन्धेन, तथेत्यर्थः । ननु गुणानां रसवृत्तित्वस्य निरुक्तपरम्परायाः संबन्धत्वस्य च कल्पने गौरवमतः शब्दार्थवृत्तित्वमेव कल्पयितुमुचितमिति चेत् । न । क्वचिन्नीरसे गुणाभिव्यञ्जकशब्दार्थयोः संभवेऽपि माधुर्यादेरनुपलम्भात् । क्वचित्तु तदसंभवेपि रसत्वेनैव तदुपलम्भाच्च रसान्वयव्यतिरेकानुविधायित्वेन रसवृत्तित्वकल्पनस्यैवोचितत्वात् ॥ ननु वामनादिभिः श्लेषादयो दश शब्दगुणा ओज आदयो दशार्थगुणा उक्ताः, भवद्भिस्तु माधुर्यादयस्त्रय एव कथमुच्यन्त इत्यतस्तान्यथासंभवं स्वोक्तगुणव्यञ्जकदोषाभावालंकारगुणीभूतव्यङ्ग्येष्वन्तर्भावयन्प्रथमं शब्दगुणान्स्वोक्तगुण-

---

वृत्तिः कश्चिद्धर्मः येन सामाजिकानां चित्तं विषयान्तरेभ्यो व्यवच्छिद्य स्वस्मिन्नेवातिनिविष्टं करोति । माधुर्यौजसोर्जनकत्वसंबन्धेनैवं रसवृत्तित्वं प्रसादस्य तदतिरिक्तेनेत्यवधेयम् । कृतव्रणः कृतच्छिद्रः । मर्म मनः । तां प्रियाम् । एषां निरुक्तगुणानाम् । शब्देत्युपलक्षणम् । अर्थगुणमपि बोध्यम् । गुणवृत्त्या स्वाश्रयरसव्यञ्जकत्वरूपपरम्परासंबन्धेन । बुधैर्वामनादिभिः । शौर्यादिगुणयोगः शौर्यादिगुणवत्त्वम् । अत्र स्वसमवाय्यात्मावच्छेदकत्वं परम्परासंबन्धः । वामनाद्युक्तदशविधगुणानां स्वोक्तगुणव्यञ्जकादौ यथायथमन्तर्भावमाह—श्लेष इति । भक्त्या लक्षणया । ओजःपदवाच्ये ओजःपदप्रति-

'शरीरस्य शौर्यादिगुणयोग इव' इति शेषः ।

श्लेषः समाधिरौदार्यं प्रसाद इति ये पुनः ॥ ९ ॥
गुणाश्चिरंतनैरुक्ता ओजस्यन्तर्भवन्ति ते ।

ओजसि भक्त्या ओजःपदवाच्ये शब्द(अर्थ)धर्मविशेषे । तत्र श्लेषो बहूनामपि पदानामेकपदवद्भासनात्मा । यथा—

'उन्मज्जज्जलकुञ्जरेन्द्ररभसास्फालानुबन्धोद्धताः
सर्वाः पर्वतकंदरोदरभुवः कुर्वन्प्रतिध्वानिनीः ।

---

व्यञ्जकदोषाभावयोरन्तर्भावयति—**श्लेष इति** । **भक्त्या** लक्षणया । **ओजःपदवाच्ये** ओजःपदप्रतिपाद्ये । चित्तविस्ताररूपे ओजस्यन्तर्भावासंभवादिति भावः । **शब्दधर्मविशेषे** बन्धगाढत्वरूपे । अत्रार्थपदं चिन्त्यम् । अर्थधर्मे प्रौढत्वरूप ओजसि शब्दश्लेषादीनामन्तर्भावासंभवात् । **एकपदवदिति** । संध्यादिवशादनेकपदानामुच्चारणकालभेदः स्पष्टं नावभासत इत्यर्थः । केचित्तु—'समासाभावात्' इति व्याचक्षते । तन्न । वामनोपदर्शितस्य असमासत्वेऽपि 'अस्त्युत्तरस्यां दिशि देवतात्मा' इति श्लेषोदाहरणस्य समाससत्त्वेऽपि 'तडित्कपिलमाकाशं—' इत्यादौ श्लेषप्रत्युदाहरणस्य वासंगत्यापत्तेः । 'अस्ति भयमस्ति कौतुकमस्ति च मन्दाक्षमस्ति चोत्कण्ठा । बालानां प्रणयिजने भावः कोऽप्येष नैकरसः ॥' इति प्राचीनान्तरदत्तोदाहरणस्यासंग्रहापत्तेश्च ॥ **उन्मज्जदिति** । प्रलयकालीनसमुद्रवर्णनमिदम् । यथायं सिन्धुसंबन्धी ध्वनिरुच्चरति तथेयं वेला विकृतसिन्धुजलमुद्गच्छति । 'अब्ध्यम्बुविकृतौ वेला कालमर्यादयोरपि' इत्यमरः । उभयोः साधर्म्यमाह—उन्मज्जदिति । उन्मज्जतां जलकुञ्जरेन्द्राणां रभसेन वेगेन य आस्फालो जलाभिघातजन्यशब्दस्तस्यानुबन्धेन उद्धता उद्भटाः । पक्षे—येषां रभसेन हर्षेण य आस्फाल उत्थानव्यापारातिशयस्तस्यानुबन्धेन आरम्भेण उद्धता उद्गताः । प्रतिध्वानिनीः प्रतिशब्दान्विताः । पक्षे—प्रतिध्वानिनीः शब्दनिरुद्धाः जलपूरणेन

---

पाद्ये । शब्दार्थधर्मविशेषे बन्धगाढत्वादौ । अन्तर्भवन्ति अभिन्नतया वर्तन्ते । बहूनामिति । संधिवशादेकपदवत्प्रतीतिरूपः । उन्मज्जदिति । इयं वेला समुद्रजलं तथोद्गच्छति यथायं ध्वनिरुच्चैरुच्चरति । कीदृक् । उन्मज्जन्तो ये जलकुञ्जरेन्द्रा जलहस्तिश्रेष्ठास्तेषां रभसास्फालानुबन्धेन वेगजनितस्फालातिशयेन उद्धता उत्कटाः । प्रतिध्वानिनीः प्रतिशब्दयुक्ताः ।

---

१. '—योगः' इति नास्ति क-ख-पुस्तकयोः. २. 'भक्त्या' इति क-पुस्तके नास्ति.

उच्चैरुच्चरति ध्वनिः श्रुतिपथोन्माथी यथायं तथा
प्रायप्रेङ्खदसंख्यशङ्खधवला वेलेयमुद्गच्छति ॥'

अयं बन्धवैकट्यात्मकत्वादोज एव । समाधिरारोहावरोहक्रमः । आरोह उत्कर्षः, अवरोहोऽपकर्षः, तयोः क्रमो वैरस्यतानावहो विन्यासः । यथा—'चञ्चद्भुज—' इत्यादि ( ३०२ पृ० ) । अत्र पादत्रये क्रमेण बन्धस्य गाढता । चतुर्थपादे त्वपकर्षः । तस्यापि च तीव्रप्रयत्नोच्चार्यतया ओजस्विता । उदारता विकटत्वलक्षणा । विकटत्वं पदानां नृत्यत्प्रायत्वम् । यथा—

---

निःशब्दाः कुर्वतीः । श्रुतेः पन्थाः शब्दग्रहणसामर्थ्यं तस्योन्माथी नाशकः । पक्षे-श्रुतीनां वेदानां पथां चोन्माथी । वेला कीदृशी । प्रायेण रमणेन ( बाहुल्येन ) प्रेङ्खन्त उच्छलन्तो ये शङ्खास्तैर्धवला । अयं श्लेषो विकटबन्ध एव । अस्योत्कर्षाधायकत्वाद्गुणत्वमिति भावः । **उत्कर्षो** गाढबन्धत्वम् । **अपकर्षो** बन्धशैथिल्यम् । उत्कर्षमध्ये अपकर्षोपादाने अपकर्षमध्ये चोत्कर्षोपादाने च वैरस्यं यत्र न भवतीत्यर्थः । ननु क्रमनिबन्धयोरुत्कर्षापकर्षयोः समावेशः समाधिरिति फलितम्, तत्रापकर्षस्य कथमोजस्यन्तर्भाव इत्यत आह—**तस्यापीति** । चतुर्थपादस्यापीत्यर्थः । पद्यस्य पादे पादे आरोहावरोहक्रमः संभवतीति तत्रारोहपूर्वोऽवरोहो यथा—'निरानन्दः कौन्दे मधुनि, विधुरो बालबकुले, न सालेनालम्बो, लवमपि लवङ्गे न रमते । प्रियङ्गौ नासङ्गं रचयति, न चूते विरमति, स्मरंल्लक्ष्मीलीलाकमलमधुपानं मधुकरः ॥' लवङ्ग इति लघुप्रयत्नोच्चारणेनावरोहः । अवरोहपूर्व आरोहो यथा—'अयमुदयति मुद्रा—' इति । **नृत्यत्प्रायत्वमिति** । प्रत्येकं पदच्छेदादिति भावः ॥ झणितीत्यव्यक्तशब्दानुकरणम् । कलमिति रणितमित्यनेनान्वितम् । नन्वत्र वीरादिरसाभावादोज एव नास्ति तद्व्यञ्जके एतदीयबन्धगाढत्वे

---

श्रुतेः श्रवणस्य पन्था विषयान्तरग्रहणं तस्योन्माथी नाशकः । वेला कीदृशी । प्रेङ्खन्त उपरि चरन्तो येऽसंख्याः शङ्खाः शङ्खकपालानि तैर्धवला । अत्र समस्तानामसमस्तानां वा बहूनां पदानां संधिवशादेकत्वारोपः । अयं श्लेषः संधिबाहुल्येन वर्णानां संयुक्तवर्णवद् गुरुप्रयत्नोच्चार्यतया बन्धस्य वैकट्यं भवतीति भावः । उत्कर्षो गाढत्वम् । अपकर्षः शैथिल्यम् । वैरस्यतानावहः सामाजिकानां खेदाजनकः । विन्यासो ग्रन्थनम् । केचित्तु 'यत्र पद्ये प्रतिपादं प्रथममुत्कर्षः पश्चादपकर्षः, तत्रैवारोहावरोहक्रमरूपः समाधिः । 'चञ्चद्भुज—' इत्यादौ प्रतिपादमुत्कर्षानन्तरमपकर्षः, द्वितीयपादे चरमवर्णस्य गाढत्वेऽपि चक्षुःप्रयत्नोच्चार्यतयापकर्षः' इत्याहुः । उत्कर्षापकर्षस्यैव प्राधान्यं प्रधानेन व्यपदेशा भवन्तीति न्यायजव्यवहार इति भावः । नृत्यत्प्रायत्वं गुरुप्रयत्नोच्चार्यतयाडम्बरत्वमेव ।

'सुचरणविनिविष्टैर्नूपुरैर्नर्तकीनां
झणिति रणितमासीत्तत्र चित्रं कलं च।

अत्र च तन्मतानुसारेण रसानुसंधानमन्तरेणैव शब्दप्रौढोक्तिमात्रेणौजः । प्रसाद ओजोमिश्रितशैथिल्यात्मा । यथा—

'यो यः शस्त्रं बिभर्ति स्वभुजगुरुमदः पाण्डवीनां चमूनाम्'

( ३११ पृ. ) इति ।

**माधुर्यव्यञ्जकत्वं यदसमासस्य दर्शितम् ॥ १० ॥**
**पृथक्पदत्वं माधुर्यं तेनैवाङ्गीकृतं पुनः ।**

यथा—'श्वासान्मुञ्चति–' इत्यादि ( १३६ पृ० ) ॥

---

उदारतायाः कथमन्तर्भाव इत्यत आह—**तन्मतानुसारेणेति** । ये गुणानां शब्दार्थधर्मत्वमेव वदन्ति तन्मतेनेत्यर्थः । शब्दप्रौढोक्तिमात्रेण ओजो व्यवह्रियते इति शेषः । तथा च प्रकृते योग्यतामादायैव बन्धगाढत्वस्य ओजोव्यञ्जकत्वमिति भावः ॥ **प्रसाद इति** । समाधौ श्लोके तत्पादे वा ओजःप्रसादयोरन्यतरस्य पुनरुन्मज्जनं नास्ति । अत्र तूभयोर्निमज्जनोन्मज्जनक्रमेण संपर्कः । तदुक्तं **वामनेन**—'संपृक्तौ खल्वोजःप्रसादौ नदीवेणिकावदुद्वहतः' इति । **यो य इति** । व्याख्यातमिदं प्राक् ॥ वर्णित(दर्शित) मित्यस्माभिरिति शेषः ॥ **श्वासानिति** । अत्र भुजावल्लरीमिति प्राणसमानेति च समाससत्त्वेऽपि पृथक्पदत्वस्य दीर्घसमासराहित्ये तात्पर्यान्न दोषः । यद्वा–'बाले ! नाथ ! विमुञ्च मानिनि ! रुषं रोषान्मया किं कृतं खेदोऽस्मासु न मेऽपराध्यति भवान्सर्वेऽपराधा मयि । तत्किं रोदिषि गद्गदेन वचसा कस्याग्रतो रुद्यते नन्वेतन्मम का तवास्मि दयिता नास्मीत्यतो रुद्यते ॥'

---

लघुवर्णघटितपदानामपि समभिव्याहारवशेन गुरुप्रयत्नोच्चार्यत्वमस्ति । **सुचरणेति** । ननु वीरादिरसे ओजः संभवति, कथमत्रौज इत्यत आह—**तन्मतानुसारेणेति** । **ओजोमिश्रितेति** । शैथिल्यं लघुप्रयत्नोच्चार्यबाहुल्येनानुद्भटत्वम् । 'तेजः क्षमा वा नैकान्तं कालज्ञस्य महीपतेः । नैकमोजः प्रसादो वा रसभावविदः कवेः ॥' इति माघे । प्रसादः शैथिल्यमेवेत्यवधेयम् । **यो य इति** । द्रोणवधे भूतेऽश्वत्थाम्नः क्रोधोक्तिरियम् । पाञ्चालेन धृष्टद्युम्नेन द्रोणो हत इति पाञ्चालगोत्रे क्रोधातिशयः । अधिकवया वृद्धः गर्भशय्यां जरायुं गतः । गर्भस्थ इति यावत् । तत्कर्मसाक्षी मत्पितृवधानुमत्या कृष्णादिः । प्रतीपः प्रतिकूलः । अन्तकस्येत्यनन्तरमपिकारो बोध्यः । अत्र प्रतिपादं मध्यवर्णानां शैथिल्यम् । वर्णितमस्माभिरिति शेषः । तेनैव निरुक्तमाधुर्यव्यञ्जकेनैव ।

---

1. पृथगिति । पृथक्पदानि यस्य तस्य भावः । समासदैर्घ्यनिवृत्तिपरं चैतत् ॥

**अर्थव्यक्तेः प्रसादाख्यगुणेनैव परिग्रहः ॥ ११ ॥**
**अर्थव्यक्तिः पदानां हि झटित्यर्थसमर्पणम् ।**

स्पष्टमुदाहरणम् ।

**ग्राम्यदुःश्रवतात्यागात्कान्तिश्च सुकुमारता ॥ १२ ॥**

अङ्गीकृतेति संबन्धः । कान्तिरौज्ज्वल्यम् । तच्च हालिकादिपद-विन्यासवैपरीत्येन लौकिकशोभाशालित्वम् । सुकुमारता अपारुष्यम्[1] । अनयोरुदाहरणे स्पष्टे ।

**क्वचिद्दोषस्तु समता मार्गाभेदस्वरूपिणी ।**
**अन्यथोक्तगुणेष्वस्या अन्तःपातो यथायथम् ॥ १३ ॥**

---

एतदुदाहरणं बोध्यम् ॥ **प्रसादाख्यगुणेन** प्रसादगुणव्यञ्जकेन ॥ **हालिकादी-**त्यादिना बालकादिपरिग्रहः । हालिकादिसाधारणप्रसिद्ध्यर्थकपदेनेत्यर्थः ॥ **स्पष्टे इति** । क्रमेण यथा—'ताम्बूलभृतगल्लोऽयं भद्रं जल्पति मानवः ।' विपर्ययस्तु 'ताम्बूलभृतगल्लोऽयं भल्लं जल्पति मानुषः ।' अत्र भल्लगल्लमानुषशब्दा ग्राम्याः । 'आनन्दमियमायातु कदा कामवशंवदा ।' विपर्ययस्तु 'कार्तार्थ्यमियमायातु' इति ॥ **क्वचिदिति** । सुकुमारबन्धमध्ये उद्धतार्थोपस्थितौ प्रौढबन्धमध्ये सुकुमारोपस्थितौ चेत्यर्थः । **मार्गस्य** रीतेरभेदोऽपरित्यागः । तत्स्वरूपेत्यर्थः । **अन्यथा** प्रक्रान्त-मार्गयोग्यार्थानुपस्थितौ । उक्तगुणेषु प्राचीनोक्तमाधुर्यसौकुमार्यौजःसु । **यथा-यथमिति** । सुकुमारमार्गभेदस्य माधुर्यसौकुमार्ययोः प्रौढमार्गभेदस्य त्वोजसी

---

प्रसादाख्यगुणेन प्रसादाख्यव्यञ्जकेन । अर्थसमर्पणमर्थप्रत्यायनम् । ग्राम्येति । ग्राम्य-त्वत्यागात् कान्तिदुःश्रवत्वत्यागात् सुकुमारतेत्यन्वयः । हालिकादीति । आदिपदात्प्रा-कृतनरमात्रग्रहणम् । हालिकादिप्रयुज्यमानानां पदानां भल्लगल्लादिशब्दानां हालिकादि-साधारणबोधजनकानां 'शुष्को वृक्षस्तिष्ठत्यग्रे' इत्यादीनां च विन्यासः प्रयोगस्तस्य वैपरीत्येन भावेन अलौकिकशोभारसालंकारादिकृतवैचित्र्यम् । तद्वत्त्वमित्यर्थः । एवं च ग्राम्यत्वाभावे सति रसालंकारादिवैचित्र्यं कान्तिरिति फलितम् । न तु ग्राम्यत्वत्याग-मात्रेणैवौज्ज्वल्यम् । अन्यथा 'चित्रभानुरयमुज्ज्वलकान्तिः शेखरे लसति भूमिधरस्य ।' इत्यादावपि कान्तिः स्यात् । 'कन्ये कामयमानं मां न त्वं कामयसे कथम् ।' इत्यादौ ग्राम्यत्वरतिशृङ्गाररसानुप्रासालंकारसत्त्वेऽपि कान्तिवारणाय सत्यन्तम् । एतयोरुदाहरणे यथा मम—'स्वान्तं तन्वि ! तवानुरागमृदुलं हन्त्याशु मे मन्मथस्त्वच्चित्तं तु विरागरू-क्षमकृती नेद्धुं न शक्नोत्यसौ । याचे त्वामिदमेव तच्छृणु पुनः क्रूराय तस्मै न तद्भ्रूचापं सखि ! नासिकां सुनिशितं नालीकमप्यात्मनः ॥ रोलम्बावलिकूजितं बहु जितं कान्ते तवानुग्रहान्नैवामी गणिता वनप्रियवधूसंबाधटङ्का मया । नाशङ्के मलयानिलान्न च विधोराराधनं भावये वामायां त्वयि तावदद्य दयिते ! तानि प्रतीपानि मे ॥' यदि तु

---

1 'सुकुमारता अपारुष्यम्' इति क-ख-पुस्तकयोर्नास्ति.

मसृणेन विकटेन वा मार्गेणोपक्रान्तस्य संदर्भस्य तेनैव परिनिष्ठानं मार्गाभेदः । स च क्वचिद्दोषः । तथाहि—

'अव्यूढाङ्गमरूढपाणिजठराभोगं च बिभ्रद्वपुः
पारीन्द्रः शिशुरेष पाणिपुटके संमातु किं तावता ।
उद्यद्दुर्धरगन्धसिन्धुरशतप्रोद्दामदानार्णव-
स्रोतःशोषणरोषणात्पुनरितः कल्पाग्निरल्पायते ॥'

अत्रोद्धतेऽर्थे वाच्ये सुकुमारबन्धत्यागो गुण एव । अनेवंविधस्थाने माधुर्यादावेवान्तःपातः । यथा—'लताकुञ्जं गुञ्जत्—' इत्यादि (४५३पृ.) ।

---

त्यर्थः ॥ **मसृणेन** सुकुमारेण ॥ **उपक्रान्तस्य** आरब्धस्य । **संदर्भस्य** प्रबन्धस्य । **तेनैव** उक्तमार्गेणैव । **परिनिष्ठानं** समाप्तिः । **स** मार्गाभेदः ॥ मार्गाभेददोषत्यागस्य गुणत्वमुदाहरति—**अव्यूढेति** । अप्रौढावयवमित्यर्थः । अरूढोऽजातपाणिजठरस्याभोगः परिपूर्णता यत्र । पारीन्द्रः सिंहः । 'कण्ठीरवस्तु पारीन्द्रः केसरी गजमोहनः' इति हारावली । संमातु इयत्तां प्राप्नोतु, तावता अव्यूढाङ्गत्वादिना किम् । न किमपि त्रुट्यतीत्यर्थः । त्रुटेरभावमाह—**उद्यदिति** । उद्यज्जायमानं दुर्धरस्य गन्धसिन्धुरशतस्य मत्तहस्तिसमूहस्य प्रोद्दामदानार्णवस्रोतसः प्रौढमदजलधिप्रवाहस्य शोषणं यस्मात्तादृशं रोषणं यस्य तस्मात् । इतः पारीन्द्रशिशोः । कल्पाग्निः प्रलयकालाग्निः । अल्पायते तुच्छो भवति । 'यस्योग्रमदगन्धेन हस्तिनो भयविह्वलाः । दूरादेव पलायन्ते गन्धहस्ती स उच्यते ॥' **माधुर्यादावि**त्यनेन

---

ग्राम्यत्वाभावेनैव शोभाविशेषो जन्यत इत्यङ्गीक्रियते तदा यथाश्रुतमेव सम्यक् । अन्यथा दोषत्वासंभावनायाम् । उक्तगुणेषु उक्तगुणव्यञ्जकेषु । अन्तःपातोऽन्तर्भावः । यथायथं यथासंभवम् । मसृणेन सुकुमारेण । विकटेन उद्भटेन । मार्गेण बन्धेन । उपक्रान्तस्य आरब्धस्य । संदर्भस्य महाकाव्यविशेषस्य । तेनैव उपक्रान्तेनैव । परिनिष्ठानं समापनम् । संदर्भस्येत्युपलक्षणम् । एकवाक्येऽपि समता बोध्या । अव्यूढाङ्गमिति । अव्यूढानि अपरिणतानि अङ्गानि करचरणादीनि यस्य तत् । अरूढोऽनिष्पन्नः पाणिजठरस्याभोगः परिपूर्णता यत्र तत् । पारीन्द्रः सिंहः । 'कण्ठीरवस्तु पारीन्द्रः केसरी गजमोहनः' इति हारावली । संमातु मानं प्राप्नोतु । तावता 'क्षुद्रशरीरकत्वेन' किं न्यूनत्वम्, अपि तु न । उद्यद् उद्गलत् । अस्य स्रोत इत्यनेन संबन्धः । गन्धसिन्धुरो गन्धहस्ती । यस्य गन्धमदेन प्रतिगजाः पलायन्ते स दानार्णवो मदसमुद्रस्तस्य स्रोतो धारा तस्य शोषणं शोषकं रोषणं यस्य तस्मात् । इतः पारीन्द्रशिशोः । अल्पायते तुच्छो भवति । अर्थे वाच्ये सुकुमारसंदर्भान्तःपातिनोऽस्य पद्यस्य समत्तानुरोधेन सुकुमारपदैर्घटने वर्णप्रातिकूल्याख्यदोष एव स्यात् । गुण इति । अर्थसौद्धत्यव्यञ्जकत्वादिति भावः । अनेवमिति । यत्र वर्णनीयविशेषानुरोधेन प्रक्रान्तमार्गत्यागो नास्ति तत्रेत्यर्थः । माधुर्यादावित्यादिपदादोजोग्रहणम् । माधुर्यव्यञ्जके ललितबन्धे ओजोव्यञ्जके उद्धतबन्धे चेत्यर्थः । लताकु-

**ओजः प्रसादो माधुर्यं सौकुमार्यमुदारता ।**
**तदभावस्य दोषत्वात्स्वीकृता अर्थगा गुणाः ॥ १४ ॥**

ओजः साभिप्रायत्वरूपम् । प्रसादोऽर्थवैमल्यम् । माधुर्यमुक्तिवैचित्र्यम् । सौकुमार्यमपारुष्यम् । उदारता अग्राम्यत्वम् । एषां पञ्चानामप्यर्थगुणानां यथाक्रममपुष्टार्थाधिकपदानवीकृतामङ्गलरूपाश्लीलग्राम्याणां निराकरणेनैवाङ्गीकारः । स्पष्टान्युदाहरणानि ।

---

सौकुमार्यौजसोर्ग्रहणम् । ओजोविपर्यासः सौकुमार्यम् । तच्च दीर्घसमासराहित्येन परुषवर्णानां त्यागेन च भवति । एवं च सुकुमारमार्गाभेदस्य माधुर्यसौकुमार्ययोरन्तःपात इति भावः ॥ इदानीमोजःप्रभृतीनां दशविधार्थगुणानां दोषाभावादिभिरङ्गीकारमगुणत्वं च यथायथमुपपादयति—**ओज इति** । **तदभावस्य** ओजःप्रभृतिगुणपञ्चकाभावस्य । अस्माभिर्दोषाभावत्वेनाङ्गीकृता इति भावः । 'अर्थप्रौढिरोजः' इति प्राचीनलक्षणम् । सा च पञ्चविधा—'पदार्थे वाक्यरचना वाक्यार्थे च पदाभिधा । प्रौढिर्व्याससमासौ च साभिप्रायत्वमस्य च ॥' तत्राद्यप्रकारचतुष्टयस्य वैचित्र्यमात्रप्रयोजकत्वेन गुणत्वाभावमग्रे दर्शयिष्यति । चरमप्रकारं तु दोषाभावत्वेनैव संगृह्णाति । **ओज इति** । साभिप्रायत्वमर्थस्य प्रकृतोपकाराभिप्रायेण प्रयुक्तत्वम् । वैमल्यं विमलाप्रायस्याप्रयोजकपदार्थस्यानिवेशः । उक्तिवैचित्र्यं विचित्रयोक्त्या तस्यैवार्थस्य पुनः समर्पणम् । अपारुष्यममङ्गलार्थस्योक्तिवैचित्र्यवशात्सुकुमारप्रायत्वेन प्रतिपादनम् । रिरंसया पामरप्रयुज्यमानत्वं तद्भिन्नलक्षणमग्राम्यत्वम् । **स्पष्टानीति** । क्रमेण यथा—'कुर्यां हरस्यापि पिनाकपाणेः' इति । विपर्ययस्तु 'सदाशिवं नौमि पिनाकपाणिम्' इति । 'सुवर्णा कन्यका रूपयौवनारम्भशालिनी ।' अत्र यौवननवीनत्वप्रतिपादकमारम्भपदमधिकम् । विपर्ययस्तु 'अपास्तो हस्तो मे विमलमणिकाञ्चीपदगतः ।' अत्र काञ्चीपदमित्यनेनैव नितम्बस्य बोधाद्विशेषणमप्रयोजनकम् । 'भानुः सदा युक्ततुरङ्ग एव' इत्यादि । विपर्ययस्तु

---

ञमिति । आदिपदात् 'चञ्चद्भुज—' इत्यादिग्रहणम् । श्लेषादीनां दशानामर्थगुणत्वमपि प्राचीनैरङ्गीकृतानामपि यथासंभवं दोषाभावादावन्तर्भावयति—ओज इति । तदभावस्य ओजःप्रभृतेरभावस्य । स्वीकृता । अस्माभिरिति शेषः । उपपादयति—ओज इति । साभिप्रायत्वं विशेषणानां प्रकृतोपयुक्तत्वेन वक्तुरभिप्रेतत्वम् । अर्थस्य वाक्यार्थस्य वैमल्यमनतिप्रयोजननिरर्थकपदार्थसंबन्धरूपमलराहित्यम् । उक्तेरेकार्थप्रतिपादकस्यानेकशब्दस्य वैचित्र्यं विरूपत्वम् । वाक्यार्थस्यामङ्गलाव्यञ्जकत्वमपारुष्यम् । अपुष्टार्थेति । अन्त्यस्थताप्रत्ययस्य प्रत्येकान्वयादपुष्टार्थत्वादीनामित्यर्थः । स्पष्टानीति । दोषपरिच्छेदेऽपुष्टार्थत्वादीनां पञ्चानां यान्युदाहरणानि दत्तानि तद्विपरीतानीत्यर्थः । दीप्तरसत्वं व्यक्तरसत्वम् । रसस्य प्राधान्याप्राधान्याभ्यां ध्वनिगुणीभूतव्यङ्ग्यव्यपदेशः । विचित्रता श्रोतृविस्मयजनकप्रतीतिविषयत्वम् । घटना अर्थानां मेलनं विचित्रतामात्रं न तु गुणत्वम् ।

**अर्थव्यक्तिः स्वभावोक्त्यालंकारेण तथा पुनः ।**
**रसध्वनिगुणीभूतव्यङ्ग्यानां कान्तिनामकः ॥ १५ ॥**

अङ्गीकृत इति संबन्धः । अर्थव्यक्तिर्वस्तुस्वभावस्फुटत्वम् । कान्ति-दीप्तरसत्वम् । स्पष्टे उदाहरणे ।

**श्लेषो विचित्रतामात्रमदोषः समता परम् ।**

श्लेषः क्रमकौटिल्यानुल्बणत्वोपपत्तियोगरूपघटनात्मा । तत्र क्रमः क्रियासंततिः, विदग्धचेष्टितं कौटिल्यम्, अप्रसिद्धवर्णनाविरहोऽनुल्बणत्वम्, उपपादकयुक्तिविन्यास उपपत्तिः, एषां योगः संमेलनं स एव रूपं यस्या घटनायास्तद्रूपः श्लेषो वैचित्र्यमात्रम् । अनन्यसाधारणरसोपकारित्वातिशयविरहादिति भावः । यथा—

'दृष्ट्वैकासनसंस्थिते प्रियतमे–' इत्यादि ( ११५ पृ० ) ।

अत्र[1] दर्शनादयः क्रियाः, उभयसमर्थनरूपं कौटिल्यम्, लोकसंव्यवहाररूपमनुल्बणत्वम्, 'एकासनसंस्थिते' 'पश्चादुपेत्य' 'नयने पिधाय'

---

'सदाचरति' इति 'सरसीव कीर्तिशेषं गतवति भुवि विक्रमादित्ये ।' अत्र मरणे कीर्तिशेषशब्दः । विपर्यस्तु मृतादिशब्दः । 'कामं कंदर्पचण्डालो मयि वामाक्षि ! निर्दयः । रतिमन्तिमदेहत्वात्त्वयि निर्मत्सरः किमु ॥' विपर्ययस्तु 'कन्ये कामयमानं मां न त्वं कामयसे कथम् ।' इति । कान्तिनामकः । गुण इति शेषः । क्रमेणोदाहरणे—'पृष्ठेषु शङ्खधवलच्छविषु च्छदानां राजीभिरङ्कितमलक्तकरागिणीभिः । गोरोचनाहरितबभ्रुबहिःपलाशमामोदते कुमुदमम्भसि पल्वलस्य ॥' दीप्तरसत्वं यथा—'शून्यं वासगृहं–' इत्यादि ॥ **उपपादकेति** । प्रकृतानुकूलहेतूपन्यास इत्यर्थः ॥ **वैचित्र्यमात्रमिति** । मात्रपदेन गुणत्वव्यवच्छेदः । अत्र हेतुमाह—**अनन्येति** । तादृशरसोपकारित्वातिशयश्च रसव्यञ्जकवाक्यस्य काव्यव्यपदेशयोगित्वम् ॥ **उभयस्य** ज्येष्ठाप्रीणनस्य कनिष्ठाप्रतारणस्य च समर्थनमनुष्ठानम् । यद्वा उभयोर्ज्येष्ठाकनिष्ठयोः समर्थनमनुरूपप्रीणनम् । निरुक्तश्लेषेऽस्य

---

अत्र हेतुमाह—अनन्येति । गुणनामसाधारणरसोपकारप्रयोजकत्वनियमादिति भावः । दृष्ट्वैकासनेत्युदाहरणं रसपरिच्छेदे नायिकाप्रकारकथनप्रकरणे दत्तम् । तत्रैव मया व्याख्यातम् । उभयसमर्थनं प्रियतमायाः प्रीणनमन्यस्याः प्रतारणम् । तयोः समर्थनं संघटनम् । लोकव्यवहाररूपं लोकव्यवहारप्रसिद्धरूपम् । उपपादकानि स्वाभिमतार्थसंपादकानि । अनेन निरुक्तश्लेषेण । वाच्यस्य प्रियतमाचुम्बनस्य । उपपत्तिरुपपादकयुक्तिस्तस्या ग्रहणे अनुसंधाने । व्यग्रतया । सामाजिकानामिति शेषः । विसंवादिता विजातीयत्वप्रतिभासः । हूणो म्लेच्छविशेषः । मत्तो मदिरादिभक्षणेन । तस्य मुखस्याति-

---

१. 'अत्र' इति क-पुस्तके नास्ति. २. 'निमील्य' घ.

'ईषद्वक्रितकंधरः' इति चोपपादकानि, एषां योगः । अनेन च वाच्योपपत्तिग्रहणव्यग्रतया रसास्वादो व्यवहितप्राय इत्यस्यागुणता ।

समता च प्रक्रान्तप्रकृतिप्रत्ययाविपर्यासेनार्थस्य विसंवादिताविच्छेदः । स च प्रक्रमभङ्गरूपविरह[1] एव । स्पष्टमुदाहरणम् ।

**न गुणत्वं समाधेश्च—**

समाधिश्चायोन्यन्यच्छायायोनिरूपद्विविधार्थदृष्टिरूपः । तत्रायोनिरर्थो यथा—

'सद्योमुण्डितमत्तहूणचिबुकप्रस्पर्धि नारङ्गकम् ॥'

अन्यच्छायायोनिर्यथा—

'निजनयनप्रतिबिम्बैरम्बुनि बहुशः प्रतारिता कापि ।
नीलोत्पलेऽपि विमृशति करमर्पयितुं कुसुमलावी ॥'

अत्र नीलोत्पलनयनयोरतिप्रसिद्धं सादृश्यं विच्छित्तिविशेषेण निबद्धम् । अस्य चासाधारणशोभानाधायकत्वान्न गुणत्वम्, किंतु काव्यशरीरमात्रनिर्वर्तकत्वम् ।

---

दोषत्वमेव प्रसक्तं कुतो गुणत्वमित्युपपादयति—**अनेन चेति** । निरुक्तश्लेषेण चेत्यर्थः । वाच्यस्य वाक्यार्थस्य । उपपत्तिः संभवः । यद्वा, वाच्याया उपपत्तेः कारणस्य ग्रहणं ज्ञानमत्र व्यग्रतया कष्टेन तज्जनकतया । **व्यवहितप्रायो** विलम्बेनोत्पादितः । **अस्य** श्लेषस्य । **अगुणता** गुणविरोधित्वम् । दोषत्वमिति यावत् । **स्पष्टमिति** । 'उदेति सविता ताम्रः' इत्यादि ॥ अयोनिरन्यच्छायायोनिः । अन्यस्य काव्यान्तरस्य छाया वर्णनं योनिर्यस्य सः ॥ **सद्य इति** । हूणो हूणदेशोत्पन्नो म्लेच्छः । नारङ्गकं पक्वनारङ्गकम् । अत्र हूणचिबुकनारङ्गयोः सादृश्यमनिबद्धपूर्वम् । **निजेति** । विमृशति विचारयति । कुसुमलावी मालाकारी ॥ नन्वन्यच्छायायोनेरर्थस्य निबन्धनमप्रयोजनमत आह—**अत्रेति** । अतिप्रसिद्धं काव्यान्तरैः सहस्रशो निबद्धमिति । **विच्छित्तिविशेषेण** वैचित्र्यविशेषाधायकत्वेन । तथा चार्थान्तरयोगेन प्रसिद्धमपि सादृश्यं विलक्षणवैचित्र्यं जनयतीति भावः ॥ **अस्य**

---

ताम्रत्वादिति भावः । प्रस्पर्धि तुल्यम् । नारङ्गकम् नारङ्गम् । पक्वमिति बोध्यम् । कुसुमलावी मालाकारी । विच्छित्तिविशेषेण वैचित्र्यविशेषप्रयोजकत्वेन । अस्य निरुक्तसमाधेः । काव्यशरीरस्य अर्थस्य निर्वर्तकत्वं निष्पादकत्वम् । मात्रपदेन रसस्यासाधारणशोभाव्यवच्छेदः । प्रौढिरोजः । प्रौढिश्च 'पदार्थे वाक्यरचना वाक्यार्थे च पदाभिधा । प्रौढिर्व्याससमासौ च साभिप्रायत्वमस्य च ॥' इति वामनोक्तानां पञ्चप्रकाराणामोज-

---

1. अयोनीति । अयोनिरनन्यकारणः । अवधानमात्रहेतुक इति भावः ॥
2. अर्थेति । अर्थस्य दर्शनं दृष्टिः ॥

---

[1], 'विरह' घ. '-दृष्टि-' इति नास्ति क-ख-पुस्तकयोः.

क्वचित् 'चन्द्रम्' इत्येकस्मिन्पदार्थे वक्तव्ये 'अत्रेर्नयनसमुत्थं ज्योतिः' इति वाक्यवचनम् । क्वचित् 'निदाघशीतलहिमकालोष्णसुकुमारशरीरावयवा योषित्' इति वाक्यार्थे वक्तव्ये 'वरवर्णिनी' इति पदाभिधानम् । क्वचिदेकस्य वाक्यार्थस्य किंचिद्विशेषनिवेशादनेकैर्वाक्यैरभिधानमित्येवंरूपो व्यासः । क्वचिद्बहुवाक्यप्रतिपाद्यस्यैकवाक्येनाभिधानमित्येवंरूपः समासश्च । इत्येवमादीनामन्यैरुक्तानां न गुणत्वमुचितम्, अपि तु वैचित्र्यमात्रावहत्वम् ।

**तेन नार्थगुणाः पृथक् ॥ १६ ॥**

**तेनोक्तप्रकारेण । अर्थगुणा ओजःप्रभृतयः प्रोक्ताः ॥**

इति साहित्यदर्पणे गुणविवेचनो नामाष्टमः परिच्छेदः ।

( अत्र मूलकारिकाः १६ पूर्वाभिः सह ६९४ उदाहरणानि ८ पूर्वैः सह ४९५ )

---

च समाधेश्च ॥ चतुर्विधार्थप्रौढिरूपस्यौजसो गुणत्वाभावमाह—**क्वचिदिति** । चन्द्रमिति पदस्येत्येकदेशम् ॥ **निदाघेति** । 'शीतकाले भवेदुष्णा उष्णकाले च शीतला । सुकुमारशरीरा च सा ज्ञेया वरवर्णिनी ॥' व्यासो यथा—'असौ नानाकारो भवति सुखदुःखव्यतिकरः सुखं वा दुःखं वा भवति न भवत्येव च ततः । पुनस्तस्मादूर्ध्वं भवति सुखदुःखं किमपि तत्पुनस्तस्मादूर्ध्वं भवति न च दुःखं न च सुखम् ॥' अत्र येन संसारिणा यथाविधं कर्म कृतं तदनुसारेणैव विविधत्वमाश्रितः सुखदुःखभोगः क्रियते । यदि कुतश्चिदध्यात्मसाक्षात्कारः स्यात्तदैवास्य प्रवाहस्य शान्तिरित्येव विवक्षितं वैचित्र्येणोच्यते । समासो यथा—'श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवावधारय । अर्थिनः प्रतिकूलानि परेषां न समाचरेत् ॥' अत्र परद्रव्यं न हरेत्, परदारान्न गृह्णीयात्, परापवादो न वक्तव्यः, इत्यादिवाक्यगताभिधेयस्य द्वितीयार्धेनाभिधानम् ॥ **न गुणत्वमिति** । रसव्यञ्जकवाक्यस्य काव्यव्यपदेशोपयोगित्वाभावादिति शेषः ॥ उपसंहरति—**तेनेति** । परोक्ताः । एवं दण्ड्याचार्यनिरूपितानामपि दशविधगुणानां यथासंभवं स्वोक्तगुणव्यञ्जकादावन्तर्भावो बोद्धव्यः ॥

इति श्रीरामचरणतर्कवागीशभट्टाचार्यविरचितायां साहित्यदर्पणविवृतौ गुणविवेचनो नामाष्टमः प्रकाशः ।

---

सामन्तिमं प्रकारं प्रागेव दूषितवान् । इदानीं तस्यैव प्रकारचतुष्टयं दूषयति—क्वचिदिति । अत्रेर्ब्रह्मपुत्रस्य मुनिविशेषस्य । अत्रेर्नयनाच्चन्द्र उत्पन्न इति पौराणिकी वार्ता । वरवर्णिनीपदस्य तादृशवाक्यार्थे परिभाषितवाच्यत्वादिति भावः । व्यासो यथा—'अयं नानाकारो भवति सुखदुःखव्यतिकरः—' इत्यादि । समासो यथा—'ते हिमालयमामन्त्र्य—' इत्यादि । ननु शब्दार्थशोभाधायकत्वेनैव ओजःप्रभृतीनां गुणत्वमङ्गीकरणीयमिति चेद्, न । तेषां ये दोषाभावपर्यवसन्नास्तत्राव्याप्तेः । दोषाभावस्यापकर्षप्रयोजकदोषविघटकत्वमात्रेणैवोत्कर्षाधायकत्वासंभवादलंकारेऽतिव्याप्तेः । नहि तादृशगुणालंकारजन्यशोभायां किंचिद्वैलक्षण्यमस्ति येन गुणेभ्योऽलंकाराणां व्यावृत्तिः क्रियत इति ॥" इति ।

## नवमः परिच्छेदः ।

अथोद्देशक्रमप्राप्तमलंकारनिरूपणं बहुवक्तव्यत्वेनोल्लङ्घ्य रीतिमाह—

**पदसंघटना रीतिरङ्गसंस्थाविशेषवत् ।**

**उपकर्त्री रसादीनां—**

रसादीनामर्थाच्छब्दार्थशरीरस्य काव्यस्यात्मभूतानाम् ।

**सा पुनः स्याच्चतुर्विधा ॥ १ ॥**

**वैदर्भी चाथ गौडी च पाञ्चाली लाटिका तथा ।**

सा रीतिः । तत्र—

**माधुर्यव्यञ्जकैर्वर्णै रचना ललितात्मिका ॥ २ ॥**

---

* रीतिं निरूपयितुमस्याः प्राथमिकत्वे युक्तिमाह—**अथेति** । गुणनिरूपणानन्तरमित्यर्थः । **उद्देशेति** । 'उत्कर्षहेतवः प्रोक्ता गुणालंकाररीतयः' इत्युद्देशक्रमप्राप्तकालमित्यर्थः । उल्लङ्घ्य । सूचीकटाहन्यायेन प्रथममकृत्वेत्यर्थः ॥ **पदेति** । पदानां संघटनाविशेषः । रीयते गुणानां विशेषो ज्ञायतेऽनयेति रीतिः । 'रीङ् गतौ' इत्यनेन साधुः । गत्यर्थानां ज्ञानार्थत्वात्तथा व्युत्पत्तिः । **अङ्गेति** । विलक्षणमुखावयवसंनिवेशविशेषवदित्यर्थः । ननु पदसंघटनाविशेषस्य काव्यातिरिक्तेऽपि सत्त्वादतिव्याप्तिरत आह—**उपकर्त्रीति** । स्वाश्रयव्यङ्ग्यरसादिवृत्तिगुणव्यञ्जकतया रसादीनामुत्कर्षाधायिकेत्यर्थः । एवं च गुणाभिव्यञ्जकपदविन्यासो रीतिरिति फलितम् । तदुक्तं **वामनेन**—'विशिष्टपदरचना रीतिः, विशेषो गुणात्मा' इति ॥ ननु रीतेः साक्षादेव शब्दस्योत्कर्षाधायकत्वं निरुक्तं परम्परया तु रसादीनामित्युपपन्नम्, तथापि तस्याः काव्योत्कर्षाधायकत्वमनुपपन्नमित्यत आह—**रसादीनामिति** । अर्थात्संभवबलात् । तथा च काव्यस्य शरीरात्मनोरुत्कर्षाधायकत्वेनैव काव्योत्कर्षाधायकत्वमिति भावः ॥ **वैदर्भीति** । विदर्भगौडपाञ्चाललाटदेशोद्भवैः कविभिः संमतत्वाद्यथायथं वैदर्भ्यादिसंज्ञा ॥ वैदर्भीमाह—**माधुर्येति** । ललिता

---

* मुद्रितपुस्तके तु—"उद्देशक्रमप्राप्तमलंकारनिरूपणं परित्यज्य रीतिनिरूपणे युक्तिमाह—अथेति । बहवो वक्तव्या विषया यत्र तत्त्वेन । रीतिनिरूपणस्याल्पवक्तव्यत्वेन चेति बोध्यम् । सूचीकटाहन्यायेनाल्पविषय एव प्रथमं शिष्याणां जिज्ञासेति भावः । वस्तुतस्तु रीतेर्गुणघटितत्वेनैव गुणनिरूपणानन्तरं तन्निरूपणस्योचितत्वमित्यवधेयम् । पदानां गुणाभिव्यञ्जकवर्णादीनां घटना योजना । शरीरस्य यथा शोभनाङ्गयोगस्तथेत्यर्थः । एतेन रीतेर्व्यभिचारित्वमुपपन्नम् । नीरसेषु गुणाभिव्यञ्जकशब्दार्थसत्त्वे तस्य रीतित्ववारणायाह—उपकर्त्रीति । उत्कर्षजननी काव्यात्मभूतानामिति विशेषणमनुक्रमपि प्रापयति । विदर्भादिदेशविशेषभवकविसंप्रदायाभिमतत्वेन वैदर्भ्यादिसंज्ञा । माधुर्यव्यञ्जका वर्णा माधुर्यगुणनिरूपणे दर्शिताः । एकसमस्ता अल्पसमासयुक्ता वा

**अवृत्तिरल्पवृत्तिर्वा वैदर्भी रीतिरिष्यते ।**

यथा—'अनङ्गमङ्गलभुवः—' इत्यादि ( ४५२ पृ० )

रुद्रटस्त्वाह—

'असमस्तैकसमस्ता युक्ता दशभिर्गुणैश्च वैदर्भी ।
वर्गद्वितीयबहुला स्वल्पप्राणाक्षरा च सुविधेया ॥'

अत्र दशगुणास्तन्मतोक्ताः श्लेषादयः ।

**ओजःप्रकाशकैर्वर्णैर्बन्ध आडम्बरः पुनः ॥ ३ ॥**

**समासबहुला गौडी—**

यथा—'चञ्चद्भुज—' इत्यादि ( ३०२ पृ० )

पुरुषोत्तमस्त्वाह—

'बहुतरसमासयुक्ता सुमहाप्राणाक्षरा च गौडीया ।
रीतिरनुप्रासमहिमपरतन्त्रा स्तोकवाक्या च ॥'

**वर्णैः शेषैः पुनर्द्वयोः ।**

---

सुकुमाराक्षरप्राया सुकुमारार्था च ॥ **एकसमस्ता** अल्पसमासयुक्ता । स्वल्पो लघुः प्राण उच्चारणप्रयत्नो येषां तादृशान्यक्षराणि यत्र ॥ ननु गुणानां त्रित्वमेवोक्तम्, कथं दशत्वमत आह—**तन्मतोक्ता इति** । रुद्रटमतोक्ता इत्यर्थः ॥ गौडीमाह —**ओज इति** । अत एवाडम्बर उद्भटः । उद्भटार्थप्रतिपादकतयापि उद्भटः ॥ **सुमहान**तिगुरुः प्राणो येषां तादृशान्यक्षराणि यत्र । **अनुप्रासो** वक्ष्यमाणशब्दालंकारविशेषः तस्य महिमा आधिक्यं तत्परतन्त्रा तदधीना । **स्तोकवाक्या** शिथिलबन्धा । अत एव दण्ड्याचार्यैरुक्तम्—'अल्पप्राणाक्षरोत्तरम् । शिथिलं मालतीमाला लोलालिकलिता यथा । अनुप्रासधिया गौडैस्तदिष्टम्' इति ॥ पाञ्चालीमाह—**वर्णैरिति** । वैदर्भीगौड्योर्व्यञ्जकवर्णव्यतिरिक्तैर्वर्णैरित्यर्थः । समस्तानि

---

स्वल्पप्राणाक्षरोत्तरा लघुप्रयत्नोच्चार्यवर्णबहुला । तदुदाहरणं यथा—'गाहन्तां महिषाः—' इति । गौडीमाह—ओज इति । ओजःप्रकाशका वर्णा ओजोगुणनिरूपणे उक्ताः । आडम्बर उद्भटः । स्तोकवाक्या शिथिलबन्धा । तदुक्तं दण्ड्याचार्येण—'अल्पप्राणाक्षरोत्तरम् । शिथिलम्' इति । 'अनुप्रासधिया गौडैस्तदिष्टम्' इति च । तच्छिथिलम् । यथा—'दोर्दण्डाञ्चित—' इत्यादि । सानुप्रासशिथिलबन्धा गौडी यथा—'विभाति माला लोलाक्ष्या लोलालिकुलसंकुला । यदीयामोदमादाय यूनां माद्यति मानसम् ॥' पाञ्चालीं

---

1. वैदर्भीति । एतां पुनरेवं कवयः स्तुवन्ति—'सति वक्तरि सत्यर्थे सति शब्दानुशासने । अस्ति तन्न विना येन परिस्रवति वाङ्मधु ॥' तद्रीत्यात्मकं वस्त्वित्यर्थः ॥

2. रुद्रटग्रन्थे त्वेवं लक्षणं न दृश्यते ॥

समस्तपञ्चषपदो बन्धः पाञ्चालिका मता ॥ ४ ॥

द्वयोर्वैदर्भीगौड्योः ।

यथा—

'मधुरया मधुबोधितमाधवीमधुसमृद्धिसमेधितमेधया ।
मधुकराङ्गनया मुहुरुन्मदध्वनिभृता निभृताक्षरमुज्जगे ॥'

भोजस्त्वाह—

'समस्तपञ्चषपदामोजःकान्तिसमन्विताम् ।
मधुरां सुकुमारां च पाञ्चालीं कवयो विदुः ॥'

यथा—

लाटी तु रीतिर्वैदर्भीपाञ्चाल्योरन्तरे स्थिता ।

'अयमुदयति मुद्राभञ्जनः पद्मिनीना-
मुदयगिरिवनालीबालमन्दारपुष्पम् ।

पञ्चषाणि पदानि यत्र । **पाञ्चालिकेति** । रीतिरित्यनुषज्यते । अत्र स्वार्थे कप्रत्ययः, न तु टिकण् । तथा सतीप्रत्ययः स्यात् ॥ **मधुरयेति** । मधुरशब्दयोगेनोपपन्नम् । यद्वा मनोरमयेत्यर्थः । मधुना बोधिता प्रकाशिता या माधवी वासन्ती तस्या मधुसमृद्ध्या मकरन्दसंदोहेन समेधिता सम्यग्वर्धिता मेधा स्वरमाधुर्यं यस्यास्तया । मधुकराङ्गनया भ्रमर्या । उन्मदध्वनिभृता उत्कृष्टहर्षजनकशब्दकारिण्या । निभृताक्षरमव्यक्तवर्णं यथा स्यात्तथा उज्जगे । उत्कृष्टगानं कृतमित्यर्थः । अत्र माधुर्यव्यञ्जकद्वित्रवर्णसत्त्वेऽपि विभिन्नवर्णप्राचुर्येणैव पाञ्चालीव्यवहारः ॥ कान्तिरौज्ज्वल्यम् । **मधुरां** माधुर्यव्यञ्जकवर्णघटिताम् । **सुकुमारां** कोमलवर्णबहुलाम् ॥ लाटीमाह—**लाटीति** । वैदर्भीमिश्रिता पाञ्चालीत्यर्थः ॥ **अयमिति** । विशेषणानां योग्यताबलादयमित्यनेन सूर्यो लभ्यते । मुद्राभञ्जनः

रीतिमाह—वर्णैरिति । शेषैर्वैदर्भीगौडीव्यञ्जकवर्णाभिन्नैः । **मधुरयेति** । मनोरमयेत्यर्थः । मधुना वसन्तेन बोधिता प्रकाशिता प्रफुल्लपुष्पीकृता या माधवी वासन्ती तस्या मधुसमृद्ध्या मकरन्दास्वादातिशयेन समेधिता संवर्धिता मेधा मधुरस्वरवैचक्षण्यं यस्यास्तया । निभृताक्षरं कलस्वरम् । समस्तानि पञ्च षड् वा पदानि यत्र ताम् । ओजःकान्तिमाधुर्यसौकुमार्यगुणयुक्तामित्यर्थः । यथा मम—'दत्तोदात्तविपन्नलोकरभसो विद्रावितासद्गुणो नानायज्ञविधिप्रमोदितबुधः कारुण्यधाराञ्चितः । सद्विद्यानिकरप्रचारनिपुणो दारिद्र्यचिन्तामणिः श्रीमानेष मनोजचारुकरणो राजा जयत्यञ्जसा ॥' लाटीमाह—**लाटीति** । अन्तरे मध्ये तदुभयलक्षणाक्रान्तेत्यर्थः । **अयमिति** । पुरोवर्तिरव्युदयवर्णनमिदम् । अयं पुरोवर्ती

१. 'अन्तरा' घ.

विरहविधुरकोकद्वन्द्वबन्धुर्विभिन्द-
न्कुपितकपिकपोलक्रोडताम्रस्तमांसि ॥'

कश्चिदाह—

'मृदुपदसमाससुभगा युक्तैर्वर्णैर्न चातिभूयिष्ठा ।
उचितविशेषणपूरितवस्तुन्यासा भवेल्लाटी ॥'

अन्ये त्वाहुः—

'गौडी डम्बरबद्धा स्याद्वैदर्भी ललितक्रमा ।
पाञ्चाली मिश्रभावेन लाटी तु मृदुभिः पदैः ॥'

**क्वचित्तु वक्त्राद्यौचित्यादन्यथा रचनादयः ॥ ५ ॥**

वक्त्रादीत्यादिशब्दाद्वाच्यप्रबन्धौ । रचनादीत्यादिशब्दाद्वृत्तिवर्णौ । तत्र वक्त्रौचित्याद्यथा—

'मन्थायस्तार्णवाम्भःप्लुतकुहरचलन्मन्दरध्वानधीरः
कोणाघातेषु गर्जत्प्रलयघनघटान्योन्यसंघट्टचण्डः ।

---

संकोचनाशकः । प्रकाशक इत्यर्थः । बालमचिरविकचं मन्दारपुष्पं पारिभद्रपुष्पमिव । विरहेण विधुरं विकलं यत्कोकद्वन्द्वं चक्रवाकमिथुनं तस्य बन्धुः संगसंपादकत्वेन मित्रम् । रात्रौ हि चक्रवाकमिथुनं मिथो वियुक्तं दिवा संयुक्तं भवतीति प्रसिद्धिः । सूर्यमालोक्य दिनज्ञानेन मिथो युक्तं भवतीति मित्रता । विभिन्दन्निति तमांसीत्यनेनान्वितम् ॥ **उचितैर्विशेषणैः** पूरितस्य परिपुष्टात्मनो वस्तुविशेषस्य न्यासो यत्र सा । **डम्बरबद्धा** उद्भटरचना । **ललितक्रमा** मधुरा । **मिश्रभावेन** गौडीवैदर्भ्योः संपर्केण ॥ इदानीं वक्त्राद्यौचित्येन प्रकृतरीतिविपरीता अपि रचनादयः कर्तव्या इत्यत आह—**क्वचित्त्विति** । तत्र वक्त्राद्यौचित्यव्यञ्जका वक्तृवाच्ययोरौचित्यमुद्भटत्वं सुकुमारत्वं वा । बन्धस्यौचित्यं स्वभावः । तथा च वक्तृवाच्ययोरौद्धत्यसौकुमार्याभ्यां प्रबन्धस्य स्वभावेन वा उपक्रान्तायाः प्रकृते रसव्यञ्जिकाया वा रीतेर्विपरीता रचनादयः कार्या इति भावः ॥ **मन्थेति** । दुन्दु-

---

कश्चिदुदयति उदयगिरिशिखरमारोहति । मुद्रा संकोचः । बालं नवोत्फुल्लम् । रात्रौ चक्रवाकमिथुनं वियुक्तं सूर्योदये संगमो(तं) भवतीति प्रसिद्धिः । कोकद्वन्द्वस्य चक्रवाकमिथुनस्य बन्धुरुक्तोपकारकारी । कपीनां गण्डः स्वभावत एव रक्तः कोपे त्वत्यन्तरक्त इति सूचयितुं कुपितेति कपिविशेषणम् । ताम्रो रक्तः । अत्र योग्यत्वादयमिति सामान्यनिर्देशे विशेषलाभ इत्यन्ये । उचितेति । उचितैः प्रकृतोपयुक्तैर्विशेषणैः पूरितो व्याप्तः वस्तुन्यासो वर्णनीयनिर्देशो यत्र सा । एतन्मते 'मधुरयेति' पाञ्चाल्यां यदुदाहृतं तदेतदुदाहरणं बोध्यम् । ललितक्रमा मधुरबन्धा । मिश्रभावेन गौडीवैदर्भ्योः संपर्केण । यदा वैदर्भीरीतिप्रक्रान्तप्रबन्धमध्ये क्रुद्धो वक्ता उद्धतो वाच्यो वर्ण्यते तदा प्रक्रान्तरीतिं परित्यज्य गौडी रीतिरनुसरणीया । एवमन्यत्रापीत्याह—क्वचित्त्विति । तथा वक्त्राद्युचिता रचना रीतिः । मन्थायस्तेति श्लोको नाटकप्रकरणे उक्तः । नाटकेऽपीति यदुक्तं

कृष्णाक्रोधाग्रदूतः कुरुकुलनिधनोत्पातनिर्घातवातः
केनास्मत्सिंहनादप्रतिरसितसखो दुन्दुभिस्ताडितोऽयम् ॥'

अत्र वाच्यक्रोधाद्यभिव्यञ्जकत्वेऽपि भीमसेनवक्तृत्वेनोद्धता रचनादयः। वाच्यौचित्याद्यथोदाहृते 'मूर्धव्याधूयमान—' इत्यादौ (४३१ पृ.) प्रबन्धौचित्याद्यथा नाटकादौ रौद्रेऽप्यभिनयप्रतिकूलत्वेन न दीर्घसमासादयः। एवमाख्यायिकायां शृङ्गारेऽपि न मसृणवर्णादयः। कथायां रौद्रेऽपि नात्यन्तमुद्धताः। एवमन्यदपि ज्ञेयम् ॥

इति साहित्यदर्पणे रीतिविवेचनो नाम नवमः परिच्छेदः।

(अत्र मूलकारिकाः= ५ पूर्वाभिः सह ३९९ उदाहरणानि=३ पूर्वैः सह ४९८)

---

भिर्दुन्दुभिशब्दः केन ताडितः। ताडनेन जनितविशेषाणां शब्दविशेष्यकत्वेनैवोपपत्तेरिति कश्चित्। वस्तुतस्तु ताडितः सशब्दः कृतः। सविशेषणे हीति न्यायेन विशेषणानां शब्दमात्रगामित्वमिति ब्रूमः। कीदृशः। मन्थेन मन्थनेन आयस्तं क्षुभितं यदर्णवस्याम्भस्तेन प्लुतं व्याप्तं कुहरं यस्य तादृशस्य चलतो मन्दरस्य ध्वानवद्धीरो गम्भीरः। तथा कोणाघातेषु वादनदण्डाभिघातेषु सत्सु। गर्जन्त्याः प्रलयकालीनघटाया अन्योन्यसंघट्टजन्यशब्द इव चण्डः। ईदृशं चण्डत्वं कोणाघातकाल इत्यर्थः। 'कोणो वादनदण्डः स्यात्' इति कोषः। यद्वा 'ढक्काशतसहस्राणि भेरीशतशतानि च। एकदा यत्र ताड्यन्ते कोणाघातः स उच्यते ॥' इति परिभाषायां यत्रेत्यस्य यन्निमित्तमित्यर्थकत्वेन एकदा ढक्कादिताडनजन्याः शब्दाः कोणाघाताः तेषु मध्ये गर्जदित्यादिवच्चण्ड इत्यर्थः। कृष्णा द्रौपदी तत्क्रोधप्रवर्तकत्वात्तदग्रदूतः। कुरुशतनिधनस्योत्पातसूचकः। 'यदान्तरीक्षे बलवान्मारुतो मारुताहतः। पतत्यधः स निर्घातो जायते वायुसंभवः ॥' इत्युक्तलक्षणो यो निर्घातस्तत्सहितो वात इत्यर्थः। **वाच्यस्य** वाक्यार्थस्य। क्रोधादित्यादिना उत्साहजुगुप्सयोर्ग्रहणम्। **भीमसेनवक्तृत्वेनेति**। भीमस्य क्रोधनत्वादौद्धत्यं प्रसिद्धमिति भावः। अत्र तादृशशब्दस्य घोरत्वेनोद्भटत्वाद्वाच्योद्भटत्वमपि संभवतीति शुद्धमुदाहरणमूह्यम्। वक्तुरनुद्धतत्वे वीरेऽपि सुकुमाररचना यथा—'भो लङ्केश्वर—' इत्यादि (१८९ पृ.)। अत्राक्रोधनत्वेनानुद्धतः श्रीरामो वक्ता। **अभिनयप्रतिकूलत्वेन** अभिनेयार्थप्रतिपत्तिविलम्बकत्वेन मसृणा माधुर्यव्यञ्जकाः। **नात्यन्तमुद्धता इति**। वर्णादयः ॥

इति श्रीरामचरणतर्कवागीशभट्टाचार्यविरचितायां साहित्यदर्पणविवृतौ रीतिविवेको नाम नवमः प्रकाशः।

---

तद्व्यभिचरत्यपि। यथा अनर्घराघवे—'उद्दामद्युमणिद्युतिव्यतिकरप्रक्रीडदर्कोपलज्वालाजालजटालजाङ्गलतटीनिष्कूजकोयष्टयः। मौगोष्मप्लवमानसूरकिरणक्रूरप्रकाशा इशोरायुष्कर्म समापयन्ति धिगमूर्मध्येऽह्नि शून्या दिशः ॥' इति ॥" इति व्याख्यान्तरं वर्तते.

## दशमः परिच्छेदः ।

अथावसरप्राप्तानलंकारानाह—

**शब्दार्थयोरस्थिरा[1] ये धर्माः शोभातिशायिनः ।**
**रसादीनुपकुर्वन्तोऽलंकारास्तेऽङ्गदादिवत् ॥ १ ॥**

यथा अङ्गदादयः शरीरशोभातिशायिनः शरीरिणमुपकुर्वन्ति, तथानुप्रासोपमादयः शब्दार्थशोभातिशायिनो रसादेरुपकारकाः । अलंकारा अस्थिरा इति नैषां गुणवदावश्यकी स्थितिः । शब्दार्थयोः प्रथमं शब्दस्य

---

अलंकारनिरूपणे संगतिमाह—**अथेति** । रीतिनिरूपणानन्तरमित्यर्थः । **अवसरप्राप्तान्** अवसरसंगत्या निरूपयितुं युक्तानित्यर्थः । प्रतिबन्धकीभूतशिष्यजिज्ञासानिवृत्तिर**वसरः** । [१]प्रकृते सूचीकटाहन्यायेन प्रथमं रीतिनिरूपणजिज्ञासा जाता अस्यैवोद्देशक्रमप्राप्तालंकारनिरूपणप्रतिबन्धिका तन्निवृत्तावलंकारनिरूपणजिज्ञासा जायत इति भावः । अलंकाराणां सामान्यलक्षणमाह— **शब्दार्थयोरिति** । अस्थिरा काव्येष्व[२]नियतवृत्तयः । काव्यत्वाव्यापका इति यावत् । [३]एतेन परम्परया शब्दार्थधर्माणां गुणानां वारणम् । रीतेरस्थिरत्वात्तद्वारणायाह—**शोभातिशायिन इति** । शोभातिशयजनका इत्यर्थः । रीतेः शब्दशोभाजनकत्वेऽपि गुणालंकारवच्छोभातिशयजनकत्वं नास्तीति भावः । नीरसशब्दार्थयोरनुप्रासोपमादीनां [४]वारणायाह—**रसादीनिति** । उपकुर्वन्त उत्कर्षयन्तः । एवं च यत्र[५] रसो नास्ति तत्रोक्तिवैचित्र्यमात्रप्रयोजकेष्वनुप्रासोपमादिष्वलंकारपदप्रयोगो गौण एव । विवृणोति—**यथेति** । शरीरिणमात्मान[६]म् । [७]अनुप्रासादेः शब्दालंकारत्वादुपमादेरर्थालंकारत्वादुभयोः पृथगुपादानम् । गुणेष्वतिव्याप्तिं वारयति-**नैषामिति** । एषामलंकाराणाम् । शब्दालंकारनिरूपणस्य प्राथमिकत्वे हेतुं दर्शयंस्तत्रापि पुनरुक्तवदाभासनिरूपणस्य प्राथमिकत्वे हेतुमाह—**शब्दार्थयोरिति** । [९]वक्तव्येषु निरूपणयोग्येषु ।

---

1. **अलंकारा इति** । अलंक्रियतेऽनेनेति करणव्युत्पत्त्यालंकारशब्दः शब्दार्थालंकारबोधकः । साहित्यशास्त्रापरपर्यायोऽलंकारशब्दस्तु भावसाधनः । इह जयरामभट्टा-

---

१. 'प्रकृते—' इत्यादिः '—भावः' इत्यन्तः पाठः पुस्तकान्तरे नास्ति. २. 'अनियताः' इति मुद्रितपाठः. ३. 'एतेन निरलंकारमपि काव्यमस्तीति' सूचितम् । धर्मा अनुप्रासोपमादयः शोभातिशायिनः वैचित्र्यातिशयप्रयोजकाः । तेन वाच्यत्वप्रमेयत्वादीनामतद्रूपाणां नालंकारत्वम् ।' इति मुद्रितः पाठः. ४. 'अलंकारत्वव्यवच्छेदाय' इति मुद्रितः पाठः. ५. ''तरङ्गनिकरोन्नीततरुणीगणसंकुला । सरिद्वहति कल्लोलन्नाहव्याहततीरभूः ।' इत्यादौ रसानुसंधानरहिते यद्रूपकानुप्रासयोरलंकारव्यवहारः स गौण एवेति मन्तव्यम् । लौकिकदृष्टान्तमाह—अङ्गदादिवदिति । आदिनाकुण्डलादिपरिग्रहः ।' इति मुद्रितः पाठः ६. 'उपकुर्वन्ति उत्कृष्टतया ज्ञापयन्ति' इत्यधिकं मुद्रितपुस्तके. ७. गुणानामपि काव्यशोभाजनकत्वेनालंकारत्वप्रसक्तौ तद्वारणाय 'अस्थिरा इत्युक्तं तदर्थमाह' इति मुद्रितः पाठः. ८. 'गुणानां माधुर्यौजःप्रसादानां व्यञ्जकाभावेऽपि स्वस्वरसव्यञ्जकशब्दार्थयोः परम्परयावश्यं सद्भाव इति भावः । वस्तुतस्तु रीतीनामपि गुणव्यञ्जकवर्णादिघटितत्वादस्थिरत्वेनालंकारत्वप्रसक्तौ तद्वारणाय शोभातिशायिन इत्यस्य विलक्षणवैचित्र्याधायकत्वमिति तदर्थकरणम् । अवश्यं तेनैव गुणानामपि वारणसंभवादस्थिरा इति विशेषणमनुपयुक्तमित्यवधेयम् ।' इत्यधिकं मुद्रितपुस्तके. ९. मुद्रितपुस्तके 'वक्तव्येषु—' इत्यादिः '—द्रष्टव्यः' इत्यन्तः पाठो नास्ति, किंतु तत्र 'शब्दप्रत्यक्षानन्त-

यथा वा—

'गाङ्गमम्बु सितमम्बु यामुनं कज्जलाभमुभयत्र मज्जतः ।
राजहंस ! तव सैव शुभ्रता चीयते न च न चापचीयते ॥'

पूर्वत्रातिरक्तहृदयसंपर्कात्प्राप्तवदपि गुणगौरशब्दवाच्यस्य नायकस्य रक्तत्वं न निष्पन्नम् । उत्तरत्राप्रस्तुतप्रशंसायां विद्यमानायामपि गङ्गायमुनापेक्षया प्रकृतस्य हंसस्य गङ्गायमुनयोः संपर्केऽपि न तद्रूपता । अत्र च[1] गुणाग्रहणरूपविच्छित्तिविशेषाश्रयाद्विशेषोक्तेर्भेदः । वर्णान्तरोत्पत्त्यभावाच्च विषमात् ।

**संलक्षितस्तु सूक्ष्मोऽर्थ आकारेणेङ्गितेन वा ।**
**कयापि सूच्यते भङ्ग्या यत्र सूक्ष्मं तदुच्यते ॥ ९१ ॥**

सूक्ष्मः स्थूलमतिभिरसंलक्ष्यः । अत्राकारेण यथा—

'वक्त्रस्यन्दिस्वेदबिन्दुप्रबन्धैर्दृष्ट्वा भिन्नं कुङ्कुमं कापि कण्ठे ।
पुंस्त्वं तन्व्या व्यञ्जयन्ती वयस्या स्मित्वा पाणौ खड्गलेखां लिलेख ॥'

---

गुणगौर यशःशुक्ल । शुक्लगुणस्य रक्तगुणयोगेन रक्तत्वं सुतरां जायते । अत्र श्लेषादनुरागरक्तिम्नोरेकत्वाध्यासादेतदुपपद्यते । अत्र प्राकरणिकेन नायकेन प्राकरणिकस्य नायिकाहृदयस्य गुणाग्रहणम् ॥ प्राकरणिकेनाप्राकरणिकगुणाग्रहणेऽप्ययमलंकार इत्याह—**राजहंसेति** । चीयते गङ्गाजलसंपर्केणोपचीयते । अपचीयते यमुनाजलसंपर्केणोपक्षीयते ॥ **प्राप्तवदपि** भवितुं योग्यमपि । ननूत्तरत्राप्रस्तुतप्रशंसया स्वसंबन्धिगुणग्राही जन एव प्रकृतो न तु राजहंस इति प्रकृतस्याप्रकृतगुणाग्रहणोदाहरणं कथमेतत्संगच्छतामत आह—**उत्तरत्रेति** । प्रस्तुतस्य प्रतिपाद्यत्वेन प्राकरणिकस्य गङ्गायमुनाम्ब्वपेक्षया प्रतिपाद्यत्वेन राजहंसस्यापेक्षिकं प्रकृतत्वमिति भावः । नन्वत्र कारणसत्त्वे कार्यानुत्पत्तिरस्तीति विशेषोक्त्यलंकार एवायमित्यत आह—**अत्र चेति** । विच्छित्तिविशेषाश्रयाद् वैचित्र्यविशेषसंबन्धात् । कारणसत्त्वे कार्यानुत्पत्तिरूपवैचित्र्यादुक्तवैचित्र्यं विलक्षणं तत्प्रयोजकत्वादलंकारस्य वैलक्षण्यमिति भावः । ननु नायिकाहृदयादिरूपकारणगुणस्य विरुद्धस्तत्संपृक्तनायकादिरूपकार्यगुण इति विषमालंकार एवायं संपर्कस्य कार्यत्वात्संपृक्तस्यापि कार्यत्वमुपचर्यत इत्यभिप्रायेणाह—**वर्णान्तरेति** । कार्यस्य कारणगुणविरुद्धगुणोत्पत्तावेव विषमस्य विषयः । प्रकृते तु तदभावान्न तद्विषय इति भावः । **विषमादिति** । भेद इत्यन्वयः ॥ सूक्ष्मालंकारमाह—**संलक्षित** इति । आकारो धर्मः । इङ्गितं क्रियाभङ्गी विदग्धचेष्टा ॥ मतेः स्थूलत्वं गहनार्थाग्राहित्वम् ॥ **वक्त्रस्यन्दीति** । कापि वयस्या तन्व्या नायिकायाः कण्ठे वक्त्रस्यन्दिभिः स्वेदबिन्दु-

---

1. 'तु' क-ख.

अत्र कयाचित्कुङ्कुमभेदेन संलक्षितं कस्याश्चित्पुरुषायितं पाणौ पुरुषचिह्नखड्गलेखालिखनेन सूचितम्। इङ्गितेन यथा—

संकेतकालमनसं विटं ज्ञात्वा विदग्धया।
हसन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम्॥

अत्र विटस्य भ्रूविक्षेपादिना लक्षितः संकेतकालाभिप्रायो रजनीकालभाविना पद्मनिमीलनेन प्रकाशितः।

**[1]व्याजोक्तिर्गोपनं व्याजादुद्भिन्नस्यापि वस्तुनः।**

---

संतानैर्भिन्नं रेखारूपकृतविभागं कुङ्कुमं दृष्ट्वा तस्याः पुंस्त्वं सुरते पुरुषायितं व्यञ्जयन्ती ज्ञापयन्ती स्मित्वा तस्या एव पाणौ खड्गलेखां लिलेख। पुरुषायिताया एव वक्रगलितखेदानां गण्डे गलनं संभवति न तूत्तानसुप्तायाः। अतः सूक्ष्ममपि पुरुषायितं लक्षितं पुरुषधर्मस्य खड्गलेखायाः सस्मितलिखनेन प्रकाशितम्। खड्गलेखा खड्गाकृतिचिह्नविशेषः पुंसां हस्ते तिष्ठति। कुङ्कुमभेदोऽत्राकारः। एतदेवाह—**अत्र कयाचिदिति॥ संकेतेति**। संकेतकालजिज्ञासुमित्यर्थः। विटं धूर्तमुपनायकं ज्ञात्वा भ्रूविक्षेपादितदिङ्गितादिना ज्ञात्वेति बोध्यम्। हसता हर्षसूचकचेष्टावता नेत्रेणार्पितं ज्ञापितमाकूतमभिप्रायो यस्य यत्र वा तद्यथा स्यात्तथा निमीलितमित्यर्थः। **संकेतकालाभिप्रायः** संकेतकालजिज्ञासा॥ व्याजोक्त्यलंकारमाह—**व्याजोक्तिरिति**। व्याजात्कारणान्तरोद्भावनच्छलाद् उद्भिन्नस्य कार्यादिना व्यक्ती-

---

1. व्याजोक्तिरिति। एतत्प्रसङ्गेन कुवलयानन्दे। गूढोक्तिर्विवृतोक्तिर्युक्तिर्लोकोक्तिश्छेकोक्तिर्वक्रोक्तिरिति षडलंकृतयो निरूपिता यथा—'गूढोक्तिरन्योद्देश्यं चेद्यदन्यं प्रति कथ्यते। वृषापेहि परक्षेत्रादायाति क्षेत्ररक्षकः॥' 'विवृतोक्तिः श्लिष्टगुप्तं कविनाविष्कृतं यदि। वृषापेहि परक्षेत्रादिति वक्ति ससूचनम्॥' 'युक्तिः परातिसंधानं क्रियया मर्मगुप्तये। त्वामालिखन्ती दृष्ट्वान्यं धनुः पौष्पं करेऽलिखत्॥' 'लोकप्रवादानुकृतिर्लोकोक्तिरिति भण्यते। सहस्व कतिचिन्मासान्मीलयित्वा विलोचने॥' 'छेकोक्तिर्यदि लोकोक्तेः स्यादर्थान्तरगर्भिता। भुजङ्ग एव जानीते भुजङ्गचरणं सखे॥' 'वक्रोक्तिः श्लेषकाकुभ्यामपरार्थप्रकल्पनम्। मुञ्च मानं दिनं प्राप्तं नेह नन्दी हरान्तिके॥' इति। अत्र गूढोक्तेर्नालंकारत्वमिष्यते, तस्या ध्वनिविषयत्वात्। विवृतोक्तेरपि नालंकारत्वं गुणीभूतव्यङ्ग्यमात्रत्वाद् वाच्यरसाद्युत्कर्षकत्वाभावाच्च। युक्तिरपि व्याजोक्तिरेव, उक्तिपदस्य व्यापारमात्रपरत्वात् तेन नालंकारान्तरत्वमिष्टम्। लोकोक्तिच्छेकोक्ती अपि नालंकारौ उपस्कारकत्वाभावात्। वक्रोक्तिस्तु शब्दालंकारे (४८३ पृ.) उक्तैव॥

यथा—

'शैलेन्द्रप्रतिपाद्यमानगिरिजाहस्तोपगूढोल्लस-
द्रोमाञ्चादिविसंस्थुलाखिलविधिव्यासङ्गभङ्गाकुलः।
आः शैत्यं तुहिनाचलस्य करयोरित्यूचिवान्ससितं
शैलान्तःपुरमातृमण्डलगणैर्दृष्टोऽवताद्वः शिवः॥'[1]

नेयं प्रथमापह्नुतिः, अपह्नवकारिणो विषयस्यानभिधानात्। द्वितीयापह्नुतेर्भेदश्च तत्प्रस्तावे दर्शितः।

**स्वभावोक्तिर्दुरूहार्थस्वक्रियारूपवर्णनम्॥ ९२॥**

दुरूहयोः कविमात्रवेद्ययोरर्थस्य डिम्भादेः स्वयोस्तदेकाश्रययोश्चेष्टास्वरूपयोः। यथा मम—

'लाङ्गूलेनाभिहत्य क्षितितलमसकृद्दारयन्नग्रपद्भ्या-
मात्मन्येवावलीय द्रुतमथ गगनं प्रोत्पतन्विक्रमेण।

---

भूतस्य॥ **शैलेन्द्रेति**। शैलेन्द्रेण हिमालयेन प्रतिपाद्यमानाया दीयमानाया गिरिजायाः पार्वत्या हस्तस्योपगूढेन संपर्केणोल्लसन् यो रोमाञ्चादिः पुलककम्पादिस्तेन विसंस्थुलोऽयथाभूतो योऽखिलविधिव्यासङ्गः समस्तवैदिकक्रियासंबन्धस्तस्य भङ्गेनाकुलो व्याकुलः। शैलस्य हिमालयस्यान्तःपुरवर्तिनो(र्तीनि)ये (यानि) मातृकामण्डला (नि) मण्डलीभूता मातरस्तेषां गणैः॥ अत्र रोमाञ्चादिना कार्येणोद्भिन्नः स्वकीयोद्भावविशेषः शैत्यरूपकारणान्तरोद्भावनेन शिवेन गोपितः। ननु प्रकृतगोपनेनाप्रकृतोद्भावनमपह्नुतिरुक्ता तदनयोः को भेद इत्यत आह—**नेयमिति**। प्रथमा कृतनिषेधपूर्वकप्रकृतस्थापनरूपा। **विषयस्य** अप्रकृतारोपविषयस्य। अत्र तु गोपनाकारिभिन्नेन कार्यादिना विषयो व्यज्यत एव, नत्वभिधीयत इति भावः। द्वितीयापह्नुतेः, 'गोपनीयं कमप्यर्थं द्योतयित्वा कथंचन। यदि श्लेषेणान्यथा वान्यथयेत्साप्यपह्नुतिः॥' इत्युक्तलक्षणायास्तत्प्रस्तावे दर्शित इति। तत्र गोपनकृता गोपनीयं प्रथममभिधीयते, अत्र तु न तथेति भावः॥ स्वभावोक्त्यलंकारमाह—**स्वभावोक्तिरिति**। व्याचष्टे—**दुरूहयोरिति**। डिम्भादेरित्यादिपदेनाकृत्रिमक्रियारूपवन्मात्रपशुपक्ष्यादिपरिग्रहः। 'मात्रं कार्त्स्न्येऽवधारणे' इत्यमरः। स्वपदं स्वकीयपरतया—व्याचष्टे—**स्वयोरिति**। तस्याप्यवधारणपरतामाह—**तदेकाश्रययोरिति**। डिम्भादिमात्रगतयोरित्यर्थः। कारिकास्थे क्रियारूपपदे व्याचष्टे—**चेष्टास्वरूपयोरिति**। स्वरूपं वर्णसंस्थानादि। तत्र डिम्भस्य क्रियावर्णनं यथा—'करारविन्देन पदारविन्दं मुखारविन्दे विनिवेशयन्तम्। वटस्य पत्रस्य पुटे शयानं बालं मुकुन्दं मनसा स्मरामि॥' आदिपदग्राह्यस्य तरक्षोः क्रियावर्णनमाह—**लाङ्गूलेनेति**। क्षितितलमिति काकाक्षिन्यायेन पूर्वापरयोर-

---

1. **शैलेन्द्रेति**। अत्र रोमाञ्चादिनोद्भिन्नो रतिभावः शैत्यप्रक्षेपणेनापलपितः॥

स्फूर्जद्धुंकारघोषः प्रतिदिशमखिलान्द्रावयन्नेव जन्तू-
न्कोपाविष्टः प्रविष्टः प्रतिवनमरुणोच्छूनचक्षुस्तरक्षुः ॥'

**अद्भुतस्य पदार्थस्य भूतस्याथ भविष्यतः ।**
**यत्प्रत्यक्षायमाणत्वं तद्भाविकमुदाहृतम् ॥ ९३ ॥**

यथा—

'मुनिर्जयति योगीन्द्रो महात्मा कुम्भसंभवः ।
येनैकचुलुके दृष्टौ दिव्यौ तौ मत्स्यकच्छपौ ॥'

यथा वा—

'आसीदञ्जनमत्रेति पश्यामि तव लोचने ।
भाविभूषणसंभारां साक्षात्कुर्वे तवाकृतिम् ॥'

---

न्वेति । आत्मनि स्वदेहे अवलीय लीनो भूत्वा । अतिवामनीभूयेति यावत् । प्रतिवनं यावद्वनम् । तरक्षुर्व्याघ्रविशेषः । ईदृशक्रिया अकृत्रिमा रुष्टतरक्षोरेव ॥ वर्णवर्णनं दण्ड्याचार्येणोदाहृतं यथा—'तुण्डैराताम्रकुटिलैः पक्षैर्हरितकोमलैः । त्रिवर्णराजिभिः कण्ठैरेते मञ्जुगिरः शुकाः ॥' संस्थानवर्णनं यथा—'पश्चात्पुच्छं वहति विपुलं तच्च धूनोत्यजस्रं दीर्घग्रीवः स भवति खुरास्तस्य चत्वार एव । शष्पाण्यत्ति प्रकिरति शकृत्पिण्डकानाम्रमात्रानास्तामेतद्व्रजति स पशुर्दूरमेह्येहि यामः ॥' अत्र विपुलपुच्छखुरचतुष्टयदीर्घग्रीवा अश्वस्यैव संस्थानानि ॥ भाविकालंकारमाह—**अद्भुतस्येति** । प्रत्यक्षायमाणत्वं वर्णनाविशेषवशेन प्रत्यक्षवद्भासमानत्वं भावो वक्तुरभिप्रायः । स च वर्णनीयगोचर (वति) स्वरूपस्तद्योगाद्भाविकं तद्योगश्च व्यञ्जकत्वेन ॥ अद्भुतस्य प्रत्यक्षायमाणत्वे भाविकमाह—**मुनिरिति** । दिव्यौ विष्णोरवतारौ तौ प्रसिद्धौ । अत्र चुलुकीकृतसमुद्रे दृश्यमानदिव्यमत्स्यकच्छपरूपमद्भुतं वस्तु वर्णनाविशेषवशेन मुनिसंनिकृष्टश्रोतृणां प्रत्यक्षवद्भासते ॥ भूतभाविनोः प्रत्यक्षायमाणत्वे भाविकमाह—**आसीदिति** । अत्रानयोः । अत्र पूर्वार्धे भूतस्य परार्धे भाविनः प्रत्यक्षायमाणत्वं नयनशोभाविशेषवशेनाञ्जनं सौन्दर्यातिशयवशीकृतस्य धनिनः पत्युरादरातिशयेन भूषणसंभारमनुमाय सख्या तथाभिहितं यथा भूतभाविनावप्यञ्जनभूषणसंभारौ संनिकृष्टश्रोतॄणां प्रत्यक्षवद् भासेते । केचित्तु 'यौवनोद्भेदादञ्जनं विनापि चक्षुषि तच्छोभा भूषणाभावेऽपि वपुषि तच्छोभारम्भः' इति व्याचक्षते । तन्न । तादृशार्थस्य व्यञ्जकाभावेनाप्रतीतेः । भूतभाविनोरञ्जनभूषणयोः प्रत्यक्षायमाणत्वे तत्कृतचारुत्व एव तात्पर्यात् । ननु संनिकृष्टपदार्थस्य वर्णनातः प्रत्यक्षायमाणत्वं तदा भवति यदि प्रसन्नार्थाः शब्दाः प्रयुज्यन्ते । एवं सति प्रसा-

---

1. भाविकमिति । कविगतो भाव आशयः श्रोतरि प्रतिबिम्बत्वेनास्तीति, भावो भावना वा पुनः पुनश्चेतसि निवेशनं सोऽत्रास्तीति व्युत्पत्तिः ॥

न चायं प्रसादाख्यो गुणः । भूतभाविनोः प्रत्यक्षायमाणत्वे तस्याहेतुत्वात् । न चाद्भुतो रसः । विस्मयं प्रत्यस्य हेतुत्वात् । न चातिशयोक्तिरलंकारः । अध्यवसायाभावात् । न च भ्रान्तिमान् । भूतभाविनोर्भूतभावितयैव प्रकाशनात् । न च स्वभावोक्तिः । तस्य लौकिकवस्तुगतसूक्ष्मधर्मस्वभावस्यैव यथावद्वर्णनं स्वरूपम् । अस्य तु वस्तुनः प्रत्यक्षायमाणत्वरूपो विच्छित्तिविशेषोऽस्तीति । यदि पुनर्वस्तुनः क्वचित्स्वभावोक्तावप्यस्या विच्छित्तेः संभवस्तदोभयोः संकरः ।

'अनातपत्रोऽप्ययमत्र लक्ष्यते
सितातपत्रैरिव सर्वतो वृतः ।
अचामरोऽप्येष सदैव वीज्यते
विलासबालव्यजनेन कोऽप्ययम् ॥'

अत्र प्रत्यक्षायमाणस्यैव वर्णनान्नायमलंकारः । वर्णनावशेन प्रत्यक्षायमाणत्वस्यास्य सरूपत्वात् । यत्पुनरप्रत्यक्षायमाणस्यापि वर्णने प्रत्यक्षायमाणत्वं तत्रायमलंकारो भवितुं युक्तः । यथोदाहृते 'आसीदञ्जनम्—' इत्यादौ ।

---

दाख्यो गुण एवायमित्यभिप्रायेणाशङ्कते—**न चायं प्रसादाख्यो गुण इति** । भूतभाविनोरित्यद्भुतस्याप्युपलक्षणम् । **तस्य** प्रसादगुणस्य । अद्भुतस्य प्रत्यक्षायमाणत्वपक्षे शङ्कते—**न चाद्भुतो रस इति** । **विस्मयं** चमत्कारम् । चमत्कारायोगे रसरूपत्वासंभवादिति भावः । नन्वत्र वर्णनीयगतः कोऽप्यतिशयः प्रतीयत इत्यतिशयोक्तिरेवायमित्याशङ्कते—**न चातिशयोक्तिरिति** । अध्यवसायाभावाद् अभेदारोपाभावात् । ननु भूतभाविपदार्थाभाववति तत्प्रकारकप्रतीतिरत्रास्तीति भ्रान्तिमानेवायमित्याशङ्कते—**न च भ्रान्तिमानिति** । भूतभाविनोर्वर्तमानत्वेन भानेऽपि भ्रमः संभवतीति तद्वारणाय भूतभावितयैवेत्युक्तम् । **प्रकाशनात्तद्वति** विषयीकरणात् । **तस्य** स्वभावोक्त्यलंकारस्य । **सूक्ष्मेति** । कवितृमात्रवेद्य इत्यर्थः । **यथावद्वर्णनं** संभावनातिक्रमेण वर्णनम् । **अस्य** भाविकालंकारस्य तु । **विच्छित्तिविशेषोऽस्तीति**शब्दो हेतौ ॥ **अनातपत्रोऽपीति** । अत्र सदनुमानवशेन वक्तुः प्रत्यक्षायमाणयोः सितातपत्रचामरयोर्वर्णनम्, न तु वर्णनाविशेषवशेन श्रोतॄणां तयोः प्रत्यक्षायमाणत्वमिति नास्ति भाविकावसर इति भावः । **अस्य** भाविकालंकारस्य । नन्वेवमासीदञ्जनमित्यादावपि सदनुमानवशेन प्रत्यक्षायमाणत्ववर्णनमिति नास्य विषय इत्यत आह—**यत्पुनरिति** । यद् यदा धर्मिसंनिकर्षादिरूपहेत्वभावदशायामित्यर्थः । **वर्णने इति** । वर्णने वाग्वैचित्र्यविशेषे सतीत्यर्थः । **तत्रायमिति** । तत्राप्ययमित्यर्थः । न चातपत्रोऽपीत्यादावप्युक्तरीत्या भाविकप्रसक्तिरिति

लोकातिशयसंपत्तिवर्णनोदात्तमुच्यते[1] ।
यद्वापि प्रस्तुतस्याङ्गं महतां चरितं भवेत् ॥ ९४ ॥

क्रमेणोदाहरणम्—
'अधःकृताम्भोधरमण्डलानां यस्यां शशाङ्कोपलकुट्टिमानाम् ।
ज्योत्स्नानिपातात्क्षरतां पयोभिः केलीवनं वृद्धिमुरीकरोति ॥'
'नाभिप्रभिन्नाम्बुरुहासनेन संस्तूयमानः प्रथमेन धात्रा ।
अमुं युगान्तोचितयोगनिद्रः संहृत्य लोकान्पुरुषोऽधिशेते ॥'

रसभावौ तदाभासौ भावस्य प्रशमस्तथा ।
गुणीभूतत्वमायान्ति यदालंकृतयस्तदा ॥ ९५ ॥
रसवत्प्रेय ऊर्जस्वि समाहितमिति क्रमात् ।

---

वाच्यम् । श्रोतॄणां धर्मिसंनिकर्षाभावेन प्रत्यक्षायमाणत्वाभावात्तस्यापि प्रकृतोपयोगित्वेन विवक्षणीयत्वात् ॥ उदात्तालंकारमाह—**लोकेति** । लोकानतिशेतेऽतिक्रामति या संपत्तिर्धनसमृद्धिस्तस्या वर्णना व्यञ्जनया ज्ञापनम् । अन्यविधमुदात्तालंकारमाह—**यद्वेति** । महतां प्रस्तुतसंबन्धिमहताम् । चरितं महत्त्वप्रतिपादकसाधर्म्यम् । प्रस्तुतमहत्त्वव्यञ्जकप्रस्तुतमहत्त्वसंबन्धिचरितमुदात्तमित्यर्थः । **अधःकृतेति** । यस्यां नगर्याम् उरीकरोति स्वीकरोतीति । प्राप्नोतीति यावत् । अत्र पौराणां समृद्ध्यतिशयो व्यङ्ग्यः ॥ **नाभीति** । नाभेः प्रभिन्नमुत्पन्नमम्बुरुहमासनं यस्य तेन । अमुं समुद्रम् । अत्र प्रस्तुतसमुद्रस्य महत्त्वव्यञ्जकं सर्वलोकसंहारकस्य हरेश्चरितम् ॥ रसवदाद्यलंकारचतुष्टयमाह—**रसभावाविति** । गुणीभूतत्वं रसान्तरादीनामुत्कर्षाधायकत्वेनाङ्गत्वम् । रसस्येतराङ्गत्वे रसवत् । भावस्येतराङ्गत्वे प्रेयः । आभासयोरितराङ्गत्वे ऊर्जस्वि । भावप्रशमस्येतराङ्गत्वे समाहितमित्यर्थः । 'न भावहीनोऽस्ति रसः—' इत्युक्तदिशा रसव्यभिचारिभावयोरव्यभिचारेणालंकार्यालंकारभावासंभवात्तयोरङ्गा-

---

1. उदात्तमिति । अतोऽग्रे कुवलयानन्देऽत्युक्तिर्निरुक्तिः प्रतिषेधो विधिरिति चत्वारोऽलंकारा यथा—'अत्युक्तिरद्भुतातथ्यशौर्यौदार्यादिवर्णनम् । त्वयि दातरि राजेन्द्र ! याचकाः कल्पशाखिनः ॥' 'निरुक्तिर्योगतो नाम्नामन्यार्थत्वप्रकल्पनम् । ईदृशैश्चरितैर्जाने सत्यं दोषाकरो भवान् ॥' 'प्रतिषेधः प्रसिद्धस्य निषेधस्यानुकीर्तनम् । न द्यूतमेतत्कितव ! क्रीडनं निशितैः शरैः ॥' 'सिद्धस्यैव विधानं यत्तदाहुर्विध्यलंकृतिम् । पञ्चमोदञ्चने काले कोकिलः कोकिलो भवेत् ॥' इति । अत्र अत्युक्तिरुदात्तालंकारे प्रविशति, तत्र असंबन्धे संबन्धातिशयोक्तिरनुप्राणिका ॥ निरुक्तिः श्लेषविशेष एव ॥ सिद्धस्यैव विधानं विधिरलंकारः । यथात्र द्वितीयकोकिलपदं ध्वनिमाधुरीं लक्षयद् हृदयावर्जनं व्यनक्ति । तदेतद् ध्वनिना गतार्थम् । क्वचिद् गुणीभूतव्यङ्ग्येन वा । एवं सिद्धस्य निषेधानुकीर्तनमपि पर्यालोचनीयम् ॥

तदाभासौ रसाभासो भावाभासश्च । तत्र रसयोगाद्रसवदलंकारो यथा—'अयं स रसनोत्कर्षी–' इत्यादि [ २३९ पृ. ]। अत्र शृङ्गारः करुणस्याङ्गम् । एवमन्यत्रापि । प्रकृष्टप्रियत्वात्प्रेयः । यथा मम—

'आमीलितालसविवर्तिततारकाक्षीं
मत्कण्ठबन्धनदरश्लथबाहुवल्लीम् ।
प्रस्वेदवारिकणिकाचितगण्डबिम्बां
संस्मृत्य तामनिशमेति न शान्तिमन्तः ॥'

अत्र संभोगशृङ्गारः स्मरणाख्यभावस्याङ्गम् । स च विप्रलम्भस्य । ऊर्जो बलम्, अनौचित्यप्रवृत्तौ तदत्रास्तीत्यूर्जस्वि । यथा—

'वनेऽखिलकलासक्ताः परिहृत्य निजस्त्रियः ।
त्वद्वैरिवनितावृन्दे पुलिन्दाः कुर्वते रतिम् ॥'

अत्र शृङ्गाराभासो राजविषयरतिभावस्याङ्गम् । एवं भावाभासोऽपि । समाहितं परिहारः । यथा—

'अविरलकरवालकम्पनैर्भ्रुकुटीतर्जनगर्जनैर्मुहुः ।
ददृशे तव वैरिणां मदः स गतः क्वापि तवेक्षणे क्षणात् ॥'

अत्र मदाख्यभावस्य प्रशमो राजविषयरतिभावस्याङ्गम् ।

**भावस्य चोदये संधौ मिश्रत्वे च तदाख्यकाः ॥ ९६ ॥**

---

ङ्गिभावेनैतदलंकारप्रसङ्ग इति ध्येयम् ॥ **एवमन्यत्रापीति** । वीरादेः शृङ्गाराद्यङ्गत्वेऽप्युदाहरणान्यूह्यानीत्यर्थः । करुणस्य भावाद्यङ्गत्वे उदाहरणं गुणीभूतव्यङ्ग्यप्रकरणे 'मानोन्नतां प्रणयिनीं–' इत्यादि स्वयमेवोक्तम् ॥ **आमीलितेति** । अलसेन रसावेशजनितालस्येन विवर्तितं स्थिरीकृतं तारकं यस्य तादृशमक्षि यस्यास्ताम् । मत्कण्ठबन्धने दरश्लथा ईषच्छिथिला बाहुवल्लिर्यस्यास्ताम् । **पुलिन्दाः** किरातविशेषाः । अत्र परोढाविषयत्वाच्छृङ्गाराभासः ॥ **एवं भावाभासोऽपीति** । भावाभासस्याङ्गत्वेऽपीत्यर्थः । एतदुदाहरणं यथा—'बन्दीकृत्य नृप ! द्विषां मृगदृशस्ताः पश्यतां प्रेयसां श्लिष्यन्ति प्रणमन्ति लान्ति परितश्चुम्बन्ति ते सैनिकाः । अस्माकं सुकृतैर्दृशोर्निपतितस्यौचित्यवारांनिधे ! विध्वस्ता विपदोऽखिलास्तदिति तैः प्रत्यर्थिभिः स्तूयसे ॥' अत्र राजविषयरतिभावस्योत्तरार्धद्योत्यो भावः शत्रुविषयत्वादाभासरूपोऽङ्गम् ॥ **अविरलेति** । तवेक्षणे त्वत्कर्मदर्शने सतीत्यर्थः ॥ भावोदयादिनामकालंकारत्रयमाह—**भावस्य चेति** । चकाराद् गुणीभूतत्वमायातीत्यनुव-

---

१. 'अनिशमिति' मुद्रितपुस्तके. २. 'भावोदयादीनां' इति मुद्रिते.

तदाख्यका भावोदयभावसंधिभावशबलनामानोऽलंकाराः । क्रमेणोदाहरणम्—

'मधुपानप्रवृत्तास्ते सुहृद्भिः सह वैरिणः ।
श्रुत्वा कुतोऽपि त्वन्नाम लेभिरे विषमां दशाम् ॥'

अत्र त्रासोदयो राजविषयरतिभावस्याङ्गम् ।

'जन्मान्तरीणरमणस्याङ्गसङ्गसमुत्सुका ।
सलज्जा चान्तिके सख्याः पातु नः पार्वती सदा ॥'

अत्रौत्सुक्यलज्जयोश्च संधिर्देवताविषयरतिभावस्याङ्गम् ।

---

1. भावोदयेति । भावस्योदय उद्गमावस्था, संधिर्द्वयोर्विरुद्धयोः स्पर्धित्वेनोपनिबन्धः, शबलता बहूनां पूर्वोपमर्देन निबन्ध इति ॥ इतोऽधस्तात्कुवलयानन्दे प्रत्यक्षमनुमानमुपमानं शब्दोऽर्थापत्तिरनुपलब्धिः संभव ऐतिह्यमित्यष्टौ प्रमाणालंकाराः ॥ तत्र प्रत्यक्षम्—'क्रान्तकान्तवदनप्रतिबिम्बे भग्नबालसहकारसुगन्धौ । स्वादुनि प्रणदितालिनि शीते निर्ववार मधुनीन्द्रियवर्गः ॥' अत्रेन्द्रियाणां तृप्त्या तज्जन्यं प्रत्यक्षमलंकारः । अनुमानम्—'विलीयमानैर्विहगैर्निमीलद्भिश्च पङ्कजैः । उन्मीलद्भिश्च कुमुदैर्गतोऽस्तं ज्ञायते रविः ॥' रविरस्तगमनवान् तादृशकालसंबन्धित्वात्, इत्यनुमानप्रयोगः । उपमानम्—'तां रोहिणीं विजानीहि ज्योतिषामत्र मण्डले । यस्तन्वि ! तारकान्यासः शकटाकारमाश्रितः ॥' तां रोहिणीं विजानीहीत्यतिदेशवाक्यार्थज्ञानमुपमानम् । शब्दः—'विवृण्वता दोषमपि च्युतात्मना त्वयैकमीशं प्रति साधु भाषितम् । यमामनन्त्यात्मभुवोऽपि कारणं कथं स लक्ष्यप्रभवो भविष्यति ॥' अत्र शिवो ब्रह्मणोऽपि हेतुरित्यत्र श्रुतिरूपं शब्दप्रमाणमुपन्यस्तम् । श्रुतयस्तु । 'अचिन्त्यमव्यक्तमनन्तरूपं शिवं प्रशान्तममृतं ब्रह्मयोनिम् । तमादिमध्यान्तविहीनमेकं विभुं चिदानन्दमरूपमद्भुतम् ॥' इत्येवमादयः । भगवन्तं मनुमुपहसन्ती 'बलात्कुरुत पापानि सन्तु तान्यकृतानि वः । सर्वान् बलकृतानर्थानकृतान्मनुरब्रवीत् ॥' इति नास्तिकोक्तिरपीह द्रष्टव्या । अर्थापत्तिः—'निर्णेतुं शक्यमस्तीति मध्यं तव नितम्बिनि । अन्यथा नोपपद्येत पयोधरभरस्थितिः ॥' अनुपलब्धिः—'स्फुटमसदवलग्नं तन्वि ! निश्चिन्वते ते तदनुपलभमानास्तर्कयन्तोऽपि लोकाः । कुचगिरिवरयुग्मं यद्विनाधारमास्ते तदिह मकरकेतोरिन्द्रजालं प्रतीमः ॥' संभवः—'ये नाम केचिदिह नः प्रथयन्त्यवज्ञां जानन्ति ते किमपि तान्प्रति नैष यत्नः । उत्पत्स्यतेऽस्ति मम कोऽपि समानधर्मा कालो ह्ययं निरवधिर्विपुला च पृथ्वी ॥' ऐतिह्यम्—'कल्याणी बत गाथेयं लौकिकी प्रतिभाति मे । एति जीवन्तमानन्दो नरं वर्षशतादपि ॥' अत्र प्रमाणेषु प्रथममेकं चार्वाकाः, द्वयं वैशेषिकाः, त्रयं ( शब्देन ) सांख्याः पातञ्जलाश्च, चतुष्कं नैयायिकाः, पञ्चकं प्राभाकराः, षट्कं भाट्टा वैदान्तिकाश्च, सर्वमैतिह्यान्तं पौराणिकाश्च मन्यन्ते । एतेषां स्वरूपाण्याकरतो ज्ञेयानीति ॥

'पश्येत्कश्चिच्चल चपल ! रे ! का त्वराहं कुमारी
हस्तालम्बं वितर हहहा व्युत्क्रमः क्वासि यासि ।
इत्थं पृथ्वीपरिवृढ ! भवद्विद्विषोऽरण्यवृत्तेः
कन्या कंचित्फलकिसलयान्याददानाभिधत्ते ॥'

अत्र शङ्कासूयाधृतिस्मृतिश्रमदैन्यविबोधौत्सुक्यानां शबलता राजविषयरतिभावस्याङ्गम् । इह केचिदाहुः—'वाच्यवाचकरूपालंकरणमुखेन रसाद्युपकारका एवालंकाराः । रसादयस्तु वाच्यवाचकाभ्यामुपकार्या एवेति न तेषामलंकारता भवितुं युक्ता' इति । अन्ये तु—'रसाद्युपकारमात्रेणेहालंकृतिव्यपदेशो भाक्तश्चिरंतनप्रसिद्ध्याङ्गीकार्य एव' इति । अपरे च—'रसाद्युपकारमात्रेणालंकारत्वं मुख्यतो रूपकादौ तु वाच्याद्युपधानम्, अजागलस्तनन्यायेन' इति । अभियुक्तास्तु—'स्वव्यञ्जकवाच्यवाचकाद्युपकृतैरङ्गभूतै रसादिभिरङ्गिनो रसादेर्वाच्यवाचकोपस्कारद्वारेणोपकुर्वद्भिरलंकृतिव्यपदेशो लभ्यते । समासोक्तौ तु नायिकादिव्यवहारमात्रस्यैवालंकृतिता, नत्वास्वादस्य, तस्योक्तरीतिविरहात्' इति मन्यन्ते । अत एव ध्वनिकारेणोक्तम्—

'प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गं तु रसादयः ।
काव्ये तस्मिन्नलंकारो रसादिरिति मे मतिः ॥'

---

र्तते । अत्रायातीति सप्तम्यन्तमवगन्तव्यम् योग्यत्वात् ॥ **पश्येदिति** । चल इतोपसर । श्रमभरेण किंचिन्निद्रायिता झटिति चेतनां प्राप्याह—**व्युत्क्रम इति** । वैपरीत्यमित्यर्थः ॥ इदानीं रसवदादीनामलंकारत्वमस्वीकुर्वतां केषांचिन्मतमाह—**इह केचिदिति** । वाच्यवाचकरूपालंकरणमुखेन शब्दार्थस्वरूपशोभाजननद्वारेण इह रसवदादावलंकृतिव्यपदेशोऽलंकारपदप्रयोगो **भाक्तो** गौणः । **चिरंतनप्रसिद्ध्या** प्राचीनमतेन । **वाच्याद्युपधानं** वाच्यवाचकालंकरणम् । **अजागलस्तनन्यायेनेति** । अजागलस्तनो यथा दुग्धानुपयोगी तथा प्रकृतानुपयोगीत्यर्थः । **स्वव्यञ्जकेति** । स्वमङ्गभूतं रसादि तदव्यञ्जकाभ्यामेव वाच्यवाचकाभ्यामुपकृतैर्न तु प्रधानीभूतरसादिव्यञ्जकाभ्याम् । प्रत्युत स्वव्यञ्जकशब्दार्थघटितत्वेन तयोरुपकारका एवाङ्गरसादयो न तूपकार्याः । एतेन रसादयस्तु वाच्यवाचकाभ्यामुपकार्या एवेति यद्दूषणमुक्तं तन्निरस्तम् । नन्वत्र गुणप्रधानभावेनालंकारालंकार्यभाव उपपद्यतां समासोक्तौ तु व्यवहारसमारोपजन्यास्वादस्यालंकारत्वस्वीकारेऽलंकार्याभावात्कथं स उपपद्यत इत्यत आह—**समासोक्तौ त्विति** । व्यवहारमात्रस्य प्रस्तुते वस्तुन्यप्रस्तुतसाधर्म्यारोपमात्रस्य, न तु तज्जन्यास्वादस्य । उक्तरीतिविरहात् वाच्यवाचकालंकारद्वारेण रसाद्युपकारकत्वस्याभावात् ॥ **प्रधान इति** । अन्यत्र रसादौ

यदि च रसाद्युपकारमात्रेणालंकृतित्वं तदा वाचकादिष्वपि तथा प्रसज्येत। एवं च यच्च कैश्चिदुक्तम्—'रसादीनामङ्गित्वे रसवदाद्यलंकारः। अङ्गत्वे तु द्वितीयोदात्तालंकारः' इति, तदपि परास्तम्।

**यद्येत एवालंकाराः परस्परविमिश्रिताः।**
**तदा पृथगलंकारौ संसृष्टिः संकरस्तथा ॥ १७ ॥**

यथा लौकिकालंकाराणामपि परस्परमिश्रणे पृथक्चारुत्वेन पृथगलंकारत्वं तथोक्तरूपाणां काव्यालंकाराणामपि परस्परमिश्रत्वे संसृष्टिसंकराख्यौ पृथगलंकारौ। तत्र—

**मिथोऽनपेक्षयैतेषां स्थितिः [1]संसृष्टिरुच्यते।**

एतेषां शब्दार्थालंकाराणाम्। यथा—

'देवः पायादपायान्नः स्मेरेन्दीवरलोचनः।
संसारध्वान्तविध्वंसहंसः कंसनिषूदनः ॥'

अत्र पायादपायादिति यमकम्, संसारेत्यादौ चानुप्रास इति शब्दालंकारयोः संसृष्टिः। द्वितीये पादे उपमा, द्वितीयार्धे च रूपकमित्यर्थालंकारयोः संसृष्टिः। एवमुभयोः स्थितत्वाच्छब्दार्थालंकारसंसृष्टिः।

---

वाक्यार्थे वा ॥ रसाद्युपकारकत्वमात्रेणालंकारत्वं मुख्यत इति प्रागुक्तमपरेषां मतं दूषयति—**यदीति**। **एवं चेति**। उक्तरीतिविरहादित्यर्थः ॥ प्रत्येकमलंकारानुक्त्वा तेषां मेलके संसृष्टिसंकरालंकारावाह—**यद्येत इति**। एते उक्ता यमकोपमादयः परस्परविमिश्रिता एकस्मिन्पद्ये गद्ये वा स्थिताः ॥ तयोः सामान्यलक्षणमुक्त्वा विशेषलक्षणमाह—**मिथ इति**। परस्परव्यपेक्षाविरहेणेत्यर्थः। स्थितिरेकस्मिन्पद्ये गद्ये वा शब्दालंकाराणामर्थालंकाराणामुभयेषां च परस्परानपेक्षया स्थित्या त्रिविधा संसृष्टिः। आद्या यथा—'चारुचान्द्रमसं भीरु! बिम्बं पश्येदमम्बरे। मन्मनो मन्मथाक्रान्तं निर्दयं हन्तुमुद्यतम् ॥' अत्र प्रथमार्धे उपमा, द्वितीयार्धेऽनुप्रासः, तृतीयपादे यमकम्। द्वितीया यथा—'द्विषद्भ्यस्त्रायतां देवः फुल्लेन्दीवरलोचनः। भवान्धकारसंक्षोभरविः केशिनिषूदनः ॥' अत्र प्रथमार्धे उपमा, द्वितीयार्धे रूपकम्। उभयसंसृष्टिर्द्विविधा—शुद्धा, संसृष्टिमिश्रा च। आद्या यथा—'त्वयि वीर! परं विराजते दमयन्तीकिलकिञ्चितं किल। तरुणीस्तन एव दीप्यते मणिहारावलिरामणीयकम् ॥' अत्र यमकानुप्रासाभ्यां शब्दालंकाराभ्यां सह प्रतिवस्तूपमाया अर्थालंकारस्य संसृष्टिः ॥ एकस्मिन्नेव पद्ये चतुर्विधां संसृष्टिमुदाहरति—**देव इति**। हंसः सूर्यः ॥ **एवमिति**। शब्दालंकारयोरर्थालंकारयोश्च स्वजातीयत्वेनान्तरङ्गतया

---

1. **संसृष्टिरिति**। तिलतण्डुलन्यायेन स्फुटावगम्यभेदालंकारमिश्रणे संसृष्टिरिति। सैषा शब्दालंकारगतत्वेनार्थालंकारगतत्वेनोभयालंकारगतत्वेन च त्रिधा भिद्यते ॥

अङ्गाङ्गित्वेऽलंकृतीनां तद्वदेकाश्रयस्थितौ ।
संदिग्धत्वे च भवति [1]संकरस्त्रिविधः पुनः ॥ ९८ ॥

संसृष्टीभूय वैचित्र्यविशेषं जनयित्वा संसृष्टित्वेनाप्यतिरिक्तवैचित्र्यजनकत्वमिति भावः ॥ अङ्गाङ्गित्वे इति । गुणप्रधानभावे इत्यर्थः । एकाश्रयस्थितौ एकस्मि-

1. संकर इति । नीरक्षीरन्यायेनास्फुटभेदालंकारमिश्रणे संकरः । स एषोऽङ्गाङ्गिभावेन संदेहेनैकाश्रयानुप्रवेशेन च त्रिविधः ॥

अथैकहेलयात्र स्फूर्त्यर्थमुपमादयोऽलंकाराः संख्यायन्ते, नवीनोद्भाविता अपि ते यथायथं निवेश्यन्ते—

( १ ) उपमा । पूर्णोपमा–श्रौती=तद्धितगा, समासगा, वाक्यगा ३ । पूर्णोपमा–आर्थी=तद्धितगा, समासगा, वाक्यगा ३ । एवं षोढा । उदा०–'सौरभ–' 'मधुरः–' ॥ लुप्तोपमा–श्रौती=समासगा, वाक्यगा २ । लुप्तोपमा–आर्थी=तद्धितगा, समासगा, वाक्यगा ३ । एवं पञ्चधा । उदा०–'मुखमिन्दु—' । सेयं लुप्तोपमा=आधारकर्मणोः क्यचि २, क्यङि १, कर्मकर्त्रोर्णमुलि २, । एवं पुनः पञ्चधा । ५ उदा० 'अन्तःपुरीयसि—' । तदेवं धर्मलोपे ५+५=१० दशधा । 'उपमानानुपादाने'–इति कारिकाक्रमेणैव उपमानलोपे २ वाचकलोपे २ धर्मोपमानलोपे २ धर्मवाचकलोपे २ उपमेयलोपे १ धर्मोपमेयलोपे १ धर्मवाचकोपमानलोपे १ । संकलने २१ एकविंशतिधा लुप्तोपमा षड्भिः पूर्णोपमाभिः २१+६=२७ सप्तविंशतिधा ॥

प्रकाशे तु लुप्तैवं विभज्यते—श्रौत्यार्थीति धर्मलुप्ताः पञ्च, उपमानलुप्ते द्वे, वा (वाचका) दिलुप्ताः षट्, ( एवमेकलुप्तास्त्रयोदश ), द्विलुप्ताः पञ्च, त्रिलुप्ता एकेत्येकोनविंशतिर्लुप्ता यथायथं पूर्वत्रान्तर्भूता एव ॥

कुवलयानन्दे पुनरप्पदीक्षितैः 'वर्ण्योपमानधर्माणामुपमावाचकस्य च । एकद्वित्र्यनुपादानैर्भिन्ना लुप्तोपमाष्टधा ॥' इति कारिकया या वाचकोपमानलुप्ता निरवाचि सा तु नात्रान्तर्भवति । तदुदाहरणं 'काकतालीयम्' इत्यत्र समासार्थोपमा । ( छाया. ५१५ पृ. )

( २ ) अनन्वयः । उदा०–'राजीवमिव–' । अयं पूर्णो लुप्तश्च, पूर्णः षोढा ( छा. ५१९ पृ. ) ॥

( ३ ) उपमेयोपमा । उदा०–'कमलेव मतिः–' ॥

( ४ ) स्मरणम् । उदा०–'अरविन्दमिदं–' ॥

( ५ ) रूपकम् । साङ्ग–रूपकम्=समस्तवस्तुविषयम्, एकदेशविवर्ति २ । उदा०–'रावणा–' । 'लावण्य–' । निरङ्ग–रूपकम्=केवलं ( शुद्धम् ), मालारूपम् २ । उदा०–'दासे–' । 'निर्माण–' । परम्परितरूपकम्=श्लिष्टं केवलम्, श्लिष्टं मालारूपम् २ । उदा०–'आहवे–' । 'पद्मोदयो–' । अश्लिष्टं केवलम्, अश्लिष्टं मालारूपम् २ । उदा०–'पान्तु–' । 'मनोजराजस्य–' । एवं प्रकाशादावप्यष्ट ८ भेदाः ॥

कुवलयानन्दे तु अनुभयन्यूनाधिकरूपाभिस्तिसृभिरुक्तिभिर्विषयिणोऽभेदताद्रूप्याभ्यां विषयस्य रञ्जनादनुभयाभेदादिघटितानि षड् रूपकाणि ६ । पूर्वैः सह चतुर्दश ८+६=

१४ (छा. ५२७ पृ.)-यदि सरस्वतीकण्ठाभरणीयं रूपकरूपकं संकल्पते तर्हि पञ्चदश १५ रूपकाणि स्युः। एतदुदाहरणं तु—'मुखपङ्कज-रङ्गेऽस्मिन् भ्रूलता-नर्तकी तव। लीलानाट्या-मृतं वृथैं सखि! यूनां निषिञ्चति॥' इति दिक्॥

(६) परिणामः। उदा०-'स्मितेनो—'। प्रकाशादिमते त्वस्य रूपकालंकारेऽन्तर्भावः॥

(७) संदेहः। अयं शुद्धो निश्चयगर्भो निश्चयान्त इति त्रिधा। उदा०-'किं तारुण्य-'। 'अयं मार्तण्डः-'। 'किं तावत्-'॥

(८) भ्रान्तिमान्। उदा०-'मुग्धा-'॥

(९) उल्लेखः। उदा०-'प्रिय इति—'। अयमनेकधाप्यतिशयोक्तावन्तर्भवतीति प्रकाशानुयायिनः। 'कस्याप्यतिशयस्योक्तिरित्यन्वर्थविचारणात्। प्रायेणामी अलंकारा भिन्ना नातिशयोक्तितः॥'

(१०) अपह्नुतिः। इयमपह्नवपूर्वके आरोपे, आरोपपूर्वकेऽपह्नवे चेति द्विधा। उदा०-'नेदं नभोमण्डल-'। 'एतद्विभाति—'। इयं च श्लेषाश्लेषाभ्यामपि संभवति। उदा०-'काले वारिधराणा-'। 'इह पुरो-'। कुवलयानन्दे त्वियं षोढा (छा. ५३६)

(११) निश्चयः। उदा०-'वदनमिदं-'॥ अयं प्रकाशादावनुक्तः॥

(१२) उत्प्रेक्षा। इयं वाच्या प्रतीयमाना (गम्या) इति द्विधा। तत्र वाच्योत्प्रेक्षायाः—'उरुः-' इति, जात्युत्प्रेक्षा 'ज्ञाने-' इति, गुणोत्प्रेक्षा 'गङ्गाम्भसि-' इति, क्रियोत्प्रेक्षा 'मुखमेणीदृशः—' इति, द्रव्योत्प्रेक्षेति चत्वारो भेदा भावाभिमाने, 'कपोल-' इत्येवमादयस्तावन्तोऽभावाभिमाने, मिलित्वा अष्टौ ८, एते निमित्तस्य गुण-क्रियारूपत्वेन षोडश २×८=१६, तत्रापि जातिगुणक्रियाणां द्वादशभेदाः स्वरूपफल-हेतुगम्यत्वेन षट्त्रिंशत् ३+१२=३६, द्रव्यस्य तु केवलं स्वरूपोत्प्रेक्षणसंभवाच्चत्वार इति मिलित्वा चत्वारिंशत् ४+३६=४०, तत्रापि स्वरूपोत्प्रेक्षायाः षोडश भेदा उत्प्रेक्षानिमित्तस्योपादानानुपादानाभ्यां द्वात्रिंशत् ३२, द्वादशभिः फलोत्प्रेक्षाभिस्तावतीभिरेव हेतूत्प्रेक्षाभिः सह षट्पञ्चाशत् ३२+१२+१२=५६॥

प्रतीयमानोत्प्रेक्षायास्तु षोडश भेदाः फल-हेतुगम्यत्वेन द्वात्रिंशत् १६×२=३२॥

सापह्नवोत्प्रेक्षा। उदा०-'अश्रुच्छलेन-'। श्लेषहेतुगा। उदा०-'मुक्तोत्करः-'। उपमोपक्रमोत्प्रेक्षा। उदा०-'पारे जलं-'॥

अत्र—

'यदायमुपमानांशो लोकतः सिद्धिमृच्छति।
तदोपमैव येनेव-शब्दः सादृश्यवाचकः॥
यदा पुनरयं लोकादसिद्धः कविकल्पितः।
तदोत्प्रेक्षैव येनेव-शब्दः संभावनापरः॥'

इति चक्रवर्तिश्लोकावप्यनुसंधेयौ।

(१३) अतिशयोक्तिः। इयं पञ्चधा। तत्र। भेदेऽभेदः-'कथमुपरि-'। अभेदे भेदः—'अन्यदेवा-'। संबन्धेऽसंबन्धः—'अस्याः सर्गविधौ-'। असंबन्धे

संबन्धः—'यदि स्यान्मण्डले—'। कार्यकारणपौर्वापर्यव्यत्यये—'प्रागेव—'। कुवलयानन्दे त्वष्टधा (छा. ५४८ पृ.)

(१४) तुल्ययोगिता। अत्र, प्रस्तुतानां बोधनरूपैकक्रियासंबन्धे उदा०—'अनुलेपनानि—'। अप्रस्तुतानां कठोरतारूपैकगुणसंबन्धे उदा०—'तदङ्ग—'। उभयसंबन्धे उदा०—'दानं वित्ता—'॥

(१५) दीपकम्। अत्र, एकानुगमनक्रियासंबन्धे—'बलावलेपात्—'। अनेकक्रियासंबन्धे—'दूरं समागतवति—'॥

आवृत्तिदीपकम्। कारकदीपकम्। (छा. ५५३ पृ.)

(१६) प्रतिवस्तूपमा। उदा०—'धन्यासि वैदर्भि—'। इयं मालयापि—'विमल एव—'। वैधर्म्येणापि—'चकोर्य एव—'॥

(१७) दृष्टान्तः। अत्र, साधर्म्ये—'अविदितगुणापि—'। वैधर्म्ये—'त्वयि दृष्टे'॥

(१८) निदर्शना। अत्र, संभवद्वस्तुसंबन्धे—'कोऽत्र—'। असंभवद्वस्तुसंबन्धे एकवाक्यगता—'कलयति—'। अनेकवाक्यगता—'इदं किला—'। मालारूपापि—'क्षिपसि—'। अथेयं वाक्यार्थवृत्तिः, पदार्थवृत्तिः, असदर्था, सदर्थापि व्यवह्रियते (छा. ५५६. पृ.)।

(१९) व्यतिरेकः। उपमेयस्योत्कर्षहेतोरुपमानस्य निकर्षहेतोश्चोक्तावेकः, उत्कर्षहेतुमात्रस्य निकर्षहेतुमात्रस्य उभयोश्चानुक्तौ त्रय इति, पूर्वेण सह चत्वारः, एते प्रत्येकं शाब्दे आर्थे आक्षिप्ते च साम्ये द्वादश, एतेषां श्लेषाश्लेषाभ्यां द्वैविध्याच्चतुर्विंशतिभेदाः। एते उपमेयस्योपमानादाधिक्ये, न्यूनतायामप्येवमेव चतुर्विंशतिर्भेदाः, संभूय अष्टचत्वारिंशत्। आधिक्ये—'अकलङ्क—'। न्यूनत्वे—'क्षीणः क्षीणोऽ—'॥

(२०) सहोक्तिः। उदा०—'सह कुमुद—'। 'सममेव—'॥

(२१) विनोक्तिः। उदा०—'विना जलद—'। 'अनुयान्त्या—'॥

(२२) समासोक्तिः। अत्र कार्यसाम्ये—'व्याधूय—'। लिङ्गसाम्ये—'असमाप्त—'। श्लिष्टतया विशेषणसाम्ये—'विकसितमुखीं—'। साधारण्येन—'निसर्ग—'। औपम्यगर्भत्वेन तु त्रिविधा—'दन्तप्रभा—' इयमुपमागर्भा। 'लावण्यमधुभिः—' इयं रूपकगर्भा। 'दन्तप्रभा—' इत्येव पाठभेदेन संकरगर्भा॥

(२३) परिकरः। उदा०—'अङ्गराज—'॥

परिकराङ्कुरः (छा. ५६९ पृ.)॥

(२४) श्लेषः। उदा०—'प्रवर्तयन्—'॥

(२५) अप्रस्तुतप्रशंसा। इयं पञ्चधा। तत्र विशेषे प्रस्तुते सामान्यम्—'पादाहतं—'। सामान्ये विशेषः—'स्रगियं—'। कार्ये कारणम्—'इन्दुर्लिप्त—'। कारणे कार्यम्—'गच्छामीति—'। तुल्ये प्रस्तुते विशेषणश्लिष्टा—'सहकारः—'। विशेष्यश्लिष्टा—'पुंस्त्वादपि—'। तुल्याभिधाने सादृश्यमूला—'एकः कपोत—'। वैधर्म्येणापि—'धन्याः—'। वाच्यस्य संभवासंभवोभयरूपत्वेन त्रिविधेयम्। तत्र संभवे उक्तान्युदाहरणानि। असंभवे—'कोकिलोऽहं—'। उभयरूपत्वे—'अन्तश्छिद्राणि—'॥

प्रस्तुताङ्कुरः (छा. ५७३ पृ.)॥

(२६) व्याजस्तुतिः। निन्दया स्तुतेर्गम्यत्वे–'स्तनयुग–'। स्तुत्या निन्दाया गम्यत्वे–'व्याजस्तुतिः–'॥

व्याजनिन्दा (छा. ५७७ पृ.)॥

(२७) पर्यायोक्तम्। उदा०—'स्पृष्टास्ता–'।

(२८) अर्थान्तरन्यासः। एषोऽष्टधा। साधर्म्ये विशेषेण सामान्यसमर्थने–'बृहत्सहायः–'। सामान्येन विशेषस्य समर्थने–'यावदर्थ्य–'। कारणेन कार्यस्य समर्थने–'पृथिवि स्थिरा–'। कार्येण कारणस्य समर्थने–'सहसा विदधीत'। वैधर्म्ये तु सामान्येन विशेषस्य समर्थने–'इत्थ—'।

| | |
|---|---|
| विकस्वरः।<br>प्रौढोक्तिः।<br>संभावना।<br>मिथ्याध्यवसितिः।<br>ललितम्।<br>प्रहर्षणम्।<br>विषादनम्।<br>उल्लासः।<br>अवज्ञा।<br>अनुज्ञा।<br>लेशः।<br>मुद्रा।<br>रत्नावली। | एतेषां विकस्वरादिरत्नावल्यन्तानां त्रयोदशानामलंकाराणां लक्षणोदाहरणादि छायायां द्रष्टव्यम् (५७९ पृ.)॥ |

(२९) काव्यलिङ्गम्। तत्र, वाक्यार्थता—'यत्त्वन्नेत्र–'। पदार्थता—'त्वद्वाजि–'॥

(३०) अनुमानम्। उदा०—'जानीमहेऽस्याः–'॥

(३१) हेतुः। उदा०—'तारुण्यस्य–'॥

(३२) अनुकूलम्। उदा०—'कुपितासि–'॥

(३३) आक्षेपः। एष चतुर्विधः। तत्र वक्ष्यमाणविषये सामान्यतः सूचितस्य निषेधः–'स्मरशर–'। अंशोक्तावंशान्तरस्य निषेधः–'तव विरहे–'। उक्तविषये वस्तुस्वरूपस्य निषेधः–'बालभ–'। वस्तुकथनस्य निषेधः—'विरहे तव—'। एवं निषेधाभावविध्याभासोऽपि—'गच्छ गच्छसि–'॥

(३४) विभावना। इयं द्विविधा। तत्र उक्तनिमित्ता—'अनायास—' इति। 'वपुर्भाति मृगीदृशः' इत्येवं चतुर्थचरणे अनुक्तनिमित्ता। अत्र विशेषः कुवलयानन्दे (छा. ५८९ पृ.)॥

(३५) विशेषोक्तिः। विभावनेव द्विविधा। उदा०—'धनिनोऽपि–'॥ (छा. ५८९ पृ.) असंभवः॥

(३६) विरोधः। अयं दशधा। तत्र जातेर्जात्यादिचतुर्भिर्विरोधः–'तव विरहे–'। गुणस्य गुणेन–'संतत–'। गुणस्य क्रियया–'अजस्र–'। गुणस्य द्रव्येण–'वल्लभो–'।

क्रियायाः क्रियया–'नयनयुगा–'। क्रियाया द्रव्येण–'त्वद्वाजि–'। द्रव्यस्य द्रव्येण सह विरोधः–'वल्लभो–' इत्यत्रैव पाठभेदे ॥

( ३७ ) असंगतिः। उदा०—'सा बाला–' ॥

( ३८ ) विषमम्। इदं चतुर्विधम्। तत्र हेतुकार्ययोर्गुणविरोधे–'सद्यः'। हेतुकार्ययोः क्रियाविरोधे–'आनन्द–'। आरब्धस्य वैकल्ये सानर्थे–'अयं रत्ना–'। विरूपयोर्घटने–'क वनं–' ॥

( ३९ ) समम्। उदा०—'शशिन–' ॥

( ४० ) विचित्रम्। उदा०—'प्रणमत्युन्नति–' ॥

( ४१ ) अधिकम्। इदं द्विविधम्। तत्र आश्रयाधिक्ये–'किमधिक–'। आश्रिताधिक्ये—'युगान्त–' ॥

अल्पम् ( छा. ५९५ पृ. ) ॥

( ४२ ) अन्योऽन्यम्। उदा०—'त्वया सा–' ॥

( ४३ ) विशेषः। अयं त्रिविधः। तत्र अनाधारे आधेये–'दिवमप्युप–'। अनेकाधारे एकाधेये–'कानने–'। किंचित्कुर्वतोऽशक्यस्य घटने–'गृहिणी–' ॥

( ४४ ) व्याघातः। अयं द्विविधः। तत्र येन यथाकृतस्य तेनैवान्येनान्यथाकरणे—'दृशा दग्धं–'। सौकर्येणान्यथाकरणे–'इहैव–' ॥

( ४५ ) कारणमाला। उदा०—'श्रुतं कृत–' ॥

( ४६ ) मालादीपकम्। उदा०—'त्वयि संगर–' ॥

( ४७ ) एकावली। इयं द्विविधा। तत्र स्थापने–'सरो–'। अपोहने–'न तज्जलं' ॥

( ४८ ) सारः। उदा०—'राज्ये सारं–' ॥

( ४९ ) यथासंख्यम्। उदा०—'उन्मीलन्ति–' ॥

( ५० ) पर्यायः। एकस्यानेकत्रभवनम्–'स्थिताः–'। अनेकस्यैकत्र भवनम्–'विचरन्ति–'। एवं करणे–'विसृष्ट–'। 'ययोरारोपि–' ॥

( ५१ ) परिवृत्तिः। समेन, न्यूनेन–'दत्त्वा–'। आधिक्येन–'तस्य च–' ॥

( ५२ ) परिसंख्या। प्रश्नपूर्वकत्वे–'किं भूषणं–'। 'किमाराध्यं–'। अप्रश्नपूर्वकत्वे–'भक्तिर्भवे–'। 'बलमार्त–' ॥

( ५३ ) उत्तरम्। प्रश्नेऽसति उत्तरात्प्रश्नोन्नयनम्–'वीक्षितुं–'। असकृत्प्रश्नेऽसंभाव्यं प्रतिवचनम्–'का विसमा–' ॥

( ५४ ) अर्थापत्तिः। प्राकरणिकात्तदन्यार्थापतने–'हारोऽयं–'। अप्राकरणिकात्तथा–'विललाप–' ॥

( ५५ ) विकल्पः। उदा०—'नमयन्तु–' ॥

( ५६ ) समुच्चयः। अत्र सद्योगः–'हंहो–'। इहैव चतुर्थे असद्योगः। सदसद्योगः–'शशी–'। गुणयोः क्रिययोश्च यौगपद्यम्–'अरुणे च–'। गुणक्रिययोर्यौगपद्यम्–'कलुषं च–' ॥

( ५७ ) समाधिः। उदा०—'मानमस्या–' ॥

( ५८ ) प्रत्यनीकम् । उदा०—'मध्येन–' ॥

( ५९ ) प्रतीपम् । उपमानस्योपमेयत्वे–'यत्त्वन्नेत्र–' । निष्फलत्वे–'तदङ्गं–' । प्रकारान्तरेण–'अह–' । अधिकं कुवलयानन्दे ( छा. ६०९ पृ. ) ॥

( ६० ) मीलितम् । उदा०—'लक्ष्मी–' ॥

( ६१ ) सामान्यम् । उदा०—'मल्लिका–' ॥

उन्मीलितम्<br>
विशेषकम् } ( छा. ६११ पृ. )

( ६२ ) तद्गुणः । उदा०—'जगाद वदन–' ॥

पूर्वरूपम् ( छा. ६१२ पृ. ) ॥

( ६३ ) अतद्गुणः । उदा०—'इन्त सान्द्रेण–' ॥

अनुगुणः ( छा. ६१२ पृ. ) ॥

( ६४ ) सूक्ष्मम् । उदा०—'वक्त्रस्यन्दि–' ॥

( ६५ ) व्याजोक्तिः । उदा०—'शैलेन्द्र–' ॥

गूढोक्तिः<br>
विवृतोक्तिः<br>
युक्तिः<br>
लोकोक्तिः<br>
छेकोक्तिः<br>
वक्रोक्तिः } एषां गूढोक्तिप्रभृतिवक्रोक्तिपर्यन्तानां षण्णामलंकाराणां लक्षणोदाहरणादि छायायां द्रष्टव्यम् ( ६१४ पृ. ) ॥

( ६६ ) स्वभावोक्तिः । उदा०—'लाङ्गूलेना—' ॥

( ६७ ) भाविकम् । उदा०—'मुनिर्जयति—' ॥

( ६८ ) उदात्तम् । इदं द्विविधम् । तत्र प्रथमम्–'अधःकृता—' । द्वितीयम्–'नाभि प्रभिन्ना–' ॥

अत्युक्तिः<br>
निरुक्तिः<br>
प्रतिषेधः<br>
विधिः } अत्युक्तिप्रभृतीनां चतुर्णां लक्षणादि छायायां द्रष्टव्यम् ( ६१८ पृ. ) ॥

( ६९ ) रसवत् । उदा०—'अयं स–' ॥

( ७० ) प्रेयः । उदा०—'आमीलिता–' ॥

( ७१ ) ऊर्जस्वि । उदा०—'वनेऽखिल–' ॥

( ७२ ) समाहितम् । उदा०—'अविरल–' ॥

( ७३ ) भावोदयः । उदा०—'मधुपान–' ॥

( ७४ ) भावसंधिः । उदा०—'जन्मान्तरीण–' ॥

( ७५ ) भावशबलत्वम् । उदा०—'पश्येत्कश्चित्–' ॥

अङ्गाङ्गिभावो यथा—

'आकृष्टिवेगविगलद्भुजगेन्द्रभोग-
निर्मोकपट्टपरिवेष्टनयाम्बुराशेः।
मन्थव्यथाव्युपशमार्थमिवाशु यस्य
मन्दाकिनी चिरमवेष्टत पादमूले॥'

अत्र निर्मोकपट्टापह्नवेन मन्दाकिन्या आरोप इत्यपह्नुतिः। सा च मन्दाकिन्या वस्तुवृत्तेन यत्पादमूलवेष्टनं तच्चरणमूलवेष्टनमिति श्लेषमुत्थापयतीति तस्याङ्गम्। श्लेषश्च पादमूलवेष्टनमेव चरणमूलवेष्टनमित्यतिशयोक्तेरङ्गम्। अतिशयोक्तिश्च मन्थव्यथाव्युपशमार्थमिवेत्युत्प्रेक्षाया अङ्गम्। उत्प्रेक्षा चाम्बुराशिमन्दाकिन्योर्नायकनायिकाव्यवहारं गमयतीति समासोक्तेरङ्गम्।

---

न्पादे पदे वा स्थितौ॥ आकृष्टीति। समुद्रमन्थनसमये देवादीनामाकर्षणवेगेन विगलन् यो भुजगेन्द्रभोगस्य वासुकिदेहस्य निर्मोकपट्टस्त्यक्तचर्मपट्टः तद्वेष्टनया। तद्वेष्टनच्छलेनेत्यर्थः। पादमूले एकदेशे। पक्षे—चरणसमीपे। अवेष्टत अवहत्[1]। पक्षे—संनाहक्रिययात्यतिष्ठत्॥ अङ्गाङ्गिभावमुपपादयति—अत्रेति। सा च अपह्नुतिश्च। वस्तुवृत्तेन वस्तुगत्या। 'नायकनायिका' इति पाठे नायकेन सहिता नायिका-

---

| | |
|---|---|
| प्रत्यक्षम्<br>अनुमानम्<br>उपमानम्<br>शब्दः<br>अर्थापत्तिः<br>अनुपलब्धिः<br>संभवः<br>ऐतिह्यम् | इमेऽष्टौ प्रमाणालंकाराः (छा. ६२० पृ.)॥ |

(७६) संसृष्टिः। उदा०—'देवः पाया-'॥

(७७) संकरः। एष त्रिविधः। तत्र अङ्गाङ्गिभावः-'आकृष्टिवेग-'। संदेहसंकरः-'इदमाभाति-'। एकाश्रयानुप्रवेशः-'कटाक्षेणा-'॥

'इयद्भिरेवालंकारैरलंकारः सुमेधसाम्।
अङ्गोपमर्दफलकैरसारैर्बहुभिः किमु॥

---

1. 'अहरत्' इति मुद्रितपुस्तके.

यथा वा—

'अनुरागवती संध्या दिवसस्तत्पुरःसरः ।
अहो दैवगतिश्चित्रा तथापि न समागमः ॥'

अत्र समासोक्तिर्विशेषोक्तेरङ्गम् । संदेहसंकरो यथा—

'इदमाभाति गगने भिन्दानं संततं तमः ।
अमन्दनयनानन्दकरं मण्डलमैन्दवम् ॥'

अत्र किं मुखस्य चन्द्रतयाध्यवसानादतिशयोक्तिः, उत इदमिति मुखं निर्दिश्य चन्द्रत्वारोपान्मुखम्, अथवा इदमिति मुखस्य चन्द्रमण्डलस्य च द्वयोरपि प्रकृतयोरेकधर्माभिसंबन्धात्तुल्ययोगिता, आहोस्विचन्द्रस्याप्रकृतत्वाद्दीपकम्, किं वा विशेषणसाम्यादप्रस्तुतस्य मुखस्य गम्यत्वात्समासोक्तिः, यद्वाप्रस्तुतचन्द्रवर्णनया प्रस्तुतस्य मुखस्यावगतिरित्यप्रस्तुतप्रशंसा, यद्वा मन्मथोद्दीपनः कालः स्वकार्यभूतचन्द्रवर्णनामुखेन वर्णित इति पर्यायोक्तिरिति बहूनामलंकाराणां संदेहात्संदेहसंकरः ।

यथा वा—'मुखचन्द्रं पश्यामि' इत्यत्र किं मुखं चन्द्र इत्युपमा, उत चन्द्र एवेति रूपकमिति संदेहः । साधकबाधकयोर्द्वयोरेकतरस्य सद्भावे न पुनः संदेहः । यथा—'मुखचन्द्रं चुम्बति' इत्यत्र चुम्बनं मुखस्यानुकूलमित्युपमायाः साधकम् । चन्द्रस्य तु प्रतिकूलमिति रूपकस्य बाधकम् । 'मुखचन्द्रः प्रकाशते' इत्यत्र प्रकाशाख्यो धर्मो रूपकस्य साधको मुखे उपचरितत्वेन संभवतीति नोपमाबाधकः ।

'राजनारायणं लक्ष्मीस्त्वामालिङ्गति निर्भरम् ।'

अत्र योषित आलिङ्गनं नायकस्य सादृश्येनोचितमिति लक्ष्म्यालिङ्गनस्य राजन्यसंभवादुपमाबाधकम्, नारायणे संभवाद्रूपकम् । एवम्—

'वदनाम्बुजमेणाक्ष्या भाति चञ्चललोचनम् ।'

अत्र वदने लोचनस्य संभवादुपमायाः साधकता, अम्बुजे चासंभवाद्रूपकस्य बाधकता । एवं 'सुन्दरं वदनाम्बुजम्' इत्यादौ साधारणधर्मप्रयोगे 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इति वचनादुपमा-

---

नायकनायिका । द्वंन्द्वविषय एकशेषप्राप्तेः ॥ अनुरागेति । अनुरागो लौहित्यम् सुरताभिलाषश्च ॥ संदेहसंकरातिरिक्तस्थले एकाश्रयस्थितेर्विषयो भविष्यतीति चरमोक्तमपि संदेहसंकरं प्रथमं दर्शयति—इदमिति । संततं सम्यग्व्याप्तम् । पक्षे—संततं तमः स्वरक्षताज्ञानं भिन्दानम् । 'इदमाभाति वदनं' इति पाठो न रमणीयः । विषयस्य निगरणाभावादतिशयोक्तेरसंभवापत्तेः, इदमिति मुखं निर्दिश्येति निर्वचना-

समासो न संभवतीत्युपमाया बाधकः । एवं चात्र -मयूरव्यंसकादित्वाद्रूपकसमास एव । एकाश्रयानुप्रवेशो यथा मम—

'कटाक्षेणापीषत्क्षणमपि निरीक्षेत यदि सा
तदानन्दः सान्द्रः स्फुरति पिहिताशेषविषयः ।
सरोमाञ्चोदञ्चत्कुचकलशनिर्भिन्नवसनः
परीरम्भारम्भः क इव भविताम्भोरुहदृशः ॥'

अत्र कटाक्षेणापीषत्क्षणमपीत्यत्र च्छेकानुप्रासस्य निरीक्षेतेत्यत्र क्षकारमादाय वृत्त्यनुप्रासस्य चैकाश्रयेऽनुप्रवेशः । एवं चात्रैवानुप्रासार्थापत्त्यलंकारयोः । यथा वा—'संसारध्वान्तविध्वंस—' इत्यत्र रूपकानुप्रासयोः । यथा वा—'कुरबका रवकारणतां ययुः' इत्यत्र रबका रवका इत्येकं बकार-वकार इत्येकमिति यमकयोः ।

---

संगतिप्रसङ्गाच्च । 'वदनम्' इत्यत्र 'गगनम्' इति पाठोऽपि न सुन्दरः । अव्यावर्तकत्वात् । तस्मात् 'इदमाभाति रुचिरम्' इति पाठो रुचिरः ॥ **कटाक्षेणापीति** । सान्द्रादिविशेषणद्वयेन आनन्दस्य ब्रह्मानन्दसदृशत्वं प्रतीयते । सरोमाञ्चादुदञ्चद् उच्चात् कुचकलशान्निर्भिन्नं विगलितं वसनं यत्र सः । **क इवेति** । निरुपम इत्यर्थः । कटाक्षेणापीषत्क्षणमपीति वर्णद्वयघटितस्य क्षकारस्य क्रमस्वरूपाभ्यां सकृत्साम्याच्छेकानुप्रासः । पश्चान्निरीक्षेतेति क्षकारमादाय क्रमस्वरूपाभ्यामसकृत्साम्यसंभवाद्वृत्त्यनुप्रासः । एवं चतुर्थपादेऽपि मकारभकारघटितवर्णपिण्डस्य च्छेकवृत्त्यनुप्रासौ वेदि-

---

1. कुरबका इति । 'विरचिता मधुनोपवनश्रियामभिनवा इव पत्रविशेषकाः । मधुलिहां मधुदानविशारदाः—' इत्यवशिष्टा पादत्रयी । अर्थालंकारविषयाणां कुवलयानन्दादिषु सूपपादितत्वादिह विस्तरेण तद्गतविशेषो न न्यासीति शिवम् ॥

श्रीमानुदारचरितः श्रुतपारदृश्वा जागर्ति भूसुरशशी सरयूप्रसादः ।
यश्च व्यधाज्जयपुरेन्द्रसमाश्रयेण निर्मत्सरान्तरतमोभिदुरान्निबन्धान् ॥
तस्मादजायत महेश्वरपादसेवी दुर्गाप्रसाद इति शास्त्रनिविष्टचेताः ।
यश्चाधुना जयपुरे निगमागमेषु व्युत्पादयन्द्विजवटून्समयाकरोति ॥
तेनेयं दर्पणच्छाया विहिता सारसंहतिः ।
यदत्र कुकृतं तत्तु सुकृतं कुरुतानघाः ॥

इत्ययोध्यापरप्रान्तवर्तिपण्डितपुरीवास्तव्यद्विवेदोपाख्याचार्यश्रीसरयूप्रसादसुत-
दुर्गाप्रसादविरचिता साहित्यदर्पणच्छाया ब्रह्मार्पणं भवतु ॥

सोऽयं छायाख्यटिप्पणीसहितः सकलः साहित्यदर्पणः पञ्चमे, षष्ठे चास्मिन् संस्करणे टिप्पणीकाराणां सत्संप्रदायाचार्यवर्याणां श्रीमद्द्विवेदपादानामाज्ञया तदन्तेवासिना जयपुरराजकीयसंस्कृतकालेजाध्यापकेन पण्डितकल्याणवल्लभशास्त्रिणा दाधीचेन संशोध्य समस्कारीति शिवम् ॥

( श्रीमद्गुरुचरणार्पणमस्तु )

यथा वा—

'अहिणअपओअरसिएसु पहिअसामाइएसु दिअहेसु ।
रहसपसारिअगीआणं णच्चिजं मोरविन्दाणम् ॥'

अत्र 'पहिअसामाइएसु' इत्येकाश्रये पथिकश्यामायितेत्युपमा । पथिकसामाजिकेष्विति रूपकं प्रविष्टमिति ।

श्रीचन्द्रशेखरमहाकविचन्द्रसूनु-
श्रीविश्वनाथकविराजकृतं प्रबन्धम् ।
साहित्यदर्पणममुं सुधियो विलोक्य
साहित्यतत्त्वमखिलं सुखमेव वित्त ॥ ९९ ॥

यावत्प्रसन्नेन्दुनिभानना श्रीर्नारायणस्याङ्कमलंकरोति ।
तावन्मनः संमदयन्कवीनामेष प्रबन्धः प्रथितोऽस्तु लोके ॥१००॥

इत्यालंकारिकचक्रवर्तिसांधिविग्रहिकमहापात्रश्रीविश्वनाथकविराजकृते
साहित्यदर्पणे दशमः परिच्छेदः ।

( अत्र मूलकारिकाः=१०० पूर्वाभिः सह ७९९ उदाहरणानि २५६ पूर्वैः सह ७५४)

---

तव्यौ ॥ एकपदे संकरमाह—अहिणअ इति । 'अभिनवपयोदरसितेषु पथिक ! श्यामायितेषु दिवसेषु । रभसप्रसारितग्रीवाणां नृत्यं मयूरवृन्दानाम् ॥' इति संस्कृतम् । महति उत्सवायते । पथिकानां प्रियाविरहदुःखेन श्यामत्वम्, दिवसानां मेघेनेत्युपमा । पक्षे—पथिका एव सामाजिकास्तेषु नाट्यदर्शनेन सामाजिकानामुत्सवो भवतीति रूपणम् । पथिकानां मयूरनृत्यं सुखदं न भवतीति महतीत्युक्तम् । वस्तुतस्तु 'मुखचन्द्रं पश्यामि' इत्यादौ यथा समासद्वयसंभवात्संदेहः, तथेहापि 'पहिअसामाइएसु' इति प्राकृतयोनिशब्दद्वयसंभवात्संदेह एवेत्यवधेयम् । एवं चैकपदवृत्तिसंकरस्योदाहरणम् 'संसारध्वान्तविध्वंसहंसः' इत्याद्यवगन्तव्यम् । यथा वा— 'मनो विद्धं सरोजाक्षीसरशक्त्या सुनिर्भरम् । सा चेद्विसृजते गाढं स्वास्थ्यमालम्बते खलु ॥' इत्याद्युदाहरणमुन्नेयमिति ॥

अक्षिपक्षरसचन्द्र ( १६२२ ) संमिते हायने शकवसुंधरापतेः ।
श्रीलरामचरणाग्रजन्मना दर्पणस्य विवृतिः प्रकाशिता ॥
दोषं कंचन वीक्ष्य सूक्ष्ममतयो द्वित्राः शपन्त्यत्र चे-
त्तन्मां न व्यथयेद्गुरोरपि गिरो निर्दूषणा दुर्वचाः ।
छात्राणां मतिमादधाति यदसौ गूढार्थसंदीपना-
दानन्दं वितनोति यद्गुणवतां तेनास्म्यमोघश्रमः ॥[1]

इति श्रीरामचरणतर्कवागीशभट्टाचार्यविरचितायां साहित्यदर्पणविवृतौ
दशमः प्रकाशः । ग्रन्थसंख्या ( ६००० ) ॥

---

१. 'मन्मानसाम्बुजद्वन्द्वं सेव्यमानं मुनीश्वरैः । वाञ्छाकल्पतरुं वन्दे रामचन्द्रपदद्वयम् ॥' इत्यधिकं पुस्तकान्तरे.

# साहित्यदर्पणस्योदाहरणश्लोकानामकाराद्यनुक्रमणिका ।





१. विश्वनाथस्य चन्द्रकलायाम् । २. कालिदासस्य रघुवंशे । ३. कालिदासस्य कुमारसंभवे । ४. धनिकस्य दशरूपावलोके । ५. भवभूतेर्मालतीमाधवे । ६. राजशेखरस्य बालरामायणे । ७. माघस्य शिशुपालवधे । ८. विश्वनाथस्य प्रभावत्याम् । ९. कालिदासस्याभिज्ञानशाकुन्तले । १०. भट्टनारायणस्य वेणीसंहारे । ११. विश्वनाथस्य । १२. शिशुपालवधे । १३. शिशुपालवधे । १४. रघुवंशे । १५. विश्वनाथस्य । १६. विकटनितम्बायाः । १७. वेणीसंहारे । १८. अभिज्ञानशाकुन्तले ।

१. श्रीमहाभारते द्रोणपर्वणि। २. श्रीहर्षदेवस्य रत्नावल्याम्। ३. श्रीमहाभारते द्रोणपर्वणि। ४. हालस्य गाथासप्तशत्याम्। ५. सुबन्धोर्वासवदत्तायाम्। ६. शिशुपालवधे। ७. विश्वनाथस्य। ८. वेणीसंहारे। ९. कल्हणस्य राजतरङ्गिण्याम्। १०. चन्द्रकलायाम्। ११. कुमारसंभवे। १२. अभिज्ञानशाकुन्तले। १३. रुद्रस्य शृङ्गारतिलके। १४. प्रभावल्याम्। १५. विक्रमोर्वश्याम्। १६. रघुवंशे। १७. गाथासप्तशत्याम्। १८. श्रीमहाभारते द्रोणपर्वणि। १९. भवभूतेर्महावीरचरिते। २०. शिशुपालवधे। २१. विश्वनाथस्य। २२. शिशुपालवधे। २३. रघुवंशे। २४. भल्लटशतके।

१. बालरामायणे । २. शिशुपालवधे । ३. कुमारसंभवे । ४. अभिज्ञानशाकुन्तले । ५. विश्वनाथस्य । ६. ययातिविजये । ७. गाथासप्तशत्याम् । ८. मालतीमाधवे । ९. बालचरिते । १०. अभिज्ञानशाकुन्तले । ११. रत्नावल्याम् । १२. अभिज्ञानशाकुन्तले । १३. अमरुशतके । १४. वेणीसंहारे । १५. अमरुशतके; सुभाषितावलौ तु पुलिनस्य । १६. विश्वनाथस्य । १७. कुमारसंभवे । १८. विश्वनाथस्य ।

१. राजशेखरस्य रत्नावल्याम् । २. विश्वनाथस्य । ३. विश्वनाथस्य । ४. जयदेवस्य प्रसन्नराघवे । ५. विश्वनाथस्य । ६. वेणीसंहारे । ७. विश्वनाथस्य । ८. शृङ्गारतिलके । ९. रघुवंशे । १०. अभिज्ञानशाकुन्तले । ११. बालरामायणे । १२. विश्वनाथस्य । १३. विश्वनाथस्य । १४. शिशुपालवधे । १५. बन्धोः । १६. वकस्य । १७. शृङ्गारतिलके । १८. अभिज्ञानशाकुन्तले । १९. उत्तररामचरिते । २०. वेणीसंहारे । २१. वेणीसंहारे । २२. विश्वनाथस्य । २३. वेणीसंहारे ।

१. विशाखदत्तस्य मुद्राराक्षसे। २. अमरुशतके। ३. रघुवंशे। ४. विश्वनाथस्य। ५. कालिदासस्य विक्रमोर्वश्याम्। ६. विश्वनाथस्य। ७. अमरुशतके। ८. रुद्रटस्य काव्यालंकारे। ९. चन्द्रशेखरस्य। १०. दण्डिनः काव्यादर्शे। ११. मालतीमाधवे। १२. अमरुशतके। १३. भारवेः किरातार्जुनीये। १४. शिशुपालवधे। १५. शङ्खधरस्य लटकमेलके। १६. वेणीसंहारे। १७. रघुवंशे। १८. क्षेमेश्वरस्य चण्डकौशिके। १९. वेणीसंहारे। २०. अमरुशतके। २१. अभिज्ञानशाकुन्तले। २२. अभिज्ञानशाकुन्तले। २३. चन्द्रशेखरस्य। २४. शिशुपालवधे।

१. शिशुपालवधे । २. कविमल्लमल्लाचार्यस्योदारराघवे । ३. वाचस्पतिभट्टस्य । ४. वेणीसंहारे । ५. मालतीमाधवे । ६. उदात्तराघवे । ७. रघुवंशे । ८. वेणीसंहारे । ९. रघुवंशे । १०. विश्वनाथस्य कुवलयाश्वचरिते । ११. कुमारसंभवे । १२. शिशुपालवधे । १३. श्रीविष्णुपुराणे । १४. विश्वनाथस्य । १५. विश्वनाथस्य । १६. शिशुपालवधे । १७ अभिज्ञानशाकुन्तले । १८. कालिदासस्य मेघदूते । १९. विश्वनाथस्य । २०. विक्रमोर्वश्याम् । २१. वेणीसंहारे । २२. कुमारसंभवे । २३. कुमारसंभवे । २४. विश्वनाथस्य ।

१. कुमारसंभवे । २. शिशुपालवधे । ३. कुमारसंभवे । ४. विश्वनाथस्य प्रभावतीपरिणये । ५. वेणीसंहारे । ६. प्रभावत्याम् । ७. मालतीमाधवे । ८. रघुवंशे । ९. भट्टप्रभाकरस्य । १०. कुमारसंभवे । ११. काव्यालंकारे । १२. कुलशेखरनृपतेः । १३. रघुवंशे । १४. कालिदासस्य मालविकाग्निमित्रे । १५. चन्द्रशेखरस्य । १६. रत्नावल्याम् । १७. विश्वनाथस्य । १८. राजशेखरस्य विद्धशालभञ्जिकायाम् । १९. श्रीहर्षदेवस्य । २०. विज्जाकायाः । २१. भवभूतेरुत्तररामचरिते । २२. अमरुशतके । २३. भवभूतेर्वीरचरिते । २४. कुमारसंभवे । २५. रत्नावल्याम् । २६. श्रीहर्षस्य नैषधीयचरिते । २७. विज्जाकायाः ।

१. वेणीसंहारे । २. शिशुपालवधे । ३. शिशुपालवधे । ४. भट्टिकाव्ये । ५. हनुमन्नाटके । ६. विक्रमोर्वशीयम् । ७. शिशुपालवधे । ८. शिशुपालवधे । ९. रत्नावल्याम् । १०. रघुवंशे । ११. वेणीसंहारे. । १२. विल्हण–राजकन्ययोः । १३. वेणीसंहारे । १४. वेणीसंहारे । १५. अमरुशतके । १६. भगवतो वाल्मीकेः । १७. वेणीसंहारे । १८. विश्वनाथस्य । १९. चन्द्रशेखरस्य । २०. गाथासप्तशत्याम् । २१. विश्वनाथस्य । २२. महावीरचरिते । २३. किरातार्जुनीये । २४. त्रिविक्रमस्य दमयन्तीकथायाम् । २५. शिशुपालवधे । २६. विश्वनाथस्य ।

१. शिशुपालवधे । २. शिशुपालवधे । ३. शिशुपालवधे । ४. भल्लटशतके । ५. वेणी-संहारे । ६. बालरामायणे । ७. मालतीमाधवे । ८. शिशुपालवधे । ९. वेणीसंहारे । १०. रघुवंश-कुमारसंभवयोः । ११. अमरुशतके । १२. विश्वनाथस्य । १३. शिशुपालवधे । १४. वेणीसंहारे । १५. वेणीसंहारे । १६. मालतीमाधवे । १७. शिशुपालवधे । १८. अमरुशतके । १९. शिशुपालवधे । २०. महावीरचरिते । २१. वेणीसंहारे । २२. गाथा-सप्तशत्याम् । २३. रघुवंशे । २४. अभिज्ञानशाकुन्तले । २५. विश्वनाथस्य । २६. राजानकरुय्यकस्य श्रीकण्ठस्तवे । २७. वेणीसंहारे । २८. वेणीसंहारे । २९. बालरामायणे ।

१. विश्वनाथस्य । २. अमरुशतके । ३. शूद्रकस्य मृच्छकटिके । ४. विश्वनाथस्य । ५. वेणीसंहारे । ६. कुमारसंभवे । ७. शिशुपालवधे । ८. शृङ्गारतिलके । ९. चन्द्रशेखरस्य । १०. रत्नावल्याम् । ११. विश्वनाथस्य । १२. उदारराघवे । १३. मेघदूते । १४. विश्वनाथस्य । १५. अभिज्ञानशाकुन्तले । १६. विश्वनाथस्य । १७. शीलाभट्टारिकायाः । १८. कुमारसंभवे । १९. कान्यकुब्जाधिपतेर्यशोवर्मणः । २०. वेणीसंहारे । २१. रघुवंशे ।

१. वेणीसंहारे । २. वेणीसंहारे । ३. अभिज्ञानशाकुन्तले । ४. किरातार्जुनीये । ५. राघवानन्दस्य । ६. विश्वनाथस्य । ७. शिशुपालवधे । ८. शिशुपालवधे । ९. वेणीसंहारे । १०. चन्द्रकस्य । ११. वेणीसंहारे । १२. किरातार्जुनीये । १३. प्रभावत्याम् । १४. काव्यालंकारे । १५. रघुवंशे । १६. उदात्तराघवे । १७. रघुवंशे । १८. रघुवंशे । १९. विश्वनाथस्य । २०. कुन्दमालायाम् । २१. वेणीसंहारे ।

१. विश्वनाथस्य । २. जानकीराघवे । ३. वेणीसंहारे । ४. कुमारसंभवे । ५. विश्वनाथस्य । ६. विश्वनाथस्य । ७. राघवानन्दस्य नाटके । ८. शिशुपालवधे । ९. विश्वनाथस्य राघवविलासे । १०. रघुवंशे । ११. शिशुपालवधे । १२. कुमारसंभवे । १३. कुमारसंभवे । १४. मालविकायाम् । १५. विक्रमोर्वश्याम् । १६. किरातार्जुनीये । १७. अमरुशतके । १८. रघुवंशे । १९. भर्तृहरेः । २०. चन्द्रशेखरस्य पुष्पमालायाम् । २१. श्रीहर्षदेवस्य नागानन्दे । २२. रत्नावल्याम् । २३. अभिज्ञानशाकुन्तले । २४. अमरुशतके ।

१. विश्वनाथस्य । २. विश्वनाथस्य । ३. बालरामायणे । ४. रत्नावल्याम् । ५. रत्नावल्याम् । ६. कुमारसंभवे । ७. विश्वनाथस्य । ८. अभिज्ञानशाकुन्तले । ९. वेणीसंहारे । १०. रघुवंशे । ११. रघुवंशे । १२. शिशुपालवधे । १३. अभिज्ञानशाकुन्तले । १४. विक्रमोर्वश्याम् । १५. विश्वनाथस्य । १६. रघुवंशे । १७. वेणीसंहारे । १८. किरातार्जुनीये । १९. विश्वनाथस्य । २०. अमरुशतके; सुभाषितावलौ तु लीलाचन्द्रस्य । २१. अमरुशतके; सुभाषितावलौ तु कल्याणदत्तस्य । २२. शृङ्गारतिलके । २३. अमरुशतके ।

आपाततः प्रेक्षापथमारूढानां कवीनां प्रबन्धानां चाभिधानैः समेतासावनुक्रमणिका समाप्तेति शिवम् ॥

---

१. कृष्णनन्दस्य सहृदयानन्दे । २. विक्रमोर्वश्याम् । ३. रघुवंशे । ४. विश्वनाथस्य (?) । ५. कुमारसंभवे । ६. मेण्ठस्य । ७. रघुवंशे । ८. शिशुपालवधे । ९. शृङ्गारतिलके । १०. भिक्षाटनस्य । ११. विश्वनाथस्य । १२. वेणीसंहारे । १३. नैषधीयचरिते । १४. भामहालंकारे । १५. कुमारसंभवे । १६. विश्वनाथस्य प्रभावत्याम् । १७. विश्वनाथस्य ।

॥ श्रीः ॥

# अथाग्नेयपुराणीयाः साहित्यविषयाः ।

## तत्र काव्यादिलक्षणम्[1] ।

अग्निरुवाच—

काव्यस्य नाटकादेश्च-अलंकारान् वदाम्यहम् ।
ध्वनिर्वर्णः पदं वाक्यमित्येतद् वाङ्मयं मतम् ॥ १ ॥
शास्त्रेतिहासवाक्यानां त्रयं यत्र समाप्यते ।
शास्त्रे शब्दप्रधानत्वमितिहासेषु निष्ठता ॥ २ ॥
अभिधायाः प्रधानत्वात् काव्यं ताभ्यां विभिद्यते ।
नरत्वं दुर्लभं लोके विद्या तत्र सुदुर्लभा ॥ ३ ॥
कवित्वं दुर्लभं तत्र शक्तिस्तत्र च दुर्लभा ।
व्युत्पत्तिर्दुर्लभा तत्र विवेकस्तत्र दुर्लभः ॥ ४ ॥
सर्वं शास्त्रमविद्धि(श्च)र्मृग्यमाणं न सिद्ध्यति ।
आदिवर्णा द्वितीयाश्च महाप्राणास्तुरीयकः ॥ ५ ॥
वर्णेषु वर्णवृन्दं स्यात्पदं सुप्तिङ् त्वभेदतः ।
संक्षेपाद्वाक्यमिष्टार्थव्यवच्छिन्ना पदावली ॥ ६ ॥
काव्यं स्फुटदलंकारं गुणवद्दोषवर्जितम् ।
योनिर्वेदश्च लोकश्च सिद्धिमन्नादयोनिजम् ॥ ७ ॥
देवादीनां संस्कृतं स्यात्प्राकृतं त्रिविधं नृणाम् ।
गद्यं पद्यं च मिश्रं च काव्यादि त्रिविधं स्मृतम् ॥ ८ ॥
अपदः पदसंतानो गद्यं तदपि गद्यते ।
चूर्णकोत्कलिकागन्धिवृत्तभेदात्त्रिरूपकम् ॥ ९ ॥
अल्पाल्पविग्रहं नाति मृदु संदर्भनिर्भरम् ।
चूर्णकं नामतो दीर्घसमासात्कलिका भवेत् ॥ १० ॥
भवेन्मध्यमसंदर्भं नातिकुत्सितविग्रहम् ।
वृत्तच्छायाहरं वृत्तसंधिनैतत्किलोत्कटम् ॥ ११ ॥
आख्यायिका कथा खण्डकथा परिकथा तथा ।
कथानिकेति मन्यन्ते गद्यकाव्यं च पञ्चधा ॥ १२ ॥
कर्तृवंशप्रशंसा स्याद्यत्र गद्येन विस्तरात् ।
कन्याहरणसंग्रामविप्रलम्भविपत्तयः ॥ १३ ॥
भवन्ति यत्र दीप्ताश्च रीतिवृत्तिप्रवृत्तयः ।
उच्छ्वासैश्च परिच्छेदो यत्र या चूर्णकोत्तरा ॥ १४ ॥

---

1. यद्यपीदमाग्नेयं काव्यादिलक्षणं विशुद्धपुस्तकाभावादिना बहुत्रासंलग्नं तथापि काव्यमीमांसामूलभूतस्यास्य प्रचारोऽत्यावश्यक इति पुरस्कृतम् । यथास्य भामहादिभिर्विषयो गृहीतस्तथा प्रागदर्शि (भू. २२ पृ.) ॥

वक्त्रं वा परवक्त्रं वा यत्र साख्यायिका स्मृता ।
श्लोकैः स्ववंशं संक्षेपात्कविर्यत्र प्रशंसति ॥ १५ ॥
मुख्यस्यार्थावताराय भवेद्यत्र कथान्तरम् ।
परिच्छेदो न यत्र स्याद्भवेद्वा लम्बकैः क्वचित् ॥ १६ ॥
सा कथा नाम तद्गर्भे निबध्नीयाच्चतुष्पदीम् ।
भवेत्खण्डकथा यासौ यासौ परिकथा तयोः ॥ १७ ॥
अमात्यं सार्थकं वापि द्विजं वा नायकं विदुः ।
स्यात्तयोः करुणं विद्धि विप्रलम्भश्चतुर्विधः ॥ १८ ॥
समाप्यते तयोर्नाद्या सा कथामनुधावति ।
कथाख्यायिकयोर्मिश्रभावात्परिकथा स्मृता ॥ १९ ॥
भयानकसुखपरं गर्भे च करुणो रसः ।
अद्भुतोऽन्ते सुक्लृप्तार्थो नोदात्ता सा कथानिका २० ॥
पद्यं चतुष्पदी तच्च वृत्तं जातिरिति त्रिधा ।
वृत्तमक्षरसंख्येयमुक्थं तत्कृतिशेषजम् ॥ २१ ॥
मात्राभिर्गणनाप्यत्र सा जातिरिति काश्यपः ।
सममर्धसमं वृत्तं विषमं पैङ्गलं त्रिधा ॥ २२ ॥
सा विद्या नौस्तितीर्षूणां गभीरं काव्यसागरम् ।
महाकाव्यं कलापश्च पर्याबन्धो विशेषकम् ॥ २३ ॥
कुलकं मुक्तकं कोष इति पद्यकुटुम्बकम् ।
सर्गबन्धो महाकाव्यमारब्धं संस्कृतेन यत् ॥ २४ ॥
तादात्म्यमजहत्तत्र तत्समं नातिदुष्यति ।
इतिहासकथोद्भूतमितरद्वा सदाश्रयम् ॥ २५ ॥
मन्त्रदूतप्रयाणाजिनियतं नातिविस्तरम् ।
शक्वर्यातिजगत्यातिशक्वर्या त्रिष्टुभा तथा ॥ २६ ॥
पुष्पिताग्रादिभिर्वक्त्राभिजनैश्चारुभिः समैः ।
मुक्ता तु भिन्नवृत्तान्ता नातिसंक्षिप्तसर्गकम् ॥ २७ ॥
अतिशर्करिकाष्टिभ्यामेकसंकीर्णकैः परः ।
मात्रयाप्यपरः सर्गः प्राशस्त्येषु च पश्चिमः ॥ २८ ॥
कल्पोऽतिनिन्दितस्तस्मिन्विशेषानादरः सताम् ।
नगरार्णवशैलर्तुचन्द्रार्काश्रमपादपैः ॥ २९ ॥
उद्यानसलिलक्रीडामधुपानरतोत्सवैः ।
दूतीवचनविन्यासैरसतीचरिताद्भुतैः ॥ ३० ॥
तमसा मरुताप्यन्यैर्विभावैरतिनिर्भरैः ।
सर्ववृत्तिप्रवृत्तं च सर्वभावप्रभावितम् ॥ ३१ ॥
सर्वरीतिरसैः पुष्टं पुष्टं गुणविभूषणैः ।
अत एव महाकाव्यं तत्कर्ता च महाकविः ॥ ३२ ॥

